From this tentative list, it will be seen that Municandra Sūri, too, has written works in Saṁskṛta and Pāïya, some of which are texts and the rest commentaries. A detailed exposition of these works is reserved for Volume II.

This finishes the introduction. So I may now end it with a verse somewhat saturated with *anekāntavāda*. It runs as under :—

"देवं देवाधिदेवं परमपदगतं सृष्टिनेतारमीशं
अव्यक्तं व्यक्तिमन्तं गुणिनमतिगुणं बीजिनं चाप्यबीजम् ।
विश्वाभ्यं विश्वमूर्तिं समविषमसमं कारणं कारणानां
तं नित्यं ध्यानगम्यं प्रणमत **ऋषभं** दिव्यरूपस्वरूपम् ॥"

—*Ādināthamahāprabhāvakastavana*

Sankdi Sheri, Gopipura,
SURAT.
*1st August 1940.*

**Hiralal R. Kapadia.**

# CONTENTS




श्रीयाकिनीमहत्तराधर्मसूनु-

श्रीहरिभद्रसूरिशेखरसूत्रितम्

# अनेकान्तजयपताकाख्यं प्रकरणम् ।

स्वोपज्ञया [1]व्याख्यया श्रीमुनिचन्द्रसूरिप्रणीतेन टिप्पणकरूपेण विवरणेन च समलङ्कृतम् । ५

## प्रथमोऽधिकारः ।

### ( मूलम् )

[2]नमः सद्गुरुभ्यः ।

जयति विनिर्जितरागः सर्वज्ञस्त्रिदशनाथकृतपूजः । १०
सद्भूतवस्तुवादी शिवगतिनाथो महावीरः ॥ १ ॥[3]
य इहानिन्द्यो मार्गो विशेषतः पूर्वगुरुभिराचरितः ।
तत्र प्रवर्तितव्यं पुंसा न्यायः सतामेषः ॥ २ ॥
यद्यपि न तथाभूता शक्तिः प्राक्कर्मदोषतस्तदपि ।
शक्त्यनुरूपमुपायो न [4]यतस्तत्प्राप्तयेऽप्यन्यः ॥ ३ ॥ १५
सत्यपि गुणवत्येव तु स चान्यभावेऽपि पण्डितैर्गदितः ।
यत्रैव यस्य शक्तिः सात्म्यं च विशेषतस्तेषाम् ॥ ४ ॥
स तमाराधयितुमलं यस्मादाराध्य चैनमाप्नोति ।
शक्त्यन्तरं ह्युपायान्तरसाधकमुत्तमं नियमात् ॥ ५ ॥
तस्मान् ममापि जाता शठोक्तिभिर्मोहितान् जडान् वीक्ष्य । २०
प्रकरणकरणसमीहा पूर्वनिमित्तात् कृपातश्च ॥ ६ ॥
जिनवचनश्रवणान्नः शक्तिरपि न नास्ति तत्र तस्यैव ।
सद्बोधहेतुभावात् तुच्छत्वाद् वा शठोक्तीनाम् ॥ ७ ॥

---

१ श्रीमुनिचन्द्रसूरिभिस्त्वेषा वृत्तिरूपेणोल्लिखिता । प्रेक्ष्यतां पञ्चमं पृष्ठम् । २ 'ॐ नमः सर्वज्ञाय' इति ग-पाठः । ३ आर्याच्छन्दोनिबद्धं पद्यमिदम्, अतः परं नव पद्यान्यपि तथैव । ४ 'यतस्तत् प्राप्यतेऽप्यन्यः' इति क-पाठः ।

(मूलम्)

तुच्छत्वं पुनरासां प्रदर्शितं पूर्वसूरिभिर्[1]बहुधा ।
न्यक्षेण सूक्ष्मयुक्तिभिरतिगम्भीरं स्वशास्त्रेषु ॥ ८ ॥
तत् तु शठोक्तिविमूढा न जडाः सज्ञानते यतस्तेन ।
सन्दर्श्यते समासस्थूरोक्तिशठोक्त्यपाकरणैः ॥ ९ ॥
प्रारभ्यते तत इदं सम्यगनेकान्तजयपताकाख्यम् ।
प्रकरणमुक्तगुणयुतं जडावबोधाय धर्मफलम् ॥ १० ॥

---

(स्वोपज्ञा व्याख्या)

ॐ नमोऽर्हते ।

स्वपरोपकृतये **अनेकान्तजयपताकाख्यप्रकरणस्य** व्याख्या प्रस्तूयते । इह चादावेवाचार्यः शिष्टसमयपरिपालनाय [2]विघ्नविनायकोपशान्तये प्रयोजनादिप्रतिपादनार्थं चेममार्यासमूह[3]माह—[4]**जयति विनिर्जितराग** इत्यादि ।

तत्र शिष्टानामयं समयो यदुत शिष्टाः क्वचिदिष्टे वस्तुनि प्रवर्तमानाः सन्त इष्टदेवतानमस्कारपूर्वकं प्रवर्तन्ते । अयमप्याचार्यो नहि न शिष्ट इति, अतस्तत्समयप्रतिपालनाय तथा श्रेयांसि बहुविघ्नानि भवन्तीति, उक्तं च—

"श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ।
अश्रेयसि प्रवृत्तानां क्वापि यान्ति [5]विनायकाः ॥"[6]

इति ।

इदं च प्रकरणं सम्यग्ज्ञानहेतुत्वात् श्रेयोभूतं वर्तते, अतो मा भूद् विघ्न इति 'विघ्नविनायकोपशान्तये' तथा प्रेक्षापूर्वकारिणः प्रयोजनादिशून्ये न प्रवर्तन्त इति 'प्रयोजनादिप्रतिपादनार्थं' चेति ॥

अत्र कश्चिदाह—प्रकरणकारो हि प्रेक्षापूर्वकारी, स किमर्थं प्रकरणादौ तदसम्बद्धमिष्टदेवतास्तवमाह ? । न च विघ्नविनायकोपशान्तिकरणेन प्रकरणनिष्पत्त्यङ्गतया तत्सम्बद्धः, स्तवविघ्नयोर्विरोधासिद्धेः; तद्भावेऽपि क्वचिद् विघ्नभावात्, तदभावेऽपि चाभावादिति ।

---

१ **श्रीसिद्धसेनदिवाकर**प्रभृतिभिरित्यर्थः । एतदर्थं समीक्ष्यतां नवमं पृष्ठम् । २ विघ्नानां विघ्नेषु वा विनायकः—मुख्यो विघ्नविनायकः—महाविघ्नस्तस्योपशान्तये—नाशायेत्यर्थः । विघ्नान् विनेतुं शीलमस्येति विघ्नविनायकस्तस्योपशान्त्यै—तुष्ट्यै इत्यप्यर्थः स्यात् । ३ दशकात्मकम् । ४ 'जयति विनिर्जितराग इत्यादि' इति पाठो घ—पुस्तके नास्ति । ५ अत्र 'विनायक'शब्दस्य विघ्न इत्यर्थः, न तु मुख्यो गणपतिर्वा । ६ अनुष्टुप् ।

( स्वो० व्या० )

प्रयोजनादिप्रतिपादनमप्यनर्थकमेव, तत एव सम्यक्प्रयोजनाद्यनवगतेः । प्रकरणार्थपरिज्ञानपुरस्सरमेव तत् कथमन्यतो भवति? अतस्तत्प्रतिपादनेऽपि तदाशङ्काऽनिवृत्तिरेवेति ॥ ५

एतच्चासारम्, प्रकरणकारो यत एव प्रेक्षापूर्वकारी, अत एव तन्निष्पत्त्यर्थं प्रकरणादौ तदङ्गरूपमिष्टदेवतास्तवमाह । सम्भवत्यत्र विघ्नः प्रागुपात्ताशुभकर्मोदयलक्षणः । स चेष्टदेवतास्तवकरणतः प्रशस्तभावोपपत्तेरुपशाम्यतीति तन्निष्पत्त्यङ्गमेव । एवं च जलानलवत् स्तवविघ्नयोर्विरोध एव । न चेहाप्यतिप्रबलोऽग्निः स्वल्पेन जलेनोपशाम्यति । न चाल्पः स्वयमपि नोपशाम्यति । न चानयोर्न विरोध इति । एवं १० च 'तद्भावेऽपि क्वचिद् विघ्नभावात् तदभावेऽपि चाभावादिति' वचनमात्रमेतत् ।

प्रयोजनादिप्रतिपादनमपि सार्थकमेव, तत एव सामान्येन सम्यक्प्रयोजनाद्यवगतेस्तथाव्यवहारदर्शनात् । तदवगतौ हि तद्विशेषपरिज्ञानार्थं प्रकरणे प्रवृत्तेः, ततस्तज्ज्ञानभावात् । एवं च 'प्रकरणार्थपरिज्ञानपुरस्सर'मप्येतद् विशेषेण सामान्येनान्यतो भवतीति न दोषः । अतो न 'तत्प्रतिपादनेऽपि तदाशङ्काऽनिवृत्तिरेव', १५ सामान्येन निवृत्तेर्विशेषाशङ्कानिवृत्तेरप्युपायाभिधानात्, सदुपायेतरयोर्विशेषसिद्धेः[3], अन्यथा सकलव्यवहारोच्छेद इत्यलं चर्सूर्या(?)[4], दिङ्मात्रप्रदर्शनार्थत्वादारम्भस्येति ॥

इह चाद्ययाऽऽर्यया इष्टदेवतास्तवमाह । तदन्याभिस्तु सप्रसङ्गं प्रयोजनादीत्यार्यासमूहसमुदायार्थः ॥

अधुनाऽवयवार्थ उच्यते–तत्र **जयति विनिर्जितराग** इति । अत्र जयतीति २० क्रिया भूतपूर्वगत्या तथोपचारत उक्ता तत्प्रकर्षफला प्रच्युत्यपेक्षया वा । अनेकार्थत्वाद् वा धातूनां जयतीति किमुक्तं भवति? सर्वान्[5] गुणैरतिशेते । 'विनिर्जितः' विविधम्–अनेकैः प्रकारैः प्रतिपक्षभावनादिभिर्निराधिक्येन अपुनर्जेयतया जितः–विक्षिप्तो रागोऽभिष्वङ्गलक्षणो येन स विनिर्जितरागः । द्वेषोपलक्षणमेतत् । अयमेव विशिष्यते[6]–**सर्वज्ञ** इति । सर्वं–सूक्ष्मव्यवहितविप्रकृष्टं वस्तु जानातीति २५ सर्वज्ञः । अयमेव विशिष्यते[7]–**त्रिदशनाथकृतपूज** इति । त्रिदशनाथाः–

१ 'प्रकरणार्थज्ञान०' इति क–पाठः । २ द्वितीये पृष्ठे २५ तमायां २६ तमायां च पङ्क्त्यां प्रोक्तम् । ३ 'सदुपायैर्विशेष०' इति घ–पाठः । ४ अस्यार्थो न ज्ञायते, कदाचित् 'चर्चया' इति स्यात् । ५ 'सर्वगुणै०' इति ङ–पाठः । ६–७ 'विशेष्यते' इत्युभयत्र क–ङ–पाठः ।

( स्वो० व्या० )

इन्द्राः शक्रादयस्तैः कृता पूजा–[1]अशोकाद्यष्टमहाप्रातिहार्यादिलक्षणा यस्य स त्रिदशनाथकृतपूजः । अयमेव [2]विशिष्यते–सद्भूतवस्तुवादीति । सद्भूतं–यथाऽव-
५ स्थितं वस्तु वदितुं शीलं यस्य स सद्भूतवस्तुवादी । अयमेव [3]विशिष्यते–शिव-
गतिनाथ इति । शिवगतेः–मोक्षगतेर्नाथः–तद्वशीकरणात् स्वामी शिवगतिनाथः । कोऽयमेवम्भूत इत्याह–महावीर इति । '[4]शूर वीर विक्रान्तौ' इति कषायादिशत्रु-
जयान्महाविक्रान्तो महावीरः । "[5]ईर गतिप्रेरणयोः' इत्यस्य वा [6]विपूर्वस्य । विशेषेण ईरयति–कर्म गमयति याति वेह शिवमिति वीरः । महांश्चासौ वीरश्च महावीर इत्येष
१० स्तवः । अयं च यथाभूतान्यासाधारणगुणोत्कीर्त्तनरूपत्वाद् भावस्तवः । तथाहि–
गुणा मूलातिशयाश्चत्वारः, तद् यथा–अपायापगमातिशयः, ज्ञानातिशयः, पूजाति-
शयः, वागतिशयश्च । तत्र 'विनिर्जितराग' इत्यनेनापायापगमातिशयमाह । उक्तं च–

"वीतरागा जिनाः सर्वे मोहनीयनिवृत्तितः ।
तद्भेदा हि यतः प्रोक्ताः [7]सर्वे रागादयो मलाः ॥"[8]

१५ इति । तथा 'सर्वज्ञ' इत्यनेन च ज्ञानातिशयम् । यथोक्तम्–

"संभिन्नं पासंतो लोगमलोगं च सव्वओ सव्वं ।
तं नत्थि जं न पासइ भूअं भव्वं भविस्सं च ॥"[9]

तथा 'त्रिदशनाथकृतपूज' इत्यनेन पूजातिशयम् । उक्तं च–

"अशोकवृक्षः सुरपुष्पवृष्टि-
२० दिव्यो ध्वनिश्चामरमासनं च ।
भामण्डलं दुन्दुभिरातपत्रं
सत्प्रातिहार्याणि जिनेश्वराणाम् ॥"[10]

---

१ प्रेक्ष्यतामस्यैव पृष्ठस्यान्तिमो भागः । २–३ 'विशेष्यते' इत्युभयत्र ङ–पाठः । ४ पाणिनीये धातुपाठे १९०२ तमः १९०३ तमश्च धातुः । ५ 'ईर गतौ कम्पने च' इति पाणिनीये धातुपाठे १०१८ तमो धातुः । ६ 'विपूर्वस्य' इति पाठो न विद्यते घ–पुस्तके । ७ 'सर्वरागा०' इति ङ–पाठः । ८ अनुष्टुप् ।

९ आर्यायां निबद्धस्यास्य पद्यस्य छाया यथा–

सम्भिन्नं पश्यन् लोकमलोकं च सर्वतः सर्वम् ।
तन्नास्ति यन्न पश्यति भूतं भव्यं भविष्यच्च ॥

१० उपजातिः ।

( स्वो० व्या० )

'सद्भूतवस्तुवादी'त्यनेन पुनर्वागतिशयमाह । यथोक्तम्—

"पोग्गलरूवो सद्दो [1]तहत्थवत्ता [2]तहापयईए उ ।
सच्चाइचित्तधम्मा तेणिह ववहारसिद्धि त्ति ॥"[3] ५

'शिवगतिनाथ' इति तु सिद्धत्वख्यापनमेतत् । महावीर इति च नाम भगवतः ।

---

( विवरणम् )

श्रीवीतरागाय नमः ।

शेषमतिमतिशयाना[4] यस्याऽनेकान्तजयपताकेह ।
हर्तुमशक्या केनापि वादिना नौमि तं वीरम् ॥ १ ॥[5] १०
कतिपयविषमपदगतं वक्ष्येऽनेकान्तजयपताकायाः ।
वृत्तेर्विवरणमहमल्पबुद्धिबुद्ध्यै समासेन ॥ २ ॥[6]

ननु शब्दार्थयोस्तादात्म्यतदुत्पत्तिसम्बन्धविरहाद् वाच्यवाचकभाव एव नास्ति । ततः कथं सद्भूतवस्तुवादित्वलक्षणश्चतुर्थोऽतिशयो घटते इत्याशङ्क्योक्तम्—

"पोग्गलरूवो सद्दो तहत्थवत्ता तहापयईए[7] उ । १५
सच्चाइचित्तधम्मा तेणिह ववहारसिद्धि त्ति ॥"[8]

अस्यार्थः—पुद्गलरूपो रूपरसगन्धस्पर्शस्वभावभाषावर्गणापुद्गलद्रव्योपादानकारणत्वेन मूर्त्तप्रकृतिः, न तु परेषामिव "शब्दोऽम्बरगुणः" इति वचनादाकाशधर्मत्वेनामूर्त्तः शब्दः प्रतीतरूप एव । तथेति विशेषणसमुच्चये । अर्थवक्ता—अर्थवाचकः, जीवादितत्त्वसप्तकप्रतिपत्तिनिमित्तमित्यर्थः । कुत इत्याह—तथाप्रकृतेस्तु । तुरेवकारार्थः । ततश्च तथा— २० तत्प्रकारार्थवचनस्वभावा या प्रकृतिः—स्वरूपं तस्या एव, अर्थवचनस्वाभाव्यादेवेत्यर्थः ।

ननु "वस्तु वाचामगोचर" इति [10]वचनाद् [11]बौद्धपरिकल्पनाया इव वस्तुवाचकस्वभावशून्य इति । तथा सत्यादिचित्रधर्माभावप्रधानत्वान्निर्देशस्य[12] सत्यादयः सत्या-ऽसत्यसत्यामृषा-ऽसत्यामृषलक्षणभाषाभेदरूपाश्चित्राः—नानाप्रकारास्तथाविधवक्तृव्यापार-

---

१ 'तहाऽत्थ०' इति घ-पाठः । २ 'तहा पईए' इति क-पाठः ।
३ आर्याच्छन्दसि रचितस्यास्य पद्यस्य छाया—

पुद्गलरूपो शब्दस्तथाऽर्थवक्ता तथाप्रकृतेस्तु ।
सत्यादिचित्रधर्मा तेनेह व्यवहारसिद्धिरिति ॥

४ 'मतमति०' इति ख-पाठः । ५-६ आर्या । ७ 'तहाप्पइए' इति घ-पाठः । ८ छायार्थं दृश्यतां तृतीयं टिप्पणकम् । ९ 'कारार्थं मतश्च' इति ख-पाठः । १० 'कल्पनाद्' इति क-पाठः । ११ 'बोद्धपरि०' इति ख-पाठः । १२ 'न्निर्देशसत्या०' इति ख-पाठः ।

( स्वो० व्या० )

यथोक्तम्—"अम्मापिउसंतिए[1] वद्धमाणे"[2] [3]"देवेहिं से [4]नामे कए 'समणे भगवं महावीरे' त्ति"[5]।

५ आह—एतेषामतिशयानामित्थमुपन्यासे किं प्रयोजनमिति? उच्यते—एवमेव भावः। तथाहि—नाविनिर्जितरागः सर्वज्ञो भवति, न चासर्वज्ञस्य त्रिदशनाथास्तथापूजां कुर्वन्ति, न च तदभावे भगवान् धर्ममाचष्टे इति। प्रकारान्तरेण [6]वचनसाफल्यं नय-परिकल्पनाव्युदासश्च सर्वज्ञसिद्धि[7]टीकातो विज्ञेय इति॥

इत्थमिष्टदेवतास्तवमभिधाय प्रयोजनाद्यभिधित्सया प्रसङ्गमाह—य इहेत्यादि। १० यः कश्चित् इह—लोके अनिन्द्यः—अनिन्दनीयो मार्गः—पन्थास्तपःस्वाध्याया-दिलक्षणः विशेषतः—विशेषेण पूर्वगुरुभिः—चिरन्तनवृद्धैः आचरितः—आसेवितः तत्र मार्गे प्रवर्तितव्यं—प्रवृत्तिः कार्या पुंसा—पुरुषेण न्यायः सद्व्यवस्थारूपः सतां—सत्पुरुषाणामेषः—[8]एवम्भूत इति॥

( विवरणम् )

१५ पराधीनतया धर्माः—स्वभावा यस्य स तथा। ततः किमित्याह—तेन—उक्तलक्षणेन शब्देनेह—संव्यवहारार्हजने व्यवहारसिद्धिः प्रतिनियतार्थप्रत्यायनपूर्विका इदं कुरु इदमानयेत्यादिरूपेति। ततो यतस्तथाप्रकृतेरेव [9]शब्दोऽर्थवक्ता सत्यादिचित्रधर्मा च ततः कथं भगवति वीतरागत्वादिगुणग्रामभाजि सद्भूतवस्तुवादित्वातिशयो न [10]घटते?

([11]) "देवेहिं से नामे कए समणे भगवं महावीरे त्ति"[12]। अस्यार्थः—देवैः २० शक्रादिभिः 'से' तस्य मातापितृभ्यां व्यवस्थापितवर्द्धमानाभिधानस्य भगवतः किमित्याह—नाम—सञ्ज्ञा कृतं—विहितम्। केनोल्लेखेनेत्याह—श्रमणोऽकस्मादेव तथा-विधबहुलोकसम्मत्या गृहस्थपर्यायेऽपि लब्धश्रमणाभिधानो भगवान् रूपैश्वर्यादिसमग्र-

---

१ कल्पसूत्रे १०८तमे सूत्रे ( षष्ठे क्षणे, दशमे सूत्रे )। २ छाया—मातापितृसत्कं वर्धमानः। ३ निम्नलिखितपङ्क्तिपुरस्सरः पाठोऽयम्—

"सहसंमुइयाए समणे अयले भयभेरवाणं परीसहोवसग्गाणं खंतिखमे पडिमाण पालगे धीमं अरइरइसहे दविए वीरिअसंपन्ने"

[ सहसम्मुदितया श्रमणः अचलो भयभैरवयोः परीषहोपसर्गाणां क्षान्तिक्षमः प्रतिमानां पालको धीमानरतिरतिसहो द्रव्यं वीर्यसम्पन्नः ]

४ 'नामं कयं' इति घ-पाठः। ५ छाया—देवैस्तस्य नाम कृतं 'श्रमणो भगवान् महावीर' इति। ६ 'विशेषणसाफल्यं' इति ङ-पाठः। ७ 'टीकातोऽवसेय' इति घ-पाठः। ८ 'इत्थम्भूत' इति ङ-पाठः। ९ 'शब्दार्थवक्ता' इति च-पाठः। १० 'घटत इति छः।' इति ख-पाठः। ११ पङ्क्ति-सूचकोऽयमङ्कः। १२ छायार्थं मूलस्थानार्थं च प्रेक्ष्यतां पञ्चमं प्रथमं च टिप्पणकम्।

( स्वो० व्या० )

तथाविधशक्त्यभावे कथमित्याह—यद्यपीत्यादि । यद्यपि **न तथाभूता**—पूर्वगुरुशक्तितुल्या **शक्तिः** सामर्थ्यरूपा । कुत इत्याह—**प्राक्कर्मदोषतः**—जन्मान्तरकृतकर्मदोषात् । **तदपि**—एवमपि **शक्त्यनुरूपं**—शक्त्युचितं तत्र ५ प्रवर्तितव्यम् । किमित्यत आह—**उपायः**—हेतुर्न **यतः**—यस्मात् **तत्प्राप्तयेऽपि**—तथाभूतशक्तिप्राप्त्यर्थमपि **अन्यस्तत्र** तत्प्रवर्तनादिति ॥

**सत्यपीत्यादि** । सत्यप्यस्मिन्नुपाये दानशीलादौ किमित्यत आह—**गुणवत्येव तु** प्रवर्तितव्यम्, आक्षेपत उपेयसाधके इत्यर्थः । **स च** गुणवानेवोपायः । **अन्यभावेऽपि**—सामान्येनोपायान्तरभावेऽपि **पण्डितैः**—उपायज्ञैः **गदितः**—उक्तः । क १० इत्याह—**यत्रैव**—उपाये शीलस्वाध्यायादौ **यस्य**—कर्तुः **शक्तिः** सामर्थ्यलक्षणा **सात्म्यं च** सुखिभावसाधनलक्षणम्[1] । यथोक्तम्—

"पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि ।
सुखित्वायावकल्पन्ते[2] तत् 'सात्म्य'मिति गद्यते ॥"[3]

**विशेषतः**—विशेषेण **तेषाम्**—उपायानां दान-शील-तपः-स्वाध्यायलक्षणानां १५ मध्ये तत्र प्रवर्तितव्यमिति ॥

---

( विवरणम् )

गुणग्रामयुक्तोऽसौ । किमित्याह—**महावीरः**—प्राणपर्यन्तप्रदायिदिव्याद्युपसर्गवर्गसंसर्गेऽपि मनागप्यक्षोभन् **महावीर**नामा भवत्विति ॥[4]

(७) **तत्र तत्प्रवर्तनादिति** । तत्र—अनिन्द्यपूर्वपुरुषाचरिते मार्गे तत्प्रवर्तनात्[5]—२० शक्त्यनुरूपचेष्टनात् ॥

(१२) **सात्म्यं च सुखिभावसाधनलक्षणमिति** । समानः—सदृश उचितत्वेन आत्मा यस्य स सात्मा तस्य भावः सात्म्यम् । चकारः समुच्चये । 'सुखिभावसाधनलक्षणं' सुखिभावस्य सुखित्वसाधनं निमित्तं तदेव लक्षणं यस्य तत् तथा । इदमुक्तं भवति–कर्तुमिष्टेन[6] आसेवितुमिष्टेन वस्तुना यदात्मनो योग्यत्वेन समानता सम्पन्ना २५ भवति तदा तत् 'सात्म्य'मुच्यते । तस्मिंश्च सति प्रकृतिविरुद्धस्नानपानाहारविहारादिक्रियाकलापोपनिपातेऽपि सति जन्तोः सुखित्वमेवोत्पद्यत इति ॥

---

१ 'साधनम्' इति घ-पाठः । २ 'यावत्कल्पन्ते' इति क-पाठः । ३ अनुष्टुप् । ४ 'छ' इत्यधिकः ख-च-पाठः । ५ 'नातन्शक्त्यनु०' इति ख-पाठः । ६ 'कर्तुमिष्टं न' इति ख-पाठः ।

( स्वो० व्या० )

किमित्येतत्? एवमित्याह–**स तमित्यादि** । सः–एवम्भूतः पुमान् **तम्**–उपायं दानादिक**माराधयितुं**–निष्ठां नेतुम् **अलं**–पर्याप्तये **यस्माद्** भवति, **आराध्य**
५ **चैनम्**–उपायं **आप्नोति**–प्राप्नोति । किमित्याह–**शक्त्यन्तरं** ततोऽन्यच्छोभन-तरम् । सात्म्यान्तरोपलक्षणमेतत् । सात्म्यान्तरं च किंविशिष्टमित्याह–**उपायान्तर-साधकं**–शीलाद्युपायान्तरनिष्पादक**मुत्तमं**–प्रधानं **नियमात्**–नियमेन, एतदेव सम्यगुपायस्य उपेयाव्यभिचारात् । यस्मादेवं **तस्मादित्यादि** । तस्मात् कारणात् **ममापि जातेति** प्रकरणकारवचनमेतत् । **प्रकरणकरणसमीहा**, प्रकरणकरण-
१० बुद्धिरिति योगः । कुत इत्याह–**शठोक्तिभिर्मोहितान् जडान् वीक्ष्य पूर्व-निमित्तात् कृपातश्चेति** । इहानेकान्तात्मके वस्तुतत्त्वे एकान्तव्याजमोहनाच्छठाः–एकान्तवादिनः । तदुक्तिभिः–एकान्तप्रतिपादिकाभिर्मोहितान्–अनेकान्तात्मकात् तत्त्वात् प्रच्यावितान् जडान्–मन्दमतीन् वीक्ष्य–दृष्ट्वा पूर्वनिमित्तात्–अनिन्द्यमार्ग-प्रवर्तनादेः । प्रकरणकरणं ह्यनिन्द्यो मार्गः पूर्वगुरुभिश्च कुक्काचार्यादिभिरस्मद्वंशजै-
१५ राचरित इति । हेत्वन्तरमाह–कृपातश्च–करुणातश्च । कृपायतनमेव हि शठोक्ति-भिर्मोहिता जडाः कारुणिकस्य, तथास्वभावत्वादिति ॥

न शक्त्यभावे कृपामात्रेणेष्टसिद्धिरित्याशङ्क्याह–**जिनवचनेत्यादि** । जिनवचनस्य **श्रवणात्** कारणात् । **नः**–अस्माकमिति ग्रन्थकार आह । **शक्तिरपि न नास्ति** । "द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः" इति कृत्वाऽस्त्येव । **तत्रेति**
२० प्रकरणकरणे **तस्यैव**–जिनवचनस्य **सद्बोधहेतुभावात्** कारणात् । उक्तं च–

"जिनवचनात् सद्बोधो नियमाच्चिन्तामणेः सुखं यद्वत् ।
[1]विध्यात्पादनुबन्धि तद्वदिति निदर्शनं ह्येतत् ॥"[2]

हेत्वन्तरमाह–**तुच्छत्वात्**–असारत्वाद् **वा** [3]कारणात् । **शठोक्तीनाम्**–अधिकृतप्रकरणनिराकार्याणामिति ॥

२५ अनेन विषयाल्पतया सौकर्यमाह–**तुच्छत्वं पुनरित्यादि** । तुच्छत्वं पुनः–असारत्वं **पुनरासां**–शठोक्तीनां नि( ? प्र)**दर्शितं पूर्वसूरिभिः**–पूर्वाचार्यैः

( विवरणम् )

(२२) **तद्वदिति निदर्शनं ह्येतदिति** । तद्वत्–चिन्तामणिर्वदुच्यते इत्येतन्नि-दर्शनं–दृष्टान्तमात्रम्, न पुनः सर्वसाधर्म्यमस्ति जिनवचनचिन्तामणिसाध्ययोरर्थयोर-
३० त्यन्तभेदात् ॥

१ 'विध्यात्पाद०' इति क–पाठः । २ आर्या । ३ 'करणात्' इति घ–पाठः । ४ 'वद् यद्युच्यते' इति च–पाठः ।

( स्वो० व्या० )

**सिद्धसेनदिवाकरादिभिर्बहुधा**—अनेकधा **न्यक्षेण**—विस्तरेण **सूक्ष्मयुक्तिभिः**—निपुणोपपत्तिभिः **अतिगम्भीरं** नि( ? प्र )दर्शितमिति क्रियाविशेषणम्, तदुत्थानासम्भवपरतयेत्यर्थः । **स्वशास्त्रेषु**—सम्म( न्म ? )त्यादिषु ॥ ५

यद्येवं किमनेनेत्याह—**तत् तु शठोक्तीत्यादि** । तत् पुनस्तुच्छत्वमासां **शठोक्तिविमूढाः** सन्तो **न जडाः** प्राणिनः **सञ्जानते**—अवगच्छन्ति, **यतः**—यस्मात् **तेन**—कारणेन **सन्दर्श्यते**—तत्प्रतिपत्त्यानुगुण्येन सम्यग् दर्श्यते । कथमित्याह—**समासस्थूरोक्तिशठोक्त्यपाकरणैः** । समासेन स्थूरोक्तिभिः शठोक्त्यपाकरणानीति विग्रहस्तैरपि ॥ १०

एवं प्रयोजनादिप्रसङ्गमभिधायाह—**प्रारभ्यते** इत्यादि । प्रारभ्यते—प्रक्रम्यते । **ततः**—तस्मात् कारणात् । **इदमित्यनेनान्तस्तत्त्वनिष्पन्नं** बुद्धौ व्यवस्थितं प्रकरणमाह । **सम्यगिति** । जडप्रतिपत्त्यानुगुण्येन **अनेकान्तजयपताकाख्यं** आख्या—सञ्ज्ञा **अनेकान्तजयपताकासञ्ज्ञकम्** । **प्रकरणमिति** । प्रक्रियन्तेऽर्थाः स्वस्थानस्थापनाभिव्यक्त्याऽस्मिन्निति 'प्रकरणम्' । किंविशिष्टमित्याह—**उक्तगुणयुतं**—समास- १५ स्थूरोक्तिशठोक्त्यपाकरणरूपम् । किमर्थमित्याह—**जडावबोधाय**—मन्दमत्यवबोधार्थम् । एतदेव विशिनष्टि—**धर्मफलम्** । धर्मः फलं—प्रयोजनमस्येति धर्मफलम् । तदत्र तावदनेकान्तजयपताकाऽभिधानेन शठोक्त्यपाकरणमनन्तरप्रयोजनं कर्तुः, परम्पराप्रयोजनं तु धर्मः, उक्तवदनिन्द्यमार्गप्रवृत्तेः, विषये कृपासाफल्यकरणाच्च । अभिधेयमप्येतदेव । तथाऽभिधीयमानं कर्मरूपापन्नमिति साध्यसाधनलक्षणश्च २०

---

( विवरणम् )

(५) **तदुत्थानासम्भवपरतयेति** । तासां—शठोक्तीनामुत्थानस्य—उत्पत्तेरसम्भवपरतया—अघटमानताप्रधानतया । अयमत्र भावः—पूर्वसूरिभिः स्याद्वादयुक्त्या तथा शठोक्तयो निराकृताः, यथा निर्बीजतां याताः पुनरुत्थातुं न प्रवर्त्तन्ते ॥

(१४-१५) **स्वस्थानस्थापनाऽभिव्यक्त्येति** । स्वभावत एव हि पदार्थाः स्व- २५ स्थाने—निजस्वभावरूपे स्वहेतुभिरेव[३] व्यवस्थापिता वर्तन्ते । अनेन च ग्रन्थेन स्वस्थाने स्थापनाया अभिव्यक्तिः—प्रकाशनमेव क्रियते तथाविधमोहापसरणेनेति ॥

(२०) **अभिधेयमप्येतदेवेति** । शठोक्त्यपाकरणम् ॥

---

१ 'सतोक्तीना०' इति ख-पाठः । २ 'शक्त्या' इति क-पाठः । ३ 'रूपे स्वहेतुभिरेव' इत्यधिकः क-पाठः ।

(मूलम्)

**इह च नानुपन्यस्तानां शठोक्तीनामपाकरणानीति ता एवोपन्यस्यन्ते। तत्र शठाः सदसन्नित्यानित्याद्यनेकरूपं वस्तु प्रतिनियतादि-**
**५ संवेदनानुभवेनान्यथा तदनुपपत्तेरनुभवन्तोऽपि वस्तुस्थित्याऽनादि-कर्मसामर्थ्यदोषतो भवसमुद्रनैर्गुण्यमिव न प्रतिपद्यन्ते, अपाय-**

---

(स्वो० व्या०)

सम्बन्धः। श्रोतॄणां त्वनन्तरप्रयोजनं प्रकरणार्थपरिज्ञानमेव, परम्पराप्रयोजनं धर्म एव इति। एवं च नारब्धव्यमेवेदं प्रकरणं प्रयोजनादिरहितत्वात् उन्मत्तकविरुत-
१० वदित्येवमादि निराकृतमेव॥

साम्प्रतमधिकृतप्रयोजनानुवादेनैव विवक्षितमुपक्रमते[1] **इह** **चे**त्यादिना। इह च-प्रक्रमे **नानुपन्यस्तानाम्** आदौ **शठोक्तीनामपाकरणानीति** कृत्वा **ता एव उपन्यस्यन्ते**-शठोक्तयः। **तत्र शठाः** प्रागुक्तलक्षणाः। **सदसन्नित्यानित्याद्यनेकरूपम्**। 'आदि'शब्दात् सामान्य-विशेषादिपरिग्रहः। **वस्तु** चेतना-
१५ चेतनम्। घटज्ञानादि 'अनुभवन्तोऽपि[2] न प्रतिपद्यन्त' इति योगः। कथमित्याह-**प्रतिनियतादिसंवेदनानुभवेन**। प्रतिनियतं-तदन्याभवनस्वभावम्, 'आदि'-शब्दादनुवृत्ति-व्यावृत्ति-स्वभावादिपरिग्रहः, संवेदनं-विज्ञानम्। प्रतिनियतादि च तत् संवेदनं चेति समासः। तस्यानुभवस्तेन हेतुना। **अन्यथा**-वस्तुनः सदसदादि-रूपतां विहाय **तदनुपपत्तेः**-प्रतिनियतादिसंवेदनानुभवानुपपत्तेः कारणात्।
२० **अनुभवन्तोऽपि वस्तुस्थित्या**-ज्ञानज्ञेयापेक्षया उभयथा वस्तुस्थितिमाश्रित्य कुतो न प्रतिपद्यन्त इत्याह-**अनादिकर्मसामर्थ्यदोषतः**। अनादियोगादनादि, अनादि च तत् कर्म च अनादिकर्म, कर्म ज्ञानावरणीयादि, तस्य सामर्थ्यमात्मनो भ्रान्तिपरिणामाद्यापादनलक्षणं ततो दोषः, आत्मनो भ्रान्तिपरिणामादिरिति विग्रहः, ततः। अनेनेश्वरादिव्यवच्छेदमाह, तस्य वीतरागत्वादिना दोषहेतुत्वायोगात्। किमिव
२५ न प्रतिपद्यन्त इत्याह-**भवसमुद्रनैर्गुण्यमिव**। भवन्त्यस्मिन् कर्मवशवर्त्तिनः प्राणिन इति 'भवः'-संसारः, समुद्र इवानर्वाक्पारत्वाद् भवसमुद्रः, तस्य नैर्गुण्यं-निर्गुणत्वम्, जन्मानित्यादिभावेनेति भावः। तद्वत्-भवसमुद्रनैर्गुण्यमिव **न प्रतिपद्यन्ते**, सत्प्रतिपत्त्या तद्विकारेष्वेवास्थया[3] प्रवृत्तेरिति। न केवलं यथोक्तं वस्तु

---

१ 'क्रम्यते' इति ङ-पाठः। २ 'वस्तुस्थित्या ज्ञानज्ञेयापेक्षया उभयथा वस्तुस्थितिमाश्रित्य' इति समधिकः पाठः क-प्रतौ। ३ 'तद्विकारेष्वेवावस्थया' इति क-पाठः।

(मूलम्)

**हेत्वसदभिनिवेशाध्मातमानसाः प्रत्यवतिष्ठन्ते च, कथमेकमेव घटा[1]दिरूपं वस्तु [2]सच्चासच्च भवति ?। तथाहि—सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, असत्त्वं सत्त्वपरिहारेण; अन्यथा तयोर[3]विशेषः स्यात् । ततश्च तद् यदि सत् कथमसत्? अथासत् कथं सदिति ? एकत्र सदसत्त्वयोर्विरोधात् । तथा चोक्तम्—**

**"यस्मात् सत्त्वमसत्त्वं च विरुद्धं हि मिथो द्वयम् ।**
**वस्त्वेकं सदसद्रूपं तस्मात् खलु न युज्यते ॥[4]"**

---

(स्वो० व्या०)

न प्रतिपद्यन्ते, किञ्च **अपाये**त्यादि । अपायहेतुश्चासौ नरकादिनयनेन **असदभिनिवेश**श्चालीकनिर्बन्धरूपतयेति समासः । तेन **आध्मातम्**[5]—आपूरितं **मानसं**—चित्तं येषां ते तथाविधाः । किमित्याह—**प्रत्यवतिष्ठन्ते च**—प्रत्यवस्थानं च कुर्वन्ति । **क**[6]**थमि**त्यादि । कथमिति क्षेपे । **एकमेव** तथोपलम्भात्, **घटादिरूपं वस्तु** । 'आदि'शब्दाद् विज्ञानादिपरिग्रहः । **सच्चासच्च भवति** द्विरूपम्? नैवेत्यभिप्रायः । एतदेव भावयति **तथाही**त्यादिना । त[7]थाहीत्युपदर्शने । **सत्त्वं** प्रसिद्धं तद् **असत्त्वपरिहारेण**—असत्त्वानापत्त्या **व्यवस्थितम्, असत्त्वम्** अपि प्रतीतं **सत्त्वपरिहारेण**, व्यवस्थितमिति वर्तते । इत्थं चैतदङ्गीकर्तव्यम् । **अन्यथा**—एवमनङ्गीकरणे **तयोः**—सत्त्वासत्त्वयोः **अविशेषः स्यात्**—अभेदः स्यात् । न चैतदेवम् । **ततश्चे**त्यादि । ततश्च—एवं सति **तत्**—वस्तु **यदि सत् कथमसत्? अथासत् कथं सदिति ?** । किं नैवमित्याह—**एकत्र** वस्तुनि **सदसत्त्वयोर्विरोधात्** । परस्परपरिहारस्थितिलक्षणोऽयं विरोध इति । न चैतत् स्वमनीषिकया उच्यत इत्याह—**तथा चोक्तं** पूर्वसूरिभिः । **यस्मादि**त्यादि । **यस्मात् सत्त्वमसत्त्वं च विरुद्धं हि** 'हि'शब्द एवकारार्थोऽवधारणे, विरुद्धमेव, **मिथः**—परस्परं **द्वयम्** एतद् **वस्त्वेकं सदसद्रूपं** घटादि **तस्मात् खलु न युज्यते** । खल्वित्येवकारार्थोऽवधारणे । स[8] च भिन्नक्रमः, न युज्यते एवेत्यर्थः ॥

---

१ 'आदि'शब्दाज्ज्ञानादि ज्ञेयम् ।

२ **अनेकान्तवादप्रवेशटिप्पने** प्रोक्तं च—

"अर्थक्रियासमर्थं च सदन्यदसदुच्यते ।
समावेशो न चैकत्र तयोः प्रोक्तो विरोधतः ॥"

३ अभेद इत्यर्थः । ४ अनुष्टुप् । ५ 'ध्मातं' इति ङ-पाठः । ६ 'कथमित्याह' इति क-घ-पाठः । ७ 'तथाहीत्युपप्रदर्शने' इति ङ-पाठः । ८ 'एव' इति क-पाठः ।

(मूलम्)

**किञ्च सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतया अभ्युपगतं भवति। ततश्चात्रापि वक्तव्यम्–धर्मधर्मिणोः किं तावद् ५ भेदः, आहोस्विदभेदः, आहोस्विद् भेदाभेद इति?। तत्र यदि तावद् भेदस्ततः सदसत्त्वयोर्भिन्नत्वात् कथमेकं सदसद्रूपमिति?।**

**अथाभेदस्ततः सदसत्त्वयोरेकत्वम्, एकस्माद् धर्मिणोऽभिन्नत्वात् तत्स्वरूपवत्, अतोऽपि कथमेकं सदसद्रूपमिति?। धर्मिणो वा[1]ऽभेदः सदसत्त्वयोरभिन्नत्वात् तत्स्वात्मवदित्थमपि कथमेकमुभयरूपम्?।**

१० **अथ भेदाभेदः । अत्रापि येनाकारेण भेदस्तेन भेद एव, येन**

(स्वो० व्या०)

दोषान्तरमाह **किञ्चे**त्यादिना। किञ्चायमपरो दोषः–**सदसद्रूपं वस्त्वभ्युपगच्छता** परेण **सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवति**। ततः किमित्याह–**ततश्चात्रापि वक्तव्यं** परेण–**धर्मधर्मिणोः किं तावद् भेदः,** १५ **आहोस्विदभेदः[2], आहोस्विद् भेदाभेद इति** विकल्पाः। किञ्चात इत्याह— **तत्र यदि तावद् भेदो** धर्मधर्मिणोः, **ततः सदसत्त्वयोर्भिन्नत्वात्,**[3] धर्मिणः सकाशात्, त्रितयमेतत् **कथमेकं सदसद्रूपमिति?**॥

**अथाभेदः**[4] सदसत्त्वयोर्धर्मिणः, **ततः सदसत्त्वयोरेकत्वम्, एकस्माद् धर्मिणः अभिन्नत्वात् तत्स्वरूपवत्**–धर्मिस्वरूपवत्। **अतोऽपि कथ-** २० **मेकं सदसद्रूपमिति?** एकमेव तदित्यभिप्रायः। **धर्मिणो वाऽभेदः सद्-सत्त्वयोरभिन्नत्वात् तत्स्वात्मवत्**–धर्मस्वात्मवत्। **इत्थमपि कथमेक-मुभयरूपम्?** द्व्यात्मकत्वात् तस्येत्यर्थः॥

**अथ भेदाभेदः** धर्मधर्मिणोः। **अत्रापि**–भेदाभेदे **येनाकारेण भेदस्तेन**

(विवरणम्)

२५ **(२१) धर्मस्वात्मवदिति।** यथाहि—धर्मयोः–सत्त्वासत्त्वयोः स्वात्मा परस्परं भेदवान्, अन्यथा द्वयायोगात्, एवं ताभ्यामभिन्नो घटादिधर्मी भेदवान्[5] न स्यात्। अन्यथा कथं ताभ्यामभिन्नत्वं तस्य?। एवं च धर्मिणावपि द्वौ प्राप्नुतः, न चेदं दृष्टमिष्टं वा॥

१ 'वा भेदः' इति ग–पाठः। २ 'आहोश्विद्' इति क–पाठः। ३ 'स्वरूपवद् धर्मिस्वरूपवदतोऽपि' इत्यधिकः क–पाठः। ४ अभेदो हि द्विधा भवति–(अ) सत्त्वासत्त्वधर्मौ धर्मिणा सहाभिन्नौ विद्येते, (आ) धर्मी सत्त्वासत्त्वधर्माभ्यां सहाभिन्नो भवति। ५ 'वान् स्यात्' इति क–पाठः।

(मूलम्)

**चाभेदस्तेनाभेद एव; तदेवमपि नैकमुभयरूपम्। अथ येनैवाकारेण भेदस्तेनैवाभेदः, [1]येनैव चाभेदस्तेनैव भेद इति। एतदप्यचारु, विरोधात्। तथाहि–यदि येनाकारेण भेदः कथं तेनैवाभेदः? अथाभेदः कथं भेद इति?। अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्च, येनापि चाभेदस्तेनाप्यभेदो भेदश्च। अत्रापि येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एवेति तदेवावर्तते॥**

---

(स्वो० व्या०)

**भेद एव, येन चाभेदस्तेनाभेद एव। तदेवमपि**–भेदाभेदाङ्गीकरणेऽपि **नैकमुभयरूपम्**, तत्त्वतः पूर्वोक्तदोषानतिक्रमात्। **अथ येनैवाकारेण भेदः तेनैवाभेदः**, धर्मधर्मिणोरिति प्रक्रमः, **येनैव चाभेदस्तेनैव भेद इति। एतदप्यचारु**—अशोभनम्। कुत इत्याह–**विरोधात्। तथाहि–यदि [2]येनाकारेण भेदः कथं तेनैवाभेदः? अथाभेदः कथं भेद इति?** अभिन्ननिमित्तत्वादिति गर्भः। **अथ येनाप्याकारेण भेदस्तेनापि भेदश्चाभेदश्चे**त्युभयम्, **येनापि चाभेदस्तेनाप्यभेदश्च भेदश्चे**त्युभयमेव। एतदाशङ्क्याह–**अत्रापी**त्यादि। अत्रापि–आकुलवादे **येनाकारेण भेदस्तेन भेद एव**, प्रवृत्तिनिमित्तभेदात्, **येन चाभेदस्तेनाभेद एव**, [3]अभिन्ननिमित्तत्वात्, **इति**–एवं **तदेवावर्तते** पूर्वोक्तमिति चक्रकमनवस्था वा॥

---

(विवरणम्)

(११) **तत्त्वतः [4]पूर्वोक्तदोषानतिक्रमादि**ति। तत्त्वतः–परमार्थवृत्त्या पूर्वोक्तदोषाणां केवलभेदाभेदपक्षद्वयभाविनामनतिक्रमात्–अनुल्लङ्घनात्। इदमुक्तं भवति–केवलभेदपक्षे अभेदपक्षे च ये प्रागेव निरूपिता दोषास्ते उभयपक्षाभ्युपगमे सुतरां प्राप्नुवन्ति। यदुक्तम्—

"प्रत्येकं यो भवेद् दोषो द्वयोर्भावे कथं न सः?।"

इति॥

(१७) **आकुलवादे** इति। सदसत्त्वयोः परस्परं सङ्कीर्णवादे॥

(१९) **चक्रकमनवस्था वे**ति। इह अभयदेवादिग्रन्थान्तरेषु पदत्रयस्य पुनः पुनरावृत्तौ 'चक्रकं' नाम दोषो विवक्षितो दृश्यते, यथा **मीमांसकः** प्राह–स्वत एव सर्वज्ञानानि प्रमाणानि, न पुनः संवादज्ञानापेक्षया, तत्र चक्रकदोषप्रसङ्गात्। "[5]तथाहि–

---

१ 'येन चाभेद०' इति क–पाठः। २ 'येनैवाकारेण' इति घ–पाठः। ३ 'भिन्न०' इति ङ–पाठः। ४ 'पूर्वदोषा०' इति क–पाठः। ५ 'तदाहि न यावद् विज्ञानस्य च यथा०' इति ख–पाठः।

(मूलम्)

किञ्च भेदाभेदमभ्युपगच्छता अवश्यमेवेदमङ्गीकर्त्तव्यम्, इह धर्मधर्मिणोर्धर्मधर्मितया[1] भेदः स्वभावतः पुनरभेदः। स्वभावतो-५ऽपि हि तयोर्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वयमेवाङ्गीकृतं स्यात्, न पुनरेकं द्विरूपमिति। तदत्रापि निरूप्यते—न हि अनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयाऽपि भेदो युज्यते। तथाहि—यदि यो धर्मस्य स्वभावः स एव धर्मिणोऽपि; एवं सत्यसौ धर्मी धर्म एव स्यात्, तत्स्वभावत्वाद् धर्मस्वरूपवत्[2]। धर्मो वा

१० (स्वो० व्या०)

किञ्चेत्यादि। किञ्च भेदाभेदमभ्युपगच्छता परेण अवश्यमेवेदमङ्गीकर्त्तव्यम्, इह—पक्षे धर्मधर्मिणोर्धर्मधर्मितया भेदः नियतस्वरूपतया, स्वभावतः पुनरभेदः, वस्तुत्वेनेत्यर्थः। किमित्येतत्? एवमित्याह—स्वभावतोऽपि हि तयोः—धर्मधर्मिणो र्भेदेऽङ्गीक्रियमाणे परस्परतः प्रविभक्तरूपं पदार्थद्वय-१५मेव धर्मधर्मिरूपमङ्गीकृतं स्यात्, न पुनरेकं वस्तु द्विरूपमिति। यदि नामैवं ततः किमित्याशङ्क्याह—तदत्रापि निरूप्यते—न हि—नैव अनासादितस्वभावभेदयोर्धर्मधर्मिणोर्धर्मधर्मितयाऽपि नियतस्वरूपतया भेदो युज्यते। एतदेव भावयति तथाहीत्यादिना। तथाहि—यदि यो धर्मस्य स्वभावः वस्तुत्वलक्षणः स एव धर्मिणोऽपि, नान्यः। एवं सत्यसौ धर्मी धर्म एव स्यात्, तत्-२०स्वभावत्वात्—धर्मस्वभावत्वात्[3]। धर्मस्वरूपवदिति दृष्टान्तः। धर्मो वा धर्मि-

(विवरणम्)

न यावद् विज्ञानस्य यथावस्थितार्थपरिच्छेदलक्षणो विशेषः सिद्ध्यति, न तावत् तत्पूर्विका प्रवृत्तिः संवादार्थिनाम्, यावच्च न प्रवृत्तिर्न तावदर्थक्रियासंवादः, यावन्न संवादो न तावद् विज्ञानस्य यथावस्थितार्थपरिच्छेदकत्वसिद्धिरिति चक्रकप्रसङ्गः"[6] २५इति। अनवस्था तु पुनः पुनः पदद्वयावर्त्तनरूपा प्रसिद्धैव। इह तु अनवस्था-चक्रकयोर्नामकृत एव विशेषो लभ्यते, न पुनरर्थकृतः कश्चिद् यद् वक्ष्यति सामान्यविशेषवादे 'चक्रकमनवस्थानिवृत्ते'रिति। अत्र हि चक्रके साध्ये अनवस्थानतिवृत्तिलक्षणो हेतुरुपन्यस्तः। अतो ज्ञायते अनवस्थैव चक्रवत् पुनः पुनर्भ्रमणात् चक्रकमित्युच्यत इति॥

१ 'धर्मनियतरूपतया भेदः धर्मिस्वभावतः' इति क-पाठः। २ 'तद्धर्मस्वरूपवत्' इति क-पाठः। ३ 'धर्मस्वभावात्' इति पाठो घ-पुस्तके नास्ति। ४ 'स्वभावात्' इति क-पाठः। ५ 'परिच्छेदत्वसिद्धिरिति सिध्यति' इति ख-च-पाठः। ६ प्रेक्ष्यतां सन्मतिप्रकरणस्य वृत्तिः (पृ. ५)।

(मूलम्)

**धर्मिस्वभावाव्यतिरिच्यमानमूर्तिर्धर्मिमात्रमेव स्यादिति। ततश्चैवं धर्मधर्मिणौ स्वभावभेदानासादनेनाप्रतिलब्धभेदौ कथं भेदनिमित्तं भवत इति?। न च स्वभावतोऽपि तयोर्भेदाभेदकल्पना युक्ता, पूर्वोक्तदोषानतिवृत्तेः। तथा चोक्तम्—** ५

**"भेदो वा स्यादभेदो वा द्वयं वा धर्मधर्मिणोः।**
**भेदे नैकमनेकं स्यादभेदेऽपि न युज्यते॥[१]**
**द्वयपक्षोऽपि चायुक्तो विकल्पानुपपत्तितः।**
**तेनानेकान्तवादोऽयमज्ञैः समुपकल्पितः॥"[२]** १०

**किञ्च [३]संविन्निष्ठा विषयव्यवस्थितयः। न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य [४]संवेदनस्याभावात्। तथाहि—[५]नाक्षजे विज्ञाने**

---

(स्वो० व्या०)

[६]स्वरूपाव्यतिरिच्यमानमूर्त्तिः सन् **धर्मिमात्रमेव स्यात्**, तत्स्वरूपवत् इति। **ततश्चैवं धर्मधर्मिणौ** द्वावपि **स्वभावभेदानासादनेन** हेतुना **अप्रतिलब्धभेदौ** सन्तौ **कथं भेदनिमित्तं भवत इति?।** स्वभावाभेदान्नैव भवत इत्यर्थः। **न चे**त्यादि। न च **स्वभावतोऽपि** सकाशात् **तयोः**—धर्मधर्मिणोर्भेदा- **भेदकल्पना युक्ता।** कुत इत्याह—**पूर्वोक्तदोषानतिवृत्तेः।** पूर्वोक्तदोषाश्च अत्रापि 'येनाकारेण भेदस्तेन भेद एवे'त्यादयः[७]। **तथा चोक्त**मिति ज्ञापकमाह **भेदो वे**त्यादिना। **भेदो वा स्यादभेदो वा द्वयं वा** भेदाभेदलक्षणं **धर्मधर्मिणोः।** किञ्चातो **भेदे नैकं** वस्तु **अनेकं स्यात्**, अनेकत्वादेव, **अभेदेऽपि न युज्यते** एकमनेकम्, एकत्वादेव। **द्वयपक्षोऽपि चायुक्तो** भेदाभेदपक्षः। कुत इत्याह—**विकल्पानुपपत्तितः।** इयं चोक्तवद् योजनीया। **तेनानेकान्तवादोऽयमज्ञैः** प्राणिभिः **समुपकल्पित** इति॥ १५ २०

इहैवाभ्युच्चयमाह **किञ्चे**त्यादिना। किञ्चायमपरो दोषः। **संविन्निष्ठाः**—संवेदन-पर्यवसाना **विषयव्यवस्थितयः**—विषयमर्यादाः। यदि नामैवं ततः किमित्याह— **न च सदसद्रूपं वस्तु संवेद्यते।** कुत इत्याह—**उभयरूपस्य संवेदनस्याभावात्।** एतदेव भावयति **तथाही**त्यादिना। तथाहि **नाक्षजे विज्ञाने,** २५

---

१–२ अनुष्टुप्। ३ ज्ञानायत्ता इत्यर्थः। ४ 'संवेदनाभावात्' इति ग–पाठः। ५ 'नाक्षजविज्ञाने' इति क–पाठः। ६ 'स्वरूपव्यति०' इति घ–पाठः। ७ प्रेक्ष्यतां द्वादशं पृष्ठम्।

(मूलम्)

सदसत्त्वे प्रतिभासेते, असत्त्वस्यारूपत्वात्, रूपत्वे चासत्त्ववि-
रोधात्, तथाऽनुभवाभावाच्च। न च कार्यद्वारेणापि सदसद्रूपं वस्तु
५ प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यते। न च तत् कार्य-
करणे प्रवर्त्तमानं केनचिदाकारेण करोति केनचिन्न करोति, एकस्य
करणाकरणविरोधात्, सर्वात्मना च करणे तद्भावरूपमेव स्यात्।
तथाहि—नाभावः कस्यचित् कारणं भवितुमर्हति, अभावत्ववि-
रोधात्, तत्कारणत्वे च विश्वमदरिद्रं स्यात्। तत एव कटक-कुण्डला[1]
१० द्युत्पत्तेः। न च तस्मान्निरुपाख्यतयाऽविशिष्टात् कस्यचिदेव

(स्वो० व्या०)

इन्द्रियज्ञाने इत्यर्थः, सदसत्त्वे प्रतिभासेते। कुत इत्याह—असत्त्वस्यारूप-
त्वात्। अरसाद्युपलक्षणमेतत्। रूपत्वे चासत्त्वविरोधात्, तथाऽनुभवा-
भावाच्च नाक्षजज्ञानेन तुच्छानुभवः। एवं प्रत्यक्षेणोभयरूपस्याग्रहणमभि-
१५ धाय अनुमानेनाभिधातुमाह—न चेत्यादि। न च कार्यद्वारेणापि सदसद्रूपं
वस्तु प्रतिपत्तुं शक्यते। कार्यमत्र समानजातीयमभिप्रेतम्। तथा चाह—यतो
नोभयरूपं कार्यमुपलभ्यते। न च तत्—वस्तु कार्यकरणे प्रवर्तमानं
सत् केनचिदाकारेण करोति केनचिन्न करोति कार्यम्। कुत इत्याह—
एकस्य करणाकरणविरोधात्। सर्वात्मना च करणे कार्यस्य तद्भाव-
२० रूपमेव स्याद् वस्तु। तथाहि—नाभावः कस्यचिद् वस्तुनः कारणं भवितु-
मर्हति। कुत इत्याह—अभावत्वविरोधात् सकलशक्तिविकलस्तुच्छोऽयमिति।
तत्कारणत्वे च—अभावकारणत्वे च विश्वं—जगत् अदरिद्रं स्यात्। तत
एव अभावात्, कटक-कुण्डलाद्युत्पत्तेः। न च तस्मात्—अभावात्

(विवरणम्)

२५ (१६) कार्यमत्र समानजातीयमभिप्रेतमिति। इह मृदादिरूपं कारणं जैनैः
सदसद्रूपमभ्युपगतम्[2], तच्च न कार्यद्वारेणावबोद्धुं शक्यते, यतः सर्वमपि कार्यमत्र लोके
समानजातीयं कारणेन सह सदृशं सत् कारणस्वभावं गमयितुं समर्थम्, न च कार्यं
घटादिसम्बन्धि सदसद्रूपं वेद्यते, वेद्यमानरूपत्वेनैव तस्य प्रत्यक्षत एवोपलम्भादिति ॥

१ 'भावात्' इति ङ-पाठः। २ 'सद्भूयमभ्यु०' इति ख-पाठः।

(मूलम्)

**भावः, न सर्वस्येति वक्तुं युज्यते, हेत्वभावात्, अतः श्रद्धागम्यमेवेदं सदसद्रूपं वस्त्विति। तथा चोक्तम्—**

**"न च प्रत्यक्षसंवेद्यं कार्यतोऽपि न गम्यते।**
**श्रद्धागम्यं यदि परं वस्त्वेकमुभयात्मकम्[१] ॥"[२]** ५

**एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यम्, विरोधादेव। तथाहि—"अप्रच्युतानुत्पन्नस्थिरैकस्वभावं नित्यमाख्यायते, प्रकृत्यैकक्षणस्थितिधर्मकं चानित्यमिति"। ततश्च तद् यदि नित्यं कथमनित्यम्?**

(स्वो० व्या०) १०

**निरुपाख्यतया अविशिष्टात् कस्यचिदेव भावो** मृदादेरिव घटादेः, **न सर्वस्येति वक्तुं युज्यते**। कुत इत्याह—[३]**हेत्वभावात्**, मृदादेरिव घटादौ प्रतिनियतशक्त्यभावेनेति। **अतः श्रद्धागम्यमेवेदं सदसद्रूपं वस्त्विति** निगमनम्। **तथा चोक्तमिति** ज्ञापकमाह **न चे**त्यादिना। **न च प्रत्यक्षसंवेद्यम्** उभयात्मकं वस्तु **कार्यतोऽपि न गम्यते** उक्तवदेतत्। **श्रद्धागम्यं** १५ **यदि परं** प्रमाणाविषयत्वेन **वस्त्वेकमुभयात्मकम्**, सदसदात्मकमित्यर्थः ॥

अतिदेशेन दूषणान्तरमाह **एतेने**त्यादिना। एतेन—अनन्तरोदितेन सदसद्रूपतानिराकरणेन **नित्यानित्यमपि** वस्तु **प्रत्युक्तं**—निराकृतम् **अवगन्तव्यम्**। कुत इत्याह—**विरोधादेव**। एतद्भावनायैवाह—**तथाही**त्यादि। [४]तथाहीत्युपदर्शने। **अप्रच्युतः** अनिवृत्तिस्वभावतया **अनुत्पन्नः** सदाभावेन **स्थिर** एवंरूपतया २० **एकः स्वभावो** यस्य तत् तथाविधं **नित्यमाख्यायते**। [५]अथवैवं विशेषणसाफल्यम्—एकस्वभावं नित्यमाख्यायत इत्युक्ते क्षणस्थितिस्वभावमप्येकस्वभावं भवति। तद्व्यवच्छेदार्थं 'स्थिर'ग्रहणम्। स्थिरैकस्वभावमपि मुक्तवस्तु कैश्चिन्नित्यमिष्यत इति तद्व्यवच्छेदार्थम् 'अनुत्पन्न'ग्रहणम्। अनुत्पन्नस्थिरैकस्वभावमपि स्वप्रच्युतिसमयं यावत् कैश्चिन्नित्यमिष्यत इति तद्व्यवच्छेदार्थम् 'अप्रच्युतग्रहण'मिति। २५ **प्रकृत्ये**त्यादि। प्रकृत्या—स्वभावेन, **एकक्षणस्थितिधर्मकं चानित्यमिति** अनित्य-

(विवरणम्)

(२५) **कैश्चिन्नित्यमिष्यत** इति। कैश्चित्—नैयायिकैर्नित्यं—शाश्वतमभ्युपगम्यते। **नैयायिका** हि घटादिकार्याणां प्रागभावमनुत्पन्नस्थिरैक[६]भावतया घटादिकार्योत्पत्तिसमयं यावन्नित्यमभ्युपगच्छन्तोऽपि तदुत्पत्तौ प्रच्यवमानं मन्यन्त इति ॥ ३०

१ अत्र पूर्वपक्षस्य प्रथमांशः सम्पूर्णः। २ अनुष्टुप्। ३ 'हेतुभावात्' इति ङ-पाठः। ४ 'तथाहीत्युपप्रदर्शने' इति ङ-पाठः। ५ 'अथ चैवं' इति ङ-पाठः। ६ 'भावतया घटादि०' इति क-पाठः।

(मूलम्)

**अनित्यं चेत् कथं नित्यमिति? । स्यादारेका—न हि कूटस्थनित्यतया नित्यं द्रव्यमभ्युपगम्यतेऽस्माभिः, परिणामानित्यताऽभ्युपगमात्, ५ किन्तु पूर्वोत्तरक्षणप्रविभागेन प्रबन्धवृत्त्या । न ह्यस्य पर्यायाणामिवोच्छेदः, तद्रूपेण [1]तथाऽप्रतीतेः । पर्याया एव हि पर्यायरूपेण निरुध्यन्ते, न तु द्रव्यमिति नित्यमभ्युपगम्यते। इयमप्ययुक्ता यस्मा-**

(स्वो० व्या०)

माख्यायते । **ततश्च तत्**–वस्तु **यदि नित्यं कथमनित्यम्? अनित्यं चेत्** १० **कथं नित्यमिति**? विरोधात्। **स्यादारेके**त्यादि। स्यादारेका–स्यादाशङ्का। **न हि**–नैव **कूटस्थनित्यतया**–एकरूपतया **नित्यं द्रव्यमभ्युपगम्यतेऽस्माभिः**। कुत इत्याह–**परिणामानित्यताऽभ्युपगमात्** कारणात्। **किन्तु** एवं नित्यमभ्युपगम्यते इत्याह–**पूर्वोत्तरक्षणप्रविभागेन**। अयं पूर्वः, अयमुत्तरः, अयमनयोः प्रविभागोऽत्यन्तभेदरूप इत्येवम्भूतेन **प्रबन्धवृत्त्या** हेतुभूतया । **न ह्यस्य**– १५ द्रव्यस्य **पर्यायाणामिवोच्छेदः** पूर्वोत्तरक्षणप्रविभागेन । कुत इत्याह—**तद्रूपेण**–द्रव्यरूपेण **तथाऽप्रतीतेः**–उच्छेदेनाप्रतीतेः प्रबन्धवृत्त्या; अथवा तद्रूपेण–द्रव्यरूपेण तथाप्रतीतेः–अनुच्छेदेन प्रतीतेः । एवं च **पर्याया एव** यस्मात्

(विवरणम्)

(१२) **परिणामानित्यताऽभ्युपगमादिति ।**

२० **"परिणामो ह्यर्थान्तरगमनं न च सर्वथा व्यवस्थानम् ।**
**न च सर्वथा विनाशः परिणामस्तद्विदामिष्टः ॥"**[2]

इति उक्तलक्षणेन परिणामेन, न तु निरन्वयक्षण[3]क्षयितया नित्यता तस्या अनभ्युपगमात् । ततश्च न कूटस्थनित्यताया अवकाशः ॥

(१४) **प्रबन्धवृत्त्या हेतुभूतयेति**। प्रकृष्टोऽन्यबन्धेभ्यो विलक्षणः पूर्वावस्थापरि- २५ त्यागेन उत्तरावस्थारूपतया परिणमनेन यो बन्धः–सम्बन्धः स 'प्रबन्ध' इत्युच्यते। तेन वृत्तिः–वर्तनं स्वभावलाभो यः पदार्थानां तया हेतुभूतया नित्यत्वमभ्युपगम्यते। इदमप्युक्तं भवति–पूर्वोत्तरयोः क्षणयोः कालसमयलक्षणयोर्नारक-मनुष्यत्वयोरिव परस्परं यः प्रविभागोऽत्यन्तभेदरूपस्तेनोपलक्षिता या प्रबन्धवृत्तिः सर्वक्षणेषु एकद्रव्यानुवृत्तिलक्षणा तया नित्यत्वमास्थीयते जैनैः, प्रतिक्षणं पर्यायेषु वर्तमानेष्वपि या द्रव्यानुवृत्ति- ३० स्त्रिकालकोटिस्पर्शिनी सा नित्यतेति परमार्थः ॥

१ 'तथाप्रतीतेः' इत्यपि चारु, व्याख्यान्तरशक्यत्वात्। २ आर्याच्छन्दोनिबद्धमिदं पद्यं **स्थानाङ्ग**-(सू. ५३७)टीकायां (३७७ तमे पत्रे) अवतरणरूपेण श्री**अभयदेवसूरि**णोल्लिखितम् । ३ 'क्षियतया या नित्यता' इति **ख**–पाठः ।

( मूलम् )

**देषाऽप्यत्र नित्यता न सम्भवति, पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः। तथाहि–न पर्यायव्यतिरिक्तं द्रव्यमस्ति तथाऽनुभवाभावात्, व्यतिरिक्तभावे वा[1] अनेकरूपैकवस्तुवादहानिप्रसङ्गः[2]। तथा चोक्तम्—**

**"पर्यायाभेदतोऽनित्यं द्रव्यं स्यात् तत्स्वरूपवत्।**
**स्याद्वादविनिवृत्तिश्च नानात्वे सम्प्रसज्यते ॥"[3]**

**व्यतिरिक्ताव्यतिरिक्तपक्षस्तु विरोधाघ्रातत्वान्न्यायबहिर्भूतत्वादनुद्घोष्य एवेति ॥[4]**

( स्वो० व्या० )

तत्तत्क्षणस्थितिस्वभावतया **पर्यायरूपेण निरुध्यन्ते**–विनश्यन्ति, **न तु द्रव्यं** तत्तत्स्वभावतया तन्निरोधबीजम् **इति**–एवं **नित्यमभ्युपगम्यते**। अनित्यतानुविद्धं तदाधारभूतमित्यर्थः। एतदाशङ्क्याह–**इयमप्ययुक्ता**–आरेका **यस्मादेषाऽपि**–अनन्तरोदिता **अत्र**–द्रव्ये **नित्यता न सम्भवति**। कुत इत्याह–**पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः** स्वतः परतश्च। एतदेवाह **तथाहीत्यादिना**। तथाहि **न पर्यायव्यतिरिक्तं द्रव्यमस्ति, तथाऽनुभवाभावात्**। न हि पिण्डशिवकादिव्यतिरिक्तं मृद्द्रव्यमनुभूयते। **व्यतिरिक्तभावे वा** पर्यायेभ्यो द्रव्यस्य, **अनेकरूपमेकं वस्तु** इति **वादहानिप्रसङ्गः**, द्वयोरप्येकैकत्वादिति। **तथा चोक्तमिति** ज्ञापकमाह–**पर्यायेत्यादि**। **पर्यायाभेदतः**–कारणात् **अनित्यं द्रव्यं स्यात् तत्स्वरूपवत्**–पर्यायस्वात्मवत्। **स्याद्वादविनिवृत्तिश्च**–अनेकान्तहानिश्च **नानात्वे सम्प्रसज्यते** द्रव्य-पर्याययोः। **व्यतिरिक्ताव्यतिरिक्तपक्षस्तु** अनयोर्विरोधाघ्रातत्वाद् हेतोर्न्यायबहिर्भूतत्वादनुद्घोष्य एवेति ॥

( विवरणम् )

(११) **तत्तत्क्षणस्थितिस्वभावतयेति**। तस्मिंस्तस्मिन् क्षणे स्थितिः–अवस्थानं स्वभावो येषां ते तथा तेषां भावस्तत्ता तया ॥

(१२) **तत्तत्स्वभावतयेति**। सः–अविनश्वरः स्वभावो यस्य तत् तत्स्वभावं तस्य भावस्तथा[5] तस्य–द्रव्यस्य तत्स्वभावता[6] तयेति ॥

(१५) **स्वतः परतश्चेति**। घटे हि मार्दोऽयं[7] घट इति स्वतः पर्यायः नवोऽयं[8] इत्यादिश्च परं कालमपेक्ष्येति ॥

१ 'चानेक०' इति क–पाठः। २ 'वस्तुहानि०' इति क–पाठः। ३ अनुष्टुप्। ४ अत्र पूर्वपक्षस्य द्वितीयांशः सम्पूर्णः। ५ 'भावस्तत्रास्य' इति क–पाठः, 'भावस्तत्ता तथा तस्य' इति तु ख–पाठः। ६ 'तत्भावता' इति क–पाठः। ७ 'मार्तो हि घट' इति ख–पाठः। ८ 'न चायं इति' च–पाठः।

(मूलम्)

**एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यम्। तथाहि—एकादिधर्मकं सामान्यम्, अनेकादिधर्मका [1]विशेषाः। ततश्च तद्**
५ **यदि सामान्यरूपं कथं विशेषरूपम्? विशेषरूपं चेत् कथं सामान्यरूपम्? इति विरोधात्॥**

**किञ्च सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः। तथाहि—विष-मोदक-क्षीर-कर्कादिव्यक्त्यं[2]भिन्नमनानास्वभावमेकं सामान्यं वर्तते। ततश्च न विषं विष-**
१० **मेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्। नापि मोदको मोदक एव, विषाभिन्नसामान्याभेदात्। किं तर्हि? उभयमप्युभयरूपम्।**

---

(स्वो० व्या०)

अतिदेशेनैव दोषान्तरमाह **एतेन**त्यादिना। एतेन—नित्यानित्यनिराकरणेन **सामान्यविशेषरूपमपि** वस्तु **प्रतिक्षिप्तमवगन्तव्यम्।** एतदेव योजयति
१५ **तथाही**त्यादिना। तथाहि **एकादिधर्मकं सामान्यम्,** "एकं नित्यं निरवयवमक्रियं सर्वगतं च सामान्यम्" इति वचनात्। **अनेकादि[3]धर्मका विशेषा** अनेके अनित्या [4]इत्यादि। **ततश्च तत्**—वस्तु **यदि सामान्यरूपं कथं विशेषरूपम्? विशेषरूपं चेत् कथं सामान्यरूपम्?।** **इति**—एवं **विरोधात्** प्रतिक्षिप्तमवगन्तव्यमिति॥

२० इहैवाभ्युच्चयमाह [5]**किञ्चे**त्यादिना। किञ्च **सामान्यविशेषोभयरूपत्वे सति वस्तुनः** किमित्याह—**सकललोकप्रसिद्धो** यः **संव्यवहारनियमः** तदु**च्छेदप्रसङ्गः।** तद्भावनायैवाह—**तथाही**त्यादि। [6]तथाहीत्युपदर्शने। **विष-मोदक-क्षीर-कर्कादिव्यक्तिभ्यः।** कर्कः—अश्वविशेषः। 'आदि'शब्दाद् गजादिव्यक्तिग्रहः, **अभिन्नम्**—अव्यतिरिक्तम् **अनानास्वभावम्**—अचित्रस्वभावम् **एकं सामान्यं**
२५ **वर्तते।** यदि नामैवं ततः किमित्याह—**ततश्च न विषं विषमेव** एकान्ततः, **मोदकाद्यभिन्नसामान्याव्यतिरेकात्** कारणाद् विषस्य। **नापि मोदको मोदक एव** नियतरूपेण, **विषाभिन्नसामान्याभेदात्** मोदकस्य। **किं तर्हि? उभयमपि**—

---

१ 'विशेषाः, तथा नित्यं सामान्यं अनित्या विशेषास्तथा निरवयवं सामान्यं सावयवविशेषाः, तथा निष्क्रियं सामान्यं सक्रियाविशेषाः तथा सर्वगतं सामान्यं असर्वगता' इत्यधिकः क-पाठो ग-घ-पुस्तकयोर्नास्ति, व्याख्यायामपि स न वर्तते। २ 'भिन्नं नाना०' इति ग-पाठः। ३ 'धर्मविशेषास्त्वनेके' इति ङ-पाठः। ४ 'इत्यादयः ततश्च' इति ङ-पाठः। ५ 'पर्यायेत्यादि पर्यायभेदतः' इत्यधिको ङ-पाठः। ६ 'तथाहीत्युपप्रदर्शने' इति घ-पाठः।

( मूलम् )

ततश्च विषार्थी विषे प्रवर्तेत मोदके च, एवं मोदकार्थ्यपि मोदके [1]प्रवर्तेत विषे च। लोकश्च विषार्थी विष एव प्रवर्तते, न मोदके, मोदकार्थ्यपि मोदक एव, न विषे, इत्यस्य नियमस्योच्छेदः स्यात्। ५ तथा विषे भक्षिते मोदकोऽपि भक्षितः स्यात्, मोदके च भक्षिते विषमपि भक्षितं स्यात्, तथा च प्रतीतिविरोधः। एवं क्षीर-कर्कादिष्वपि योज्यम्। स्यादेतद् विषादिषु विशेषरूपताऽप्यस्त्येव, सा तदर्थिनो नियमेन प्रवृत्तेर्बीजम्, तद्भक्षणे च नान्यभक्षणं स्यादिति। एतदप्ययुक्तम्, विकल्पानुपपत्तेः। विशेषरूपता हि सामान्याद् १० व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा। अव्यतिरिक्तत्वे तत्स्वरूपवन्न तस्यास्तत्त्वम्। व्यतिरिक्तत्वे च तदर्थिप्रवृत्तिविषयत्वात् तस्या एव

( स्वो० व्या० )

विषमोदकलक्षणम् उभयरूपं—शबलम्, इतरेतराभिन्नसामान्याभेदेन विषमोदकरूपमित्यर्थः। ततश्च विषार्थी जनः विषे प्रवर्तेत मोदके च, तत्त्वत उभयोस्तुल्य- १५ त्वात्। एवं मोदकार्थ्यपि मोदके प्रवर्तेत विषे च। भावना पूर्ववत्। न चैतदेवमित्याह—लोकश्च विषार्थी विष एव प्रवर्तते नियमेन, न मोदके। मोदकार्थ्यपि मोदक एव प्रवर्तते, न विषे। इति—एवमस्य नियमस्य प्रवृत्तिगोचरस्य उच्छेदः स्यात्, निमित्ताभावात्। तथा विषे भक्षिते मोदकोऽपि भक्षितः स्यात्। मोदके च भक्षिते विषमपि भक्षितं स्यात्। तथा च २० प्रतीतिविरोधः, इत्थं लोकेऽप्रतीतेः। एवमित्यादि। एवं क्षीर-कर्कादिष्वपि योज्यं न क्षीरं क्षीरमेवेत्यादिना। स्यादेतदित्यादि। अथैवं मन्यसे—विषादिषु विशेषरूपताऽप्यस्त्येव, सा—विशेषरूपता तदर्थिनः-विषाद्यर्थिनो नियमेन [2]प्रवृत्तेर्विषादिगोचराया बीजम्, तद्भक्षणे च—विषादिभक्षणे च नान्यभक्षणं स्यात्—[3]न मोदकादिभक्षणं स्यात् इति। एतदप्ययुक्तम्। कुत इत्याह—विकल्पा- २५ नुपपत्तेः। [4]एतामेव दर्शयन्नाह—विशेषरूपता हि विषादिसम्बन्धिनी सामान्याद् यथोदिताद् व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा। किञ्चात इत्याह—अव्यतिरिक्तत्वे सामान्यात् तत्स्वरूपवत्—सामान्यस्वरूपवत् न तस्याः—विषादिविशेषरूपतायाः तत्त्वं—विशेषरूपत्वम्, सामान्याव्यतिरेकादित्यर्थः। व्यति-

१ 'प्रवर्तते' इति क-पाठः। २ 'प्रवृत्तिर्विषा०' इति ङ-पाठः। ३ 'न' इति पाठो घ-पुस्तके नास्ति। ४ 'एनामेव' इति ङ-पाठः।

( मूलम् )

**वस्तुता। व्यतिरिक्ताव्यतिरिक्तेति चेत्, नन्वेवं विरोध इति त्यज्यता-मुभयरूपवस्तुवादाभिमानः। तथा चोक्तम्-**

५ **"प्रवृत्तिनियमो न स्याद् विषादिषु तदर्थिनः।**
**मोदकाद्यपृथग्भूतसामान्याभेदवृत्तिषु ॥[1]**
**भेदे चोभयरूपैकवस्तुवादो न युज्यते।**
**भेदाभेदविकल्पस्तु विरोधेनैव बाधितः ॥[2]**
**विशेषरूपं यत् तेषु तत्प्रवृत्तेर्नियामकम्।**
१० **साध्वेतत् किन्तु वस्तुत्वं तस्यैवेत्थं प्रसज्यते ॥"[3]**

---

( स्वो० व्या० )

**रिक्तत्वे च** विषादिविशेषरूपतायाः सामान्यात्, **तस्या एव**-विशेषरूपतायाः-**वस्तुता** इति योगः। कुत इत्याह-**तदर्थिप्रवृत्तिविषयत्वात्**, तस्या एवार्थक्रिया, कारित्वादित्यभिप्रायः। **व्यतिरिक्ताव्यतिरिक्तेति चेत्** सामान्याद् विशेषरूपतेति १५ प्रक्रमः। एतदाशङ्क्याह-**नन्वेवमित्यादि**[4]। नन्वेवं-व्यतिरिक्ताव्यतिरिक्ताङ्गीकरणे **विरोध इति** कृत्वा **त्यज्यतामुभयरूपवस्तुवादाभिमानः**, असारत्वादस्ये-त्यभिप्रायः। **तथा चोक्तमिति** ज्ञापकमाह **प्रवृत्तीत्यादिना**। **प्रवृत्तिनियमः** तदन्यव्यवच्छेदेन तत्रैव **न स्याद् विषादिषु** पदार्थेषु। कस्येत्याह-**तदर्थिनः**-विषाद्यर्थिनः। किंविशिष्टेषु विषादिषु? । अत्राह-**मोदकाद्यपृथग्भूतसामान्या-** २० **भेदवृत्तिषु** मोदकाद्यपृथग्भूतं यत् सामान्यं तदभेदेन ये वर्तन्त इत्यर्थः। **भेदे चेत्यादि**। भेदे च सामान्यादमीषामिष्यमाणे किमित्याह-**उभयरूपैक-वस्तुवादो न युज्यते**-उभयरूपमेकं वस्त्वित्येवम्भूतो वादो न घटते, द्वयस्यापि प्रत्येकमेकैकत्वादिति भावः। **भेदाभेदविकल्पस्तु** प्रक्रमात् सामान्य-विशेषयो-**र्विरोधेनैव बाधितो** यदि भेदः कथमभेद इत्यादिना। **विशेषेत्यादि**। २५ **विशेषरूपं यत् तेषु**-विषादिषु **तत्प्रवृत्तेर्नियामकं** तद्विषयायाः। **साध्वे-तत्**-अनन्तरोदितं **किन्तु वस्तुत्वं**-परमार्थसत्त्वं **तस्यैव**-विषादिविशेषरूपस्य **इत्थम्**-एवं **प्रसज्यत** इति ॥

---

( विवरणम् )

(१८) **तत्रैव न स्याद् विषादिष्विति**। तत्रैव-तेष्वेव विषादिष्विति ॥

---

१-३ अनुष्टुप्। ४ 'नन्वेवमित्यादि' इति पाठो घ-पुस्तके नास्ति।

(मूलम्)

**तथा परेणाप्युक्तम्—**

**"सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः ।**
**[1]चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ? ॥"[2]**　५

**तथाहि—उष्ट्रोऽपि स्याद् दधि, नापि स एवोष्ट्रो येनान्योऽपि स्यादुष्ट्रः; तथा दध्यपि स्यादुष्ट्रः, नापि तदेव दधि येनान्यदपि स्याद् दधि । तदेवमनयोरेकस्यापि कस्यचित् तद्रूपाभावस्याभावात्,**

(स्वो० व्या०)

**तथा परेणाप्युक्तम्** । एतदेवेति दर्शयति **सर्वस्येत्यादिना** । सर्वस्य—वस्तुन १० **उभयरूपत्वे**—सामान्यविशेषरूपत्वे । उभयग्रहणमनेकत्वोपलक्षणम् । अस्मिन् सति किमित्याह—**तद्विशेषनिराकृतेः** । तद्विशेषस्य उष्ट्र उष्ट्र एव, न दधि; दधि दध्येव, नोष्ट्रः; इति—एवंलक्षणस्य निराकृतेः—इतररूपावेशेन निराकरणात् । **चोदितो दधि खादेति** । दधि खादेत्येवं चोदितः पुरुषः **किमुष्ट्रं नाभिधावति** खादितुम्, तस्य कथञ्चिद् दध्नोऽप्यभेदात् ? । यद्वा सामान्येनैव किमुष्ट्रं १५ नाभिधावति, खादनक्रियाया अपि कथञ्चिदभिधावनक्रियाऽव्यतिरेकादिति ? । **तथाहीत्यादि** विवरणम् । [3]तथाहीत्युपदर्शने । **उष्ट्रोऽपि स्याद् दधि**—केनचित् प्रकारेण दधि, न तदभावानुविद्ध इत्यर्थः । **नापि स एवोष्ट्र** एव—उष्ट्रस्वरूपनियत एकान्तेन **येनान्योऽपि**—दध्यादिकः **स्यादुष्ट्रः**—भवेदुष्ट्रः, उभयरूपतया । अथवा स्यादुष्ट्र इत्यभ्युपगमयुक्तिः । **तथा दध्यपि स्यादुष्ट्रः**—केनचित् २० प्रकारेणोष्ट्रः, [4]न तदभावानुषक्तमिति भावः । **नापि तदेव दधि** एव—दधिस्वभावनियतं सर्वथा **येनान्यदपि**—उष्ट्रादिकं **स्याद् दधि** । एतेन सर्वस्योभयरूपत्वं व्याख्यातं तद्विशेषनिराकृ[5]तेरित्येतत् **तदेवमनयोरित्यादिना** व्याचष्टे । उभयथा हि दध्युष्ट्रयोः

(विवरणम्)

**(११) अनेकत्वोपलक्षणमिति** । सत्त्व-प्रमेयत्व-मूर्त्तत्वादिना पर्यायपर्यालोचनेन २५ [6]वस्तुनो यदनेकत्वम्—अनेकस्वभावत्वं तत्सूचकमिति ॥

**(१९) स्यादुष्ट्र इत्यभ्युपगमयुक्तिरिति** । स्यात्—कथञ्चित् स्याच्छब्दस्यानेकान्तार्थत्वात् उष्ट्रः, न पुनः सर्वैः रूपैः इत्येवंरूपो योऽभ्युपगमः—पक्षपरिग्रहः स्याद्वादिनः स एव युक्तिः । इदमुक्तं भवति—स्यादुष्ट्रः—भवेदुष्ट्र इत्येकं व्याख्यानम्; द्वितीयं तु स्यात् उष्ट्रः—कथञ्चिदुष्ट्र इत्याचार्याभ्युपगमेनैवेति ॥　३०

१ 'नोदितः' इति क-पाठः । २ अनुष्टुप् । ३ 'तथाहीत्युपप्रदर्शने' इति घ-पाठः । ४ 'न' इत्यधिको घ-ङ-पाठः । ५ 'कृतेरित्येतदेवमनयोः' इति ङ-पाठः । ६ 'वस्तुतो' इति क-पाठः ।

( मूलम् )

**स्वरूपस्य वाऽतद्भाविनः स्वनियतस्याभावात् न कश्चिद् विशेष इति। ततश्च दधि खादेति चोदित उष्ट्रमपि खादेत्।**

५ **"अथास्त्यतिशयः कश्चिद् येन भेदेन वर्तते।**
**स एव दधि सोऽन्यत्र नास्तीत्यनुभयं परम्॥"[१]**

**अथानयोः कश्चिदतिशयोऽस्ति येनायं तथा चोदितः क्षीरविकार एव प्रवर्तते, नान्यत्र। एवं तर्हि स एवातिशयोऽर्थक्रियार्थिप्रवृत्तिविषयो दधि। तत्फलविशेषोपादानभावलक्षितस्वभावं हि १० वस्तु दधीति। स च तादृशः स्वभावोऽन्यत्र नास्ति, प्रवृत्त्यभावादर्थिनः, तस्मान्नोभयरूपमित्येकान्तवादः॥[२]**

---

( स्वो० व्या० )

विशेषः स्यात्—दधिरूपाभावो वा उष्ट्रो भवेत्, उष्ट्रस्वरूपं वा दध्यसम्भव्युष्ट्रस्वरूप एव नियतं स्यात्। एवं दध्यपि वाच्यम्। आद्यस्य तावदसम्भवस्तदित्यादिना १५ कथ्यते। तदेवमनयोः—दध्युष्ट्रयोर्न कश्चिद् विशेष इति सम्बन्धः। **एकस्यापीति** दध्नः उष्ट्रस्य वा **कस्यचित्। तद्रूपाभावस्येति** उष्ट्ररूपाभावस्य दधिरूपाभावस्य वा **अभावात्।** द्वितीयस्यापि प्रकारस्याभावमाह **स्वरूपस्येत्यादिना। स्वरूपस्य वा**—उष्ट्रस्वरूपस्य **अतद्भाविनः**—दध्यभाविनः, उष्ट्राभाविनो वा दधिस्वरूपस्य, **स्वनियतस्य**—उष्ट्रभावनियतस्य दधिभावनियतस्य वा **अभावान्न कश्चिद्** २० **विशेषः,** सङ्कीर्णतया दध्युष्ट्रयोः। ततः किमित्याह—**ततश्च दधि खादेति चोदिते** सति **उष्ट्रमपि खादेत्।** खादेति [३]चाभिधावनोपलक्षणमेतत्। **अथेत्यादि।** अथ **अस्ति** दध्युष्ट्रयोः **अतिशयः** [४]**कश्चिद् येन**—अतिशयेन दधि खादेति चोदितः पुरुषो **भेदेन वर्तते,** उष्ट्रपरिहारेण दध्नि। **स एव** अतिशयः, **दधि; सोऽन्यत्र**—उष्ट्रे, **नास्तीत्यनुभयं**—[५]विभक्तरूपस्वरूपं सर्वं वस्तु तदेव च **परं**— २५ परमार्थः। ए(?अने)कत्वं तु कल्पितम्। दध्नो वा परमुष्ट्रादिकमनुभयरूपमिति व्याख्येयम्। **अथानयोः कश्चिदतिशयोऽस्ति।** अनयोरिति दध्युष्ट्रयोर्येनायं पुरुषस्तथा **चोदित** इति—दधि खादेति चोदितः **क्षीरविकार एव**—दध्नि **प्रवर्तते,** नान्यत्र उष्ट्रे। **एवं तर्हि स एवातिशयो दधीति** सम्बन्धः। किम्भूत इत्याह—**अर्थक्रियार्थिप्रवृत्तिविषयः।** दधिसाध्या या अर्थक्रिया तया योऽर्थी—पुरुषस्तस्य ३० प्रवृत्तिविषयः। किं कारणम्? **तत्फलेत्यादि।** दध्नैव साध्यत्वात् तत्फल**विशेषः।** स चासौ फलविशेषश्चेति विग्रहः। तस्य **उपादानभावः**—हेतुभावस्तेन **लक्षितः**

---

१ अनुष्टुप्। २ अत्र पूर्वपक्षस्य तृतीयांशः सम्पूर्णः। ३ 'वाभिधानोप०' इति ङ–पाठः। ४ 'कश्चिद् येनातिशयैः' इत्यधिकः क–पाठः। ५ 'विभक्तस्वरूपं' इति क–पाठः।

( मूलम् )

**किञ्च सर्ववस्तुशबलवादिनः क्वचिदन्यासंसृष्टाकारबुद्ध्यसिद्धेः तथावाचकाभावात् संहारवादानुपपत्तिः, तत्सिद्धौ वा तत एव तत्स्वभावभेदात् तदेकरूपतैवेति। तथा चोक्तम्—** ५

**"सर्वात्मत्वे च भावानां भिन्नौ स्यातां न धी-ध्वनी।**

---

( स्वो० व्या० )

**स्वभावो** यस्य **वस्तुनः** तदेव **दधीति** कृत्वा। **स च तादृश** इत्यनन्तरोक्तो दधि**स्वभावः। अन्यत्रे**त्युष्ट्रे **नास्ति**। कस्मादित्याह—**प्रवृत्त्यभावादर्थिनः**। दध्यर्थिन उष्ट्रे, **तस्मान्नोभयरूपं** वस्तु **इत्येकान्तवादः**। अयं च परोदितो ११ ग्रन्थः अर्थादुक्तोऽप्युपन्यस्तः, साम्प्रतकालीयग्रन्थकारशैल्या स्पष्टतरं वा तथाऽभिधाय पुनः पराभ्युपगमप्रदर्शनार्थमिति ॥

अधिकृत एवाभ्युच्चयमाह **किञ्चे**त्यादिना। किञ्चायमपरो दोषः **सर्ववस्तुशबलवादिनः**—अनेकान्तवादिनः। **क्वचित्**—वस्तुनि उष्ट्रादौ **अन्यासंसृष्टाकारबुद्ध्यसिद्धेः**—दध्याद्यसंसृष्टाकारबुद्ध्यसिद्धेः शबलतया। **तथा**—अन्यासंसृष्टाकारत्वेन १५ **वाचकाभावात्**, प्रवृत्तिनिमित्ताभावेन शब्दाप्रवृत्तेः। किमित्याह—**संहारवादानुपपत्तिः**। संहारवादः स्यादुष्ट्रो दधीत्यादिकः। **तत्सिद्धौ वा** क्वचित्—[1]अन्यासंसृष्टाकारबुद्ध्यादिसिद्धौ वा [2]**तत एव**—क्वचित् अन्यासंसृष्टाकारबुद्ध्यादिसिद्धेरेव [3]**तत्स्वभावभेदात्** तस्य—वस्तुन उष्ट्रादेः स्वभावभेदात्। तमन्तरेण अन्यासंसृष्टाकारबुद्ध्याद्यसिद्धेः। **तदेक**[4]**रूपतैव** तस्य—उष्ट्रादेर्वस्तुन एकरूपतैव २० इति न संहारवादो वास्तवः। **तथा चोक्त**मिति पराभ्युपगमं दर्शयति **सर्वात्मत्वे**

---

( विवरणम् )

(११) **अर्थादुक्तोऽपी**ति। विषमोदकदृष्टान्तेनैव भणित इत्यर्थः ॥

(११-१२) **स्पष्टतरं वा तथाऽभिधाय** [5]**पुनः पराभ्युपगमप्रदर्शनार्थमिति**। स्पष्टतरं—स्फुटतरं यत् पराभ्युपगमस्य प्रदर्शनं—[6]प्रकाशनं तदर्थम्। कथं यत्प्रदर्शन- २५ मित्याह—तथा—यथा प्रथमवारायाम् अभिधाय—उक्त्वा पुनः—द्वितीयस्य वेलायाम्। 'वा'शब्दः पक्षान्तरसूचनार्थः। इदमुक्तं भवति—यदेकदोक्तो ग्रन्थः प्रकारान्तरेण पुनरपि दर्श्यते स तस्यैव स्फुटतरावबोधार्थमिति ॥

(१७) **संहारवादः स्यादुष्ट्रो दधीत्यादिक** इति। संहरणम् अनेकेषां विप्रकीर्णानाम् एकत्र मीलनं संहारः, तत्प्रधानो वादः, स्याद्वाद इत्यर्थः ॥ ३०

---

१ 'अन्या० तत एव' इति पाठो घ-पुस्तके नास्ति। २ 'तत ए(व) क्वचित्' इति ङ-पाठः। ३ 'तत्स्वभावाभेदात्' इति ङ-पाठः। ४ 'रूपतयैव' इति क-पाठः। ५ 'पुरः परा०' इति क-पाठः। ६ 'प्रकाशनं' इत्यादेरारभ्य 'ग्रन्थः'पर्यन्तः पाठो न विद्यते ख-प्रतौ च-प्रतौ च।

( मूलम् )

**भेदसंहारवादस्य तदभावादसम्भवः ॥**[१११]

**सोऽयमनेकान्तवादी क्वचिदप्येकमाकारं प्रतिनियतमपश्यन्**
५ **विभागाभावाद् भावानां कथमसंसृष्टान्याकारवत्या बुद्ध्याऽधि-**
**बुद्ध्येतार्थानभिलपेद् वा ?। ततो भेदाग्रहणात् तत्संहारवादो न**
**स्यात्, स्यादुष्ट्रो दधि स्यान्नेति। अथ पुनरसंसृष्टावाकारौ प्रतिपद्य**
**संहरेत्, एकरूपसंसर्गिण्या बुद्धेः क्वचित् प्रतिनियमात् तत्प्रति-**
**भासभेदकृत एव तयो रूपयोः स्वभावभेदोऽपि स्यात्, एकानेक-**

---

१० ( स्वो० व्या० )

चेत्यादिना । सर्वात्मत्वे च **भावानाम्**—उष्ट्रादीनां **भिन्नौ स्यातां न**
**धी-ध्वनी**—ज्ञानं शब्दश्च [२]नियतार्थौ न स्याताम्, **भेदसंहारवादस्य** तदेकी-
करणलक्षणस्य **तदभावात्**—भिन्नधीध्वन्यभावात्, **असम्भवो** भेदेन गृहीतयोः
श्रुतयोर्वा एकत्वेनोपसंहारो भवति, स्यादुष्ट्रो दधीत्यादि, नान्यथा ॥

१५ तदेतत् **सोऽयमि**त्यादिना व्याचष्टे—**सोऽयमनेकान्तवादी**—सर्ववस्तुशबलवादी
**क्वचिदपि**—उष्ट्रे दध्नि वा **एकमाकारं प्रतिनियतम्**—इतररूपव्यवच्छिन्नम**पश्य-**
**न्**। अदर्शने निमित्तमाह—**विभागाभावाद् भावानां** शबलरूपतया इतरेतररूपा-
पत्तेः। किमित्याह—**कथमि**त्यादि। कथं—केन प्रकारेण। **[३]असंसृष्टान्याकारवत्येति**।
असंसृष्टोऽन्याकारो यस्मिन्नर्थे स तथोक्तः, स यस्या बुद्धेरस्ति सा असंसृष्टान्या[४]कार-
२० वती, विभक्तार्थग्राहिणीति यावत् तया, **बुद्ध्या** एवम्भूतया **[५]अधिबुद्ध्येतार्थान्**—
सम्यग् जानीयात् **अभिलपेद् वा** ध्वनिना। **ततो भेदाग्रहणात्**—एवं विशेषा-
नुपलब्धेः कारणात् **तत्संहारवादः**—भेदसंहारवादो **न स्यात्**। किम्भूत इत्याह—
**स्यादुष्ट्रो दधि स्यान्नेति। अथ पुनरसंसृष्टौ**—असङ्कीर्णौ **आकारौ** दध्युष्ट्रयोः
**प्रतिपद्य संहरेत्** स्यादुष्ट्रः स्याद् दधीति। ततः किमित्याह—[६]**एकरूपसंसर्गि-**
२५ **ण्याः**—उष्ट्ररूपेणैव दधिरूपेणैव वा सम्बन्धवत्या **बुद्धेः क्वचित्**—उष्ट्रे दध्नि
वा **प्रतिनियमात्**—कारणात् **तत्प्रतिभासभेदकृत एव**—बुद्धिप्रतिभासभेद-

---

( विवरणम् )

(१२-१३) **तदेकीकरणलक्षणस्ये**ति । तेषां—दध्याद्युष्ट्रादिभेदानां यदेकीकरणं
तल्लक्षणस्य ॥

---

१ अनुष्टुप् । २ 'नियतार्थे न' इति **क**-पाठः । ३ 'असंसृष्टान्याकारवत्येति' इति पाठो नास्ति **च**-प्रतौ । ४ 'कारार्थवती' इति **घ**-पाठः । ५ 'अधिमुच्येतार्थान्न सम्यग्' इति **च**-पाठः । ६ 'एकप्रतिपद्य संहरेत् स्यादुष्ट्रः स्याद् दधतीति ततः किमित्याह' इत्यधिक**ञ्च**-पाठः ।

(मूलम्)

**व्यवस्थितेः प्रतिभासविषयत्वात् । तथा च नैकस्तदुभयरूपः स्यादिति मिथ्यावाद एषः ॥**[1]

**एवमभिलाप्यानभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यम् । तथाहि—अभिलप्यते यत् तदभिलाप्यम्, एतद्विलक्षणं चानभिलाप्यमिति । ततश्च यदि तदभिलाप्यं न तर्ह्यनभिलाप्यम्, अनभिलाप्यं चेन्न तर्ह्यभिलाप्यमिति, एकस्यानेकविरुद्धधर्मानुगमाभावात् ॥**[2]

**किञ्च विरोधिधर्माध्यासितस्वरूपत्वाद् वस्तुनोऽनेकान्तवादिनो मुक्त्यभावप्रसङ्गः । तथाहि—एतदात्मा-ऽङ्गना-भवन-मणि-कनक-धन-**

---

(स्वो० व्या०)

कृत एव, **तयो रूपयोः**—दध्युष्ट्रसम्बन्धिनोः । किमित्याह—**स्वभावभेदोऽपि स्यात्** । कुत इत्याह—**एकानेकव्यवस्थितेः** इदमेकमिदमनेकमित्येवम्भूतायाः **प्रतिभासविषयत्वात्**। एकप्रतिभासालम्बनमेकम्, अनेकप्रतिभासालम्बनं चानेकम्, भिन्नप्रतिभासविषयौ च दध्युष्ट्रौ । **तथा च** सति **नैक** उष्ट्रो दधि वा **तदुभयरूपः स्यात्**, तदुभयं दध्युष्ट्रोभयं रूपमस्येति विग्रहः । **इति**—एवमनेन प्रकारेण **मिथ्यावाद एषः**—स्याद्वाद इति । अत्रापि सामान्येनार्थमभिधाय परग्रन्थोपन्यासः विदितप्रयोजन एव ॥

एवमित्यादि । **एवमभिलाप्यानभिलाप्यमपि,** वस्त्विति प्रक्रमः । **विरोधबाधितत्वादेव** कारणाद् **अनुद्घोष्यम्**—अनुच्चारणीयम् । एतदेवाह **तथाही**त्यादिना । [3]तथाहीत्युपदर्शने । **अभिलप्यते**—व्यक्तमुच्यते **यद्** वस्तु **तदभिलाप्यम्,** [4]'**एतद्विलक्षणं चानभिलाप्यमिति**'[5] । ततः किमित्याह—**ततश्चे**त्यादि । एवं च सति **यदि तदभिलाप्यं न तर्हि अनभिलाप्यम्, अनभिलाप्यं चेन्न तर्हि अभिलाप्यमिति** । **एकस्य** वस्तुनः **अनेकविरुद्धधर्मानुगमाभावा**दिति ॥

**किञ्चे**त्यादि । किञ्चायमपरो दोषः—**विरोधिधर्माध्यासितस्वरूपत्वाद् वस्तुनः** सर्वस्यैव **अनेकान्तवादिनो** वादिनः **मुक्त्यभावप्रसङ्गः** । कथमित्येतदभिधातुमाह—[6]**तथाही**त्यादि । तथाहि **एतत्**—अध्यक्षं [7]समधिगन्तव्यम्, **आत्मा-ऽङ्गना-भवन-मणि-कनक-धन-धान्यादिकं** वस्तु **अनात्मकं**—

---

१ इति पूर्वपक्षस्य तृतीयांशोऽत्र सम्पूर्णः न तु २४ तमे पृष्ठे । २ इति पूर्वपक्षस्य चतुर्थांशः सम्पूर्णः । ३ 'तथाहीत्युपप्रदर्शने' इति **घ-च**-पाठः । ४ 'त(?ए)तद्वि(ल)क्षणं इति **ङ**-पाठः । ५ 'भावः' । इत्यधिकः **क**-पाठः । ६ 'तथाहीत्यादिना' इति **घ**-पाठः । ७ समधिगम्यम्' इति **ङ**-पाठः ।

( मूलम् )

घान्यादिकमनात्मकमनित्यमशुचि दुःखमिति कथञ्चिद् विज्ञाय भाव-तस्तथैव भावयतो वस्तुतस्तत्राभिष्वङ्गास्पदाभावाद् भावनाप्रकर्ष-
५ विशेषतो वैराग्यमुपजायते, ततो मुक्तिः। तथाहि–आत्मात्मीय-दर्शनमेव मोहः, तत्पूर्वक एव आत्मात्मीयस्नेहो रागः, तत्-पूर्विकैवानुरागविषयोपरोधिनि प्रतिहतिर्द्वेष इति कृत्वा । यदा तु तदात्मा-ऽङ्गनादिकं सात्मकाद्यपि तदा यथोक्तभावनाभावाद् भावे-ऽपि मिथ्यारूपत्वाद् वैराग्याभावः, तदभावाच्च मुक्त्यभाव इति ॥
१० स्यादेतत् किमनेनेत्थमसम्भविना मुग्धविस्मयकरेण भावना-वादेन? कृत्स्नकर्मक्षयान्मोक्षः, स च कायसन्तापलक्षणेन तपसा

( स्वो० व्या० )

परपरिकल्पितात्मशून्यम् अनित्यमशुचि दुःखं स्वरूपतो हेतुतश्च इति–एवं कथञ्चित्–तत्स्वभावतया हेतुपरम्परातो विशिष्टक्षणोत्पादेन विज्ञाय श्रुतमय्या
१५ प्रज्ञया भावतः–परमार्थेन तथैव भावयतः–अभ्यस्यतो वस्तुतः–परमार्थेन तत्र–वस्तुनि अभिष्वङ्गास्पदाभावात् अनात्मकत्वादिना । किमित्याह–भावनाप्रकर्षविशेषतः–अभ्यासप्रकर्षविशेषतः, अभ्यासप्रकर्षविशेषादित्यर्थः, वैराग्यमुपजायते । ततः–वैराग्यात् मुक्तिः, नान्यथा । तथाहीत्यादि । तथाहि आत्मात्मीयदर्शनमेव मोहः, विपर्ययरूपत्वात् । तत्पूर्वक एव–
२० आत्मात्मीयदर्शनपूर्वक एव आ(?त्मा)त्मीयस्नेहो रागः तत्पूर्विकैव–आ-(?त्मा)त्मीयस्नेहपूर्विकैव, अनुरागविषयोपरोधिनि वस्तुनि प्रतिहतिर्द्वेष इति कृत्वा सर्वमुपपद्यते ॥

विपक्षे दोषमाह–यदा तु तदात्मा-ऽङ्गनादिकं वस्तु सात्मकाद्यपि–शबलरूपतया सात्मकं नित्यं शुचि सुखमित्यपि तदा किमित्याह–तदा यथोक्त-
२५ भावनाभावात्–वस्त्वन्यथात्वेन, भावेऽपि मिथ्यारूपत्वाद् भावनायाः। अत एव हेतोर्वैराग्याभाव उपायाभावेन तदभावाच्च–वैराग्याभावाच्च मुक्त्य-भावः, तत्पूर्वकत्वात् मुक्तेरिति ॥

[2]स्यादेतदित्यादि । स्यादेतत् किमनेन–अनन्तरोदितेन इत्थमसम्भविना–एवमात्माद्यभावेनासम्भविना मुग्धविस्मयकरेण–अनालोचकविस्मयकरणशीलेन
३० भावनावादेन अनुपाय एष मोक्षस्य । कुत इत्याह–कृत्स्नकर्मक्षयान्मोक्षः कृत्स्नम्–अशेषं कर्म–ज्ञानावरणीयादि क्षयः–आत्यन्तिकः सम्बन्धाभावः अस्मान्मोक्ष इति । स च–कृत्स्नकर्मक्षयः कायसन्तापलक्षणेन तपसा–षष्ठाष्टमादिलक्षणेन

१ 'पूर्विकैव' इति च–पाठः। २ 'स्यादेतदित्यादि' इति पाठो न विद्यते ङ–प्रतौ ।

( मूलम् )

**प्रागुपात्तकर्मनिर्जरणतः, अनागतस्य चाकरणेनेति। एतदप्यसत्, कायसन्तापस्य कर्मफलत्वात्, नारकादिकायसन्तापवत् तत्त्वतस्तपस्त्वायोगात्। न स्वेच्छाप्रतिपत्त्या तपस्त्वम्, स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि तपस्त्वप्रसङ्गात्, अभ्युपगमे च प्रतीत्यादिविरोधः। तथाविधराज्यादिसुखभोगे प्रमादतोऽपरबन्ध इति चेत् स कायसन्तापे [1]नन्वार्तध्यानादपि तुल्यः॥**

**चित्रशक्तिकं च कर्म, तुच्छभोगमहाभोगकायसन्तापव्याध्यारोग्यादिचित्रफलदर्शनात्; तन्न कायसन्तापमात्रात्, चित्रशक्ति-**

( स्वो० व्या० )

**प्रागुपात्तकर्मनिर्जरणतः**–पूर्वोपात्तकर्मनिर्जरणात् कारणात् **अनागतस्य च** कर्मणो**ऽकरणेन**, भवतीति शेषः। एतदाशङ्क्याह–**एतदप्यसत्**–अशोभनम्। कुत इत्याह–**कायसन्तापस्य**–षष्ठाष्टमादेः **कर्मफलत्वात्**–औदयिकभावरूपत्वात्। ततः किमित्याह–**नारकादिकायसन्तापवद्**िति दृष्टान्तः। **तत्त्वतः**–परमार्थेन **तपस्त्वायोगात्**। आशङ्काशेषपरिहारार्थमाह–**ने**त्यादि। **न स्वेच्छाप्रतिपत्त्या** नारकाद्यपोहेन **तपस्त्वं** कायसन्तापस्य **स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि**। 'आदि'[2]शब्दाद् भोगसुखग्रहः, **तपस्त्वप्रसङ्गात्**। स्वेच्छाप्रतिपत्तिह्यौदयिकभावत्वेऽपि तपस्त्वे निमित्तमिति कृत्वा। **अभ्युपगमे च** स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि [3]तपस्त्वस्य किमित्याह–**प्रतीत्यादिविरोधः**। न हि स्वेच्छाप्रतिपत्तिमद्राज्यसुखादि तप इति प्रतीतिः। 'आदि'शब्दान्न चैवमभ्युपगम इत्यभ्युपगमविरोधश्च। इहैवातपस्त्वे निमित्तमाह **तथाविधे**त्यादिना। **तथाविधराज्यादिसुखभोगे**–स्वेच्छाप्रतिपत्तिमद्राज्यादिसुखभोगे सति **प्रमादतः**–प्रमादात् कारणात् **अपरबन्धः**–अन्यकर्मबन्धः। अतो नेदं तप इति हृदयम्। **इति चेत्** एतदाशङ्क्याह–**स** इत्यादि। सः–अपरबन्धः **कायसन्तापे** तपसि सति प्रमादत इव **नन्वार्तध्यानादपि तुल्यः**–समान एव, अतो नायमपि तप इत्यभिप्रायः॥

अभ्युच्चयमाह **चित्रशक्तिकं चे**त्यादिना। चित्रशक्तिकं च–नानाशक्तिकं च **कर्म**–वेदनीयादि। कुत इत्याह–**तुच्छभोगमहाभोगकायसन्तापव्याध्यारोग्यादिचित्रफलदर्शनात्**। न ह्यचित्रात् कारणात् चित्रकार्योत्पादः

१ 'न त्वार्त०' इति क–पाठः। २ 'शब्देन भोग०' इति ङ–पाठः। ३ 'तपस्त्वं स्यात्' इति च–पाठः।

( मूलम् )

**कस्याश्य क्षय उपपद्यते, अतिप्रसङ्गात्, आह्लादादपि तत्क्षयापत्तेः। दुःख्येव चैवं तपस्वी स्यात्। न चैतदुपपन्नम्, अभ्युपगमादि- ५ विरोधात्, अतपस्विनश्चैवं योगिनः स्युः, कायसन्तापाभावात्। न चैतदपि न्याय्यम्, अभ्युपगमादिविरोधादेव ॥**

**अथ न कायसन्तापस्तप इति, अपि त्वन्यदेव। हन्तैवमपि न तदेकरूपं चित्रशक्तिकस्य कर्मणः क्षयायालम्, अन्यतमशक्तितो- ऽभावात् सर्वशक्तिविरोधासिद्धेः ॥**

१० ( स्वो० व्या० )

यत एवम्। **तन्नेत्यादि** । तस्मान्न **कायसन्तापमात्रात्** सकाशात् **चित्र- शक्तिकस्यास्य**—कर्मणः **क्षय उपपद्यते**। कुत इत्याह—**अतिप्रसङ्गात्**। एनमेवाह—**आह्लादादपि** सकाशात् सन्तापादिवत् **तत्क्षयापत्तेः**—कर्मक्षया- पत्तेः, विजातीयत्वाविशेषादित्यर्थः । [1]**दुःख्येव चैवं तपस्वी स्यात्**, १५ कायसन्तापलक्षणे तपसि सति । अस्त्विति एतदाशङ्क्याह—**न चैतदुपपन्नं** यदुत दुःख्येव तपस्वीति। कुत इत्याह—**अभ्युपगमादिविरोधात्**। 'आदि'शब्दात् लोकयुक्तिविरोधग्रहः। **अतपस्विनश्चैवं**—यथोदिते तपसि सति **योगिनः स्युः**— प्राप्तर्द्धयो भवेयुः। कुत इत्याह—**कायसन्तापाभावात्** योगबलेन। **न चैतदपि**— योगिनामतपस्वित्वं **न्याय्यम्** । कुत इत्याह—**अभ्युपगमादिविरोधादेव** २० इति। 'आदि'शब्दः पूर्ववत् ॥

पक्षान्तराशङ्कापोहायाह—**अथेत्यादि** । अथ **न कायसन्तापस्तप इति, अपि त्वन्यदेव**—क्षायोपशमिकं भावान्तरमिति। एतदाशङ्क्याह—**हन्तेत्यादि**। **हन्तैवमपि**—अन्यत् तप इति [2]पक्षे **न तत्**—अन्यत् **एकरूपं** सत्, तपः **चित्रशक्तिकस्य कर्मणः**—चित्रफलदर्शनानुमितस्य वेदनीयादेः **क्षयायालं**— २५ क्षयार्थं पर्याप्तम्। कुत इत्याह—**अन्यतमशक्तितोऽभावात्** अन्यतमस्मिन् एकशक्तिके कर्मणि, क्षयमधिकृत्येति प्रक्रमः, शक्तिरस्येत्यन्यतमशक्ति, तप इति गम्यते, तस्मादन्यतमशक्तितस्तपस [3]एकरूपतया कारणेन **अभावात्**। अधि- कृत[4]कर्मणः क्षयस्य कथमभाव इत्याह—**सर्वशक्तिविरोधासिद्धेः**। सर्वशक्तिभिः चित्रकर्मगताभिः सह विरोधासिद्धेः अन्यतमशक्तितस्तपसः। एकशक्तिकं ह्येक- ३० शक्तिकस्यैव विरोधीत्यभिप्रायः ॥

१ 'दुःखीव' इति क-पाठः। २ 'पक्षो न' इति क-पाठः। ३ 'रूपताया करणेन' इति ङ-पाठः। ४ 'कर्मक्षयस्य' इति घ-पाठः।

(मूलम्)

**अथ तपः कर्मशक्तिसङ्करक्षयकारीत्येकरूपादपि ततः क्षयः। ननु चैवमपि कथञ्चित् सुखेनैवाल्पेऽपि कर्मणि क्षीणे तदशेषक्षयापत्तिः, तत्साङ्कर्यान्यथानुपपत्तेः, तद्भावेनैव तत्क्षयाङ्गीकरणात्, तदक्षये साङ्कर्याद्यसिद्धिरिति तपःकर्मक्षयवादोऽप्यबुधजनमनोहर एवेत्यपकर्णयितव्यः॥** ५

**न चास्मिन् सत्यपि मोक्षसौविहित्यम्, अनेकान्तोपद्रवानिवृत्तेः। तथाहि—मुक्तोऽपि न मुक्त एव, अनेकान्तवादहानेः, अपि त्वमुक्तोऽपि,**

(स्वो० व्या०) १०

आशङ्कान्तरापोहायाह—**अथ तप** इत्यादि। अथ तपः **कर्मशक्तीनां सङ्करेण क्षय**करणशीलमिति कृत्वा **एकरूपादपि ततः**—तपसः **क्षयः**, चित्रशक्तिकस्य कर्मण इति। एतदाशङ्क्याह—**नन्वि**त्यादि। ननु **चैवमपि**—अनन्तरोदितन्याययोगे **कथञ्चित्**—केनचित् प्रकारेणैकरोमोत्पाटादिना [1]**सुखेनैवाल्पेऽपि कर्मणि क्षीणे** सति **तदशेषक्षयापत्तिः** तस्य—कर्मणोऽशेषस्य क्षयापत्तिः। कुत इत्याह— १५ **तत्साङ्कर्यान्यथानुपपत्तेः**—कर्मशक्तिसाङ्कर्यान्यथानुपपत्तेः, **तद्भावेनैव तत्क्षयाङ्गीकरणात्**—कर्मशक्तिसाङ्कर्यभावेनैव कर्मक्षयाङ्गीकरणात्। **तदक्षये** तस्य—कर्मणः अशेषस्याक्षये साङ्कर्याद्यसिद्धिः। 'आदि'शब्दात् विवक्षितकर्मक्षयग्रहः। **इति**—एवं **तपःकर्मक्षयवादोऽपि** पूर्वोदितः **अबुधजनमनोहर एवे**ति कृत्वा। किमित्याह—**अपकर्णयितव्यः**॥ २०

इहैवाभ्युच्चयमभिधातुमाह—**न चास्मिन्नि**त्यादि। न चास्मिन्—तपःकर्मक्षयवादे **सत्यपि मोक्षसौविहित्यं**—मोक्षस्य सुविहितभावः। कुत इत्याह—**अनेकान्तोपद्रवानिवृत्तेः** अनेकान्तः—स्याद्वादः स एवोपद्रवः, तदितररूपापादनेन तदनिवृत्तेरिति। एतदेव स्पष्टयति **तथाही**त्यादिना। तथाहि **मुक्तोऽपि न मुक्त एव** एकान्तेन। कुत इत्याह—**अनेकान्तवादहानेः, अपि त्वमुक्तोऽपि,** अनेकान्ताङ्गी- २५

(विवरणम्)

(१६) **कर्मशक्तिसाङ्कर्यान्यथानुपपत्तेरि**ति। अयमत्र भावः—कर्मशक्तीनां साङ्कर्यं—परस्परानुविद्धरूपता तदैव सिद्ध्यति यदैकस्यां कर्मशक्तौ क्षीयमाणायां तदभिन्नस्वभावत्वेन अन्या अपि क्षीयन्त इति॥

(१६-१७) **तद्भावेनैव तत्क्षयाङ्गीकरणादी**ति। तद्भावेनैव साङ्कर्यलक्षणेन ३० तत्क्षयाङ्गीकरणात्—कर्मशक्तिप्रलयाभ्युपगमात्॥

[1] 'सुखेनैवाल्पे कर्मणि' इति घ-पाठः।

( मूलम् )

**इति नेदमपुष्कलमुपादेयफलप्रकर्षः, तदन्यसाधारणत्वात्, इत्थं सापवादस्य संसारिष्वपि भावात्। तथाहि–न वः संसार्यपि सर्वथा ५संसार्येव, एकान्तवादापत्तेः, अपि त्वसंसार्यपीति नेदमकृत्स्नं हेयानर्थोत्कर्ष इति यत्किञ्चिदेतत् ॥**

**किञ्च अनेकान्तवादिनो मानमपि न मानमेव, स्यान्मानमिति तत्त्वनीतेः, इत्थं तदाभासमपि। ततश्चैवं तदतदात्मके प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन् वस्तुतत्त्वे विरोधभाजि अस्य तदतद्वादिनो १० निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः सर्वमेव प्रमाणादि**

---

( स्वो० व्या० )

करणात्। **इति**–एवं **नेदं**–मुक्तत्वम् **अपुष्कलम्**–असम्पूर्णं सर्वथा मुक्तताभावेन, **उपादेयफलप्रकर्षः**। उपादेयं च तत् फलं चेति विग्रहः, तस्य प्रकर्षः–पर्यन्तो[1] न। कुत इत्याह–**तदन्यसाधारणत्वात्**। तस्मात्–मुक्तादन्योऽमुक्तः १५ तत्साधारणत्वात् अधिकृतमुक्तत्वस्य। कथमेतदेवमित्याह–**इत्थम्**–एवंमुक्तवदमुक्तत्वयोगेन[2] **सापवादस्य**–अपुष्कलस्य, मुक्तत्वस्येति प्रक्रमः। **संसारिष्वपि** प्राणिषु **भावात्**। एतदेव भावयति **तथाहीत्यादिना**। तथाहि **न वः**–न युष्माकं **संसार्यपि** प्राणी **सर्वथा संसार्येव**, असंसारिव्यवच्छेदेन। कुत इत्याह–**एकान्तवादापत्तेः** कारणात्, **अपि त्वसंसार्यपि**, स्याद्वादनीतेः। २० **इति**–एवं **नेदं**–संसारित्वम् **अकृत्स्नम्**–असम्पूर्णम् एकान्तेन संसारित्वाभावेन **हेयानर्थोत्कर्षः**। हेयश्चासौ अनर्थश्चेति विग्रहः, तदुत्कर्षः–निष्ठा[3] न। **इति**–एवं **यत्किञ्चिदेतत्**–असारमधिकृतमनेकान्तदर्शनमिति ॥

**किञ्चेत्यादि**। किञ्चायमपरो दोषः–**अनेकान्तवादिनो** वादिनः **मानमपि**–प्रत्यक्षादि **न मानमेव** एकान्तेन, अपि त्वमानमपि। कुत इत्याह–२५ **स्यान्मानमिति तत्त्वनीतेः**–कथञ्चिन्मानमिति न्यायात्। **इत्थमित्यादि**। एवं **तदाभासमपि**–मानाभासमपि न तदेव, स्यात् तदाभासमिति[4] तत्त्वनीतेः। **ततश्चेत्यादि**। **ततश्चैवम्**–उक्तेन न्यायेन **तदतदात्मके** तच्चातच्च तदतदी[5] ते आत्मा यस्य तत् तथा तस्मिन् **प्रमाणप्रमेयरूपे सर्वस्मिन्नेवास्मिन्**–अनन्तरोदिते **वस्तुतत्त्वे विरोधभाजि** विरोधं भजते तच्छीलं यत् तथा तस्मिन्। ३० **अस्य तदतद्वादिनः**–अनेकान्तवादिनः **निष्कलङ्कमतिसमुत्प्रेक्षितसन्न्यायानुसारतः**। निष्कलङ्कमतयः–बौद्धाः तैः समुत्प्रेक्षितो यः सन्न्यायः–उक्तलक्षणः

---

१ 'पर्यन्तेन' इति ङ–पाठः। २ 'एवं मुक्त०' इति ङ–पाठः। ३ 'निष्ठानं' इति क–पाठः। ४ 'भासमपि तत्त्व०' इति क–पाठः। ५ 'तदित्यात्मा' इति क–पाठः।

( मूलम् )

**प्रतिनियतं न घटत इत्यलमत्रातिनिर्बन्धेन ॥**

**तथा चोक्तम्—**

**"यः पश्यत्यात्मानं तत्रास्याहमिति[1] शाश्वतः स्नेहः ।** ५

**स्नेहात् सुखेषु तृष्यति तृष्णादोषांस्तिरस्कुरुते ॥[2]**

**गुणदर्शी परितृष्यन् ममेति तत्साधनान्युपादत्ते ।**

**तेनात्माभिनिवेशो यावत् तावत् स संसारे ॥[3]**

**आत्मनि सति परसञ्ज्ञा स्वपरविभागात् परिग्रह-द्वेषौ ।**

**अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥[4]** १०

**कर्मक्षयाद्धि[5] मोक्षः स च तपसस्तच्च कायसन्तापः ।**

---

( स्वो० व्या० )

तदनुसारेण **सर्वमेव प्रमाणादि** । 'आदि'शब्दात् प्रमेयग्रहः । **प्रतिनियतम्**—इतररूपाननुषक्तं **न घटत इति** कृत्वा **अलमत्रातिनिर्बन्धेन** [6]निरर्थकेन, अस्थानाभिनिवेश एष इति ॥ १५

**तथा चोक्तमन्यैरपि** । एतदेवेत्याह—**यः पश्यतीत्यादि** । यः पश्यति **आत्मानम्** अनादिमोहात् **तत्र**—आत्मनि **अस्य**—आत्मदर्शिनः **अहमिति**—एवं **शाश्वतः स्नेहः** विषयनित्यतया । ततः किमित्याह—**स्नेहात्** हेतोः **सुखेषु तृष्यति**—अभिष्वङ्गं करोति । एवमपि किमित्याह—**तृष्णादोषांस्तिरस्कुरुते**—स्थगयति ।

तथा **गुणदर्शी** सन् **परितृष्यन्** मोहात् **ममेति**—एवं विप्रलब्धः **तत्साधनानि**—गुणसाधनानि **उपादत्ते**—गृह्णात्यश्रान्तः । येनैतदेवं **तेनात्माभिनिवेशो यावत्** प्राणिनस्तावत् [7]स **संसारे** प्राणी । २०

तथाऽऽत्मनि **सति परसञ्ज्ञा** भवति, **स्वपरविभागात् परिग्रह-द्वेषौ** भवतः । **अनयोः सम्प्रतिबद्धाः**—परिग्रह-द्वेषयोः **सर्वे दोषाः प्रजायन्ते** रागादयः । २५

**कर्मक्षयाद्धि[8] मोक्षः**, न भावनातः । **स च तपसः** कर्मक्षयः, **तच्च**

---

( विवरणम् )

(१९) **तृष्णादोषांस्तिरस्कुरुत** इति । [9]तृष्णायां—लोभलक्षणायां ये दोषा अर्थोपार्जनादिक्लेशलक्षणास्तान् तिरस्कुरुते—अपह्नुते, न पश्यतीत्यर्थः । तथाविधं[10]गौरि(री)-गानाक्षिप्तहरिण इव मरणमिति ॥ ३०

---

१ 'तत्र सोऽहमिति' इति क-प्रतौ पाठान्तरम् । २-४ आर्या । ५ 'क्षयाद्धिमोक्षः' इति ग-पाठः । ६ 'निरर्थकेन' इति पाठो नास्ति क-च-प्रतयोः । ७ 'स' इति पाठो नास्ति घ-पुस्तके । ८ 'क्षयाद्धिमोक्षः' इति क-पाठः । ९ 'तृष्णाया लोभलक्षणाया ये' इति च-पाठः । १० 'गोरिगाना०' इति च-पाठः ।

( मूलम् )

कर्मफलत्वान्नारकदुःखमिव कथं तपस्तत् स्यात् ? ॥[१]
न स्वेच्छाप्रतिपत्त्या विशिष्टसुखभावतुल्यवृत्तित्वात् ।
५ इष्टौ प्रतीतिकोपस्तदन्यबन्धो द्वयेऽपि समः ॥[२]
चित्रं च कर्म कार्यात् सङ्क्लेशादेव तत्क्षयोऽयुक्तः ।
दुःख्येव तपस्वीति च तदभावो [३]योगिनां चैव ॥[४]
अन्यदपि चैकरूपं तच्चित्रक्षयनिबन्धनं न स्यात् ।
तच्छक्तिसङ्करक्षयकारीत्यपि वचनमात्रं तु ॥[५]
१० [६]अक्लेशात् स्तोकेऽपि क्षीणे सर्वक्षयप्रसङ्गो यत् ।
साङ्कर्यादेर्न्यायात् तद्भेदो ह्यन्यथा नियमात् ॥[७]

( स्वो० व्या० )

कायसन्तापः, तप इति पूर्वपक्षः । **कर्मफलत्वात्** कारणात् । **नारकदुःखमिवेति** दृष्टान्तः । **कथं तपस्तत् स्यात्** कायसन्तापरूपमित्युत्तरम् ।

१५ **न स्वेच्छाप्रतिपत्त्या** तत् तपः । कुत इत्याह—**विशिष्टसुखभावतुल्यवृत्तित्वात्**, स्वेच्छाप्रतिपत्तिमद्राज्यसुखादेरपि तपस्त्वप्रसङ्गादित्यर्थः । **इष्टौ प्रतीतिकोपः** अधिकृतराज्यसुखादेस्तपस्त्वे । **तदन्यबन्धः** प्रमादार्त्तध्यानाभ्यां **द्वयेऽपि**—प्रस्तुतराज्यसुखे प्रस्तुततपसि च **समः**—तुल्यः ।

**चित्रं च कर्म कार्यात्**—तुच्छभोगादिफलदर्शनात्, अतः **सङ्क्लेशादेव** २० एकरूपात् **तत्क्षयोऽयुक्तः**, चित्रकर्मक्षयः अघटमानक इति । **दुःख्येव तपस्वीति च** अयुक्तं **तदभावः**—तपस्वित्वाभावो **योगिनां चैव** अयुक्तः ।

**अन्यदपि च** युक्तं **एकरूपं तत्**—तपः । ततः किमित्याह—**चित्रकर्मक्षयनिबन्धनं न स्यात्** । चित्रं च कर्म, **तच्छक्तिसङ्करक्षयकारि**—कर्मशक्तिसङ्करक्षयकारि तपः । **इत्यपि वचनमात्रम्** एव ।

२५ कुत इत्याह—**अक्लेशात्** एकरोमोत्पाटनेन **स्तोकेऽपि** कर्मणि **क्षीणे** सति **सर्वक्षयप्रसङ्गो यत्**—यस्मात् । कुत इत्याह—**साङ्कर्यादेर्न्यायात्** । 'आदि'शब्दात् स्तोककर्मक्षयः । [१०]**तद्भेदः**—कर्मशक्तिभेदः । कर्मशक्तिभेदो **ह्यन्यथा**—सर्वक्षयमन्तरेण **नियमात्** अत इत्यपि वचनमात्रमेवेति स्थितम् ।

( विवरणम् )

३० (२७) **'आदि'शब्दात् स्तोककर्मक्षय इति** । अयमत्र भावः—यदि स्तोकेऽपि

१–२ आर्या । ३ 'योगिना' इति ग-पाठः । ४–५ आर्या । ६ 'किञ्च' इत्यधिकः क-पाठः । ७ आर्या । ८ 'तुल्यरूपत्वात्' इति क-घ-पाठः । ९ 'राज्ये सुखे' इति ङ-पाठः । १० 'निबन्धनं न स्यात्' इत्यधिको ङ-पाठः ।

( मूलम् )

मुक्तो न मुक्त एव हि संसार्यपि सर्वथा न संसारी ।
मानमपि मानमेव हि हेत्वाभासोऽप्यसावेव ॥[१]
एवं सप्रतिपक्षे सर्वस्मिन्नेव वस्तुतत्त्वेऽस्मिन् । ५
स्याद्वादिनः सुनीत्या न युज्यते सर्वमेवेह ॥"[२]

इत्यादि ॥[३]

तदेवमेते मन्दमतयो दुस्तर्कोपहतास्तीर्थ्याः स्वयं नष्टाः परानपि नाशयन्ति मन्दमतीन्, अतः प्रतिविधीयते—

( स्वो० व्या० ) १०

तथा मुक्तो न मुक्त एव हि—एकान्तेन, संसार्यपि सर्वथा न संसारी, एकान्तवादापत्तेः । मानमपि मानमेव हि न, स्याद्वादप्रामाण्यात् । हेत्वाभासोऽपि प्रमाणाभासोपलक्षणमेतत् । असावेव—हेत्वाभास एव न, तत एव हेतोरिति ।

एवमित्यादि । एवम्—उक्तेन प्रकारेण सप्रतिपक्षे सर्वस्मिन्नेव प्रमाणादिरूपे १५ वस्तुतत्त्वेऽस्मिन् [४]लोकसिद्धे स्याद्वादिनः—अनेकान्तवादिनः सुनीत्या उक्तवत् न युज्यते सर्वमेवेह दृष्टम् । इत्यादि । एष पूर्वपक्षः ॥

[५]एनमुपन्यस्यात्र दूषणमभिधातुमाह—तदेवमित्यादि । तच्छब्दः [६]प्रस्तुतार्थप्रदर्शकः । एवं—यथोक्तं एते—शाक्यादय एवं वादितया [७]लोके सिद्धा मन्दमतयो विशिष्टक्षयोपशमाभावेन दुस्तर्कोपहताः—एकान्तविषयतर्कपीडिताः तीर्थ्याः— २० शाक्यादय एव न स्वयं नष्टा एव, सन्न्यायाज्ञानादिति गम्यते, परानपि नाशयन्ति न सामान्येनेत्याह—मन्दमतीन्—जडबुद्धीन् यत एवम् । अतः प्रतिविधीयते—सर्वत्रैवात्र प्रतिक्रियत इत्यर्थः ॥

( विवरणम् )

कर्मणि क्षीयमाणे सर्वासां कर्मशक्तीनां क्षयो नेष्यते, तदा कथं तासां साङ्कर्यं २५ स्ववाचैव प्रतिपन्नं भवतः सङ्गच्छते ? [८]तद् यथा—साङ्कर्येण क्षीयमाणासु कर्मशक्तिषु स्तोकस्यापि कर्मणः क्षयो न प्राप्नोति, सर्वकर्मशक्त्यनुविद्धस्वभावत्वात् [९]तस्याः । तत इदमायातम्—स्तोकेऽपि कर्मणि क्षीयमाणे सर्वाः कर्मशक्तयः क्षीयन्ते, सर्वासु च क्षीयमाणासु स्तोकमिति ॥

१–२ आर्या । ३ इति पूर्वपक्षस्य पञ्चमांशः सम्पूर्णः । ४ 'लोके सिद्धेः' इति ङ–पाठः । ५ 'एवमुप०' इति ङ–पाठः । ६ 'प्रस्तुतार्थोपदर्शकः' इति ङ–पाठः । ७ 'लोकसिद्धाः' इति क–पाठः । ८ 'तथा' इति ख–पाठः । ९ 'तस्य' च–पाठः ।

( मूलम् )

**तत्र यत् तावदुक्तम्–'कथमेकमेव घटादिरूपं वस्तु सच्चासच्च भवति' तदेतदागोपालाङ्गनादिप्रसिद्धमनाशङ्कनीयमेव, यतस्तत्** ५ **स्वद्रव्यक्षेत्रकालभावरूपेण सद् वर्तते, परद्रव्यक्षेत्रकालभावरूपेण चासत्; ततश्च सच्चासच्च भवति, अन्यथा तदभावप्रसङ्गात्। तथाहि–यदि तद् यथा स्वद्रव्यक्षेत्रकालभावरूपेण सत्, एवं परद्रव्यादिरूपेणापि स्यात्, ततश्च तद् घटवस्त्वेव न स्यात्, परद्रव्यादिरूपेणापि सत्त्वात् तदन्यस्वात्मवत्। तथा यदि यथा परद्रव्यक्षेत्रकाल-** १० **भावरूपेणासत्, एवं स्वद्रव्यादिरूपेणापि स्यात्, इत्थमपि तद् घटवस्त्वेव न स्यात्, स्वद्रव्यादिरूपेणाप्यसत्त्वात् खरविषाणवत्। इत्येवं तदभावप्रसङ्गात् सदसद्रूपं तदङ्गीकर्तव्यमिति। तथा च तद्**

( स्वो० व्या० )

**तत्रे**त्यादि। तत्र **यत् तावदुक्त**मादौ[1] **कथमेकमेव घटादिरूपं वस्तु** १५ **सच्चासच्च भवती**ति पूर्वपक्षे। **तदेत**दित्यादि। तदेतत्–घटादिरूपं वस्तु सच्चासच्चेति **आगोपालाङ्गनादिप्रसिद्धं**[2]–तथोपलम्भनार्थक्रियाभ्यां [3]प्रतिष्ठितम्, **अनाशङ्कनीयमेव। यतस्तत्**–घटादिरूपं वस्तु **स्वद्रव्यक्षेत्रकालभावरूपेण सद् वर्तते, परद्रव्यक्षेत्रकालभावरूपेण च**–[4]पटादिरूपेण **असत्। ततश्च सच्चासच्च भवति**, तद् वस्तु शबलम्। **अन्यथा**–एवमनङ्गीकरणे **तदभावप्रसङ्गात्**– २० तस्य–घटादिरूपस्य वस्तुनोऽभावप्रसङ्गात्। एनमेव भावयति **तथाही**त्यादिना। तथाहि **यदि तत्**–घटादिरूपं वस्तु **यथा स्वद्रव्यक्षेत्रकालभावरूपेण सत्, एवं परद्रव्यादिरूपेणापि स्यात्**। 'आदि'शब्दात् परक्षेत्रकालभावरूपपरिग्रहः। [5]**ततश्च**–एवं च सति **तद् घटवस्त्वेव न स्यात्**। कुत इत्याह–**परद्रव्यादिरूपेणापि सत्त्वात्। तदन्यस्वात्मवत्**, पटादिस्वात्मवदित्यर्थः। २५ **तथा यदि यथा परद्रव्यक्षेत्रकालभावरूपेणासत्** तद् घटादिरूपं वस्तु, **एवं स्वद्रव्यादिरूपेणापि स्यात्**। 'आदि'शब्दात् स्वक्षेत्रकालभावपरिग्रहः। **इत्थमपि**–एवमपि **तद् घटवस्त्वेव न स्यात्, स्वद्रव्यादिरूपेणापि असत्त्वात्**। किंवदित्याह–**खरविषाणवत्**। खरविषाणं हि पररूपेण स्वरूपेण चासत्, तुच्छमिति भावनीयम्। **इत्येवम्**–उक्तन्यायेन **तदभावप्रसङ्गात्** ३० तस्य–घटादिरूपस्य वस्तुनोऽभावप्रसङ्गात् **सदसद्रूपं तदङ्गीकर्तव्यमिति**। एत-

---

१ एकादशे पृष्ठे। २ प्रेक्ष्यतामेकादशं पृष्ठम्। ३ 'प्रसिद्धमना०' इति क-पाठः। ४ 'पटादिगतेन, असत्' इति घ-पाठः। ५ 'ततश्चैवं सति' इति घ-पाठः।

(मूलम्)

**द्रव्यतः पार्थिवत्वेन सत्, नाबादित्वेन; तथा क्षेत्रत इहत्यत्वेन, न 'पाटलिपुत्रका'दित्वेन; तथा कालतो घटकालत्वेन, न मृत्पिण्डादिकालत्वेन; तथा भावतः श्यामत्वेन, न रक्तत्वादिनेति; अन्यथा इतररूपापत्त्या तत्स्वरूपहानिप्रसङ्ग इति ॥** ५

**द्रव्याद्यात्मकत्वं च घटस्य, तैर्विनाऽभावात्। तथाहि—न मृदादिद्रव्यमात्रमेव तथाविधक्षेत्राननुविद्धम् ऋते तत्कालभावितां कृष्णादिभावशून्यं घटः, तथाऽनुपलम्भात्, तत्तदन्यतममात्रत्वे तदितरवैकल्येन तत्स्वरूपानुपपत्तेः, विविक्तानामसम्भवात्, सम्भवेऽपि तन्मात्रत्वेन तद्द्रव्यत्वादिबुद्धिहेतुत्वतो घटबुद्ध्यभावप्रसङ्गः।** १०

---

(स्वो० व्या०)

देव विशेषेणाह—**तथा चे**त्यादि। तथा च **तत्**—घटादिरूपं वस्तु **द्रव्यतः**—द्रव्यमाश्रित्य **पार्थिवत्वेन सत्**—तथापरिणतपृथिवीविकारत्वेन सत्, **नाबादित्वेन**। **तथा क्षेत्रतः**—क्षेत्रमाश्रित्य **इहत्यत्वेन**, इहभव इहत्यः तद्भावेन, **न 'पाटलिपुत्रका'दित्वेन**। **तथा कालतः**—कालमाश्रित्य **घटकालत्वेन**—तथातत्स्थितिस्वभावत्वलक्षणेन, **न मृत्पिण्डकपालकालत्वेन**। **तथा भावतः**—भावमाश्रित्य **श्यामत्वेन**—श्यामत्वभावेन, **न रक्तत्वादिना** सत् **इति**। इत्थं चैतदङ्गीकर्तव्यम्। **अन्यथा**—एवमनङ्गीकरणे **इतररूपापत्त्या**—अबादिरूपेणापि सत्त्वेन **तस्य**—घटादिरूपस्य वस्तुनः **स्वरूपहानिप्रसङ्गः**, पार्थिवत्वाद्यभावादिति ॥ १५ २०

**द्रव्याद्यात्मकत्वं च** यथोदितं **घटस्य**—अधिकृतवस्तुनः। कथमित्याह—**तैर्विनाऽभावात्**। तैः—द्रव्य-क्षेत्र-काल-भावैर्विनाऽभावात्। एतदेव भावयति **तथाही**त्यादिना। तथाहि **न मृदादिद्रव्यमात्रमेव** एकान्तैकस्वभावम्, **तथाविधक्षेत्राननुविद्धं**[1]—तदाधारत्वपरिणतक्षेत्रानाधेयस्वभावम्[2], **ऋते तत्कालभावितां**—विना स्वस्थितिकालभावितां **कृष्णादिभावशून्यं**—कृष्णोर्ध्वादिभावशून्यं **घटः**। कुत इत्याह—**तथाऽनुपलम्भात्**। तथा—तेन प्रकारेण तथाविधक्षेत्राद्यनुवेधादिरहितमृदादिद्रव्यमात्रलक्षणेनानुपलम्भात्[3]। अत्रैव कारणमभिधातुमाह—**तत्तदन्यतमे**त्यादि। तस्य—घटस्य तेषां—पार्थिवद्रव्यत्वादीनामन्यतममात्रत्वे—पार्थिवद्रव्यमात्रत्वे सति **तदितरवैकल्येन**—इहत्यत्वाद्यभावेन **तत्स्वरूपानुपपत्तेः**[4]—अधिकृतपार्थिवद्रव्यत्वस्वरूपानुपपत्तेः। 'घटबुद्ध्यभावप्रसङ्ग' २५ ३०

---

१ 'ननु बद्धं तथाधार०' इति क-पाठः। २ 'तथाधार०' इति घ-पाठः। ३ 'लक्षणेनानुपलक्षणेनानुपलम्भात्' इति क-पाठो भ्रान्तिमूलको भाति। ४ 'स्वरूपत्वानुपपत्तेः' इति घ-पाठः।

( मूलम् )

**न च पार्थिवद्रव्यत्वादिबुद्धिरेव घटबुद्धिः, तथाऽप्रतीतेः, इति निर्लोठयिष्यामः ॥**

५ **स्यादेतत्, स्वद्रव्यादिसत्त्वमेव परद्रव्याद्यसत्त्वम्। तथा च घटवस्तुनः पार्थिवद्रव्यसत्त्वमेव, अबादिद्रव्यासत्त्वम्; इहक्षेत्रसत्त्व-**

---

( स्वो० व्या० )

इति योगः । अनुपपत्तिश्च **विविक्तानामसम्भवात्** । पार्थिवद्रव्यत्वादीनामिति प्रक्रमः । **सम्भवेऽपी**त्यादि[1] । सम्भवेऽप्यधिकृतपार्थिवद्रव्यत्वादीनां **तन्मात्र-**
१० **त्वेन**–पार्थिवद्रव्यादिमात्रत्वेन हेतुना, **तद्द्रव्यत्वादिबुद्धिहेतुत्वतः**–पार्थिवद्रव्यत्वादिबुद्धिहेतुत्वतः, तेषां **घटबुद्ध्यभावप्रसङ्गः** । नान्यालम्बनाऽन्या बुद्धिः साध्वी भवितुमर्हतीति भावनीयम् । **न चे**त्यादि । निष्णातव्यपदेशोऽयम् । द्रव्यतः पार्थिवत्वेन सदित्यत्र सत्त्वम्, पार्थिवद्रव्यत्वमिति कृत्वा । न च **पार्थिवद्रव्यत्वबुद्धिरेव**–पार्थिवद्रव्यभावबुद्धिरेव **घटबुद्धिः** । कुत इत्याह–**तथाऽ-**
१५ **प्रतीतेः**–पार्थिवद्रव्यभावबुद्धेर्घटबुद्धित्वेनाप्रतीतेः । एतत् **निर्लोठयिष्यामः** उपरिष्टाद् विज्ञानवादनिराकृतौ अवयविचिन्ताधिकारे प्रायो विप्रतिपत्तिनिराकरणेन सुनिर्लोठनादिति ॥

**स्यादेत**दित्यादि । स्यादेतत्–अथै[2]वं मन्यसे **स्वद्रव्यादिसत्त्वमेव** । 'आदि'-शब्दात् स्वक्षेत्रकालभावपरिग्रहः । **परद्रव्याद्यसत्त्वम्** । अत्रापि 'आदि'शब्देन
२० परक्षेत्रकालभावपरिग्रहः । न स्वद्रव्यादिसत्त्वादर्थान्तरभूतमेतदित्यर्थः । एतदेव

---

( विवरणम् )

(१२) **निष्णातव्यपदेशोऽयमि**ति । निष्णातस्य–शिक्षितस्य शब्दार्थतात्पर्यवेदिनो वादिन इत्यर्थः । व्यपदेशः–भाषणम् । अयं पार्थिवद्रव्यत्वादिबुद्धिरेव घटबुद्धिरित्येवंरूपः । अत्र हेतुमाह–द्रव्यतः पार्थिवत्वेन सदित्यत्र सत्त्वं पार्थिवद्रव्यत्वमिति
२५ कृत्वेति । इदमत्रैदम्पर्यं यत् पूर्वं तथा च तद्द्रव्यतः पार्थिवत्वेन सदित्यत्र वाक्ये पार्थिवत्वेन करणभूतेन सदिति सत्त्वरूपं घटादि वस्तूक्तं तदेवेह पार्थिवे सद्द्रव्यत्वशब्देनोच्यते । एवं च किं सिद्धम् ? पूर्वं द्रव्यतः पार्थिवत्वेन सदित्युक्त्वा साम्प्रतमस्मिन्नेवार्थे पार्थिवद्रव्यत्वशब्देन भाष्यमाणे वचनविसंवादादसाङ्गत्यं मन्यते जडबुद्धिः । निष्णातबुद्धिस्तु सूत्रकारोऽर्थदृष्टिप्रधानत्वाद् द्वयोरपि वाक्ययोः
३० शब्दभेदेऽपि एकमेवार्थं प्रतिपन्न इति वृत्तिकृता हृदि निवेश्योक्तम्–"निष्णातव्यपदेशोऽय"मि[3]त्यादीनि ॥

---

१ 'सम्भवेत्यादि' इति क–पाठः । २ 'अप्येवं' इति क–पाठः । ३ 'त्यादीति' इति च–पाठः ।

( मूलम् )

**मेव, 'पाटलिपुत्रा'द्यसत्त्वम्; घटकालसत्त्वमेव, मृत्पिण्डकालाद्यसत्त्वम्; श्यामत्वसत्त्वमेव, रक्तत्वाद्यसत्त्वम्; इति यथोक्तदोषानुपपत्तिरेव। एतदप्यसारम्, इत्थमपि कल्पनायां तदवस्तुत्वप्रसङ्गात्। तथाहि—यदि पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वम्, एवं**

( स्वो॰ व्या॰ )

[1]भावयति—**तथा चे**त्यादि । तथा च **घटवस्तुनः**—अधिकृतस्य **पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्व**मित्यादि यावत् **श्यामत्वसत्त्वमेव रक्तत्वाद्यसत्त्व**मिति **यथोक्तदोषानुपपत्तिरेव** यथोक्तदोषः—अधिकृतवस्त्वभावप्रसङ्गलक्षणः, तस्यानुपपत्तिरेव, अधिकृतसत्त्वस्यै[2]वेतरासत्त्वेन तद्भावनिवृत्तिरित्यभिप्रायः । एतदाशङ्क्याह—**एतदप्यसारम्** । कुत इत्याह—**इत्थमपी**त्यादि । एवमपि **कल्पनायां** क्रियमाणायां **तदवस्तुत्वप्रसङ्गात्** तस्य—अधिकृतस्य वस्तुनः—घटादिरूपस्य अवस्तुत्वप्रसङ्गात् । एतदेवाह **तथाही**त्यादिना । तथाहि **यदि पार्थिवद्रव्यसत्त्वमेव अबादिद्रव्यासत्त्वं** सत्त्वमेवासत्त्वमित्युभयमप्याश्रित्य अन्यथैवमभिधानं न युज्यत इत्यभिप्रेतां परविवक्षामनादृत्य तावदेवमाह—

( विवरणम् )

(११-१२) **अधिकृतसत्त्वस्यैवेतरासत्त्वेन तद्भावनिवृत्तिरि**ति। अधिकृतसत्त्वस्यैव—पार्थिवद्रव्यसत्त्वादिलक्षणस्य 'इतरासत्त्वेन' इतरेषाम्—अबादीनां तत्रासत्त्वेन—अविद्यमानतया किमित्याह—तद्भावनिवृत्तिः—अबादिरूपनिवृत्तिः । इदमुक्तं भवति—न हि किञ्चित् पार्थिवद्र[3]व्यसत्त्वादिव्यतिरिच्यमानमूर्त्तिरबाद्यसत्त्वं पार्थिवद्रव्यसत्त्वे समस्ति, [4]किन्तु पार्थिवद्रव्यसत्त्वमेव अबाद्यसत्त्वमिति शब्दान्तरेणोच्यत इति ॥

(१५-१६) **सत्त्वमेवासत्त्वमित्युभयमप्याश्रित्यान्यथैवमभिधानं न युज्यते इत्यभिप्रेतां परविवक्षामनादृत्य तावदेवमाहे**ति । पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वमित्यनेन वाक्येन [5]सत्त्वमेवंरूपो यः [6]परमतानुवादः क्रियते सूत्रकारेण स उभयमपि सत्त्वमसत्त्वं च वास्तवमाश्रित्यात्रैव विपक्षे [7]बाधकमाह—अन्यथा वास्तवद्वयानाश्रयणे एवं सत्त्वमेवासत्त्वमनेनोल्लेखेनाभिधानं—भाषणं परस्य न युज्यते इति—अस्मात् कारणात् [8]अभिप्रेतां सम्मतां परविवक्षां परमार्थतः सत्त्वाद् व्यतिरिक्तं न किञ्चिद्-

१ 'भावयन्नाह—तथा' इति घ—पाठः । २ 'कृतस्यैव' इति ख—पाठः । ३ 'द्रव्यत्वादिव्यति॰' इति क—पाठः । ४ 'किस्ति (?)' इत्यधिकः ख—पाठः । ५ 'सत्त्वमेव रूपो' इति च—पाठः । ६ 'परमानानुवादः' इति क—पाठः । ७ 'बाधकमित्याह' इति क—पाठः । ८ अभिप्रेतां समतां परविवक्षायां परमार्थतः तत्त्वाद् व्यति॰' इति ख—पाठः ।

( मूलम् )

तर्हि यथा तत् पार्थिवद्रव्यत्वेन सत्, एवमबादिद्रव्यत्वेनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वात् तदितरासत्त्वस्य[1]। यथा चा-[2]
५ बादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यात्, तदसत्त्वाव्य-तिरिक्तत्वात् तत्सत्त्वस्य; एवं क्षेत्रादिष्वपि वाच्यम्; ततश्च तदि-तररूपापत्त्यादिनाऽवस्तुत्वप्रसङ्गः। आह–कथं पार्थिवद्रव्यसत्त्वाद्य-व्यतिरिक्तत्वेऽप्यबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादेरबाद्यात्मकत्वम्?

( स्वो० व्या० )

१० एवं तर्हि यथा तत् पार्थिवद्रव्यत्वेन सत् घटादिरूपं वस्तु, एव-मबादिद्रव्यत्वेनापि स्यात् सदेव। कुत इत्याह–तत्सत्त्वाव्यतिरिक्त-त्वात्–पार्थिवद्रव्यसत्त्वाव्यतिरिक्तत्वात्, ई[3](?तदि)तरासत्त्वस्य–अबादिद्रव्या-सत्त्वस्य। [4]यथा चाबादिद्रव्यत्वेनासत् तथा पार्थिवद्रव्यत्वेनापि स्यात् सदेव। कुत इत्याह–तदसत्त्वाव्यतिरिक्तत्वात्–अबादिद्रव्यासत्त्वाव्यतिरिक्त-
१५ त्वात् तत्सत्त्वस्य–पार्थिवद्रव्यसत्त्वस्य। एवं क्षेत्रादिष्वपि वाच्यम् इहत्यत्व'पाटलिपुत्रका'दित्वाद्यपेक्षया। यदि इहत्यत्वसत्त्वमेव 'पाटलिपुत्रका'दि-त्वासत्त्वम्, एवं सति यथा तदिहत्यत्वेन सत्, एवं 'पाटलिपुत्रका'दित्वेनापि स्यात्, तत्सत्त्वाव्यतिरिक्तत्वादितरासत्त्वस्य। यथा वा 'पाटलिपुत्रका'दित्वेनासत् तथा इहत्यत्वेनापि स्यात्, तदसत्त्वाव्यतिरिक्तत्वात् तत्सत्त्वस्य। एवं घटकालमृत्-
२० पिण्डादिकालत्वं च। तथा श्यामत्वसत्त्वं रक्तत्वाद्यसत्त्वं चाङ्गीकृत्य भावना कार्या। ततश्चेत्यादि। ततश्च–एवं च सति तदितररूपापत्त्यादिना तस्य–पार्थिवद्रव्यादिसत्त्वस्य इतररूपापत्त्यादिना–अबादिद्रव्यत्वादिरूपापत्त्यादिना।

( विवरणम् )

सत्त्वं वचनभेदेऽपि समस्तीत्येवंलक्षणम् अनादृत्य–परिहृत्य, तावदिति प्रक्रमार्थः।
२५ एवं वक्ष्यमाणं दूषणमाह–इदमिहाकूतं[5] वास्तवयोरेव सत्त्वासत्त्वयोः सत्त्वमेवा-सत्त्वमिति शब्दार्थविदः परस्य[6] वक्तुं युक्तम्, न पुनरन्यथा निरर्थकस्य कस्यचिच्छ-ब्दस्य लोके प्रयोगाभावात् इत्यभिप्रायमङ्गीकृत्य उक्तलक्षणपरविवक्षानादरणेन वक्ष्यमाणं दूषणं प्रस्तूयत इति॥

१ 'तदत्त्वस्य' इति क–पाठः। २ 'यथा वाऽबादि०' इति घ–पाठः। ३ 'इत्वरासत्त्वस्य' इति क–पाठः। ४ 'यथा वाऽबादि' इति घ–पाठः। ५ 'इहाकूतं' इति क–पाठः। ६ 'परस्य च युक्तम्' इति क–पाठः।

( मूलम् )

**उच्यते-तस्य सत्त्वाव्यतिरिक्ततया तद्रूपतापत्तेः। न ह्यबाद्यसत्त्वम्,**

( स्वो० व्या० )

'आदि'शब्दात् तदभावपरिग्रहः । किमित्याह–**अवस्तुत्वप्रसङ्गः**, अभावापत्तिरिति ५
निगमनम्। आहेत्यादि। आह–**कथं पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽपि**
कस्येत्याह–**अबाद्यसत्त्वस्य पार्थिवद्रव्यसत्त्वादेः** अवधिभूतस्य, **अबाद्या-
त्मकत्वं** सुष्ठ्वप्यबाद्यसत्त्वात्मकत्वं भवतु तदसत्त्वाव्यतिरिक्ततयेति भावः।
एवं पूर्वपक्षमाशङ्कयाह–**उच्यते तस्येत्यादि** । तस्य–अबाद्यसत्त्वस्य **सत्त्वा-
व्यतिरिक्ततया**–पार्थिवद्रव्यसत्त्वाव्यतिरिक्तत्वेन **तद्रूपतापत्तेः**–अबादिरूपता- १०
पत्तेः। एतदेव भावयति **न हीत्यादिना** । न हि–यस्माद् **अबाद्यसत्त्वम्**

( विवरणम् )

(५) **'आदि'शब्दात् तदभावपरिग्रह** इति । अबाद्यसत्त्वस्य वास्तवस्य सतः
पार्थिवद्रव्यादिसत्त्वेन सहैकरूपतायामभ्युपगम्यमानायां परस्य द्वौ दोषौ प्रसज्येते ।
तद् यथा–यद् यतोऽभिन्नं तत् तदेव, यथा पार्थिवद्रव्यादिसत्त्वस्यैव स्वरूपम्। १५
ततश्चाबाद्यसत्त्वस्य पार्थिवद्रव्यादिसत्त्वतया परिणामात् सर्वथा[2] भाव एव । एवं
चाबादिसत्त्वस्य तत्प्रतिपन्थिनाऽबाद्यसत्त्वेन प्रतिस्खलनात् पार्थिवद्रव्यादिसत्त्वे
सर्वात्मना सङ्क्रमेण पार्थिवद्रव्यसत्त्वाक्रान्ते क्षेत्रे सत्ता स्यात्। एवं च पार्थिवादि-
द्रव्यस्य अबादिस्वभावतापन्ना अबादिद्रव्यस्य वा पार्थिवादिरूपता[3] । न चेदृशं वस्तु
समस्तीति बलादुभयोरपि अभाव एवेत्येको दोषः । २०

यद्वा अबाद्यसत्त्वेन पार्थिवद्रव्यसत्त्वस्य सर्वात्मना पार्थिवद्रव्यादिसत्तया स्वरूप-
ताया अभावात् पार्थिवादिद्रव्यसत्त्वस्याभाव एव स्यात्। इति द्वितीयो दोष इति ॥

(७) **पार्थिवद्रव्यसत्त्वादेरवधिभूतस्येति** । अबाद्यसत्त्वं हि पार्थिवद्रव्यसत्त्व-
मवधिमपेक्ष्य व्यवह्रियते दीर्घत्वमिव ह्रस्वत्वमिति ॥

(८) **तदसत्त्वाव्यतिरिक्ततयेति** । तस्य–अबादेरसत्त्वं तदसत्त्वम्, तस्मादव्य- २५
तिरिक्ततया पार्थिवद्रव्यसत्त्वस्य अबाद्यसत्त्वाव्यतिरेके हि पार्थिवद्रव्यसत्त्वस्य
सुतरामबादिसत्त्वापत्तिः । अबादिसत्त्वस्य प्रतिपन्थिभावस्वभावत्वात् पार्थिव-
द्रव्यसत्त्वस्येति ॥

१ 'भाव इत्यभिप्रायमङ्गीकृत्य उक्तलक्षणपरविवक्षानादरेण परिग्रह०' इति ख–च–पाठो भ्रान्ति-मूलको भाति। २ 'सर्वथा भाव एव' इति पाठो नास्ति च–प्रतौ। ३ 'रूपतां' इति च–पाठः। ४ 'सत्त्वतया रूपतायाः' इति च–पाठः। ५ 'पार्थिवसत्त्वस्य' इति ख–च–पाठः।

(मूलम्)

अबाधितसत्त्वरूपतापत्तिमन्तरेण असत्तां जहाति, तत्तत्त्वानिवृत्तेः, तत्त्वतस्तदव्यतिरिक्तत्वाभावात् । तत्सत्त्वरूपतापत्तिरेव
५ तत्तत्त्वनिवृत्तिरिति चेत्, न, युक्त्यनुपपत्तेः, पार्थिवद्रव्यसत्त्वादेरपि तदितरासत्त्वस्वभावत्वात्, तथाप्रतीतेः । न च तदितरासत्त्वनिवृत्तौ तदभावेनास्येत्थंस्वभावत्वं युक्तम् । न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नाम । एतेन पार्थिवद्रव्यसत्त्वादेः सत्त्वविशेषत्वात् तदव्यतिरिक्तत्वेऽप्यबाधसत्त्वस्य पार्थिवद्रव्यसत्त्वादित्वमेवेत्येतदपि
१० प्रत्युक्तमिति सूक्ष्मधिया भावनीयम् ॥

(स्वो० व्या०)

अबाधितसत्त्वरूपतापत्तिमन्तरेण–विनाऽसत्तां जहाति–परित्यजति । कुत इत्याह–तत्तत्त्वानिवृत्तेः असत्तायास्तत्त्वमसत्त्वमेव तदनिवृत्तेः, तत्त्वतः–परमार्थतः तदव्यतिरिक्तत्वाभावात्–पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वाभावात्,
१५ तदसत्त्वापरित्यागेनेति भावनीयम् । तत्सत्त्वेत्यादि । तत्सत्त्वरूपतापत्तिरेव–पार्थिवद्रव्यत्वादिसत्त्वरूपतापत्तिरेव तत्तत्त्वनिवृत्तिः–अबाधसत्त्वतत्त्वनिवृत्तिः, तदव्यतिरिक्तं हि तदेव तद् भवति । इति–एवं चेन्मन्यसे, एतदाशङ्क्याह–नेत्यादि । न–नैतदेवम्, युक्त्यनुपपत्तेः । एनामेवाह–पार्थिवद्रव्यसत्त्वादेरपि । 'आदि'शब्दादिहत्यत्वक्षेत्रसत्त्वादिपरिग्रहः । तदितरासत्त्वस्व-
२० भावत्वात्, अबाधसत्त्वस्वभावत्वादित्यर्थः । कुत एतदेवमित्याह–तथाप्रतीतेः । तथा–तेन प्रकारेण–अबाधसत्त्वस्वभावत्वेन प्रतीतेः, पार्थिवद्रव्यसत्त्वादेरिति प्रक्रमः । इत्थं चैतदङ्गीकर्तव्यमित्याह–न चेत्यादि । न च तदितरासत्त्वनिवृत्तौ सत्यां तदभावेनेति अबाधसत्त्वाभावेन हेतुना अस्य–पार्थिवद्रव्यसत्त्वादेः इत्थंस्वभावत्वम्–अबाधसत्त्वस्वभावत्वं युक्तम् । एतदेव भावयति न हीत्यादिना ।
२५ न हि–नैव असति–अविद्यमाने चेतनात्वे–चेतनाभावेऽणुः–परमाणुः चेतनास्वभावश्चेतनाधर्मा नामेति । अनेन नैकान्ताविद्यमानं विशेषणं भवितुमर्हतीत्येतदेवाह ; ततश्चाबाधसत्त्वेन तत्र भवितव्यमिति भावः । एतेनेत्यादि । एतेन–अनन्तरोदितेन वस्तुना पार्थिवद्रव्यसत्त्वादेः प्रस्तुतस्य सत्त्वविशेषत्वात् कारणात् तदव्यतिरिक्तत्वेऽपि–पार्थिवद्रव्यसत्त्वाद्यव्यतिरिक्तत्वेऽपि अबाध-
३० सत्त्वस्य । किमित्याह–पार्थिवद्रव्यसत्त्वादित्वमेव । सत्त्वविशेषाव्यतिरेकेण तद्भावापत्तेरित्यभिप्रायः । इत्येतदपि–कुक्काचार्यादिचोदितं प्रत्युक्तं–निराकृतम्

१ 'तदतिरिक्त०' इति घ–पाठः । २ 'अबाधसत्त्व०' इति क–पाठः ।

(मूलम्)

**अथोच्यते–न हि नः किञ्चिद्बाह्यसत्त्वं निरुपाख्यं नामास्ति यद-पेक्षया[1]ऽव्यतिरिक्तविकल्पोपन्यासेनावस्तुत्वापत्त्या[2]ऽऽत्मनो न्याया-भिज्ञता ख्याप्यते, अपि तु पार्थिवद्रव्यसत्त्वमेव विशिष्टमेकस्वभाव-** ५

(स्वो० व्या०)

इति सूक्ष्मधिया भावनीयम् । सत्त्वविशेषाव्यतिरेकोऽपि नाधिकृतासत्त्वस्य स्वरूपापरित्यागेन[3] । न चाबाद्यसत्त्वमबादिसत्त्वरूपतापत्तिमन्तरेण असत्तां[4] जहातीति दर्शितमेतत्[5] । अतोऽबाद्येव तदव्यतिरिक्तमित्यबाद्यात्मकं तत्, अबादिनिवृत्तौ तु तदसत्त्वं तदव्यतिरिक्तमिति पूर्वोक्तो दोष इत्यलं प्रसङ्गेन, अक्षरगमनिकामात्रत्वात् १० प्रारम्भस्य ॥

**अथेत्यादि** । अथ **उच्येत** परेण–**न हि नः**–अस्माकं **किञ्चिदबाद्यसत्त्वं निरुपाख्यं**–तुच्छं **नामास्ति यदपेक्षया**–यदाश्रयणेन **अव्यतिरिक्तवि-कल्पोपन्यासेन अवस्तुत्वापत्त्या**–अवस्तुत्वप्रसङ्गेनाधिकृतस्य वस्तुनः **आत्मनो न्यायाभिज्ञता**–सूक्ष्मोक्तिकत्वं **ख्याप्यते** भवता । **अपि तु**–किं १५ तर्हि? **पार्थिवद्रव्यसत्त्वमेव** प्रस्तुतं **विशिष्टं**–त्रैलोक्यव्यावृत्तम् **एकस्वभावं**

(विवरणम्)

(८) **असत्तां जहातीति** । अबाद्यसत्त्वस्य हि पार्थिवद्रव्यसत्त्वेन सहैकरूपतापत्तौ नियमादभाव एव, अन्यथा एकस्वभावताया असिद्धेः । ततोऽबाद्यसत्त्वस्यासत्ता[6]-लक्षणे स्वरूपपरित्यागे[7] सति बलात् पार्थिवद्रव्यसत्त्वादभिन्नं हिः–यस्मात् । तदेव २० पार्थिवद्रव्यसत्त्वमेव तदबाद्यसत्त्वं भवति, न पुनरन्यः कश्चिदसत्त्वांशस्तत्रा-वशिष्यत इति ।

(९–१०) **अबादिनिवृत्तौ तु तदसत्त्वं तदव्यतिरिक्तमिति पूर्वोक्तो दोष** इति । यद्यबादिसत्त्वनिवृत्तिः पार्थिवद्रव्येऽभ्युपगम्यते तदा तदसत्त्वम्–अबाद्यसत्त्वं तदव्यतिरिक्तं–पार्थिवद्रव्यसत्त्वादव्यतिरिक्तमित्यङ्गीकृतं स्यात् इत्यस्माद्धेतोः पूर्वोक्तो २५ दोषः । स च यदि पार्थिवद्रव्यसत्त्वमेवाबादिद्रव्यासत्त्वम् । एवं तर्हि यथा तत् पार्थिवद्रव्यत्वेन सदेवमबादिद्रव्यत्वेनापि स्यात् तत्सत्ताव्यतिरिक्तत्वात् तदसत्त्व-मित्यादिना ग्रन्थेन पूर्वं प्रतिपादित इति ॥

---

१ 'व्यतिरेकविकल्पो०' इति क-पाठः । २ 'त्मनोपायाभिज्ञता' इति क-पाठः । ३ 'त्यागेन चाबाद्य०' इति क-पाठः । ४ 'सत्त्वं' इति क-पाठः । ५ प्रेक्ष्यतां ४१तमं पृष्ठम् । ६ 'सत्त्वस्य सत्ता०' इति ख-पाठः । ७ 'स्वरूपेऽपरि०' इति ख-पाठः ।

(मूलम्)

**मबाध्यसत्त्वमुच्यते; ततश्च यथोक्तदोषाभावाद् व्यर्थो विकल्पोपन्यासपरिश्रमः। एवं शेषेष्वपि भावनीयमिति। अहो दारुणो मोहः, ५ स्ववाचाऽपि प्रतिपादयन्ननेकान्तं न प्रतिपद्यते। तथा च–पार्थिवद्रव्यसत्त्वमेव विशिष्टमबाध्यसत्त्वमिति वक्ति, न च सदसद्रूपं वस्तु प्रतिपद्यत इत्यपूर्वो विभ्रमः। न हि स्वपरसत्ताभावाभावोभयरूपतां विहाय वस्तुनो विशिष्टतैव सम्भवति॥**

**न च तद् येनैव स्वभावेन पार्थिवद्रव्यत्वेन सद् वर्तते, तेनैवाबा- १० दिद्रव्यत्वेनासत्, अभिन्ननिमित्तत्वे सत्येकत्र सदसत्त्वयोर्विरोधात्। तथाहि–तेनैव स्वभावेन सच्चासच्चेति विरुद्धमेतत्॥**

(स्वो० व्या०)

सदेकरूपतया **अबाध्यसत्त्वमुच्यते**, न तु तदन्यत् तदिति। **ततश्च**–एवं च सति **यथोक्तदोषाभावात्**–अधिकृतस्य वस्तुनोऽवस्तुत्वप्रसङ्गो नाम यथोक्तो १५ दोषस्तदभावाद्धेतो**र्व्यर्थो विकल्पोपन्यासपरिश्रमः** अनन्तरकृतः। **एवं शेषेष्वपि**–इहत्यत्वसत्त्व'पाटलिपुत्रका'दित्वासत्त्वादिषु **भावनीयमिति**। एवं पूर्वपक्षमाशङ्क्याह–**अहो दारुणो मोह** इत्यादि। अहो विस्मये। दारुणो मोह आदिमध्यावसानरौद्रो येन **स्ववाचाऽपि प्रतिपादयन्ननेकान्तं** पार्थिवद्रव्यसत्त्वमेव विशिष्टमित्यभिधानेन **न प्रतिपद्यते**–नावगच्छति। एतदेव भाव- २० यति **तथा चे**त्यादिना। तथा च **पार्थिवद्रव्यसत्त्वमेव विशिष्टम्** अबाध्यसत्त्वस्वभावतया **अबाध्यसत्त्वमिति**–एवं **वक्ति, न च सदसद्रूपं वस्तु प्रतिपद्यत इत्यपूर्वो विभ्रमः**–भ्रान्तिविशेषः, उभयनिमित्तभावेऽपि उभयाप्रतिपत्तेरित्यर्थः। कथमेतदेवमित्याह–**न ही**त्यादि। न यस्मात् **स्वपरसत्ताभावाभावोभयरूपतां विहाय वस्तुनः** सर्वस्यैव **विशिष्टतैव सम्भवति,** २५ विशेषणमन्तरेण वैशिष्ट्यायोगादिति भावः॥

**न चे**त्यादि। न च **तत्**–अधिकृतं वस्तु **येनैव स्वभावेन**–आत्मसत्तारूपेण **पार्थिवद्रव्यत्वेन सत् तेनैवाबादिद्रव्यत्वेनासत्**। येनैव सत् तेनैवासन्न भवतीत्यर्थः। कुत इत्याह–**अभिन्ननिमित्तत्वे सत्येकत्र सदसत्त्वयोर्विरोधात्**। न हि यदेव सत्त्वस्य निमित्तं तदेवासत्त्वस्य भवितुमर्हति। एतदेवाह **तथा-**

३० (विवरणम्)

(१३) **न तु तदन्यत् त**दिति। न पुनः तस्मात्–सत्त्वादन्यत्–भिन्नं तदन्यत् तत् असत्त्वम्॥

१ 'इहत्यसत्त्व०' इति क–पाठः।

(मूलम्)

**किञ्च सर्वथैकस्वभावत्वे तदेवाबाध्यसत्त्वमुच्यत इत्येतदप्ययुक्तम्, भिन्नप्रवृत्तिनिमित्तानुपपत्तेः, एकान्तैकस्वभावतायां हि तत्र [1]स्वसत्त्वासत्त्ववद् अबाध्यसत्त्वान्तराभावात्। न च भिन्नप्रवृत्तिनिमित्तमन्तरेण शब्दान्तरप्रवृत्तिर्न्याय्या, अतिप्रसङ्गात्, इन्द्र-शक्र-पुरन्दरादिशब्दानामपि इन्दन-शकन-पूर्दारणादिभिन्नप्रवृत्तिनिमित्तत्वात्। [2]द्रव्येऽपर्यायशब्दवद् भिन्नप्रवृत्तिनिमित्तव्यतिरेकेणापि**

---

(स्वो० व्या०)

हीत्यादिना। तथाहि **तेनैव स्वभावेन सच्चासच्चेति विरुद्धमेतत्** । न सर्वथैकं द्वयरूपमिति भावनीयम् ॥

**किञ्चे**त्यादि । किञ्चायमपरो दोषः—**सर्वथैकस्वभावत्वे** वस्तुनः **तदेव**—पार्थिवद्रव्यसत्त्वमेव **अबाध्यसत्त्वमुच्यत इत्येतदपि**—एवं भणनम् **अयुक्तम्** । कुत इत्याह—**भिन्नप्रवृत्तिनिमित्तानुपपत्तेः** । न हि सदसच्छब्दयोः प्रवर्तमानयोरेकत्र [3]भिन्नं प्रवृत्तिनिमित्तमस्तीत्यर्थः। न चैतदसिद्धमित्याह—**एकान्ते**त्यादि । **एकान्तैकस्वभावतायां हि** स्वसत्त्वरूपायां सत्यां **तत्र**—वस्तुनि **स्वसत्त्वासत्त्ववदि**ति दृष्टान्तः, **अबाध्यसत्त्वान्तराभावात्** । यथा तत्र स्वसत्त्वासत्त्वं न, एवमबाध्यसत्त्वान्तरमपीति कुतस्तच्छब्दप्रवृत्तिरिति चिन्तनीयम् । **न चे**त्यादि । न च **भिन्नं**—कथञ्चिदर्थान्तरभूतं **प्रवृत्तिनिमित्तमन्तरेण**—विना **शब्दान्तरप्रवृत्तिः**—अबाध्यसत्त्वमित्येवंरूपा **न्याय्या** । कुत इत्याह—**अतिप्रसङ्गात्**—स्वसत्त्वासत्त्वलक्षणशब्दान्तरप्रवृत्त्यापत्तेः । आपत्तिश्च निमित्ताभावाविशेषादिति । इहैवेन्द्रादिशब्दापेक्षया लौकिकमार्गनिषेधायाह—**इन्द्र-शक्रे**त्यादि । **इन्द्र-शक्र-पुरन्दरादिशब्दानामपि** लोके पर्यायशब्दतया रूढानाम् **इन्दन-शकन-पूर्दारणादिभिन्नप्रवृत्तिनिमित्तत्वात्** । तथाहि—इन्दनादिन्द्रः, शकनाच्छक्रः, पूर्दारणात् पुरन्दरः । 'आदि'शब्दाद् वज्रपाण्यादिपरिग्रहः, वज्रं पाणावस्येति कृत्वा । एवं भिन्नप्रवृत्तिनिमित्ता एवैते शब्दा इति । अत्राह—**द्रव्य** इत्यादि । द्रव्ये—मृदादौ **अपर्यायशब्दवत्** अपर्यायो द्रव्यम्, द्रव्यमपर्याय इत्येवम् । **भिन्नप्रवृत्ति-**

---

(विवरणम्)

(२२) **लौकिकमार्गनिषेधायाहे**ति । लौकिकमार्गो यथावस्थितशब्दार्थानभिज्ञमुग्धजनव्यवहाररूप इति ॥

---

१ 'स्वसत्तासत्त्व०' इति ग-पाठः । २ 'द्रव्ये पर्याय०' इति क-पाठः । ३ 'भिन्नप्रवृत्ति०' इति क-पाठः ।

(मूलम्)

**शब्दान्तरप्रवृत्तेरदोष इति चेत्, न, भिन्नप्रवृत्तिनिमित्तव्यतिरेका-सिद्धेः द्रव्यस्यानेकशक्तिसमन्वितत्वात्, शक्तिशक्तिमतोश्च भेदा-**
५ **भेदसंवित्तेः, अभ्यन्तरीकृतपर्याय एव शाब्दन्यायात् प्राधान्यतो द्रव्ये द्रव्यशब्दप्रवृत्तेः। तथाहि—द्रवति-गच्छति तांस्तान् पर्यायान्**

---

(स्वो० व्या०)

**निमित्तव्यतिरेकेणापि** द्रव्यस्यैवापर्यायत्वेन **शब्दान्तरप्रवृत्तेः**—द्रव्येऽपर्याय-शब्दप्रवृत्तेः **अदोषः**—तदेवाबाध्यसत्त्वमुच्यत इत्यत्र य उक्तो भिन्नप्रवृत्तिनिमित्तानुपप-
१० त्त्याख्यो दोषः सोऽयमदोषः। **इति**—एवं **चेत्** मन्यसे, एतदाशङ्क्याह—[1]नेत्यादि। न—नैतदेवम्। कुत इत्याह—**भिन्नप्रवृत्तिनिमित्तव्यतिरेकासिद्धेः**। व्यतिरेको ह्यभावः। एतमेवाह—**द्रव्यस्यानेकशक्तिसमन्वितत्वात्**, भिन्नं प्रवृत्तिनिमित्त-मिति योगः। भेदेऽप्यनेकशक्तिसमन्वितत्वमिष्यत एव कैश्चिदि[2]त्याशङ्क्याह—**शक्ति-शक्तिमतोश्च**—द्वयोरपि परस्परं **भेदाभेदसंवित्तेः**—भेदाभेदसंवेदनात्। एवं सति
१५ **अभ्यन्तरीकृतपर्याय एव** एकानेकरूपतया शबले नैका[3]न्तैकरूपे द्रव्ये, द्रव्यशब्द-प्रवृत्तिरिति योगः। कथं तत्त्वतः शबले तथाऽशबलशब्दप्रवृत्तिरित्याह—**शाब्द-न्यायात् प्राधान्यतः**। इह प्रधानगुणभावेनैवानेकैकरूपे वस्तुनि यत् साक्षात् शब्देनाभिधीयते तत् प्रधानम्, इतरद् गुणभूतमिति शाब्दो न्यायः। अस्माच्छाब्द-न्यायात् प्राधान्यतः—प्राधान्येन **द्रव्ये** शब्दान्तरप्रवृत्तिनिमित्तगर्भे एव न
२० केवले **द्रव्यशब्दप्र[4]वृत्तेः**, शब्दान्तरनिमित्तान्तराक्षेपेणेत्यर्थः। [5]एतद्भावनायैव आह—**तथाहीत्यादि**। तथाहीत्युपप्रदर्शने। **द्रवति—गच्छति तांस्तान्**

---

(विवरणम्)

(१३) [6]**भेदेऽप्यनेकशक्तिसमन्वितत्वमिष्यत एव कैश्चिदिति**। नैयायिकैः। तेषां हि मते अन्यद् घटादिद्रव्यम्, अन्या शक्तिरिति ॥

२५ (१७) **इह प्रधानगुणभावेनैवानेकैकरूपे वस्तुनीति**। इह—जैनमते प्रधान-गुणभावेनैव प्रधानभावेन गुणभावेन च नियमात् अनेकैकरूपे—अनेकरूपे एकरूपे च वस्तुनि यदा हि धर्म(र्मि)प्रधानो निर्देशस्तदा [7]प्राधान्येनैकरूपं वस्तुशब्देन प्रतिपाद्यते, गुणभावेन चानेकरूपता। यदा पुनर्धर्मप्रधानो निर्देशस्तदाऽनेकरूपता प्रधानभावेन, गुणभावेन चैकरूपतेति ॥

---

१ 'नेत्यादि नैतदेवं' इति क-पाठः। २ 'त्याह' इति घ-पाठः। ३ 'कान्त एकरूपे' इति क-पाठः। ४ 'प्रवृत्तिः, शब्दा०' इति क-घ-पाठः। ५ 'एतद्भावनयैवाह' इति घ-पाठः। ६ 'भेदेऽप्यन्य एवं कैश्चिदिति कैश्चिदिति' इति च-पाठः। ७ 'प्राधान्येऽनेकरूपं' इति च-पाठः।

(मूलम्)

**क्षरति [1]चेति 'द्रव्यम्', तद्वन्न पर्येति द्रव्यात्मनेत्यपर्यायस्तदिति भिन्नं प्रवृत्तिनिमित्तम् ॥**

**अबाध्यसत्त्वस्वभावमेव पार्थिवद्रव्यसत्त्वमिति चेत्, [2]इष्टस्तर्हि तदनुवेधः। पार्थिवद्रव्यसत्त्वमबाध्यसत्त्वस्वभावमबाध्यसत्त्वधर्मकम्, न तु स्वसत्त्वमात्रमिति समाश्रितः तर्हि मदीयोऽभ्युपगमः ॥** ५

(स्वो॰ व्या॰)

**पर्यायान्** तद्भावपरिणामेन, **क्षरति**–मुञ्चति [3]**चेति द्रव्यम्**। इदमस्यान्वर्थतः प्रवृत्तिनिमित्तम्, अन्वय इत्यर्थः। ततः किमित्याह–**तद्वत्**–एवमेव यथा गच्छति १० क्षरति च तथा **न पर्येति**–न समन्तान्निवर्तते **द्रव्यात्मना इत्यपर्यायस्तत्**–[4]द्रव्यमितरस्याप्यन्वर्थतः प्रवृत्तिनिमित्तं पर्यायाभाव इति भावः। न [5]चान्वयमात्रमेव पर्यायाभावः, पर्यायाभावमात्रं वाऽन्वयः, पर्यायाभावेऽन्वयाभावप्रसङ्गात्, अन्वयभावाव्यतिरिक्ततया पर्यायाभावस्येत्युक्तवद् भावनीयम्। **इति**–एवं **भिन्नं प्रवृत्तिनिमित्तम्**, द्रव्येऽपर्यायशब्दस्येति प्रक्रमः ॥ १५

पुनरपि प्रस्तुतमेवाधिकृत्याह–**अबाधीत्यादि**। **अबाध्यसत्त्वस्वभावमेव पार्थिवद्रव्यसत्त्वमिति चेत्**, एवं किलैकरूपतेति पराभिप्रायः। एतमनाद्रत्यैवमेव वस्तुतत्त्वमिति [6]चेतस्याधाय सिद्धान्तवाद्याह–**इष्ट** इत्यादि। **इष्टस्तर्हि**–अभ्युपगत एवैवं **तदनुवेधः**–प्रक्रमात् पार्थिवद्रव्यसत्त्वस्य अबाध्यसत्त्वानुवेधः। [7]एतद्भावनायाह–**पार्थिवे**त्यादि। **पार्थिवद्रव्यसत्त्वमबाध्यसत्त्वस्वभावमिति** २० कोऽर्थः इत्याह–**अबाध्यसत्त्वधर्मकम्, न तु स्वसत्त्वमात्रम्**। **इति**–एवं **समाश्रितस्तर्हि मदीयोऽभ्युपगमः**, अबाध्यसत्त्वस्य [8]पार्थिवद्रव्यसत्त्वधर्मत्वेन [9]तदनेकस्वभावत्वादिति ॥

(विवरणम्)

(१३-१४) **अन्वयभावाव्यतिरिक्ततया पर्यायाभावस्येति**। यदि ह्यन्वयमात्र- २५ मेव पर्यायाभावः पर्यायाभावमात्रं चान्वयः स्यात् तदा जीवादेर्द्रव्यस्यान्वयस्वभावस्य क्वचिद् देवादौ पर्याये समुत्पन्ने परमतेनान्वयभावाव्यतिरेकिणः पर्यायाभावस्य व्यावृत्तत्वात् द्रव्यस्यापि सर्वथोपरमः प्रसज्येत, कथमन्यथा पराभिमतं तयोरैक्यं स्यादिति विकल्परूपोऽयमित्यादौ वाक्ये वक्ष्यतीति रूपं पदं वाक्यान्तं योजनीयमिति ॥

१ 'वेति' इति घ–पाठः। २ 'इष्टं तर्हि' इति क–पाठः। ३ 'वेति' इति घ–पाठः। ४ 'द्रव्यमेतदस्याप्य॰' इति घ–पाठः। ५ 'चान्वयः' इति क–पाठः। ६ 'चेत् तस्याधाय' इति क–पाठः। ७ 'एतद्भावनयाऽऽह' इति घ–पाठः। ८ 'पार्थिवे द्रव्यत्व॰' इति क–पाठः। ९ 'तत्रानेक॰' इति क–पाठः।

(मूलम्)

**स्वो भावः स्वभाव इति पार्थिवद्रव्यस्यैवात्मीया सत्ता अबाध्यसत्त्वम्, न धर्मान्तरमित्येकस्वभावतैवेति चेत्, न, ततः सदसत्-**
५ **प्रत्ययासिद्धेर्द्वयनिमित्ताभावात्, अस्य चानुभवासिद्धत्वात्। तदेव तदितरविविक्तताविशिष्टं सत् सदसत्प्रत्ययनिमित्तमिति चेत्, न, विचाराक्षमत्वात्, तदितरविविक्ततायास्तदव्यतिरेकेण वस्तुतस्तन्मात्रत्वात्। ततश्च सर्वथाऽभिन्ननिमित्तत्वे सदसत्प्रत्ययानुपपत्तिः,**

(स्वो० व्या०)

१० अत्राह—**स्वो भाव** इत्यादि। स्वो भावः **स्वभाव इति** अन्वर्थयोगात्, **पार्थिवद्रव्यस्यैवात्मीया सत्ता अबाध्यसत्त्वं** वर्तते, **न धर्मान्तरमिति**—एवम् **एकस्वभावतैव** पार्थिवद्रव्यसत्त्वस्य। **इति चेत्** एतदाशङ्क्याह—**नेत्यादि**। न—नैतदेवं **ततः**—पार्थिवद्रव्यात् सदेकान्तैकस्वभावात्, **सदसत्प्रत्ययासिद्धेः** सच्चासच्च सदसती तयोः प्रत्ययौ तदसिद्धेः। कथमित्याह—**द्वयनिमित्ताभावात्**,
१५ द्वयोः—सदसत्प्रत्यययोर्निमित्ताभावात्, पार्थिवद्रव्ये सदेकान्तैकस्वभावतयैवेति प्रक्रमः। नैवातो यथोदितं प्रत्ययद्वयमित्याशङ्कापोहायाह—**अस्य चानुभवसिद्धत्वात्**। अस्य च—सदसत्प्रत्ययद्वयस्यानुभवसिद्धत्वात्, पार्थिवद्रव्ये हि तद्रूपतया सदनुभवः, अबादिरूपतया चासदनुभवः प्रतिसत्त्वं प्रतिष्ठितः। 'विकल्परूपोऽयमयुगपच्च' इत्यादौ तु स्वयमेव वक्ष्यतीत्युपरिष्टान्निर्विकल्पकविचारे॥

२० अत्राह—**तदेवेत्यादि**। तदेव—प्रक्रमात् पार्थिवद्रव्यं पार्थिवद्रव्यसत्त्वं वा, **तदितरविविक्तताविशिष्टं** तदितरे—अबादयः अबादिसत्त्वं वा तद्विविक्तताविशिष्टं—तद्रहितताविशिष्टं **सद्** भवति। किमित्याह—**सदसत्प्रत्ययनिमित्तं** तत्त्वत एकरूपमेवेत्यभिप्रायः। **इति**—एवं **चेत्** मन्यसे, एतदाशङ्क्याह—**नेत्यादि**। न—नैतदेवम्। कुत इत्याह—**विचाराक्षमत्वात्**। कथमित्याह—**तदितरेत्यादि**। तदितर-
२५ विविक्ततायाः—उक्तलक्षणायाः **तदव्यतिरेकेण**—पार्थिवद्रव्यसत्त्वाव्यतिरेकेण हेतुना **वस्तुतः**—परमार्थतः **तन्मात्रत्वात्**—पार्थिवद्रव्यसत्त्वमात्रत्वात्। ततः किमित्याह—**ततश्चेत्यादि**। ततश्च—एवं च सति **सर्वथा**—सर्वैः प्रकारैः **अभिन्ननिमित्तत्वे** सति पार्थिवद्रव्यसत्त्वस्यैकान्तेन एकरूपतया **सदसत्प्रत्ययानुपपत्तिः**, उभय-

---

१ 'सर्वथा भिन्न' इति घ-पाठश्चिन्तनीयः। २ 'स्वभाव' इति ङ-पाठः। ३ 'वात्मीयसत्ता' इति ङ-पाठः। ४ 'सदैकान्त०' इति क-पाठः। ५ 'सदैकान्त०' इति क-पाठः। ६ 'वाऽसदनु०' इति क-ङ-पाठः। ७ 'भवतु' इति क-पाठः, 'भवत्' इति तु ङ-पाठः।

(मूलम्)

**अन्यथा हेतुभेदेन फलभेदाभ्युपगमविरोधः। तत् तदुभयजननैकस्वभावमिति चेत्, न, उभयोरुभयरूपतापत्तेः।[1] असङ्कीर्णोभयजननैकस्वभावमिति चेत्, न, युक्त्यनुपपत्तेः, असङ्कीर्णोभयभावे बलात् तत्स्वभावभेदप्रसङ्गात्। तथाहि—** ५

**"यतः स्वभावतो जातमेकं नान्यत् ततो भवेत्।**
**कृत्स्नं प्रतीत्य तं भूतिभावत्वात् तत्स्वरूपवत्॥"[2]**

(स्वो० व्या०)

निमित्ताभावादिति हृदयम्। इत्थं चैतदङ्गीकर्तव्यम्। **अन्यथा**—एवमनभ्युपगमे १० **हेतुभेदेन फलभेदाभ्युपगमविरोधः**। अत्रैव हेतुभेदमन्तरेणापि फलभेदोपपत्तेः, भिन्नौ हि सदसत्प्रत्ययौ, एवं च "अयमेव भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्च" इति वचनमात्रम्। **तत् तदि**त्यादि। तत्—पार्थिवद्रव्यसत्त्वं **तदुभयजननैकस्वभावं**—सदसत्प्रत्ययोभयजननैकस्वभावम्। **इति**—एवं **चेत्** मन्यसे, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। कुत इत्याह—**उभयोः**—सदसत्- १५ प्रत्यययोः **उभयरूपतापत्तेः**—सदसद्रूपतयोभयरूपतापत्तेः, उभयजननैकस्वभावाद् हेतोर्द्वयोरपि भावादित्यर्थः। अत्राह—**असङ्कीर्णे**त्यादि। असङ्कीर्णं च तत् **उभयं** च—सदसत्प्रत्ययोभयं तज्जनन **एकः स्वभावो** यस्य तत् तथा। तत्पार्थिवद्रव्यसत्त्वमिति वर्तते, ततश्च यथोक्तदोषाभावः। **इति**—एवं **चेत्** मन्यसे, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। कुत इत्याह—**युक्त्यनुपपत्तेः**। कथमित्याह— २० **असङ्कीर्णे**त्यादि। **असङ्कीर्णोभयभावे**—विभिन्नसदसत्प्रत्ययोभयभावे। पार्थिवद्रव्यसत्त्वादेरिति प्रक्रमः। किमित्याह—**बलात्**—सामर्थ्येन **तत्स्वभावभेदप्रसङ्गात्** तस्य—पार्थिवद्रव्यसत्त्वस्य स्वभावभेदापत्तेः। एतद्भावनायैवाह—**तथाही**त्यादि। तथाहीत्युपदर्शने।[3] **यतः स्वभावतः** कारणगतात् **जातमेकं**—सत्प्रत्ययादि कार्यं **नान्यत्**—असत्प्रत्ययादि **ततः**—स्वभावाद् **भवेत्**। किमित्यत आह—**कृत्स्नं**— २५ सम्पूर्णं **प्रतीत्य**—आश्रित्य **तं**—स्वभावं **भूतिभावत्वात्**—उत्पत्तिस्वभावत्वात्

(विवरणम्)

(१२-१३) **विरुद्धधर्माध्यासः कारणभेदश्चे**ति।[4] विरुद्धधर्माध्यासो भेदः, कारणभेदस्तु भेदहेतुरिति॥

१ 'उभयोरुभयरूपतापत्तेः' स्थाने 'युक्त्यनुपपत्तेः' इति क-पाठो विचारणीयः। २ अनुष्टुप्। ३ 'तथाहीत्युपप्रदर्शने' इति घ-पाठः। ४ 'भेदेश्चेति' इति क-पाठः।

( मूलम् )

**अन्यच्चैवंविधं चेति यदि स्यात् किं विरुध्यते ? ।**
**तत्स्वभावस्य कार्त्स्न्येन हेतुत्वं प्रथमं प्रति ॥**[1]
५ **कार्त्स्न्येन तस्य हेतुत्वे तत्र वीर्योपयोगतः ।**
**कुतोऽन्यभावो भावे वा सर्वतद्वीर्यतो**[2] **भवः ? ॥**[3]

---

( स्वो० व्या० )

एकस्य कार्यस्य **तत्स्वरूपवत्**–अधिकृतैककार्यस्वरूपवत्, न हि तदन्यत्; न सत्प्रत्ययोऽसत्प्रत्ययस्तदभिन्नहेतुजश्चेति चित्रम् ।

१० आह–**अन्यच्चे**त्यादि । अन्यच्च–कार्यान्तरं च, **एवंविधं चेति**–कृत्स्नं प्रतीत्य तं भूतिभावं चेति **यदि स्यात्**–यदि भवेत् **किं विरुध्यते ?** । अत्रोत्तरमाह–[4]**तत्स्वभावस्य**–कारणगतस्य **कार्त्स्न्येन**–सर्वात्मना **हेतुत्वं** प्रतीत्योत्पादापेक्षया **प्रथमं प्रति**–आद्यं कार्यं प्रति विरुध्यते, तत्रैव सर्वात्मनाऽस्योपयोगादिति ।

एतदेवाह–**कार्त्स्न्येने**त्यादि । कार्त्स्न्येन–सर्वात्मना **तस्य**–कारणगतस्य [5]स्व-
१५ भावस्य **हेतुत्वे**–एकं कार्यं प्रति कारणत्वे **तत्र**–कार्ये **वीर्योपयोगतः** प्रतीत्य समुत्पादेन **कुतोऽन्यभावः ?**–कुतः स्वभावात् कार्यान्तरोत्पादः ? [6]**भावे वा**ऽन्यस्य कार्यान्तरस्य तत [7]एव स्वभावात् **सर्वतद्वीर्यतः**–सर्वस्मात् तत्सामर्थ्याद् **भवः**–उत्पादः कुतोऽन्यस्य तस्य [8]वेति ? ।

---

( विवरणम् )

२० (८) अथ '**यतः स्वभावतो जात**'मित्यादिवृत्तौ **अधिकृतैककार्यस्वरूपवदिति** । यथाहि–सत्प्रत्ययलक्षणं कार्यं कृत्स्नं स्वरूपमाश्रित्योत्पद्यते, न पुनः [9]स्वरूपस्यांश-माश्रित्येति । एवं कारणस्वरूपमपि कृत्स्नं व्याप्रियमाणमाश्रित्य ॥

(८) **न हि तदन्यदिति** । न–नैव हि[ः]–यस्मात् तत्–एकत्र [10]व्यापृतं कारणं कार्या-न्तरे व्याप्रियमाणं अन्यत्–भिन्नम्, किन्तु [11]तदेव, निरंशैकस्वल्पभावताभ्युपगमात् ।
२५ एवं सति किं सिद्धमित्याह–(९) **न सत्प्रत्ययोऽसत्प्रत्ययस्तदभिन्नहेतुजश्चेति चित्रमिति** । महदाश्चर्यमेतद् वर्तते, सत्प्रत्ययविलक्षणोऽसत्प्रत्ययः । अथ च तस्मात् [12]प्रत्ययहेतोरभिन्नेन हेतुना जन्यत इति ॥

(१२) '**अन्यच्चे**'त्यादिकारिकाव्याख्यायां **प्रतीत्योत्पादापेक्षयेति** । कारणस्वरूपं प्रतीत्य–आश्रित्यैव कार्यस्योत्पादो बौद्धमते, न पुनः कारणस्वरूपं किञ्चिदनुवर्तते
३० कार्यम् । अतः प्रतीत्योत्पादापेक्षया [13]हेतुत्वमित्युक्तम् ॥

---

१ अनुष्टुप् । २ 'तोऽभवः' इति घ–पाठः । ३ अनुष्टुप् । ४ 'एतत्स्वभावस्य' इति क–पाठः । ५ 'स्व-भावहेतुत्वे' इति ङ–पाठः । ६ 'स्वभावे' इति ङ–पाठः । ७ 'एव भावात्' इति ङ–पाठः । ८ 'चेति' इति घ–पाठः । ९ 'स्वल्पमस्यांशं०' इति क–पाठः । १० 'व्यावृत्तं' इति क–पाठः । ११ 'तस्य वा नैरंशेक०' इति क–पाठः । १२ 'प्रत्ययेन हेतुना जनयत' इति क–पाठः । १३ 'हेतुर्वैकव्यः' इति क–पाठः ।

( मूलम् )

सर्वतद्वीर्यतद्भावे सेतिकाजन्यतृप्तिवत् ।
तत एव न साऽन्यस्य तद्देशादन्यथा तु सा ॥[१]
कार्त्स्न्येनैवास्य तत्कर्तृ वीर्यं तस्यैव किन्तु न ।
युक्तस्ततोऽन्यभावोऽपि सेतिकाज्ञाततो न हि ॥[३] ५

( स्वो० व्या० )

अत्रैव निदर्शनमाह सर्वेत्यादिना । सर्वस्मात् तद्वीर्यात्–कारणगतात् स्वभावसामर्थ्यात् तद्भावे–विवक्षितकार्यभावे । किमित्याह–सेतिकाजन्यतृप्तिवत् इति निदर्शनम् । तत एव–सेतिकातः न सा–तृप्तिः अन्यस्य, कार्त्स्न्येन १० तस्यास्तत्रोपयोगात् । अथेष्यत इत्याह–तद्देशात्–सेतिकादेशात्, अन्यथा तु सा–तृप्तिराद्यस्येतरस्य च । यद्यन्यस्यापि स्यात् एकान्तेनैकरूपाया न कार्त्स्न्येन द्वयोरुपयोग इति भावना ।

अवधारणद्वारेणाधिकृतदोषपरिजिहीर्षयाऽऽह–[४]कार्त्स्न्येनेत्यादि । कार्त्स्न्येन एव–नाकार्त्स्न्येन अस्य–अधिकृतकारणगतस्वभावस्य तत्कर्तृ–विवक्षितकार्यकर्तृ १५ वीर्यं–सामर्थ्यं तस्यैव–विवक्षितकार्यस्य किन्तु न कर्तृ, किं तर्ह्यन्यस्यापि ? तत्र तु तदकर्तृ न भवति, अयोगव्यवच्छेदमात्रम्, न पुनरन्ययोगव्यवच्छेदः ।

( विवरणम् )

(८) 'सर्वतद्वीर्यतद्भावे'इत्यादिकारिकायामयं दृष्टान्तदार्ष्टान्तिकार्थः । यथाहि–सेतिकायां सामस्त्येन एकस्य भोक्तुरु(? प)भुज्यमानायां नान्यस्यापि तृप्तिहेतुतोपपद्यते । २० एवं घटादिकारणगतवीर्यस्यैकत्र सत्प्रत्ययादौ कार्ये सामस्त्येनोपयोगे सति न ततः कार्यान्तरोत्पादः सम्भवतीति ॥

(१२) 'यद्यन्यस्यापि स्यादिति । यदि हि सेतिकायाः सकाशादन्यस्यापि भोक्तुस्तृप्तिरभ्युपगम्यते तदा सेतिकादेशादेव मानकद्वयादेरभ्युपगन्तव्या, न पुनस्तस्या एव समस्ताया इति ॥ २५

(१७) कार्त्स्न्येनैवास्येतिकारिकावृत्तौ तत्र तु तदकर्तृ न भवतीति । तत्र–तस्मिन् पुनः प्रथमकार्ये त(त्)–द्वितीयादिकार्यकारणं अकर्तृ न भवति । एवं च किं सिद्धमित्याह–(१७)अयोग्यव्यवच्छेदमात्रं सर्वत्र कार्यकारणचिन्तायां बौद्धमते–आयाममते अयोग्यव्यवच्छेदमात्रम् अयोगस्य–द्वितीयकार्यकर्तृत्वासम्बद्धस्य व्यवच्छेदमात्रम्, न पुनरन्ययोगव्यवच्छेदः । एकस्यैव कार्यस्य कारकमित्येवंरूप आद्रियते । ३०

१ अनुष्टुप् । २ 'ज्ञानतो' इति घ–पाठोऽशुद्धः । ३ अनुष्टुप् । ४ 'कार्त्स्न्येनैकरूपायाः न कार्त्स्न्येन द्वयोरुपेत्यादिकार्त्स्न्येनैव' इति ङ–पाठः । ५ 'तद्भाव इत्यादि०' इति क–पाठः ।' ६ 'नान्यस्यापि' इति क–पाठः, च–पाठस्तु 'यद्यन्यस्यापीति' । ७ 'कार्येण द्वितीयादिकार्यकर्तृकारणं इति ख–च–पाठः । ८ 'आयाममते' इति पाठो नास्ति च–प्रतौ । ९ 'आस्ते' इति क–पाठः ।

( मूलम् )

**नावधारणसामर्थ्याद् वस्तु तादात्म्यमुज्झति ।**
**उक्तावधारणेऽप्येकतृप्तये ह्युक्तसेतिका ॥**[1]

५ ( स्वो० व्या० )

**युक्तस्ततोऽन्यभावोऽपि** अन्ययोगाव्यवच्छेदात् तत एव । एतदाशङ्क्याह—**सेतिकाज्ञाततः**—सेतिकोदाहरणात् **न हि**—नैव युक्तस्ततोऽन्यभाव एव ।

एतद्भावनायैवाह—**नावधारणे**त्यादि । नावधारण**सामर्थ्यात्** शाब्दन्यायानुगताद् **वस्तु तादात्म्यमुज्झति**—तदात्मत्वं परित्यजति । कुत इत्याह—**उक्तावधा-**
१० **रणेऽपि** सति **एकतृप्तये हि**—एकतृप्त्यर्थमेव **उक्तसेतिका** । तथाहि—अत्राप्येवमवधारणं कर्तुं शक्यत एव—कार्त्स्न्येनैव सेतिकैकतृप्तिजननस्वभावा, एकतृप्तिजननस्वभावैवेत्येतत् तु न । न चैवमपि सा कार्त्स्न्येनैकतृप्तिं विधाय अन्यस्यापि विधत्ते, न सा तत्त्वत उभयतृप्तिजननैकस्वभावेति कोऽत्रापवादहेतुः ? । तस्या [3]एव तत्स्वभावता । कथमिदं [4]ज्ञायते ? । तथाविधकार्यद्वयाभावेन, तदेकान्तैक[5]रूपतायामयमेवायुक्तः ।

१५ ( विवरणम् )

एवं च यत् सिद्धं तदाह—(६) **युक्तस्ततोऽन्यभावोऽपि अन्ययोगाव्यवच्छेदात् तत एवे**ति । युक्तः—घटमानकस्ततः—एवं सति अन्यस्य—द्वितीयकार्यस्य भावः, अपिशब्दात् प्रथमस्य च; तत एव प्रथमकार्योपयुक्तहेतोरेव । कुत इत्याह—**अन्ययोगाव्यवच्छेदात्**—अन्ययोगस्या[6]व्यावर्तनात् ॥

२० (१२-१३) **'नावधारणे'**त्यादिकारिकाविवरणे **न सा तत्त्वत उभयतृप्तिजननैकस्वभावेति कोऽत्रापवादहेतुरि**ति ? । आचार्य आह—न सा सेतिका तत्त्वतः—परमार्थवृत्त्या उभयस्य—भोक्तृद्वयस्य तृप्तिजनन एकः स्वभावो यस्याः सा तथा इति । कोऽत्र सेतिकाया अपवादहेतुः, अ[7]पवादस्योत्सर्गप्रतिषेधरूपस्यैकस्मादपि कारणात्, अनेककार्योत्पत्तिलक्षणे उत्सर्गे सर्वत्राभ्युपगम्यमाने सति हेतुः—कारणमिति आचार्यः ।
२५ परस्**तस्या एव** [8]**तत्स्वभावता** । आचार्यः **कथमिदं ज्ञायत** इति सुगममेव । अथ परः **तथाविधकार्यद्वयाभावेने**ति कार्यानुमेया हि कारणस्वभावाः, ततः कार्यद्वयानुपलम्भेन निश्चीयेते, यदुत ए[9]ककर्तृजननस्वभावैव सेतिकेति आचार्यः ॥

(१४) **तदेकान्त(?)रूपतायामयमेवायुक्त** इति । यदि हि सा सेतिका एकान्तेन एकस्वभावाऽभ्युपगम्यते ततो न कार्यद्वयाभावो युज्यते, एकस्वभावादपि घटादेः
३० सदसत्प्रत्ययद्वयाभ्युपगमात् ॥

---

१ अनुष्टुप् । २ 'गमात्' इति क-पाठः । ३ 'एवातत्स्व०' इति घ-पाठः । ४ 'जायते' इति ङ-पाठः । ५ 'कस्वरूप०' इति क-पाठः । ६ 'स्यावर्तनात्' इति क-पाठः । ७ 'अपवाद उत्सर्ग०' इति च-पाठः । ८ 'तत्स्वभावात्' इति क-पाठः । ९ 'एकतृप्तिजनन०' इति च-पाठः ।

( मूलम् )

**नाकारणं यतः कार्यं नान्यकारणकारणम् ।**
**अन्यथा न व्यवस्था स्यात् कार्य-कारणयोः क्वचित् ॥[1]**
**ततश्च कार्यनानात्वं सर्वथा कारणैकताम् ।** ५
**बाधतेऽनेकतायां च स्थितानेकस्वभावता ॥[2]**
**एतेनैकस्वभावोऽपि तत्स्वभावत्वतः परैः ।**

( स्वो० व्या० )

भावे वाऽस्य प्रस्तुतहेतुस्वभावादपि तदभावोऽस्तु, एकरूपत्वाविशेषादित्यलं प्रसङ्गेन ।

एवं **नाकारणमि**त्यादि । नाकारणं **यतः**—यस्मात् **कार्यं** सदाभावादिप्रसङ्गात् १०
**अन्यकारणकारणं न** एकान्तेन, अत [3]एव हेतोः, एवं चैतदङ्गीकर्तव्यम् । इत्याह—
**अन्यथा**—एवमनभ्युपगमे **न व्यवस्था स्यात्** नियमवती **कार्य-कारणयोः**
**क्वचिद्** इदमस्य कारणमिदमस्य कार्यमित्येवम्, तदभावेऽपि तत्त्वतस्तदुपपत्तेरिति ।

**ततश्चे**त्यादि । ततश्च **कार्यनानात्वं**—कार्यभेदलक्षणं **सर्वथा कारणैकतां**—
तथाविधैकस्वभावरूपताम् । किमित्याह—**बाधते**—निराकरोति **अनेकतायां च** १५
कारणस्य **स्थितानेकस्वभावता,** तत्स्वभावभेदतः कार्यभेदोपपत्तेः ।

**एतेने**त्यादि । एतेन—अनन्तरोदितेन **एकस्वभावोऽपि** भावः **तत्स्वभावत्वतः**

( विवरणम् )

(९) **भावे वाऽस्य प्रस्तुतहेतुस्वभावादपि तदभावोऽस्त्विति** । यदि हि सेतिकायाः सकाशादस्य कार्यद्वयाभावस्य भावो भवताऽभ्युपगम्यते, तदा प्रस्तुत- २०
हेतुस्वभावादपि घटादिकारणरूपात् तदभावः—सदसत्प्रत्ययलक्षणकार्यद्वयाभावोऽस्तु ।
कुत इत्याह-(९) **एकरूपत्वाविशेषादिति** एकरूपा सेतिका घटादिश्च, अतः
कोऽनयोर्विशेषो [4]येन घटात् कार्यद्वयं सेतिकातस्तु एकमेवाभ्युपगम्यते इति ? ॥

(१०) **'नाकारण'**मित्यादिकारिकाविवरणे **अन्यकारणकारणं नैकान्तेनेति** ।
अन्यस्य—घटादेर्यत् कारणं—सूत्रपिण्डादि तदन्यकारणं [5]ततोऽन्यकारणकारणं यस्य २५
घटादेस्तत् तथा न—नैव एकान्तेन—नियमेन । कुत इत्याह—**अत एव हेतोरिति** अत
एव पूर्वोक्तात् सदाभावादिप्रसङ्गाद्धेतोः । तथाहि—यथा कारणविकलं सत्कार्यं नित्यं
विद्यमानमविद्यमानं वा स्यात्, एवमन्यकारणमपि कार्यं [6]सदाभागभाग् वा प्राप्नोति,
अन्यकारणानां सदा जगति विद्यमानत्वादिति ॥

(१३) **तदभावे तत्त्वतस्तदुपपत्तेरिति** । विवक्षितनिजकारणभावे परमार्थवृत्त्या ३०
विवक्षितघटादि[7]कार्योत्पत्तेः ॥

१–२ अनुष्टुप् । ३ 'एवाहेतोः' इति क-पाठः । ४ 'यो' इत्यधिकः क-पाठः । ५ 'अन्यत् कारणं' इति क-पाठः । ६ 'सदाभागभावग् वा' इति च-पाठः । ७ 'कार्योत्पत्तिः' इति क-पाठः ।

( मूलम् )

य इष्टोऽनेकफलकृद् भावः सोऽपि निराकृतः ॥[1]
एको ह्यनेकजननस्वभावस्तद्विचित्रताम् ।
५ ऋते न युज्यते यस्मादुक्तदोषप्रसङ्गतः ॥[2]
तथादर्शनतोऽप्यस्य तत्स्वभावत्वकल्पना ।
अत एव स्थिरत्वादिसिद्धिसङ्गादसङ्गता ॥[3]
युक्त्या न युज्यते स्थैर्यं कया [4]वैकस्वभावतः ।
नानाकार्यसमुत्पादः स्वात्मना चिन्त्यतामिदम् ॥[5]

१० ( स्वो० व्या० )

कारणात् परैः—बौद्धैः य इष्टः—अभ्युपगतः अनेकफलकृत्—अनेककार्यकरणशीलो भावः सोऽपि निराकृतः ।

एतदेव प्रकटयति एको हीत्यादिना । एको यस्मात् अनेकजननस्वभावः तद्विचित्रतां—स्वभावविचित्रताम् ऋते—विना न युज्यते, यस्मात् उक्त-
१५ दोषप्रसङ्गतः ।

अत्रैवोपचयमाह तथेत्यादिना । तथादर्शनतोऽपि अनेकविज्ञानजनकत्वेन अस्य—भावस्य तत्स्वभावत्वकल्पना—अनेककार्यकरणैकस्वभावत्वकल्पना । किमित्याह—अत एव—तथादर्शनात् स्थिरत्वादिसिद्धिसङ्गात् कारणात् न सङ्गतेति ।

२० आह—युक्त्येत्यादि । युक्त्या—क्रम-यौगपद्याभ्यामर्थक्रियाविरोधभावलक्षणया न युज्यते स्थैर्यं भावानाम् । अत्रोत्तरम्—कया वा युक्त्या? एकस्वभावतो भावात् नानाकार्यसमुत्पादो युज्यते स्वात्मना चिन्त्यतामिदम् । न सर्वथा तत्स्व-भावभेदमन्तरेण तथाऽनेकविज्ञानजनकत्वमपि, दिगादिभेदेन तथाप्रतीत्ययोगादिति ।

( विवरणम् )

२५ (१६) 'तथे'त्यादिकारिकावृत्तौ तथादर्शनतोऽपि अनेकविज्ञानजनकत्वेनेति । एकस्यापि स्तम्भादेः पदार्थस्य पूर्वपश्चिमादिदिग्वर्तिनामनेकेषां प्रमातॄणामेकस्मिन्नेव काले पूर्वोऽयं पश्चिमोऽयमित्याद्युल्लेखेनानेकेषु विज्ञानलक्षणेषु कार्येषु जायमानेषु साक्षादेव दृश्यते [7]हेतुभावः । [8]न च दृष्टेऽनुपपत्तिरुद्भावनीया इति तथादर्शनादेव किं नोपपद्यते एकस्मादप्यनेककार्योत्पत्तिरिति पराभिप्रायः ॥

१–३ अनुष्टुप् । ४ 'चैक०' इति क–पाठः । ५ अनुष्टुप् । ६ 'सङ्गता' इति घ–पाठः, 'संमता' इति तु ङ–पाठः । ७ 'हेतुमानः' इति क–पाठः । ८ 'न हि दृष्टेऽनुपपन्नं नाम इति हि न्यायस्वरूपम्' इति क–टिप्पणकम् ।

(मूलम्)

यथाऽनेकस्वभावं तत् सर्वेषां सर्वदर्शिनाम् ।
करोत्यनेकं विज्ञानमिदमित्थं कथं न ते ? ॥[१]
स्वरूपमेव सर्वेषां सर्वज्ञानां तथाविधम् ।　　५
विज्ञानं न तु तत् तेन तत्त्वतः क्रियते यतः ॥[२]
अतीतादेरसत्त्वेन न स्याद् ग्रहणमन्यथा ।
तस्यापि ज्ञानकर्तृत्वेऽतीतत्वादिविरोधतः ॥"[३]

**न च पार्थिवद्रव्यसत्त्वप्रत्यय एवाबाद्यसत्त्वप्रत्ययः, तथाऽप्रतीतेः । असतोऽनुपाख्यत्वेन प्रत्ययहेतुत्वानुपपत्तिरिति चेत्, न, सदनुवेधेन** १०

(स्वो० व्या०)

आह—**यथे**त्यादि । **यथाऽनेकस्वभावं तत्** कार्त्स्न्येनैवैकत्रोपयोगमधिकृत्य **सर्वेषां सर्वदर्शिनां** वीतरागाणां **करोत्यनेकं विज्ञानं** यावन्तस्ते, अन्यथा तदसर्वदर्शित्वप्रसङ्गात् । **इदम्**—अधिकृतं [४]'वस्त्वेकस्वभावमेव **इत्थं कथं न ते**—तव करोत्यनेकं विज्ञानं [५]'कार्त्स्न्योपयोगाविशेषादिति ? ।　　१५

अत्रोत्तरम्—**स्वरूप**मित्यादि । **स्वरूपम् एव** सांसिद्धिकं **सर्वेषां सर्वज्ञानां** वीतरागाणां **तथाविधं**—तत्कार्त्स्न्यग्रहणप्रकारं **विज्ञानं न** पुनः **तत् तेन**—वस्तुना **तत्त्वतः**—परमार्थतः **क्रियते यतः**, अतो नेदमित्थं ममेति योजना ।

इत्थं चैतदङ्गीकर्तव्यमित्याह—**अतीतादे**रित्यादि । अतीतादेर्भावस्य **असत्त्वेन** हेतुना **न स्याद् ग्रहणम्, अन्यथा**—एवमनभ्युपगमे न ह्यसत् ज्ञानकर्तृ । तथा २० चाह—**तस्यापि**—अतीतादेः **ज्ञानकर्तृत्वे**ऽभ्युपगम्यमाने**ऽतीतत्वादिविरोधतः** कारणात् स्वरूपमेव सर्वेषामित्यादिक्रियायोगः, अतः सदसत्प्रत्ययभेदादनेकरूपं वस्तु इति स्थितम् ॥

**न चे**त्यादि । न च **पार्थिवद्रव्यसत्त्वप्रत्यय एव** सर्वथैकरूपतया निरंशः **अबाद्यसत्त्वप्रत्ययस्तथा**—तदेकरूपतया **अप्रतीतेः**, किन्तु प्रत्ययान्तरमयम् । २५ अत्राह—**असत** इत्यादि । असतोऽनुपाख्यत्वेन हेतुना **प्रत्ययहेतुत्वानुपपत्तिः**, अतः कथमबाद्यसत्त्वप्रत्ययः ? । **इति**—एवं **चेत्** मन्यसे, एतदाशङ्क्याह—

(विवरणम्)

(१२) **'यथाऽनेकस्वभाव'**मित्यादिकारिकाव्याख्याने **कार्त्स्न्येनैकत्रोपयोगमधिकृत्येति** । तथाहि—जीवलक्षणमजीवलक्षणं वा वस्तु अनन्तस्वभावम् एकत्र—**ऋष**- ३० **भादिविज्ञाने कार्त्स्न्येन सव्यापारमभूत्, अन्यथा केषाञ्चित् स्वभावविशेषाणामनव**-

१–३ अनुष्टुप् । ४ 'वस्त्वेव स्व०' इति ङ-पाठः । ५ 'कार्त्स्न्येनोप०' इति घ-पाठः ।

( मूलम् )

**सर्वथाऽनुपाख्यत्वासिद्धेः, असत्प्रत्ययाविरोधाच्च। असदननुविद्धस्य च सतस्तन्मात्रत्वाद् विशेषानुपपत्तेरितरेतरानुवेध इति कुत एक-**
५ **स्वभावत्वसिद्धिः? । स्यादेतत् तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वात् यथोक्तदोषाभाव इति । सोऽयं 'गडुप्रवेशेऽक्षितारकाविनिर्गम'न्यायः । तथाहि—तत्राबादिद्रव्यासत्त्वस्य परिकल्पितत्वात्**

( स्वो० व्या० )

नेत्यादि । न—नैतदेवम् । कुत इत्याह—**सदनुवेधेन**—पार्थिवद्रव्यसत्त्वानुवेधेन हेतुना
१० **सर्वथा**—सर्वैः प्रकारैः **अनुपाख्यत्वासिद्धेः** अबाद्यसत्त्वस्य । उपपत्त्यन्तरमाह—[1]**असत्प्रत्ययाविरोधाच्च** । असत इति प्रक्रमः । सत इवासतोऽसत्प्रत्ययभाव इति भावः । सदनुवेधेनेत्यादिमौलं हेतुं समर्थयन्नाह—**असदि**त्यादि । **असदननुविद्धस्य च सतः**—पार्थिवद्रव्यसत्त्वादेः **तन्मात्रत्वात्**—सन्मात्रत्वात्, **विशेषानुपपत्तेः** कारणात् **इतरेतरानुवेधः** सदसतोः **इति**—एवं **कुत एकस्वभात्वसिद्धिः**? ।
१५ नैवेत्यर्थः । **स्यादेतदि**त्यादि । स्यादेतत्—अथैवं मन्यसे । **तत्र**—पार्थिवद्रव्यसत्त्वे **अबादिद्रव्यासत्त्वस्य परिकल्पितत्वात्** कारणात् । किमित्याह—**यथोक्तदोषाभाव इति**—उभयरूपत्वाभावः, परमार्थतस्तदसत्त्वादिति । एतदाशङ्क्याह—**सोऽयमि**त्यादि । सोऽयं '**गडुप्रवेशेऽक्षितारकाविनिर्गम'न्यायः** । प्रस्तुतदोषपरिहारेणाधिकतरदोषान्तरापत्तिरित्यर्थः । एतदेवाह **तथाही**त्यादिना । तथाहि
२० **तत्र**—पार्थिवद्रव्यसत्त्वेऽ**बादिद्रव्यासत्त्वस्य परिकल्पितत्वात्** परमार्थतः

( विवरणम् )

गमप्रसङ्गात् । एवं **महावीर**विज्ञानेऽपि तत् सर्वात्मनैव व्याप्तृतम् । ततश्च यथाऽनेकस्वभावेन वस्तुना सर्वात्मना एकविज्ञानजननव्याप्तृतेनापि सता विज्ञानान्तरमपि जन्यते, तथा [2]अस्मन्मतेऽपि एकस्वभावेनैव स्तम्भादिना यद्यनेकं विज्ञानं जनयिष्यते
२५ तदा किं नाम भवतः [3]क्षुण्णं स्यादिति परस्याशयः । सत इवासतोऽसत्प्रत्ययभाव इति । यथाहि—[4]सतः सकाशात् सत्प्रत्ययस्तथाऽसतोऽसत्प्रत्ययो भवति, अनुरूपकारणप्रभवत्वात् सर्वकार्याणामिति ॥

(१८) '**गडुप्रवेशेऽक्षि[5]तारकाविनिर्गम'न्याय** इति । कस्यचिदक्षिसमीपे तथाविधबाधाविधायकं गडूत्पन्नम् । ततश्च केनचिद् भिषजा तथाविधौषधप्रयोगेण तथा
३० उपचरितं यथाऽक्षिमध्ये तत् प्रविवेश । प्रविष्टे च तत्राक्षिणि तत्क्षणादेव तदुत्पाटिता कनीनिका अक्षितारि(?र)का बहिर्निर्जगामेति प्रस्तुतदृष्टान्तार्थः ॥

१ 'असत्प्रत्ययासिद्धे (?) विरोधाच्च' इति ङ-पाठः । २ 'असताऽपि एकस्वभावेनैव स्तम्भादिना यद्यनेकं' इति ख-पाठः । ३ 'क्षुणं' इति च-पाठः । ४ 'सत्सकाशात्' इति क-पाठः । ५ 'तारिकावि०' इति च-पाठः ।

( मूलम् )

स्वसत्त्वासत्त्ववदसत्त्वात् तद्रूपेणाप्यस्तित्वप्रसङ्गः, अनिष्टं चैतदिति। स्यादेतत् पार्थिवद्रव्यसत्त्वव्यतिरिक्तमबाध्यसत्त्वं परिकल्पितम्, पार्थिवद्रव्यसत्त्वमेव पुनरबाध्यसत्त्वस्वभावमिष्यत एवेति, अतो- ५ ऽनपराध इति। अहो दुरन्तः स्वदर्शनानुरागः, प्रत्युक्तमपि नावधारयति, यतो न च तद् येनैव स्वभावेन पार्थिवद्रव्यत्वेन सत् तेनैवाबादिद्रव्यत्वेनासत् इत्यादि तदेवावर्तत इत्यलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेनेति ॥

अपरस्त्वाह–सदसद्रूपं वस्त्वित्यत्रासत्पक्षे प्रसज्यप्रतिषेधो वा १० स्यात्, पर्युदासो वा। किञ्चातः?। उभयथाऽपि दोषः। तथाहि–यदि सन्न भवतीत्यसत्, सन्निवृत्तिमात्रं निरुपाख्यमसत्। ततश्च तस्य

( स्वो० व्या० )

स्वसत्त्वासत्त्ववदसत्त्वात्। किमित्याह–तद्रूपेणापि–अबादिद्रव्यसत्त्वरूपेणापि अस्तित्वप्रसङ्गः पार्थिवद्रव्यसत्त्वस्य। अनिष्टं चैतदिति। तथाहि–न तत्र स्व- १५ सत्त्वासत्त्वमिति स्वसत्त्वम्, एवमबाध्यसत्त्वाभावे स्यात् तत्सत्त्वम्, अन्यथा तदभावाभाव इति भावना। स्यादेतदित्यादि। स्यादेतत्–अथैवं मन्यसे पार्थिवद्रव्यसत्त्वव्यतिरिक्तं धर्मान्तरम् अबाध्यसत्त्वं परिकल्पितम्, पार्थिवद्रव्यसत्त्वमेव पुनः एकरूपम्, अबाध्यसत्त्वस्वभावं वस्तुस्थित्या इष्यत एवेति, अतः–[1]अस्मात् कारणात् अनपराध इति–नास्ति कश्चिद् दोषः। एतदाशङ्क्याह– २० अहो दुरन्तः स्वदर्शनानुरागः। कथमित्याह–प्रत्युक्तमपि नावधारयति, [2]एतत्सामर्थ्यात् [3]एतदेवाह यत इत्यादिना। यतो न च तद् येनैव स्वभावेन पार्थिवद्रव्यत्वेन सत् तेनैवाबादिद्रव्यत्वेनासत् इत्यादि तदेवावर्तते पूर्वोक्तं चक्रकम् इत्यलं स्वदर्शनानुरागाकृष्टचेतसा सह प्रसङ्गेन नैव प्रज्ञापनाविषयः ॥ २५

अपरस्त्वाह–सदसद्रूपं वस्त्वित्यत्रासत्पक्षे प्रसज्यप्रतिषेधो वा स्यात् सन्न भवतीत्यसत्, पर्युदासो वा सतोऽन्यदसदिति। किञ्चात इत्याह– उभयथाऽपि दोषः। कथमित्याह–तथाहीत्यादि। तथाहि यदि सन्न भवति इत्यसत्। किमुक्तं भवति?। सन्निवृत्तिमात्रं निरुपाख्यमसत् प्रसज्यप्रति-

१ 'तस्मात्' इति ङ–पाठः। २ 'एतत्सामर्थ्यादुभयथाऽपि एतदेवाह' इति ङ–पाठः। ३ 'तदेवाह य(त) इत्यादिना' इति ङ–पाठः।

( मूलम् )

**प्रमाणगोचरातीतत्वाद् वस्तुधर्मत्वानुपपत्तिः, अभ्युपगमे वा वस्तुन एव निरुपाख्यत्वप्रसङ्गः । तथाहि–न निरुपाख्यस्वभावं ५ सोपाख्यं भवितुमर्हति ॥**

**अथ सतोऽन्यदसत् सदन्तरमेवासदिति । एवमपि तस्य सदात्मकत्वादेव सदसद्रूपत्वानुपपत्तिः[1] । तथाहि–न सत् सदन्तरात्मकमिति सचेतसो वक्तुं युज्यत इति । एतदप्ययुक्तम्, भगवदर्हन्मतापरिज्ञानात् । भगवदर्हन्मतं हि वस्त्वेव सदसद्रूपतयोभयात्मकम्, न १० सत्त्वाननुविद्धमसत्त्वं नाम तत्र यदपेक्षयैतदुभयरूपमिति । उक्तं च वादिमुख्येन[2]–"स्वपरसत्त्वव्युदासोपादानापाद्यं हि वस्तुनो वस्तुत्वम् ।" अतो यद्यपि सन्न भवतीत्यसत्, तथापि परद्रव्यादिरूपेण**

( स्वो० व्या० )

षेधरूपम् । ततः किमित्याह–**ततश्च तस्य**–असतः **प्रमाणगोचरातीतत्वात्** १५ कारणाद् **वस्तुधर्मत्वानुपपत्तिः** । **अभ्युपगमे वा**ऽसतो वस्तुधर्मत्वस्य । किमित्याह–**वस्तुन एव निरुपाख्यत्वप्रसङ्गः**[3] । **तथाहि–न निरुपाख्यस्वभावं**–न तुच्छधर्मकं **सोपाख्यं भवितुमर्हति**–अतुच्छं भवितुमर्हति ॥

द्वितीयं विकल्पमधिकृत्याह—**अथे**त्यादि । अथ **सतोऽन्यदसत् सदन्तरमेवासत्** पर्युदासरूपम् **इति** । **एवमपि तस्य**–असतः **सदात्मकत्वादेव** २० कारणात् **सदसद्रूपत्वानुपपत्तिः** वस्तुनः । **तथाही**त्यादि । तथाहि **न सत् सदन्तरात्मकमिति**–एवं **सचेतसो वक्तुं युज्यते**, प्राप्नोति चैतत् अस्मिन् पक्षे असतोऽपि सदन्तरत्वादिति । अत्राह–**एतदप्ययुक्तम्** । कुत इत्याह–**भगवदर्हन्मतापरिज्ञानात्** । कथमपरिज्ञानमित्याह–**भगवदर्हन्मतं हि**–यस्माद् **वस्त्वेव**–आत्मघटादि **सदसद्रूपतयोभयात्मकं** वर्तते, **न** २५ **सत्त्वाननुविद्धमसत्त्वं नाम तत्र**–वस्तुनि **यदपेक्षयैतदुभयरूपं** वस्तु **इति । उक्तं च वादिमुख्येन**–मल्लवादिना [4]**सम्म(न्म)तौ–स्वपरे**त्यादि । स्वपरसत्त्वयोर्यथायोगं [5]ये **व्युदासोपादाने** [6]ताभ्यामापाद्यते व्यवहारविषयतयेति एवम्भूतमेव **वस्तुनो वस्तुत्वम्** । **अतो यद्यपि सन्न भवतीत्यसत्** प्रसज्यप्रतिषेधरूपम्, **तथापि परद्रव्यादिरूपेण**

१ 'सद्रूपानुप०' इति क–पाठः । २ श्रीमल्लवादिसूरिणा । ३ 'निरुपाख्यप्रसङ्गः' इति ङ–पाठः । ४ सन्मतिप्रकरणटीकायामित्यर्थः । ५ 'ये' इति पाठो नास्ति ङ–प्रतौ । ६ 'ताभ्यामपोद्यते' इति ङ–पाठः ।

( मूलम् )

**सतः प्रतिषेधात् तस्य च तत्रासत्त्वात् तत्स्वरूपसत्त्वानुवेधात् न निरुपाख्यमेव तत् इति प्रसज्यप्रतिषेधपक्षोदितदोषाभावः ॥**

**पर्युदासप्रतिषेधपक्षदोषस्त्वत्र व्यतिकरेऽनभ्युपगमादेव न नः** ५
**[1]क्षतिमावहति । एतदुक्तं भवति–वस्त्वेव तत् सदसदात्मकम्, न तत्र स्वरूपसत्त्वपृथग्भूतं पररूपासत्त्वम्, न च पररूपासत्त्वासम्पृक्तं स्वरूपसत्त्वम् । न चानयोरेकत्वमेव, अविगानतः सम्यगुभयोप-**

( स्वो० व्या० )

**सतः प्रतिषेधात् तस्य च**–परद्रव्यादि[2]रूपेण सतः **तत्र**–[3]विवक्षितसत्त्वे १० **असत्त्वात् तत्स्वरूपसत्त्वानुवेधात्** तत्स्वरूपस्य [4]तत्प्रतिषेधायातासत्त्वरूपस्य सत्त्वानुवेधात्–विवक्षितसत्त्वानुवेधात् कारणात् **न निरुपाख्यमेव**–तुच्छमेव **तत्**–असत्त्वम् । **इति**–एवं **प्रसज्यप्रतिषेधपक्षोदितदोषाभावः ॥**

**पर्युदासप्रतिषेधपक्षदोषस्त्वत्र व्यतिकरे** उभयरूपवस्तुचिन्ताऽधिकारे **अनभ्युपगमादेव** कारणात् **न नः**–नास्माकं [5]**क्षतिमावहति** । भावार्थमाह— १५ **एतदुक्तं भवति–वस्त्वेव तत् सदसदात्मकं**–शबलम्, **न तत्र**–वस्तुनि **स्वरूपसत्त्वपृथग्भूतम्** अन्यदेव **पररूपासत्त्वम्, न च पररूपासत्त्वासम्पृक्तं स्वरूपसत्त्वं** केवलम् । **न चानयोः**–स्वरूपसत्त्व-पररूपासत्त्वयोः **एकत्वमेव** सर्वथा, **अविगानतः**–अविगानेन **सम्यक्**–तद्भावभावित्वनीतितः

( विवरणम् ) २०

(१०) **परद्रव्यादिरूपेण सतः तत्र–विवक्षितसत्त्वे असत्त्वादिति** । इह सर्वेऽपि भावाः स्वरूपमात्रनियताः न पररूपेण स्वसत्त्वमपेक्षन्ते । ततः परद्रव्यादिरूपेण प्रतीतलक्षणेन सतः–घटादेर्वस्तुनः प्रतिषेधादसदित्यनेन ध्वनिना तस्य च परस्य–पटादेः परद्रव्यादिरूपेण सतः–विद्यमानस्य तत्र–विवक्षितसत्त्वे–घटादौ असत्त्वात्–अविद्यमानत्वात् । एवं च यद्यपि परस्परापेक्षया घटपटादयः पदार्थास्तुच्छरूपाः २५ संवृत्तास्तथापि तुच्छतायाः स्वसत्तानुवेधात् प्रसज्यप्रतिषेधेऽपि नात्यन्तं तुच्छरूपतेति ॥

(११) **तद्भावभावित्वनीतित** इति । तद्भावे–सत्त्वासत्त्वभावे भवतीत्येवंशीला तद्भावभाविनी तस्या भावस्तत्त्वं तदेव नीतिस्ततः सर्वलोका[6]विगानेन ह्युभयोपलब्धिः । सत्त्वासत्त्वसद्भावभाविन्येवोपलभ्यते, न तु तदभावे । अतः कथं सत्त्वमात्रनियतैवासौ स्यादिति ? ॥ ३०

१ 'क्षिति०' इति क–पाठः । सोऽपि न्याय्यः, यतः 'क्षि क्षये' इत्यस्य क्तौ रूपम् । २ 'रूपेणासतः' इति ङ–पाठः । ३ 'विवक्षितत्वे' इति ङ–पाठः । ४ 'तत्प्रतिषेधा यतो सत्त्व०' इति ङ–पाठः । ५ 'क्षितिमा०' इति क–पाठः । ६ 'विज्ञानेन' इति क–पाठः ।

( मूलम् )

लब्धेः । न च नानात्वमेव, तद्व्यवस्थायोगात् तथाऽनुपलब्धेः । इत्यन्योन्यानुविद्धं भेदाभेदवृत्ति तत्स्वभावं विशिष्टमुभयमेव तत्, ५ अन्यथा वस्तूनां वैशिष्ट्यानुपपत्तिरिति। [1]एतेन "अबादेर्नियतदेश-स्वरूपव्यतिरेकेण सर्वत्रासत्त्वात् तस्य च पार्थिवद्रव्यसत्त्वेनानुवेधा-भ्युपगमात् तद्व्याप्तेर्घटस्य प्रायो विभुत्वप्रसङ्गः" इत्येतदपि कुशा-ग्रीयबुद्धिपरिचोदितं परिहृतमवगन्तव्यम्, 'वस्त्वेव तत् सदसदा-त्मकम्' [2]इत्यादेर्ग्रन्थस्यान्यथा भावार्थायोगात् ॥

१० ( स्वो० व्या० )

[3]उभयोपलब्धेः उक्तवत् सदसत्प्रत्ययभावादिति । न च नानात्वमेव एकान्तेन-अनयोरिति, तद्व्यवस्थायोगात् तयोः—स्वरूपसत्त्व-पररूपासत्त्वयोः व्यवस्था-योगात् तथाऽनुपलब्धेः—नानात्वेनादर्शनात् । इति—एवम् अन्योन्यानुविद्धं मेचकमणिवर्णकल्पनया भेदाभेदवृत्ति [4]एकान्तभेदाभेदवृत्ति एकान्तभेदाद्य-१५ पोहेन तत्स्वभावं—भेदाभेदवृत्तिस्वभावं विशिष्टम्—इत्थमेव नियतं तथास्वभाव-तया उभयमेव—स्वरूपसत्त्वपररूपासत्त्वोभयमेव तत्—वस्तु । अन्यथा—एव-मनभ्युपगमे वस्तूनां—घटादीनां वैशिष्ट्यानुपपत्तिरिति । एतेन—उक्तवत् उभयरूपत्वव्यवस्थापनेन अबादेर्नियतदेशस्वरूपव्यतिरेकेण सर्वत्रा-सत्त्वात्। तथाहि—[5]यत्रैवाबादयस्तत्रैव ते, अन्यत्र तु तदभावः । तस्य च—अबाद्य-२० सत्त्वस्य पार्थिवद्रव्यसत्त्वेनानुवेधाभ्युपगमात् कारणात् । कुत इत्याह—तद्व्याप्तेः—पार्थिवद्रव्यसत्त्वव्याप्तेः । किमित्याह—घटस्य प्रायः—बाहुल्येन अबादेर्नियतदेशस्वरूपं विहाय विभुत्वप्रसङ्गः—सर्वगतत्वापत्तिः, यथोदितपार्थिव-द्रव्यसत्त्वात्मकत्वाद् घटस्येति भावः इति एतदपि चोद्यं कुशाग्रीयबुद्धि-परिचोदितं—सूक्ष्मबुद्धिपरिचोदितं परिहृतमवगन्तव्यम् । कुत इत्याह—२५ वस्त्वेव तत् सदसदात्मकमित्यादेर्ग्रन्थस्य—अनन्तरोदितस्य अन्यथा—प्रकारान्तरेण भावार्थायोगादिति भावनीयमेतत् ॥

( विवरणम् )

(२६) भावार्थायोगादिति । यथाहि—पार्थिवद्रव्यसत्त्वं स्वरूपनियततया नान्यत्र वृत्तिमवलम्बते तदा कथं तदन्यत्रापि विद्यमानमबाद्यसत्त्वभावं सम्पद्यते इति ? ।

१ 'अनेन' इति क-पाठः। २ समीक्ष्यतां ५९तमं पृष्ठम् । ३ 'उभयोरुपलब्धेः' इति क-पाठः । ४ 'वृत्ति एकान्तभेदाद्यपोहेन' इति घ-पाठः । ५ 'यदा हि' इति ख-च-पाठः ।

(मूलम्)

**अथवा विश्वजगदन्तर्गतानां सकलवस्तुसत्त्वानामेव तदसत्त्वानुवेधः, अन्यथा स्वस्वरूपवत् तेषु तत्सत्त्वापत्तिः। न च वस्त्वन्तरेणाप्यनुवेध इष्यत इति न विभुत्वप्रसङ्गः। न च तदसत्त्वेनाननुवेधस्तस्य, तदन्यानात्मकेनानुवेधात्। न चेत्थं तत्सदेशतापत्तिः, तदन्येषामेव तत्त्वतस्तदात्मकत्वात्, न चात एव तत्सद्रूपतैव,** ५

(स्वो० व्या०)

परिहारान्तरमाह **अथवे**त्यादिना। अथवा **विश्वजगदन्तर्गतानां सकलवस्तुसत्त्वानामेव**। किमित्याह–**तदसत्त्वानुवेधः**–अबाद्यसत्त्वानुवेधः। इत्थं १० चैतदङ्गीकर्तव्यमित्याह—**अन्यथे**त्यादि। अन्यथा–एवमनभ्युपगमे, **स्वस्वरूपव**दिति दृष्टान्तः, अबादीनामात्मीय इव स्वरूपे तदसत्त्वाननुवेधात् कारणात् **तेषु**–सकलवस्तुसत्त्वेषु **तत्सत्त्वापत्तिः**–अबादिसत्त्वापत्तिः। न चैवम्, इत्यतस्तदसत्त्वानुवेधस्तेषामिति स्थितम्। यदि नामैवं ततः किमित्याह–**न चे**त्यादि। न च **वस्त्वन्तरेणापि** सह **अनुवेध इष्यते**, पार्थिवद्रव्यसत्त्वस्येति प्रक्रमः। **इति**– १५ एवं **न विभुत्वप्रसङ्गः**, घटस्येति वर्तते। **न चे**त्यादि। न च **तदसत्त्वेन**–अबाद्यसत्त्वेन **अननुवेधस्तस्य**–पार्थिवद्रव्यसत्त्वस्य। कुत इत्याह–**तदन्यानात्मकेन**–अपरासंसृष्टेन **अनुवेधाद्** असत्त्वेन। **न चे**त्यादि। न च **इत्थम्**–एवं **तत्सदेशतापत्तिः**–अबाद्यसत्त्वसदेशतापत्तिः। कुत इत्याह–**तदन्येषामेव** वस्तुसत्त्वानां **तत्त्वतः**–परमार्थेन **तदात्मकत्वात्**–अबाद्यसत्त्वात्मकत्वात्। न २० पुनरबाद्यसत्त्वं केवलं नाम यस्य सदेशतापत्तिरित्यर्थः। **न चे**त्यादि। न च **अत एव** कारणात् **तत्सद्रूपतैव** तदन्येषां–वस्तुसत्त्वानां सद्रूपतैव। कुत इत्याह–

(विवरणम्)

कथमबाद्यसत्त्वाक्षिप्तं पार्थिवद्रव्यसत्त्वस्य विभुत्वं प्रसज्यते, नियतरूपया पार्थिवद्रव्यसत्त्वाक्रोडितस्य अबाद्यसत्त्वस्य अन्यत्र वृत्तेरभावात्?। एतावताऽभिप्रायेण प्रथमः २५ परिहारः॥

अथवेत्यादि ग्रन्थोक्तं तु परिहारान्तरम्। अबाद्यसत्त्वस्यैव प्रति पृथिव्यादिसत्त्वमन्यान्यरूपेण वर्तनान्न तदाक्षिप्तं कस्यचिद् घटादेर्विभुत्वमापद्यते इत्यपेक्षयति॥

(१८) **अपरासंसृष्टेनानुवेधादि**ति। अबाद्यसत्त्वेनापरैः–पटादिभिरसंसृष्टेन घटस्यानुवेधात्। एवं हि घटात्मकमबाद्यसत्त्वं न पटादौ, यच्च पटादौ तन्न घटे। ३० कथमबाद्यसत्त्वस्य सामान्येन व्यापित्वेऽपि घटस्य व्यापित्वं प्रसज्यते, अबाद्यसत्त्वविशेषाक्रोडितत्वाद् घटादिसत्त्वस्येति?॥

१ 'तत्त्वनो(?तो)ऽतदा०' इति ग–पाठः। २ 'नानुवेना(?)वेधादिति' इति ख–पाठः।

(मूलम्)

**असद्बुद्ध्याऽवगमात् । न चातदनुवेधतः तथा तदसत्त्वप्रतीतिहेतुता, अन्यगतनिजासत्त्वेन व्यभिचारात् । तथाहि–नान्यगतं तदसत्त्वं तत्रासत्त्वप्रतीतिकारणम्, तेनाननुवेधात् इत्येवमन्यदपि कुचोद्यमनया दिशा परिहर्तव्यमिति ॥**

**ततश्चैवं न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, न चासत्त्वं सत्त्वपरिहारेण । न चानयोरविशेष एव, भिन्ननिमित्तत्वात् । तथाहि–स्वद्रव्यादिरूपेण सत् परद्रव्यादिरूपेण चासदित्युक्तम्[2] ।**

(स्वो० व्या०)

**असद्बुद्ध्या,** प्रक्रमादबाद्यसत्त्वविषयया **अवगमात्**–परिच्छेदात्; न ह्यतत्स्वभावानां तया तथाऽवगमः, शुक्लानामिव नीलतयेति भावनीयम् । **न चे**त्यादि । **न च अतदनुवेधतः**–अबाद्यसत्त्वाननुवेधतः, **तथा**–इतरेतररूपापत्त्या **तदसत्त्वप्रतीतिहेतुता** तेषाम्–अन्यवस्तुसत्त्वानाम् अबाद्यसत्त्वप्रतीतिकारणतेति भावः । कुत इत्याह–**अन्यगतनिजासत्त्वेन** तथा तदननुवेधतः कारणाद् **व्यभिचारात्** । एतद्भावनायैवाह–**तथाही**त्यादि । तथाहीत्युपप्रदर्शने । **नान्यगतं**–पृथिव्यादिगतं **तदसत्त्वम्**–अबाद्यसत्त्वं **तत्र**–अबादौ **असत्त्वप्रतीतिकारणम्** । कुत इत्याह–**तेनाननुवेधात्** तेन–अबाद्यसत्त्वेनाननुवेधाद्धेतोः, अतोऽबाद्यसत्त्वेनाननुवेधोऽन्यवस्तुसत्त्वानाम्, अन्यथा त्वबादिसत्त्ववत् तदसत्त्वप्रतीत्यभाव इति भावना । **इत्येवमन्यदपि कुचोद्यम्** अनेकान्ते **अनया दिशा परिहर्तव्यमिति** ॥

**ततश्चे**त्यादि । ततश्च **एवम्**–उक्तेन प्रकारेण **न सर्वथा सत्त्वमसत्त्वपरिहारेण व्यवस्थितम्, न चासत्त्वं सत्त्वपरिहारेण,** व्यवस्थितमिति वर्तते । **न चानयोः**–सत्त्वासत्त्वयोः **अविशेष एव**–अभेद एव । कुत इत्याह–**भिन्ननिमित्तत्वात्** । एतदेव भावयति **तथाही**त्यादिना । तथाहि **स्वद्रव्यादि-**

(विवरणम्)

(१३) इतरेतररूपापत्त्येति । सत्त्वासत्त्वयोरेकवस्तुस्वभावतया इतरेतररूपापत्तिः प्रागत्र प्रतिपादिता तयाऽननुवेधे अनुवेधाभावे इति योजना कार्या, सत्त्वासत्त्वयोः परस्परमनुवेधाभावे इत्यर्थः । अनुभवे च [4]सद्बोधाद्यनेकरूपतायामिव को विरोध इति ? । अनुभवे च स्वयमेव संवेद्यमानतायां पुनः [5]सद्बोधाद्यनेकरूपतायामिव सदादिरूपतायां–[6]बोधादिरूपतायां च को विरोधः ? । न कश्चिदित्यर्थः । तत्र सदादिरूपता सत्त्व-नीलत्व-रक्तत्वादिरूपतया घटादेरर्थस्य बोधादिरूपता च बोध-हर्ष-विषाद-दैन्यादिरूपा ज्ञानगता ॥

१ 'तथा न सदसत्त्व०' इति क–पाठः । २ प्रेक्ष्यतां ३६तमं पृष्ठम् । ३ समीक्ष्यतां ३९तमं पृष्ठं ४०तमं च । ४–५ 'स द्वेधाद्यनेक०' इत्युभयत्र क–पाठः । ६ 'वेधादि०' इति क–पाठः ।

( मूलम् )

ततश्च तद् यत एव सत्, अत एवासत्, परद्रव्यादिरूपासत्त्वे सति स्वद्रव्यादिरूपेण सत्त्वात् । यत एव चासत्, अत एव सत्, स्वद्रव्यादिरूपसत्त्वे सति परद्रव्यादिरूपेणासत्त्वात् । अत एव चैकत्र सदसत्त्वयोर्विरोधोऽपि न सम्भवति, भिन्ननिमित्तत्वात्, स्वद्रव्य-परद्रव्यादीनां सदसद्धेतुत्वात्, अनुभवसिद्धत्वाच्च । तथाहि–स्वपर-रूपानुवृत्तव्यावृत्तरूपमेव तद् वस्त्वनुभूयते ॥

स्यादाशङ्का–स्वरूपाव्यावृत्तिरेव पररूपव्यावृत्तिरिति । एषाऽपि

( स्वो० व्या० )

रूपेण सत् परद्रव्यादिरूपेण चासदित्युक्तमिति निमित्तभेदः । ततश्चेत्यादि । ततश्च तत्–वस्तु यत एव सत्, अत एवासत् । कुत इत्याह–परद्रव्यादिरूपासत्त्वे सति तदनात्मकत्वेन स्वद्रव्यादिरूपेण सत्त्वात् । तथा यत एव चासत्, अत एव सत्, तदिति प्रक्रमः । युक्तिमाह–स्वद्रव्यादिरूपसत्त्वे सति भावात्मकत्वेन परद्रव्यादिरूपेणासत्त्वात् । अत एवेत्यादि । अत एव च कारणात् एकत्र–वस्तुनि सदसत्त्वयोर्विरोधोऽपि न सम्भवति, भिन्ननिमित्तत्वात् कारणात् स्वद्रव्य-परद्रव्यादीनाम् । किमित्याह–सदसद्धेतुत्वात्, स्वद्रव्यादयः सत्त्वकल्पनाया निमित्तम्[1], परद्रव्यादयश्च असत्त्वकल्पनाया इति । तथा अनुभवसिद्धत्वाच्च एकत्र सदसत्त्वयोर्विरोधोऽपि न सम्भवति । एतद्भावनायाह–तथाहीत्यादि । तथाहि स्वपररूपाभ्यां यथा-सङ्ख्यं अव्यावृत्तव्यावृत्तरूपमेव तद् वस्त्वनुभूयते । अनुभवे च सद्बोधाद्यनेकरूपतायामिव को विरोधः ? ॥

स्यादाशङ्केत्यादि । स्यादाशङ्का स्वरूपाव्यावृत्तिरेव एकरूपा पररूप-व्यावृत्तिरिति । आह च—

"सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः ।
स्वभाव-परभावाभ्यां यस्माद् व्यावृत्तिभागिनः ॥[2]
तस्माद् यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः ।
जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥"[3]

इत्यादि ॥

( विवरणम् )

(२५) सर्वे भावाः स्वभावेनेत्यादि कारिकाद्वयम् । अथास्य व्याख्या–सर्वे

१ 'कल्पनानिमित्तम्' इति क-ङ-पाठः । २–३ अनुष्टुप् ।

( मूलम् )

**अयुक्ता, विहितोत्तरत्वात्[1]। यस्मादेवं तस्मात् समुत्सारितपक्षपातैः न्यायविद्भिर्युक्तियुक्तत्वात् सदसद्रूपं वस्त्वङ्गीकर्तव्यमिति ।**

( स्वो० व्या० )

५ **एषाऽप्ययुक्ता** आशङ्का । कुत इत्याह—**विहितोत्तरत्वात्**, न स्वरूपसत्त्वमेव पररूपासत्त्वमित्यादिना । अनन्तरोदितमपि श्लोकद्वयं सदसद्रूपवस्तुव्यवस्थापकमेव, तत्त्वतोऽन्यरूपाभावमन्तरेण अन्यतोऽन्यव्यावृत्त्यसिद्धेः[2], स्वव्यावृत्तिवद् व्यावृत्त्यन्तराभावे न प्रकल्पना [3]बीजाभावादिति निर्लोठितमेतदर्थतः । **यस्मादेवं** १० **तस्मात् समुत्सारितपक्षपातैर्न्यायविद्भिर्युक्तियुक्तत्वात्** कारणात्

( विवरणम् )

भावाः—बाह्याभ्यन्तर[4]रूपाः पदार्थाः स्वभावेन—निजसत्तालक्षणेन 'व्यावृत्तिभागिनः' इत्युत्तरेण योगः । कुत इत्याह—**स्वस्वभावव्यवस्थितेः** स्वस्मिन् स्वस्मिन् भावे सत्त्वरूपे व्यवस्थितेः—व्यवस्थानात् । काभ्यां सकाशाद् व्यावृत्तिभागिन इत्याह—**स्वभाव-पर-** १५ **भावाभ्यां** स्वः—स्वकीयो भावः स्वभावो घटस्य घटान्तरलक्षणः, परः—परकीयो भावः परभावो घटस्यैव पटादिः, ताभ्यां **व्यावृत्तिभागिनः**—पार्थक्यभाजः । सर्वे हि भावाः सर्वासाधारणरूपभाजो वर्तन्ते । ततः सजातीयाद् विजातीयाच्च पदार्थराशेः स्वसत्त्वेनैव स्वरूपनियतेन स्वभिन्नव्यावृत्त्यंशनिरपेक्षेण व्यावृत्तिं भजन्त इति । एवं सति किं सिद्धमित्याह—(पृ. ६३) **तस्मात्**—स्वपरव्यावृत्तिरूपाद्धेतोर्**यतो यतः**—सजातीयाद् २० विजातीयाद् वा[5]ऽर्थात् **अर्थानां**—घटादीनां **व्यावृत्तिः**—भिन्नरूपता **तन्निबन्धनाः**—व्यावृत्तिहेतुका **जातिभेदाः** परस्परपरिकल्पितसामान्यलक्षणाः **प्रकल्प्यन्ते ।** कीदृशा इत्याह—**तद्विशेषावगाहिन** इति । तस्य—स्वस्य परिव्यावृत्तिभाजः स्वलक्षणस्य [6]विशेषाः—'मार्त्तव(त्व?)-'पाटलिपुत्रक'त्व-वासन्तकत्व-रक्तत्वादिलक्षणास्तान् विकल्पबलाधीनान् अवगाहन्ते अवलम्बन्त इत्येवंशीला ये ते तथा । न हि निरंशे वस्तुनि २५ अत एव स्वरूपमात्रनियते केचिद् विशेषाः सन्ति, परं तत्तद्व्यावृत्तिवशेन विकल्पविज्ञानसन्निधापिता अतत्त्वदर्शिभिः प्रमातृभिर्व्यवह्रियन्ते, यथा—मार्त्त इति कोऽर्थः ? । अमार्त्तो न भवति । 'पाटलिपुत्रक' इति कोऽर्थः ? । अ'पाटलिपुत्र'को न भवति । इत्यादि ॥

१ प्रेक्ष्यतां ३९तमं पृष्ठं ४०तमं च । २ 'व्यावृत्तिसिद्धेः' इति ङ—पाठः । ३ 'बीजभावादिति' इति ङ—पाठः । ४ 'रूपाः स्वभावेन पदार्थाः निज०' इति च—पाठः । ५ 'याच्चार्थात् अर्थानां' इति ख-च—पाठः । ६ 'वर्तमानपादलिपुत्र०' इति क—पाठः । ७ 'यान्यानवगाहन्ते' इति ख—च—पाठः ।

(मूलम्)

आह च—

"यस्मात् सत्त्वमसत्त्वं च न विरुद्धं मिथो द्वयम्।
वस्त्वेकं सदसद्रूपं ननु तत् किं न युज्यते?॥"[1]　५

यदप्युक्तम्[2]—'सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवति' इत्येतदिष्यत एव। यत् पुनरिदमुक्तम्[3]—'ततश्चात्रापि वक्तव्यं धर्मधर्मिणोः किं तावद् भेदः' इत्यादि, अत्रापि सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषोऽनभ्युपगमतिरस्कृतत्वादेव न [4]नः क्षतिमावहति। भेदाभेदपक्षस्त्वभ्युपगम्यत एव। आह—१०
ननु 'अत्रापि येनाकारेण भेदस्तेन भेद एव' इत्यादि दूषणमुक्तम्[5], उक्तमिदम्; अयुक्तं तूक्तम्, भेदाभेदपक्षे तदसम्भवात्। असम्भवश्चान्योन्यव्याप्तिभावेनास्य जात्यन्तरात्मकत्वात्, केवलभेदाभेदा-

(स्वो० व्या०)

सदसद्रूपं वस्त्वङ्गीकर्तव्यमिति। [6]आह च—यस्मात् सत्त्वमसत्त्वं च। १५
किमित्याह—न विरुद्धं मिथो द्वयम्, उक्तवदिति। वस्त्वेकं सदसद्रूपं शबलतया। ननु तत् किं न युज्यते?। युज्यत एव। एवं पूर्वपक्षश्लो[7]कपरावर्तना॥

भूयोऽपि पूर्वपक्षग्रन्थमुपन्यस्य तत्परिहारमाह यदप्युक्तमित्यादिना। यदप्युक्तं पूर्वपक्षग्रन्थे[8]—'सदसद्रूपं वस्त्वभ्युपगच्छता सत्त्वमसत्त्वं च वस्तुधर्मतयाऽभ्युपगतं भवति' इत्येतदिष्यत एव, न ह्यभ्युपगमा एव बाधायै भवन्ति। २०
यत् पुनरिदमुक्तं पूर्वपक्षग्रन्थ[9] एव—'ततश्चात्रापि वक्तव्यं धर्मधर्मिणोः किं तावद् भेदः' इत्यादि, अत्रापि—उक्ते सर्वथा भेदपक्षोदितोऽभेदपक्षोदितश्च दोषः। किमित्याह—अनभ्युपगमतिरस्कृतत्वादेव कारणात् न नः—नास्माकं [10]क्षतिमावहति, भेदाभेदपक्षस्तु तृतीयः अभ्युपगम्यत एव। अत्रापि नाभ्युपगमा एव बाधायै भवन्ति। आहेत्यादि परः। ननु अत्रापि—भेदाभेदपक्षे [11]येन आकारेण भेदस्तेन भेद एवेत्यादि दूषणमुक्तं पूर्वपक्षग्रन्थ[12] इति। अत्राह—उक्तमिदं दूषणम्, अयुक्तं तूक्तम्। कुत इत्याह—भेदाभेदपक्षे अस्मदभिमते तदसम्भवात्—उक्तदूषणासम्भवात्। असम्भवश्च उक्तदूषणस्य अन्योन्यव्याप्तिभावेन हेतुना अस्य—भेदाभेदपक्षस्य जात्यन्तरात्मकत्वात् २५

१ अनुष्टुप्। २–३ उभयत्र द्वादशे पृष्ठे। ४ 'नः क्षितिमा०' इति क–पाठः। ५ द्वादशे पृष्ठे। ६ 'आह यस्मात्' इति ङ–पाठः। ७ प्रेक्ष्यतामेकादशं पृष्ठम्। ८–९ उभयत्र द्वादशे पृष्ठे। १० 'क्षितिमावहति' इति घ–ङ–पाठः। ११ 'येन प्रकारेण भेदोऽस्ति भेद एवेत्यादि' इति क–पाठोऽशुद्धः। १२ द्वादशे पृष्ठे।

( मूलम् )

नुपपत्तेः । ततश्च 'येनाकारेण भेदस्तेन भेद एव, येन चाभेदस्तेनाभेद एव'[1] इत्यत्यन्तपरित्यक्तानेकान्तवादविषयमेतत्, अभेदाननुविद्धस्य केवलभेदस्यासिद्धेः, भेदाननुविद्धस्य चाभेदस्येति ॥

यच्चोक्तम्[2]-'अथ येनैवाकारेण भेदस्तेनैवाभेदः' इत्यादि, तदपि अनेकान्तवादानाकर्णनसूचकम् । यतो न ह्येकेनैवाकारेण भेदाभेदौ इत्यनेकान्तनीतिः, सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः; किन्तु एकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् [3]धर्मधर्मिभावेन भेदः,

( स्वो० व्या० )

केवलभेदाभेदानुपपत्तेः, न ह्यन्योन्याननुविद्धावेताविति जैनं दर्शनम् । ततश्चेत्यादि । ततश्च-एवं च सति 'येनाकारेण भेदस्तेन भेद एव, येन च अभेदस्तेनाभेद एव' इति एतत् पूर्वपक्षवचनमिति योगः। किमित्याह-[4]अत्यन्तपरित्यक्तानेकान्तवादविषयं न तद्गोचरे ढौकतेऽपीति । कुत इत्याह-अभेदाननुविद्धस्य केवलभेदस्यासिद्धेः कारणात् भेदाननुविद्धस्य चाभेदस्य इति असिद्धेरेव । 'येनाकारेण भेदस्तेन भेद एव' इत्यादिस्त्वत्र प्रवृत्तिनिमित्त[5]शून्य एव शब्द इति भावनीयम् ॥

यच्चोक्तं पूर्वपक्षग्रन्थं एव-'अथ येनैवाकारेण भेदस्तेनैवाभेदः' इत्यादि तदपि किमित्याह-अनेकान्तवादानाकर्णनसूचकं वर्तते । अनाकर्णनम्-अश्रवणम् । कथमित्याह-यत इत्यादि । यतो न ह्येकेनैवाकारेण भेदाभेदौ इत्यनेकान्तनीतिः । कुत इत्याह-सर्वथैकनिमित्तत्वे भेदाभेदद्वयानुपपत्तेः । प्रतीतमेतत् । किन्तु एवमनेकान्तनीतिरित्याह-एकधर्मिप्रतिबद्धत्वे अपि द्रव्यदेशनियततया धर्माणां-सत्त्व-ज्ञेयत्वादीनां मिथः-परस्परं भेदात् कारणाद् धर्मधर्मिभावेन तथाऽनुभवसिद्धेन भेदः। इत्थं चैतदङ्गीकर्तव्यमित्याह-

( विवरणम् )

(२३) द्रव्यदेशनियततयेति । यत्रैव प्रदेशे द्रव्यमवगाढं घटादि तत्रैव तद्धर्माः श्यामत्वादयः ॥

(२३-२४) परस्परं भेदात् कारणादिति । यदि हि एकान्तेन धर्मिणः सकाशाद् धर्मा अभेदभाजो भवेयुस्तदा कथमेकस्यैव घटादिधर्मिणः पृथुबुध्नोदरत्व-वृत्तायतग्रीव-कुण्डलाकारौष्ठत्व-मृन्मयत्व-रक्तत्वादयः परस्परं वैलक्षण्यमाबिभ्राणा अनेकधर्मा घटेरन्, एकधर्मिस्वरूपाव्यतिरिक्तत्वात् तेषाम्[6] । अतो ज्ञायते अन्यः कश्चिद् धर्मी अन्ये च ततो धर्मा इति ॥

१ प्रेक्ष्यतां द्वादशं पृष्ठं त्रयोदशं च । २ त्रयोदशे पृष्ठे । ३ 'धर्मिधर्मभावेन' इति ग-घ-पाठः । ४ 'अत्यन्तं परि०' इति ङ-पाठः । ५ 'सूत्रप्रवृत्ति०' इति ङ-पाठः । ६ त्रयोदशे पृष्ठे ।

( मूलम् )

**अन्यथाऽन्यतररूपापत्त्या तद्भावानुपपत्तिः। प्रतीतिबाधिता चेयम्। मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योन्यानुवेधतोऽभेदः,अन्यथा तस्येति सञ्ज्ञायोगात्, तद्धर्मिधर्म(?)स्वभावत्व- ५ सङ्गस्यापि धर्मेभ्योऽन्यत्वे धर्मिणोऽसम्भवात्। ततश्च धर्माणाम्**

---

( स्वो० व्या० )

**अन्यथे**त्यादि ।अन्यथा–एवमनभ्युपगमे **अन्यतररूपापत्त्या तद्भावानुपपत्तिः**–धर्मधर्मिभावानुपपत्तिः । अस्तु को दोष इत्याशङ्क्याह–**प्रतीतिबाधिता चेयम्**–धर्मधर्मिभावानुपपत्तिः क्षयोपशमानुरूपं तथा तदुभयप्रतीतेः। तथा **मिथ** १० इत्यादि । **मिथो भेदेऽपि च**–परस्परभेदेऽपि च **अशेषधर्माणां**–सत्त्व-ज्ञेयत्वादीनां **धर्मिणा**–द्रव्येण **व्याप्तेः** । किमित्याह–**विशिष्टान्योन्यानुवेधतः** कारणात् **अभेदः**, धर्म-धर्मिणोरिति । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथे**त्यादि । अन्यथा–एवमनभ्युपगमे **तस्येति सञ्ज्ञायोगात्**, तस्य धर्मिणो धर्मा इति सम्बन्धायोगात्। **तदि**त्यादि । तयोः–**धर्म-धर्मिणोः स्वभावत्वसङ्गस्यापि** १५ स एव धर्मी तद्धर्मधर्मिस्वभावः, त एव च धर्मास्तद्धर्मिधर्मस्वभावा इति एवम्भूतस्य । किमित्याह–**धर्मेभ्योऽन्यत्वे** सति, धर्मिणः सकाशादिति गम्यते । किमित्याह–**धर्मिणोऽसम्भवात्** । तद्धर्मधर्मिस्वभावत्वस्यापि धर्मत्वात् तस्य च ततो व्यतिरिक्तत्वेन धर्मिणो निःस्वभावत्वात्। तस्येति सञ्ज्ञायोगः। **ततश्चे**त्यादि। ततश्च–

---

( विवरणम् ) २०

(१६) **स एव धर्मी तद्धर्मधर्मिस्वभावः त एव च धर्मास्तद्धर्मिधर्मस्वभावा इति**। अयमत्र भावः–तैः–विवक्षितैरेव धर्मैर्धर्मवान् स्वभावः–स्वरूपं यस्य घटादेः स तथा। तथा तेन–प्रतिनियतेन घटादिना धर्मिणा धर्मरूपः स्वभावो येषां ते तथा। परस्परप्रतिबद्धस्वरूपो हि पदार्थानां धर्मधर्मिभावः, अतो न यैः कैश्चिद् धर्मैर्धर्मी भवति, नापि येन तेन धर्मिणा धर्मा इति वैशेषिकाद्यभिप्रायः ॥ २५

(१९) **धर्मिणो निःस्वभावत्वादि**ति। एवं हि तस्य–धर्मिणः स्वभाव इति भेदलक्षणषष्ठीनिर्देशान्यथानुपपत्त्या स्वभावत्वस्यापि धर्मत्वमापतितं धर्माणां च धर्मिणोऽभ्यन्तरभेदात् स्वभावस्यापि धर्मिणः सकाशाद् व्यतिरेकप्राप्तेः तद्व्यतिरेके च धर्मिरूपस्यान्योन्यस्याभावात्। धर्म्येव न स्याद् यदाधारा धर्मा भवन्ता प्रवक्ष्यन्ते ततस्तस्य धर्मा इति सम्बन्धाभाव एव द्विष्ठत्वात् सम्बन्धस्य धर्मधर्मिव्याप्तेरपीति। ३०

---

१ 'भावत्वप्रसङ्ग०' इति घ–पाठः। २ 'तस्य ततो' इति ङ–पाठः। ३ 'षष्ठीनिर्देशोऽन्यथा०' इति च–पाठः। ४ 'तद्व्यतिरेकः प्राप्तः तद्०' इति च–पाठः। ५ 'रूपस्याभावात्' इति क–पाठः।

( मूलम् )

**अभ्यन्तरीकृतधर्मिस्वरूपत्वात् धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वाद् भेदाभेद इति ॥**

५ **प्रतीतिसचिवनिमित्तभेदे सति विरोधात् इत्यपि यदुक्तं तदुक्तिमात्रमेव। तथाहि–'यदि येनाकारेण भेदः कथं तेनैवाभेदः? अथाभेदः कथं भेद इति?'[१] अस्य वचनस्योक्तवद् व्यपेतविषयत्वात् प्रकारान्तरेण भेदाभेदसिद्धेः। सर्वथाभेदाभेदवादिनस्तु तदसत्त्वापत्तिलक्षणो विरोधोऽपरिहार्य एव। तथाहि–एकान्तत एव**

( स्वो० व्या० )

१० एवं च सति **धर्माणामभ्यन्तरीकृतधर्मिस्वरूपत्वात्** इतरेतरव्याप्त्या **धर्मिणोऽपि चाभ्यन्तरीकृतधर्मस्वरूपत्वात्**[२] उक्तादेव हेतोः। किमित्याह–**भेदाभेद इति;** अन्यथा तत्तत्त्वायोगः[३] ॥

एवं च **प्रतीतिसचिवनिमित्तभेदे**–प्रतीतिसहायनिमित्तभेदे **सति,** धर्म-

१५ धर्मिणोर्भेदाभेदं प्रतीति प्रक्रमः। किमित्याह–**विरोधादित्यपि यदुक्तं** पूर्वपक्षे[४]–'**अथ येनैवाकारेण भेदस्तेनैवाभेदः**' इत्येतदप्यचारु, विरोधादित्येवम्। किमित्याह–**तदुक्तिमात्रमेव,** निरर्थकमित्यर्थः। **तथाहीत्यादि** भावना। तथाहीति पूर्ववत्। '**यदि येनाकारेण भेदः कथं तेनैवाभेदः?**', धर्म-धर्मिणोरिति वर्तते, '**अथाभेदः कथं भेद इति?**'। निमित्ताभेदेनेत्यर्थः। **अस्य वचनस्य**–पूर्वपक्ष-

२० सङ्गतस्य **उक्तवद् व्यपेतविषयत्वात्** व्यपेतविषयत्वं च **प्रकारान्तरेण**–जात्यन्तरात्मकत्वेन **भेदाभेदसिद्धेः। सर्वथाभेदाभेदवादिनस्तु**–एकान्तवादिनः। किमित्याह–**तदसत्त्वापत्तिलक्षणः**–धर्मिधर्मासत्त्वापत्तिलक्षणो **विरोधः**। किमित्याह–**अपरिहार्य एव**–अपरिहरणीय एव। एतदेव भावयति **तथाहीत्यादिना**।

( विवरणम् )

२५ इह द्विधा व्यावृत्तिः–अधर्मिव्यावृत्तिरूपा अधर्मव्यावृत्तिरूपा च। तत्रायं घटादिरर्थो धर्मीति कोऽर्थः?। अधर्मी न भवत्येवमधर्मित्वव्यावृत्तिमात्रमेव धर्मित्वं तथा नीलः धर्मः। पीतादि वा धर्म इति कोऽर्थः?। अधर्मो न भवति, इति अधर्मव्यावृत्तिमात्रमेव धर्मत्वम्, न पुनः कश्चिद् धर्मी धर्मो वा वास्तवः समस्ति, निरंशैकरूपत्वात् सर्वभावानामिति ॥

१ प्रेक्ष्यतां त्रयोदशं पृष्ठम्। २ 'भूतधर्म०' इति घ–ङ–पाठः। ३ 'तत्तत्त्वायोगः' इति ङ–पाठः। ४ त्रयोदशे पृष्ठे।

( मूलम् )

**धर्म-धर्मिणोर्भेदे धर्मिणो निःस्वभावत्वापत्तिः, स्वभावस्य धर्मत्वात् तस्य च ततोऽन्यत्वादिति । स्वो भावः स्वभावस्तस्यैवात्मीया सत्तेति शब्दार्थे न निःस्वभावत्वापत्तिरिति चेत्, न, ज्ञेयत्वादिधर्मा-**५ **ननुवेधे तदनवगतेः, तथापि तत्कल्पनेऽतिप्रसङ्ग इति ॥**

**धर्माणामपि तदभावे निराश्रयत्वात् केवलानां ग्रहणानुपपत्तेः तदितराननुवेधादभाव एवेति तदसत्त्वापत्तिः । एकान्ताभेदेऽप्य-न्यतराभावतस्तन्नान्तरीयकत्वात् तद्व्यतिरेकेण तत्स्वरूपानुपपत्तेः**

---

( स्वो० व्या० ) १०

तथाहीत्युपप्रदर्शने । **एकान्तत**[1] **एव धर्म-धर्मिणोर्भेदे**ऽभ्युपगम्यमाने सति किमिति आह—**धर्मिणो निःस्वभावत्वापत्तिः** । कुत इत्याह—**स्वभावस्य धर्मत्वात्**[2] । ततः किमित्याह—**तस्य च**—स्वभावस्य **ततः**—धर्मिणः **अन्यत्वादिति** । **स्वो भावः स्वभावस्तस्यैव**—धर्मिणः **आत्मीया सत्ता इति**—एवं **शब्दार्थे** सति **न निःस्वभावत्वापत्तिः** धर्मिणः । **इति चेत्**, एतदाशङ्क्याह—**ने**त्यादि । १५ न—नैतदेवम्, **ज्ञेयत्वादिधर्माननुवेधे** सति, 'आदि'शब्दात् प्रमेयत्वादिपरि-ग्रहः, **तदनवगतेः** तस्य—अधिकृतधर्मिणोऽनवगमात् । न ह्यज्ञेयस्वभावं सदपि ज्ञायत इत्यर्थः । **तथापीत्यादि** । तथापि—अनवगमेऽपि **तत्कल्पने**—धर्मिकल्पने **अतिप्रसङ्गः**, अन्यस्य कस्यचिदनवगतस्य कल्पनापत्तेरिति ॥

**धर्माणामपीत्यादि** । धर्माणामपि—ज्ञेयत्वादीनां **तदभावे**—धर्म्यभावे[3] **निरा-**२० **श्रयत्वात्**—निराधारत्वात् तथा **केवलानां ग्रहणानुपपत्तेः** तथाऽननुभवेन तथा **तदितराननुवेधात्**—ज्ञेयत्वादीनां सत्त्वाद्यननुवेधादभाव **एव इति**—एवं **तदसत्त्वापत्तिः**—धर्म-धर्मिणोरसत्त्वापत्तिः । **एकान्ताभेद इति** । तथा **एकान्तेत्यादि** । एकान्ताभेदेऽपि तदसत्त्वापत्तिरेवेति वक्ष्यमाणक्रियायोगः । कुत इत्याह—**अन्यतराभावतः** । एकान्ताभेदे हि धर्मिमात्रं वा स्याद् २५ धर्ममात्रं वेत्यन्यतराभावः[4] । ततः किमित्याह—**तन्नान्तरीयकत्वात्** यदभाव-स्तन्नान्तरीयकत्वात् कारणात्, धर्मनान्तरीयको धर्मी, धर्मिनान्तरीयकश्च धर्म इति कृत्वा । किमित्याह—**तद्व्यतिरेकेण**—धर्माद्यभावेन **तत्स्वरूपानुपपत्तेः**—

---

१ 'एकान्त एव' इति ङ-पाठः । २ 'धर्मित्वात्' इति ङ-पाठः । ३ 'धर्मभावे' इति ङ-पाठः । ४ 'चेत्यन्य०' इति ङ-पाठः ।

( मूलम् )

**निर्बीजकल्पनाऽसम्भवात्, अतिप्रसङ्गाव्याहतेः, अन्यतरभावस्यैव अन्यतरकल्पनाबीजत्वायोगात्, एकान्तैकस्वभावत्वहानेः, तथाविधैकस्वभावत्वस्य न्यायविरुद्धत्वात्, शक्तिभेदमन्तरेण कार्यभेदासिद्धेः, तदितरव्यावृत्तेरपि तत्त्वतस्तदव्यतिरेकात्, तद्भेदे च तद्भेदोपपत्तेः, अभिधानभेदतो धर्मसिद्धिप्रसङ्गादन्यतरस्याप्यभाव एवेति तदसत्त्वापत्तिरेव। एतेन 'अथ येनाप्याकारेण भेदस्तेनापि भेद-**

( स्वो० व्या० )

[1][न] यदभावस्तत्स्वरूपानुपपत्तेः [2]धर्म्यादिस्वरूपायोगात्, अन्यतरस्याप्यभाव एवेति सम्बन्धः। धर्माभावे धर्मिणोऽप्यभावः, धर्म्यभावे च धर्मस्याप्यभाव एवेति कृत्वा **तदसत्त्वापत्तिरेव**—धर्म-धर्मिणोरसत्त्वापत्तिरेव। कल्पितो धर्मधर्मिभाव इत्याशङ्काऽपोहायाह—**निर्बीजकल्पनाऽसम्भवात्** एकान्तैकस्वभावे वस्तुनि प्रवृत्तिनिमित्तमन्तरेण धर्मधर्मिकल्पनाऽसम्भवात्। असम्भवश्च **अतिप्रसङ्गाव्याहतेः** वान्ध्येयखरविषाणकल्पनासम्भवात्, उभयत्र कल्पनाबीजाभावाविशेषात्। **अन्यतरेत्यादि**। अन्यतर**भावस्यैव**—[3]धर्माद्यन्यतरभावस्यैव धर्माद्यन्यतर[4]सत्तायां एव **अन्यतरकल्पनाबीजत्वायोगात्**—धर्माद्यन्यतरकल्पना[5]कारणत्वायोगात्। अयोगश्च **एकान्तैकस्वभावत्व**[6]**हानेः**। न ह्येकान्तैकस्वभावमनेककल्पनाबीजम्। **तथाविधेत्यादि**। तथाविधैकस्व**भावत्वस्य**—धर्मधर्मिकल्पनाबीजैकस्वभावत्वस्य **न्यायविरुद्धत्वात्**—युक्तिविरुद्धत्वात्। न्यायविरुद्धत्वं च **शक्तिभेदमन्तरेण कार्यभेदासिद्धेः** एकशक्तिकात् ततो धर्मधर्मिकल्पनाकार्यभेदानुपपत्तेः। **तदितरेत्यादि**। तदितर[7]**व्यावृत्तेरपि**—धर्मधर्मिव्यावृत्तेरपि **तत्त्वतः**—परमार्थतः **तदव्यतिरेकात्**—एकस्वभाववस्त्वव्यतिरेकात् **तद्भेदे च**—व्यावृत्तिभेदे च **तद्भेदोपपत्तेः**—व्यावृत्तवस्तुभेदोपपत्तेः। एवं **चाभिधानभेदतः**—अभिधानभेदेन व्यावृत्तिलक्षणेन **धर्मसिद्धिप्रसङ्गाद्** व्यावृत्तीनामेव धर्मत्वेन तथा वस्तूनां भेदभावेन। न चैतदिष्यत इति **अन्यतरस्याप्यभाव एवेति**। तदसत्त्वापत्तिरेवेति [9]व्याख्यातमेतत्। **एतेने-त्यादि**। एतेन—अनन्तरोदितेन विरोधपरिहारेण अथ **'येनाप्याकारेण भेदः**

१ 'न यदभावस्तत्स्वरूपानुपपत्तेः' इति पाठो न विद्यते घ–पुस्तके। २ धर्मादि०' इति क–पाठः। ३ 'धर्माद्यन्यतरभावस्यैव' इति पाठो घ–पुस्तके नास्ति। ४ 'सत्ताया एव' इति घ–पाठः, ङ–पाठस्तु 'सत्त्वाया एव' इति। ५ 'करणत्वा०' इति क–पाठः। ६ 'हानिः' इति ङ–पाठः। ७ 'व्यावृत्तेरपि अधर्म०' इति क–पाठः। ८ 'भेदेऽपि व्यावृत्ति०' इति ङ–पाठः। ९ 'व्याख्यातमेव तत्' इति क–पाठः।

( मूलम् )

श्चाभेदश्च' इत्याद्यपि निराकृतमेव। अन्योन्यव्याप्तितो जात्यन्तरात्मकत्वेन भेदाभेदपक्षे तदसम्भवात् केवलाकारानुपपत्तेः, इतरानुविद्धस्य च प्रश्नानर्हत्वादिति ॥ ५

यच्चोक्तम्[2]-'किञ्च भेदाभेदमभ्युपगच्छता अवश्यमेवेदमङ्गीकर्तव्यम्-इह धर्मधर्मिणोर्धर्मधर्मितया भेदः, स्वभावतः पुनरभेदः' इत्यादि तदपि 'एकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् धर्मधर्मिभावेन भेदः'[3] 'मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योन्यानुवेधतोऽभेदः'[4] इत्यादिना प्रत्युक्तम्, प्रकारान्तरेण १० भेदाभेदसिद्धेः। तथा चोक्तम्[5]—

"नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः।
केवलोऽस्ति यतस्तेन कुतस्तत्र विकल्पनम्? ॥"[6]

( स्वो० व्या० )

तेनापि भेदश्चाभेदश्च' इत्याद्यपि पूर्वपक्षवचनं[7] निराकृतमेव। कुत इत्याह- १५ अन्योन्यव्याप्तितो जात्यन्तरात्मकत्वेन भेदाभेदपक्षे तदसम्भवात् तस्य-अथ येनाप्याकारेणेत्यादेर्विकल्पजातस्य असम्भवात्। उपपत्तिमाह-केवलाकारानुपपत्तेः अनन्तरोदितभेदाभेदपक्षे[8] इतरानुविद्धस्य च-भेदाकारानुविद्धस्य चाभेदाकारस्य प्रश्नानर्हत्वात् केवल्याभावेन नरसिंहे सिंहप्रश्नतुल्यत्वादिति ॥

यच्चोक्तं पूर्वपक्षग्रन्थे[9]-'किञ्च भेदाभेदमभ्युपगच्छता अवश्यमेवेदमङ्गीकर्तव्यमिह धर्मधर्मिणोः धर्मधर्मितया भेदः, स्वभावतः पुनरभेदः' इत्यादि, तदपि 'एकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् धर्मधर्मिभावेन भेदः' 'मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योन्यानुवेधतोऽभेदः' इत्यादिना पूर्वोक्तेन[10] प्रत्युक्तम्। कथमित्याह-प्रकारान्तरेण-अन्योन्यानुवेधलक्षणेन भेदाभेदसिद्धेः। तथा चोक्तं २५ वृद्धैः-नाभेदो धर्मधर्मिणोर्भेदरहितः, भेदो वा तयोरेव अभेदवर्जितः केवलोऽस्ति, यतस्तेन-कारणेन कुतस्तत्र-[11]भेदेऽभेदे वा विकल्पनम्? ।

१ अनेकान्तवादप्रवेशटिप्पनके द्वे पद्ये, यथाहि—
"न नरो नर एवेति न सिंहः सिंह एव वा।
शब्दविज्ञानकार्याणां भेदाज्जात्यन्तरं हि तत् ॥
न नरः सिंहरूपत्वात् न सिंहो नररूपतः।
सामानाधिकरण्येन नरसिंहः प्रतीतितः ॥"

२ चतुर्दशे पृष्ठे। ३ समीक्ष्यतां ६६तमं पृष्ठम्। ४ प्रेक्ष्यतां ६७तमं पृष्ठम्। ५ वृद्धैरिति। ६ अनुष्टुप्। ७ एतदर्थं प्रेक्ष्यतां त्रयोदशं पृष्ठम्। ८ 'अनन्तरोदिते भेदाभेद०' इति ङ-पाठः। ९ चतुर्दशे पृष्ठे। १० प्रेक्ष्यतां ६६तमं पृष्ठं ६७तमं च। ११ 'भेदाभेदविकल्पेनं' इति ङ-पाठः।

( मूलम् )

येनाकारेण भेदः किं तेनासावेव किं द्वयम्? ।
असत्त्वात् केवलस्येह सतश्च कथितत्वतः ॥[२]

५ यतश्च तत् प्रमाणेन गम्यते ह्युभयात्मकम् ।
अतोऽपि [२]जातिमात्रं तदनवस्थादिदूषणम् ॥[३]

एवं ह्युभयदोषादिदोषा अपि न दूषणम् ।
सम्यग् जात्यन्तरत्वेन भेदाभेदप्रसिद्धितः ॥[४]

( स्वो० व्या० )

१० किम्भूतमित्याह—येनेत्यादि । येन आकारेण भेदः किं तेनासावेव–भेद एव? किं द्वयं–भेदश्चाभेदश्च किम्? । इत्येवं विकल्पनमयुक्तमित्याह—असत्त्वात् केवलस्येह भेदस्याभेदस्य वा सतश्च–इतरानुविद्धतया शबलस्य कथितत्वतः कारणादिति ।

यतश्चेत्यादि । यतश्च–यस्माच्च कारणात् तत्–वस्तु प्रमाणेन–प्रत्यक्षेण १५ गम्यत एव उभयात्मकं–धर्मिधर्मात्मकम्, तथाप्रतीतेः । अतोऽपि कारणात् जातिमात्रं तत् । किमित्याह—अनवस्थादिदूषणम्, सति तस्मिंस्तदनवस्थिततया प्रमाणाप्रवृत्तेः ।

एवं हीत्यादि । एवमेव उभयदोषादि[५]दोषा अपि न दूषणम् । 'आदि'-

( विवरणम् )

२० (१६-१७) सति तस्मिंस्तदनवस्थिततया प्रमाणाप्रवृत्तेरिति । सति तस्मिन्–अनवस्थादिदूषणे तदनवस्थिततया–वस्तुनोऽनवस्थिततया प्रमाणस्याप्रवृत्तेः । यदि हि अनवस्थादोषो वास्तवः कश्चिद् वस्तुनि स्यात् तदाऽनवस्थितत्वेन तस्य न [६]नियतरूपमुभयात्मकवस्तुग्राहकतया [७]प्रमाणं–प्रत्यक्षादि तत्र प्रवर्तते । प्रवर्तते च तत्, अतो ज्ञायते उभयात्मकमेव वस्त्विति ॥

२५ (१८) उभयदोषादिदोषा अपीति । उभयदोषो नाम संशयदोषः [८]किममू द्रव्यपर्यायौ भिन्नौ [९]उतस्विदभिन्नौ, उभयोरप्याकारयोस्तत्र प्रतिभासनात्? ॥

१ अनुष्टुप् । २ असदुत्तरं जातिः, केवलमसदुत्तरमित्यर्थः । ३–४ अनुष्टुप् । ५ 'दोषोऽपि' इति क–पाठश्चिन्त्यः । ६ 'नियमरूप०' इति क–पाठः । ७ 'प्रमाणं प्रति प्रत्यक्षादि' इति ख–पाठः । ८ 'किंश्चिदरू(?)द्रव्य०' इति ख–पाठः; च–पाठस्तु 'किंश्चिदसूद्रव्य०' इति । ९ 'कुतश्चिदभिन्नौ०' इति क–पाठः ।

( मूलम् )

**तेनानेकान्तवादोऽयमज्ञैः समुपकल्पितः।**
**न युज्यते वचो वक्तुमिति न्यायानुसारिणः ॥"[1]**

**अपरस्त्वाह–सदसद्रूपं वस्त्वित्यत्र कथं धर्मधर्मिभावः?। कथं च न स्यात् सदसत्त्वयोर्धर्मत्वे तद्व्यतिरिक्तस्य वस्तुनोऽभावाद् धर्म्यसिद्धेः, तद्धर्मिभावे वा वस्तुत्वेन तद्व्यतिरिक्तधर्मानुपपत्तेरिति ? ॥** ५

**अत्रोच्यते–सदसत्त्वयोर्धर्मत्वे तत्समानपरिणामस्य वस्तुत्वाभिधानस्य धर्मित्वप्रतिज्ञानात्, तस्य च कथञ्चित् सदसत्त्वाभ्यामन्य-** १०

( स्वो० व्या० )

शब्दाद् वैयधिकरण्यपरिग्रहः। कुतो न दूषणमित्याह—**सम्यगि**त्यादि। सम्यक्–न्यायोपपन्नतया **जात्यन्तरत्वेन** हेतुना **भेदाभेदप्रसिद्धितः** कारणादिति। येनैतदेवं **तेने**त्यादि। तेन–कारणेन **अनेकान्तवादोऽयमज्ञैः समुपकल्पितो न युज्यते वचो वक्तुमिति**–एवं **न्यायानुसारिण** इति ॥ १५

**अपरस्त्वाह–सदसद्रूपं वस्त्वित्यत्र**–उभयरूपे तत्त्वे **कथं धर्मधर्मिभावः?**। कथमिति क्षेपे। नैवेत्यभिप्रायः। सिद्धान्तवाद्याह—**कथं च न स्याद्** धर्मधर्मिभाव इति ?। अत्राह–**सदसत्त्वयो**रित्यादि। सदसत्त्वयो**र्धर्मत्वे** सति **तद्व्यतिरिक्तस्य**–सदसत्त्वव्यतिरिक्तस्य **वस्तुनोऽभावात्** अपरस्य, तदुभयमात्रतया तस्येति भावः। **धर्म्यसिद्धेः** कारणान्न धर्मिधर्मभावः। **तद्धर्मिभावे वा** २० तयोः–सदसत्त्वयोर्धर्मित्वे वा **वस्तुत्वेन** हेतुना, तयोरेव वस्तुत्वादित्यभिप्रायः। किमित्याह–**तद्व्यतिरिक्तधर्मानुपपत्तेः**–सदसद्रूपवस्तुधर्मिव्यतिरिक्तधर्मानुपपत्तेर्न धर्मधर्मिभाव **इति**, न सदसत्त्वमात्रे वस्तुनि धर्मिण्यपरधर्मभाव इत्यर्थः ॥

**अत्रोच्यते–सदसत्त्वयोर्धर्मत्वे** सति। किमित्याह **त**दित्यादि। **तत्-समानपरिणामस्य** तयोः–सदसत्त्वयोस्तुल्यपरिणामस्य। किम्भूतस्येत्याह–**वस्तु-** २५ **त्वाभिधानस्य**, एतदभिधेयस्येत्यर्थः। किमित्याह–**धर्मित्वप्रतिज्ञानात्**

( विवरणम् )

(१२) **वैयधिकरिण्यपरिग्रह** इति। विभिन्नमधिकरणमस्येति व्यधिकरणस्तद्भावो वैयधिकरण्यं तस्य परिग्रहः। सत्त्वासत्त्वयोर्हि परस्परविरुद्धतया शीतोष्णस्पर्शयोरिव नैकमधिकरणमुपपद्यते। न हि यदेव शीतस्पर्शाधिकरणं तुषारादि तदेवोष्णस्पर्शस्यापि ३० व्यवह्रियते अनुभूयते वा, लोकेन व्यधिकरणत्वेन व्यवस्थितत्वात् तयोः ॥

१ अनुष्टुप्।

( मूलम् )

**त्वाद् धर्मधर्मिभावः। तथाहि–कथञ्चित् सदसत्त्वाभ्यामन्य एव तत्साधारणात्मा वस्तुत्वपरिणामः, तथाऽनुभवसिद्धत्वात्, वस्तु ५ इत्येकरूपतया प्रतीतेः। न चेयं तदुभयमात्रनिबन्धनैव, प्रतिभास-भेदात्। एवमपि तन्निबन्धनत्वाभ्युपगमेऽतिप्रसङ्गात्, रूपमात्रादेव तद्रसादिप्रतीतिसिद्धेः। न चैतदतन्त्रानुपाति, तुल्यांशस्य द्रव्यत्वा-भ्युपगमात्, अस्य च तद्भावोपपत्तेरिति ॥**

( स्वो० व्या० )

१० कारणात् **तस्य च**–वस्तुसमानपरिणामस्य **कथञ्चित्**–प्रतिभासभेदादिहेतुतया **सद-सत्त्वाभ्यां** सकाशात् **अन्यत्वात्**। किमित्याह–**धर्मधर्मिभावः**, तत्समानपरि-णामस्य धर्मित्वात् तयोश्च धर्मत्वादित्यर्थः। एतदेव भावयति **तथाहीत्यादिना**। तथाहीति पूर्ववत्। **कथञ्चित्**–केनचित् प्रकारेण **सदसत्त्वाभ्यां** सकाशात् **अन्य एव तत्साधारणात्मा**–सदसत्त्वसाधारणात्मा **वस्तुत्वपरिणामो** १५ धर्मिरूपः। कुत इत्याह–**तथाऽनुभवसिद्धत्वात्**। तथा–तद्देशनियततया तदतिरिक्तानुभवसिद्धत्वात्। एतदेवाह–**वस्त्विति**–एवम् **एकरूपतया प्रतीतेः** कारणात्। **न चेयं** प्रतीतिः **तदुभयमात्रनिबन्धनैव**–सदसत्त्वोभयमात्र-कारणैवैकान्तेन। कुत इत्याह–**प्रतिभासभेदात्**। प्रतिभासः–आकारः। **एवमपि**–प्रतिभासभेदेऽपि सति **तन्निबन्धनत्वाभ्युपगमे**, प्रक्रमाद् वस्त्विति २० प्रतीतेः, तदुभयमात्रनिबन्धनत्वाङ्गीकरणे। किमित्याह–**अतिप्रसङ्गात्**। एनमे-वाह–**रूपमात्रादेव** सकाशात् **तद्रसादिप्रतीतिसिद्धेः** तस्मिन्–अधिकृत-वस्तुनि रसादिप्रतीतिसिद्धेः, अन्यत एवान्याकारविज्ञानभावेन। एवं च रसाद्य-भावप्रसङ्गात् इति भावनीयम्। **न चैतदित्यादि**। न चैतत् समानपरिणामस्य वस्तुनो धर्मित्वप्रतिज्ञानम् **अतन्त्रानुपाति**, तन्त्रविरोधीत्यर्थः। कुत इत्याह– २५ **तुल्यांशस्य द्रव्यत्वाभ्युपगमात्**, द्रव्यार्थपर्यायार्थचिन्तायां वृद्धग्रन्थेषु **अस्य च**–तत्समानपरिणामस्य **तद्भावोपपत्तेः**–तुल्यांशत्वोपपत्तेरिति ॥

( विवरणम् )

**(१५-१६) तद्देशनियततया तदतिरिक्तानुभवसिद्धत्वात्** इति। **तद्देशनियत-तया**–सत्त्वासत्त्वधर्माक्रान्तप्रदेशप्रतिबद्धतया **तदतिरिक्तानुभवेन**–**कथञ्चित् सत्त्वा-** ३० **सत्त्वातिरिक्तानुभवेन सिद्धत्वात् समानपरिणामलक्षणस्य धर्मिणः** ॥

---

१ 'पर्यायार्थचिन्ताया वृद्ध०' इति ङ–पाठः। २ 'तदव्यतिरिक्त०' इति क–पाठः। ३ 'भवने' इति च–पाठः।

( मूलम् )

तद्धर्मिभावेऽपि वस्तुत्वेन चेतनत्वा-ऽचेतनत्व-मूर्त्तत्वा-ऽमूर्त्तत्व-ज्ञेयत्व-प्रमेयत्वादिधर्मसिद्धेर्धर्मधर्मिभावोपपत्तिरेव। न च सदसती एव चेतनत्वादि, तन्मात्रतत्त्वे सर्वत्र तद्भावप्रसङ्गात् साङ्कर्येण चेतन- ५ त्वाद्यभावः। न च विशिष्टे सदसती एव तत्, भेदकमन्तरेण विशिष्टत्वासिद्धेः, तन्मात्रत्वाविशेषात्। इति कथञ्चित् तदतिरिक्त-चेतनत्वादिसिद्धिः; अन्यथा तज्ज्ञानायोगात् [1]निर्विषयत्वात् ॥

( स्वो० व्या० )

पक्षान्तरमधिकृत्य समाधिमाह तद्धर्मिभावेऽपीत्यादिना। तद्धर्मिभावेऽपि–तयोः १० सदसत्त्वयोर्धर्मित्वेऽपि वस्तुत्वेन हेतुना। किमित्याह–चेतनत्वा-ऽचेतनत्व-मूर्त्तत्वा-ऽमूर्त्तत्व-ज्ञेयत्व-प्रमेयत्वादिधर्मसिद्धेः। विज्ञानघटादिषु धर्म-धर्मिभावोपपत्तिरेव सदसत्त्वयोर्धर्मित्वे चेतनत्वादीनां धर्मत्वादिति। न चेत्यादि। न च सदसती एव सत्त्वमसत्त्वं चेत्यर्थः। किमित्याह–चेतनत्वादि। [2]चेतनत्वमचेतनत्वं चेत्यादि। कुत इत्याह–तन्मात्रेत्यादि। तन्मात्रतत्त्वे १५ तन्मात्रस्य–सदसन्मात्रस्य तत्त्वे–[3]चेतनादितत्त्वे सर्वत्र अविशेषेण तद्भाव-प्रसङ्गात्–चेतनत्वादिभावप्रसङ्गात्। एवं च सर्वत्र तद्भावे साङ्कर्येण हेतुना चेतनत्वाद्यभावः–चेतनत्वाचेतनत्वाद्यभावः, मिथो विरुद्धानामन्योन्यात्मता-भावादित्यर्थः। न चेत्यादि। न च विशिष्टे केनचिद् रूपेण सदसती एव तत्–चेतनत्वादि। कुत इत्याह–भेदकमन्तरेण [4]वस्त्वन्तरं विशिष्टत्वासिद्धेः। २० अत्रैव युक्तिमाह–तन्मात्रत्वाविशेषात्–सदसन्मात्रत्वाभेदाद् भावनीयमेतत्। इति–एवं कथञ्चित्–केनचित् प्रकारेण तद्भेदकत्वलक्षणेन तदतिरिक्तचेतन-

( विवरणम् )

(१२) ज्ञेयत्वप्रमेयत्वादिधर्मसिद्धेरिति। अत्र ज्ञेयत्वं [6]सामान्योपयोगः, प्रमेयत्वं तु विशेषपरिच्छेद इति ॥ २५

(१८-१९) मिथो विरुद्धानामन्योन्यात्मताभावादिति। यदा हि परस्परविरुद्धा अपि चेतनाचेतनाश्च भावाः सदसन्मात्रैकरूपतया धर्मान्तरस्य भेदकारिणोऽभावा-देकरूपतां प्रतिपद्यन्ते, तदा न किञ्चिच्चेतनमचेतनं वा नियतरूपतया वस्तु व्यवहार-पथावतारि स्यादिति ॥

१ 'निर्विषयत्वात्' इति पाठान्तरं समसूचि ग-प्रतौ। २ 'चेतनमचेतनं चेत्यादि' इति क-पाठः। ३ 'चेतनादितत्त्वे सर्वत्राऽविशेषेण' इति घ-पाठः। ४ 'वस्त्वन्तरविशिष्ट०' इति घ-पाठः। ५ 'धर्मसिद्धि-रिति' इति क-च-पाठः। ६ 'सामान्यत्वोपयोगः' इति च-पाठः। ७ 'चेतनस्वभावाः' इति च-पाठः।

( मूलम् )

शक्तिभेदमन्तरेणैकतोऽनेककार्यासिद्धेरिति[1]। एवमितरेतरानुविद्ध-तुल्येतरानेकान्तात्मकत्वे वस्तुनः प्रतिपत्रनुरोधतस्तथा[2] तथा धर्म-
५ धर्मिभावो न विरुध्यत इति ॥

यदप्युक्तम्[3]–'संविन्निष्ठा विषयव्यवस्थितयः, न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावात्' इत्यादि, तदपि असाम्प्रतम्, उभयरूपस्य [4]संवेदनस्याभावासिद्धेः, सदसद्रूपस्य वस्तुनो व्यवस्थापितत्वात्, संवेदनस्यापि च वस्तुत्वात्, तथायुक्तिसिद्धेश्च।
१० तथाहि–संवेदनं पुरोऽवस्थिते घटादौ तद्भावेतराभावाध्यवसायरूपमेवोपजायते, तद्भावमात्रस्येतराभावाननुविद्धस्याभावापत्तितस्तद-

( स्वो० व्या० )

त्वादिसिद्धिः–सदसदतिरिक्तचेतनत्वादिसिद्धिः । इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथेत्यादि । अन्यथा–एवमनभ्युपगमे तज्ज्ञानायोगात्–चेतनत्वादिज्ञाना-
१५ योगात् । अयोगश्च निर्विषयत्वात् सदसतोस्तदभावेन ॥

अथ सदसती एव विषय इत्याशङ्क्याह–शक्तिभेदमन्तरेणैकतः–सदसदादेः अनेककार्यासिद्धेः–[5]तच्चेतनाद्यनेकज्ञानकार्यासिद्धेः इति । उपसंहरन्नाह–एवमित्यादि । एवम्–उक्तेन प्रकारेण इतरेतरानुविद्धाश्च ते तुल्येतरानेकान्ताश्चेति विग्रहः । तदात्मकत्वे सति वस्तुनः [6]प्रतिपत्रनुरोधतो यो यथा प्रतिपत्ता
२० तदनुरोधेन तथा तथा–उक्तवत् तेन तेन प्रकारेण धर्मधर्मिभावो न विरुध्यते, उभयनिमित्तयोगात् इति ॥

यदप्युक्तं[7] पूर्वपक्षग्रन्थे 'संविन्निष्ठा विषयव्यवस्थितयः, न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावात्' इत्यादि तदपि असाम्प्रतम्–अशोभनम् । कुत इत्याह–उभयरूपस्य संवेदनस्याभावा-
२५ सिद्धेः कारणात् । असिद्धिरपि सदसद्रूपस्य वस्तुनो व्यवस्थापितत्वात्, तथा संवेदनस्यापि च वस्तुत्वात् तथायुक्तिसिद्धेश्च । एनामेव दर्शयति तथाहीत्यादिना । तथाहीत्युपप्रदर्शने । संवेदनं–विज्ञानं पुरोऽवस्थिते घटादौ

( विवरणम् )

(११) अभावापत्तितस्तदनुवेधे सतीति सौत्रं पदम् । यदि हि घटादिसत्त्वम्
३० अघटासत्त्वेनानुविद्धं न स्यात् तदा कथं घटः सकलप्रमातृभिर्विविक्तरूपतया परि-

१ 'ऽकतो नैककार्या०' इति क–पाठः । २ 'रोधतस्तथा धर्म०' इति घ–पाठः । ३ पञ्चदशे पृष्ठे । ४ अत आरभ्य 'व्यवस्थितत्वात्' पर्यन्तः पाठो नास्ति ग–प्रतौ । ५ 'तच्चेतनत्वाद्यनेक०' इति घ–पाठः । ६ 'प्रतिपत्तेरनु०' इति ङ–पाठः । ७ पञ्चदश पृष्ठे ।

( मूलम् )

**नुवेधे [1]वस्तुस्थित्या स्वप्रतिभासिसंवेदनाजनकत्वे तद्ग्रहणानुपपत्तेः। न च सदसद्रूपे वस्तुनि सन्मात्रप्रतिभास्येव तत्त्वतस्तत्प्रतिभासि, सम्पूर्णार्थाप्रतिभासनात्, नरसिंहे सिंहसंवेदनवत्। न चैतदुभय- ५ प्रतिभासि न संवेद्यते, तदन्यविविक्तताविशिष्टस्यैव संवित्तेस्तदन्य- विविक्तता चाभाव इति सूक्ष्मधिया भावनीयम्॥**

( स्वो० व्या० )

विषये **तद्भावेतराभावाध्यवसायरूपमेव**—घटभावा-ऽघटाभावपरिच्छेदरूपमेव **उपजायते, तद्भावमात्रस्य**—घटभावमात्रस्य **इतराभावाननुविद्धस्य**— १० अघटाभावाननुविद्धस्य । किमित्याह—**अभावापत्तितो** वस्तु[2]स्थित्याऽघटत्वेन **तदनुवेधे**—अन्यासत्त्वानुवेधे सति **वस्तुस्थित्या**—परमार्थवृत्त्या **स्वप्रतिभासि- संवेदनाजनकत्वे,** उभयरूपसंवेदनाजनकत्वे इत्यर्थः । किमित्याह—**तद्ग्रहणा- नुपपत्तेः** तस्य—उभयरूपस्य वस्तुनो ग्रहणानुपपत्तेरिति । यद् यथारूपं तत् तथा गृह्यमाणं कथं गृहीतं नामेति भावनीयम् । **न** चेत्यादि । न च **सदसद्रूपे वस्तुनि** १५ उभयात्मके **सन्मात्रप्रतिभास्येव,** संवेदनमिति गम्यते, **तत्त्वतस्तत्प्रति- भासि**—सदसद्रूपवस्तुप्रतिभासि । कुत इत्याह—**[3]सम्पूर्णार्थाप्रतिभासनात्**— असत्त्वाप्रतिभासनेन । **नरसिंहे सिंहसंवेदनवद्**िति निदर्शनम् । न सिंहसंवेदनं **नरसिंह**प्रतिभासि, एवं च वस्तुनोऽग्रहणमेवेति । **न** चेत्यादि । न च **एतत्**— संवेदनम् **उभयप्रतिभासि,** प्रक्रमात् सदसदुभयप्रतिभासात् सदसदुभयप्रति- २० भासनशीलम्, **न संवेद्यते,** किन्तु संवेद्यते एव । युक्तिमाह—**तदन्यविविक्तता- विशिष्टस्यैव**—संवेदनान्तरविविक्तताविशिष्टस्यैव **संवित्तेः** कारणात्, **[4]तदन्य- विविक्तता चाभावस्तदन्येषां** तत्र **इति सूक्ष्मधिया भावनीयम्,** उक्त- [5]नीत्यैव 'न ह्यसति [6]चेतनात्वेऽणुश्चेतनास्वभावो नाम' [7]इत्यादिलक्षणया ॥

( विवरणम् )　　२५

च्छिद्यमानो घटते ? । अतो नियमात् तत्र अघटासत्त्वानुवेधोऽभ्युपगन्तव्यः; अन्यथा वस्तुनोऽभावापत्तिः । अतोऽभावापत्तितः सकाशात् तदनुवेधे—सत्तानुवेधे सति स्वप्रतिभासे(? सी)त्यादि योजनीयम् ॥

१ अतः परं 'सदसद्रूपे'पर्यन्तकः पाठः क-प्रतौ नास्ति । २ 'स्थित्या घटत्वेन' इति क-पाठः । ३ 'असम्पूर्णा०' इति क-पाठः । ४ 'तदन्यसंविविक्तता' इति क-पाठः । ५ 'नीत्यैवं न' इति ङ-पाठः । ६ 'चेतनात्वेऽणु०' इति घ-पाठः । ७ प्रेक्ष्यतां ४२तमं पृष्ठम् ।

( मूलम् )

**तदेवासहायं तदन्यविविक्तमिति चेत्, को वा किमाह ?। किन्तु तदेवासहायत्वं सहायाभावं भेदकमन्तरेण ससहायस्येव न युज्यत**
५ **इति ब्रूमः। असहायं च घटोऽयं न पटादीति क्षयोपशमानुरूपमपरित्यक्तान्योन्यगर्भं संवेदनमाविद्वदङ्गनादिप्रतीतमित्यविषयोऽयं विवादस्य। न चैतदनर्थजम्, तद्भावभावित्वोपलब्धेः, तदन्यस्य तु तदाभासत्वात्, तस्यापि च कदाचित् तथाविधानुभवनिबन्धनत्वेन अनिमित्तत्वायोगादिति ॥**

१० ( स्वो० व्या० )

**तदेवे**त्यादि । तदेव—अधिकृतसंवेदनम् **असहायम्**—अन्यरहितं **तदन्यविविक्तं**—संवेदनान्तरविविक्तम्। **इति चेत्**, एतदाशङ्क्याह—**को वा किमाह ?**। इत्थमेवैतदित्यर्थः। **किन्त्वि**त्यादि । किन्तु **तदेवासहायत्वम्**—अन्यरहितत्वं **सहायाभावं** मुख्यं **भेदकमन्तरेण**—विना **ससहायस्येव**—अपरस्य **न युज्यते**
१५ **इति ब्रूमः**, न तु किञ्चिदन्यत्। प्रकृतयोजनामाह—**असहायं चे**त्यादि। असहायं च—तदन्यविविक्तं च। कथमित्याह—**घटोऽयं न पटादीति**—एवं **क्षयोपशमानुरूपं** तदनन्तधर्मकत्वेऽपि नियमप्रवृत्त्या, **अपरित्यक्तान्योन्यगर्भम्**, इतरेतरानुवेधात्, **संवेदनमि**ति विशेष्यम्। **आविद्वदङ्गनादि**[1]**प्रतीतम्**, सकललोकप्रसिद्धमित्यर्थः। इति—एवं प्रतीतत्वादेव [2]**अविषयोऽयं विवादस्य**, अतो यादृश-
२० मिदं तादृशोऽर्थोऽपीति भावः। **न चैत**दित्यादि। न चैतत्—अन्तरोदितं संवेदनम् **अनर्थजम्** [3]अवस्तुनिमित्तम्। कुत इत्याह—**तद्भावभावित्वोपलब्धेः**—अर्थभावे भावित्वोपलब्धेरस्य परिणाम्यर्थग्रहणस्वभावतया न विरुद्धैवेयमिति भावनीयम्। क्वचिदेतदर्थाभावेऽपि भवति [4]विकल्पजमित्याशङ्कानिरासार्थमाह—**तदन्यस्ये**त्यादि । तदन्यस्य तु—अनर्थजस्याधिकृतसंवेदनतुल्यस्य तु **तदाभासत्वात्**—संवेदनाभास-

२५ ( विवरणम् )

(१७) **तदनन्तधर्मकत्वेऽपि नियमप्रवृत्त्येति**। यदि हि विषयवस्तु[5]मात्राधीनमेव संवेदनं [6]प्रवर्तेत तदाऽनन्तधर्मणो विषयस्य भावात् हेलयैव सकलधर्मावगमः सकलप्रमातॄणां प्रसज्येत। न चैवं दृश्यते। अतो नियतेनैव रूपेण [7]यद् विज्ञानं विजृम्भते तज्ज्ञायते। नूनं कश्चिदन्यो नियमहेतुरस्ति, स च ज्ञानावरणादिकर्म-
३० क्षयोपशम एवेति ॥

१ 'प्रसिद्धम्' इति क-पाठः। २ 'अविषयो विवादस्य' इति ङ-पाठः। ३ 'न वस्तु०' इति ङ-पाठः। ४ 'विकल्पकमित्या०' इति ङ-पाठः। ५ 'मात्राधीनं संवेदनं' इति क-पाठः। ६ 'प्रवर्तते' इति क-पाठः। ७ 'यदि ज्ञानं' इति क-पाठः।

( मूलम् )

अत्राह–अस्त्येतदुभयविधं संवेदनम् । नास्यापह्नुतिरास्थीयते, किन्त्वेतदपास्तकल्पनानुबन्धेन संवेदनेनैकस्वभावे एवावबुद्धे बोध्ये तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयम्, न पुनर्भावाभावात्मक- ५ वस्तुप्रभवम्, इति न सूक्ष्मधिय आस्थामनोरथं पूरयति, यतोऽभावस्य कृत्यक्रियासु उपरतव्यापारतयाऽभावत्वम् । यद्यसावपि कार्य-

( स्वो० व्या० )

त्वात्, तथाविधनिर्विकल्पकवदिति हृदयम्, तस्यापि च–तदाभासस्य कदाचित् वाऽमुत्र[1] वा तथाविधानुभवनिबन्धनत्वेन–तत्तदध्यारोपानुभवनिबन्धनत्वेन १० हेतुना। किमित्याह–अनिमित्तत्वायोगात् कारणात्। न चैतदनर्थजमिति योगः॥

अत्राह–अस्त्येतदुभयविधम्–उभयप्रकारं संवेदनम् । नास्यापह्नुतिरास्थीयतेऽस्माभिः, किन्त्वेतत्–उभयविधं संवेदनम् अपास्तकल्पनानुबन्धेन[2]–निरस्तकल्पनासम्बन्धेन[3], निर्विकल्पकेनेत्यर्थः । [4]संवेदनेन–विज्ञानेन एकस्वभाव एव–न नानास्वभावे अवबुद्धे–अवगते बोध्ये वस्तुनि भूयः १५ तदनुभवसामर्थ्यसमुत्थापितं–यथोदितानुभववीर्यजनितं[5] विकल्पद्वयं घटः अयं न पटादीत्येतदिह वर्तते, न पुनर्भावाभावात्मकवस्तुप्रभवम्, निर्विषयत्वात् विकल्पानाम् इति–एवं न सूक्ष्मधियः–निपुणमतेः आस्थामनोरथं पूरयति एतद् विकल्पद्वयम्। अत्रैव युक्तिमाह–यत इत्यादिना। यतो–यस्मात् अभावस्य कृत्यक्रियासु–अर्थक्रियासु उपरतव्यापारतया कारणेन अ- २० भावत्वम्, नान्यथा। इत्थं चैतदङ्गीकर्तव्यमित्याह–यद्यसावपि–अभावः कार्य-

( विवरणम् )

(१०) तदध्यारोपानुभवनिबन्धनत्वेनेति[6] । [7]शशिशङ्खपीतभावमरुमरीचिकाद्विचन्द्रादिषु योऽध्यारोपः असत्यपि तथाभूते विषयवस्तुनि तथाकारावभासलक्षणः। स चासावनुभवश्च स निबन्धनं यस्य स तथा, तद्भावस्तत्त्वं तेन । इदमुक्तं भवति– २५ योऽयं साम्प्रतं मरुमरीचिकादौ वितथार्थः प्रतिभासः प्रथते स नूनं तथाविधदोषादिह लोके परलोके वा तथाविधावभासस्य प्राक् सत्तायां सत्यां न पुनरन्यथा, अतः प्राक्प्रवृत्तमरुमरीचिकाप्रतिभासपूर्वक एव साम्प्रतो मरुमरीचिकादिप्रतिभासः अनादित्वात् संसारस्य ॥

१ 'चामुत्र' इति क–पाठः। २ 'नानुवेधेन' इति क–घ पाठः। ३ 'संवेधेन' इति ङ–पाठः। ४ 'स्वसंवेदने' इति ङ–पाठः। ५ 'सामर्थ्यसमुत्थापितं यथोदितानुभववीर्य०' इति ङ–पाठः। ६ 'समारोपानुभव०' इति ख–पाठः। ७ 'शशिश्वेत०' इति च–पाठः।

( मूलम् )

**क्रियासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यात्? । अतो व्युपरतेऽक्षव्यापारेऽर्थपरिच्छेदानुभवसंस्कारप्रसूतो ५ नास्तिताविकल्पः स्वातन्त्र्यं परिहरतीति ॥**

**अत्रोच्यते—'तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयम्'[१] इत्यनवद्यमेव, किन्तु न तद्द्वयनिमित्तस्वभावतामन्तरेणास्माद् द्वयप्रसूतिः, हेत्वभेदेऽपि फलभेदाभ्युपगमेऽभ्युपगमविरोधात् । उपादानहेत्वभेदे सति स विरोधः । न च तत्सामर्थ्यमुपादानमस्य, अहेतुकं तर्ह्येतत् १० सौत्रान्तिकपक्षे तदपरस्याभावात्, तस्यैव वासनादित्वात् ।**

( स्वो० व्या० )

**क्रियासु**—अर्थक्रियासु **कक्षां बध्नीयात्**—यत्नं कुर्यात् कस्तर्हि **भावात्** सकाशात् **अभावस्य**—तुच्छस्य **भवता**—भावाभावात्मकवस्तुवादिना **विशेषो दर्शितः स्यात्?** । न कश्चिदित्यर्थः । **अतः**—अस्मात् कारणात् **व्युपरतेऽक्षव्यापारे** १५ तदुत्तरकालम् **अर्थपरिच्छेदानुभवसंस्कारप्रसूतः**, निर्विकल्पकसामर्थ्योद्भूत इत्यर्थः । **नास्तिताविकल्पः**—न पटादीत्यादिरूपः **स्वातन्त्र्यं परिहरतीति** । अभावाक्षसम्बन्धाभावेन भावमात्रवस्त्वनुभवपरतन्त्र इत्यभिप्रायः । एष पूर्वपक्ष[२] इति ॥

**अत्रोच्यते** समाधिः—**तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयमित्यनवद्यमेव**—अपापमेव, **किन्तु** इदमवद्यं **न तद्द्वयनिमित्तस्वभावता-** २० **मन्तरेण** । नेति प्रतिषेधे । तच्च तद् द्वयं च तद्द्वयम्—अधिकृतविकल्पद्वयम्, तस्य निमित्तस्वभावता—कारणस्वभावता तद्द्वयनिमित्तस्वभावता, तामन्तरेण—विना । **अस्मात्**—अर्थपरिच्छेदानुभवसंस्काराद् **द्वयप्रसूतिः**, द्वयमिति विकल्पद्वयम् । कुतो न प्रसूतिरित्याह—**हेत्वभेदेऽपि** सति **फलभेदाभ्युपगमे** क्रियमाणेऽभ्युप**गमविरोधात्**, "अयमेव हि भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः २५ कारणभेदश्च"[३] इत्यभ्युपगमात् । **उपादानहेत्वभेदे सति स विरोधः**—अभ्युपगमविरोधः । **न च तत्सामर्थ्यम्**—अर्थपरिच्छेदानुभवसंस्कारलक्षणम्, **उपादानमस्य**—अधिकृतविकल्पद्वयस्य, अतोऽयं न दोष इत्यभिप्रायः । एतदाशङ्क्याह—**अहेतुकं तर्ह्येतत्**—विकल्पद्वयम् । कुत इत्याह—**सौत्रान्तिकपक्षे**—बाह्यार्थवादिमते **तदपरस्य**—यथोदितसामर्थ्यातिरिक्तस्य **अभावात्** कारणात् । ३० वासनादि तदित्याशङ्कापोहायाह—**तस्यैव वासनादित्वात्**, न ह्यधिकृत-

---

१ प्रेक्ष्यतां ७९तमं पृष्ठम् । २ 'इति' इति पाठो न विद्यते घ-पुस्तके । ३ प्रेक्ष्यतां ४९तमं पृष्ठम् ।

( मूलम् )

**न च तत्त्वतस्तन्नीतावुपादानेतरहेत्वोर्भेदसिद्धिः, हेतुलक्षणाविशेषात्, विशिष्टलक्षणायोगाच्च ॥**

**न चासाधारणादिहेतुतया तत्सिद्धिः, आद्यस्यासम्भवात्, एकस्यैवानेककार्यकृत्त्वात् सर्वबुद्धैर्ज्ञप्तेः, अन्यथा तदतत्त्वप्रसङ्गः। स्वभावभेदमन्तरेण चाधिकृतसामर्थ्यस्यापि तदुभयनिमित्तत्वानुपपत्तेः तदेकत्वापत्तिः। तथाहि–येन स्वभावेन तदेकस्य निमित्तं तेनैवापर-** ५

( स्वो० व्या० )

सामर्थ्यातिरिक्तमन्यद् वासनादि, अनभ्युपगमात्; योगाचारपक्षे त्वालयमधिकृत्य [1]उपरिष्टाद् वक्ष्यामः। **न चे**त्यादि। न च **तत्त्वतस्तन्नीतौ** सामान्येनैव **उपादानेतरहेत्वोः** नाममात्रकल्पितयो**र्भेदसिद्धिः**। कुत इत्याह–**हेतुलक्षणाविशेषात्** सामान्येन **विशिष्टलक्षणायोगाच्च** द्वयोरपि ॥ १०

**न चे**त्यादि। न च **असाधारणादिहेतुतया** [2]असाधारण उपादानहेतुः साधारणस्त्वितर इत्येवम्भूतया **तत्सिद्धिः**–उपादानेतरहेत्वोर्भेदसिद्धिः। कुत इत्याह–**आद्यस्य**–असाधारणस्य हेतोः **असम्भवात्**। कथमसम्भव इत्याह–**एकस्यैवे**त्यादि। एकस्यैव–वस्तुनो**ऽनेककार्यकृत्त्वात्**–[3]अनेककार्यकरणशीलत्वात्। एतदेवाह–**सर्वबुद्धैः**–सर्वज्ञैर्ज्ञप्तेरेकस्य। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथे**त्यादि। अन्यथा–एवमनभ्युपगमे **तदतत्त्वप्रसङ्गः** तेषां–बुद्धानामबुद्धत्वप्रसङ्गः, तदेकापरिज्ञाने तत्सर्वज्ञत्वाभावादित्यर्थः। प्रकृतमेवाधिकृत्याह–**स्वभावे**त्यादि। **स्वभावभेदमन्तरेण चाधिकृतसामर्थ्यस्यापि** उपन्यस्तविकल्पद्वयनिमित्तस्य **तदुभयनिमित्तत्वानुपपत्तेः** तच्च तत् उभयं च तदुभयं–प्रक्रान्तविकल्पोभयं [4]तत्कारणत्वानुपपत्तेः कारणात्। किमित्याह–**तदेकत्वापत्तिः** तस्य–प्रक्रान्तविकल्पोभयस्यैकत्वापत्तिः। एतदेव भावयति **तथाही**त्यादिना। १५ २०

( विवरणम् )

(१८) **सर्वज्ञैर्ज्ञप्तेरेकस्येति**। यदा सर्वेऽपि बुद्धाः सर्वात्मना सर्वमपि वस्तु अतीतानागतवर्तमानभेदभिन्नं पश्यन्ति तदा न किञ्चिद् विषयवस्तु कस्यचिद् बुद्धज्ञानस्यासाधारणरूपेणालम्बनभावं प्रतिपद्यते; अतो विवक्षितबुद्धज्ञानस्य य उपादानहेतुः कल्प्यते, सोऽपि न तत्र साधारणभावेन व्यावृत्तः, विवक्षितबुद्धव्यतिरिक्तबुद्धज्ञानानां तस्यालम्बनत्वादिति ॥ २५ ३०

१ 'उपरिष्टात्' इति घ–पाठः। २ 'असाधारणोपा०' इति क–पाठः। ३ 'नानेककार्यकारित्वं साधारणत्वं' इति टिप्पणकं ङ–प्रतौ। ४ 'तत्कारणानुपपत्तेः' इति ङ–प्रतौ।

(मूलम्)

**स्येति तद्वत् तदितरस्यापि तत्त्वम्, [1]तत्तत्त्वान्यथाऽयोगात्, तदुभय-निमित्तत्वै[2]कभावत्वे चित्रतया तद्भेदसिद्धेः, इति भावाभावात्मक-वस्तुप्रभवमेव तद्विकल्पद्वयम्, पारम्पर्येण तन्निमित्तत्वात्। अतोऽ-त्यन्तसूक्ष्मधियः किं नास्थामनोरथं पूरयतीति वाच्यम्? ॥**

**यदपि चोक्तम्[3]–'यतोऽभावस्य कृत्यक्रियासु उपरतव्यापारतयाऽ-भावत्वम्' इत्येतदपि न नो बाधायै, पररूपेणार्थक्रियाऽकरणात् तद्रूपस्य च तत्राभावात्। ततश्च 'यद्यसावपि कार्यक्रियासु कक्षां**

(स्वो० व्या०)

तथाहीत्युपप्रदर्शने। **येन स्वभावेन तत्**–अधिकृतसामर्थ्यम्, **एकस्य निमित्तम्**, प्रक्रमात् विकल्पस्य, **तेनैव**–स्वभावेन **अपरस्य**–विकल्पस्य **इति**–एवं **तद्वत्**–एकविकल्पवत्[4] **तदितरस्यापि**–अपरविकल्पस्यापि **तत्त्वम्**–एकविकल्पत्वम्। कुत इत्याह–**तत्तत्त्वान्यथाऽयोगात्**, तस्य–अधिकृतसामर्थ्यस्वभावस्य तत्त्वं येनैव तेनैवेत्यनेन प्रकारेणैकत्वं तत्तत्त्वं [5]तदन्यथाऽयोगात्, न हि तदेवाकुर्वतस्तत्तत्त्वमिति भावनीयम्। तदुभयनिमित्तत्वैकस्वभावत्वेऽस्यादोष[6] इति विभ्रमव्यपोहायाह–**तदुभ-येत्यादि**। तदुभय**निमित्तत्वम्**–अधिकृतविकल्पोभयनिमित्तत्वमेव **एको भावः**–स्वभावो यस्याधिकृतसामर्थ्यस्य तत्तदुभयनिमित्तत्वैकभावं तद्भावस्तस्मिन् सति **चित्रतया** कारणेन, न ह्यनेकगर्भमेकमचित्रं नामेत्यर्थः। **तद्भेदसिद्धेः**–प्रक्रमा-दधिकृतसामर्थ्यस्य स्वभावभेदसिद्धेः **इति**–एवमुक्तनीत्या **भावाभावात्मक-वस्तुप्रभवमेव तत्**–अधिकृत**विकल्पद्वयम्**। कुत इत्याह–**पारम्पर्येण तन्निमित्तत्वात्**–तदुद्भवान्निर्विकल्पकादुत्पत्तेरिति[7]। न हि शुक्लवस्तुप्रभवाद-विकल्पाच्छुक्लपीतविकल्पद्वयप्रभव इत्यालोचनीयम्। **अत इत्यादि**। अतः–अस्मात् कारणात् **अत्यन्तसूक्ष्मधियः**–इत्थमालोचकस्य **किं नास्थामनोरथं पूरय-तीति वाच्यम्?**। पूरयत्येवेत्यर्थः ॥

**यदपि चोक्तं**[8] पूर्वपक्षे–'**यतोऽभावस्य कृत्यक्रियासु उपरतव्यापार-तयाऽभावत्वम्' इति एतदपि न नः**–नास्माकं **बाधायै**। कुत इत्याह–**पररूपेणार्थक्रियाऽकरणात् तद्रूपस्य च**–पररूपस्य च **तत्र**–वस्तुनि

१ 'तत्तत्त्वान्यथायोगात्' इति क–पाठः। २ 'त्वैकस्वभावत्वे' इति ग–पाठोऽनादरणीयः। ३ ७९तमे पृष्ठे। ४ 'तदेकविकल्पवत्' इति क–पाठः। ५ 'तदन्यथायोगात्' इति घ–पाठः। ६ 'स्वभावत्वस्यादोष' इति क–पाठः, 'स्वत्वे स्याददोष' इति तु ङ–पाठः। ७ 'कल्पकत्वोत्पत्तेरिति' इति ङ–पाठः। ८ ७९तमे पृष्ठे।

(मूलम्)

बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यात्' इत्येतदप्यत्रानवकाशमेव, तथाकार्यक्रियाऽकरणादिति। अतो व्युपरतेऽप्यक्षव्यापारेऽर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पः ५ तत्प्रसूतत्वादेव कथं स्वातन्त्र्यं परिहरति इति चिन्तनीयम्, अन्यथाभूतेऽर्थे तथापरिच्छेदानुभवसंस्कारानुपपत्तेः अतथाभूताच्च ततो न नास्तिताविकल्पप्रसूतिरिति भावनीयम्। एतेन यदि "प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तः, तत्र व्यापारसम्भवात्, अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायः १० अशक्यपरिहारः सम्पद्येत[2]" इति यदुच्यते परैस्तदपि[3] प्रतिक्षिप्तमिति,

(स्वो० व्या०)

अभावात्। ततश्च 'यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यात्,[4] इत्येतदपि अत्र—उदितपक्षे अनवकाशमेव। कुत इत्याह—तथा—तेन पररूपभावप्रकारेण कार्यक्रियाऽ- १५ करणादिति। अतो व्युपरतेऽप्यक्षव्यापारे परनीत्याऽपि अर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पः तत्प्रसूतत्वादेव—अर्थपरिच्छेदानुभवसंस्कारप्रसूतत्वादेव[5] कथं स्वातन्त्र्यं परिहरति, भावमात्रवस्त्वनुभव[6]पारतन्त्र्यासिद्धेः इति चिन्तनीयम्। एतदेव भावयति—अन्यथाभूतेऽर्थे—भावमात्रे तथा—उभयविकल्पजनकत्वेन परिच्छेदानुभवसंस्कारानुपपत्तेः २० कारणात्, अतथाभूताच्च। ततः—तथापरिच्छेदानुभवसंस्कारात् न नास्तिताविकल्पप्रसूतिः, न हि शुक्लपरिच्छेदानुभवसंस्कारात् पीतविकल्पप्रसूतिः इति भावनीयम्। एतेनेत्यादि। एतेन—अनन्तरोदितेन न्यायेन यदि प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव—स्वलक्षणरूपासु लब्धप्रतिष्ठं वर्तते, ततः तासामेव—पदार्थमात्राणाम् अवगमो युक्तः। कुत इत्याह—तत्रेत्यादि। तत्र—तासु २५ पदार्थमात्रासु व्यापारसम्भवात् प्रत्यक्षस्य। अव्यापारेऽपि न विद्यते व्यापारो यस्मिन्, अक्रमात् प्रत्यक्षस्य, तदव्यापारं—विषयान्तरमभावादि तस्मिन्नपि तद्विषयेऽपि परिच्छेदेऽभ्युपगम्यमाने, सामर्थ्यात् प्रत्यक्षस्यैव। किमित्याह—रूपप्रवृत्तेऽपि परिच्छेदकत्वेन प्रत्यक्षे[7] रसावसायः—रसपरिच्छेदः। किमित्याह—अशक्यपरिहारः सम्पद्येत, अव्यापारेऽपि विषये तत्परिच्छेदसिद्धेरित्यभि- ३०

---

१ प्रेक्ष्यतां ७९तमं पृष्ठं ८०तमं च। २ 'समापद्येतेति' इति ग-पाठः। ३ स्याद्वादभङ्गादौ दिवाकरादिभिः इति व्याख्ययाऽवगम्यते। ४ समीक्ष्यतां ७९तमं पृष्ठं ८०तमं च। ५ 'प्रसूतत्वादेव च कथं' इति ङ-पाठः। ६ 'भवापार०' इति च-पाठः। ७ 'प्रत्यक्षरसा०' इति क-पाठः।

(मूलम्)

पदार्थमात्राणामेवोक्तवद् भावाभावात्मकत्वात्, अन्यथा तन्मात्रतानुपपत्तेः, इतरेतराभावात्मकत्वे तत्तद्भावसिद्धेः ॥

५ ततश्च 'प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तः, तत्र व्यापारसम्भवात्'[1] इत्यत्राविसंवाद एव, किन्तु यथाऽवस्थितानामवगमे कथमेकरूपताऽवगमस्येति चिन्तनीयम्। अभावे व्यापाराभावादिति चेत्, न, भावानुविद्धत्वेन तस्य व्यापाराभावासिद्धेः, यथाऽवस्थितार्थप्रकाशनस्वभावत्वात्, तासां च १० तथाऽवस्थितत्वात्, अन्यथा तद्ग्रहणायोगात्। एवं च 'अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः सम्पद्येत

---

(स्वो० व्या०)

प्रायः। इति एतद् यदुच्यते परैः–स्याद्वादभङ्गादौ दिवाकरादिभिः तदपि प्रतिक्षिप्तं–निराकृतमेव इति। कुत इत्याह–पदार्थमात्राणामेवोक्तवद् १५ भावाभावात्मकत्वात् कारणात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा तन्मात्रत्वानुपपत्तेः–पदार्थमात्रतानुपपत्तेः। कथमित्याह–इतरेत्यादि। इतरेतराभावात्मकत्वे सति तत्तद्भावसिद्धेः–पदार्थमात्राणां पदार्थमात्रभावसिद्धेः, अन्यथा तत्साङ्कर्यमनिवारणीयमित्यर्थः ॥

ततश्चेत्यादि। ततश्च–एवं च सति 'प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव २० लब्धप्रतिष्ठं तासामेवावगमो युक्तः, तत्र व्यापारसम्भवात्'[2] इत्यत्राविसंवाद एव वस्तुस्थित्याऽऽवयोः, किन्तु यथाऽवस्थितानां–पदार्थमात्राणाम् अवगमे कथमेकरूपताऽवगमस्य उभयरूपत्वात् तासामिति चिन्तनीयम् एतत्। पराभिप्रायमाह–अभावे व्यापाराभावादिति चेत्, एकरूपतावगमस्य इति एतदाशङ्क्याह–नेत्यादि। न–नैतदेवम्। भावानुविद्धत्वेन हेतुना 'तस्य–[3] २५ अभावस्य व्यापाराभावासिद्धेः तत्रावगमस्येति। असिद्धिमेवाह–यथाऽवस्थितार्थप्रकाशनस्वभावत्वात्, अवगमस्येति प्रक्रमः, तासां च–पदार्थमात्राणां तथा–उभयरूपतया अवस्थितत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा–उभयरूपतानभ्युपगमे तद्ग्रहणायोगात्–पदार्थमात्राणां ग्रहणायोगात्, भावमात्रतयेति भावः। एवं च सति 'अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि

---

१ प्रेक्ष्यतां ८३तमं पृष्ठम्। २ समीक्ष्यतां ८३तमं पृष्ठम्। ३ 'तस्य भावस्य' इति ङ–पाठः।

( मूलम् )

इति"[1] एतदुक्तिमात्रम्, अभिमतविषये व्यापारस्य दर्शितत्वात्। न चैवमनभिमते रसादावसौ, तस्य [2]तत्प्रकाशनस्वभावत्वासिद्धेः, इति न तत्र रसावसायापत्तिरेव, कुतोऽस्याशक्यपरिहारतेति? । ५ अतो भावमात्रस्यैवाभावत्वानुपपत्तेः, लोकानुभवयुक्तिविरोधात्, अन्यविवेकविशिष्टतायाश्च परपक्षेऽयोगात्, तुच्छत्वेन [3]तस्य तेन सम्बन्धानुपपत्तेः, तादात्म्यतदुत्पत्त्यभावात्, विवेकस्य वस्तुताशक्तेः, अप्रतिबद्धस्य च विशेषणत्वायोगात्, अतिप्रसङ्गात् उभयरूपमेव तदिति प्रतिपत्तव्यम्; अन्यथा तदनुपपत्तेरिति ॥ १०

( स्वो० व्या० )

**रसावसायोऽशक्यपरिहारः सम्पद्येत**' इत्येतत्–पूर्वपक्षोदितं[4] **उक्तिमात्रं**–निरर्थकम्। कुत इत्याह–**अभिमतविषये**–अभावाख्ये **व्यापारस्य**–अवगमसम्बन्धिनो **दर्शितत्वात्। न चैवमि**त्यादि। न चैवमभाववत् **अनभिमते रसादौ** विषये **असौ**–अवगमव्यापारः। कुत इत्याह–**तस्ये**त्यादि। तस्य, प्रक्रमाद् १५ रूपावगमस्य, **तत्प्रकाशनस्वभावत्वासिद्धेः**–रसप्रकाशनस्वभावत्वासिद्धेः **इति**–एवं **न तत्र रसावसायापत्तिरेव** अतत्स्वभावतया। **कुतोऽस्य**–रसावसायस्य **अशक्यपरिहारतेति**?। नैवेत्यर्थः। **अत** इत्यादि। अतः स्थितमेतदुभयरूपमेव, तदिति प्रतिपत्तव्यमिति योगः। हेतूनाह–**भावमात्रस्यैव**–अभावाविशिष्टस्य **अभावत्वानुपपत्तेः**। अनुपपत्तिश्च **लोकानुभवयुक्तिविरोधात्**, २० भावस्य ह्यभावत्वे लोकादिविरोधः प्रकटः। अन्यविवेकविशिष्टो भावोऽभाव इति मोहापोहायाह–**अन्यविवेकविशिष्टतायाश्च** भावगतायाः **परपक्षेऽयोगात्**। अयोगे कारणमाह–**तुच्छत्वेन तस्य**–अन्यविवेकाभावस्य **तेन**–भावेन सह **सम्बन्धानुपपत्तेः**। अनुपपत्तिश्च [5]**तादात्म्यतदुत्पत्त्यभावात्**, भावविवेकयोरिति। इहैव युक्तिमाह–**विवेकस्य वस्तुताशक्तेः** प्रतिबन्धासिद्धेश्चैव[6]। २५ अप्रतिबद्ध एवायं विशेषणं भविष्यतीत्याशङ्कानिरासार्थमाह–**अप्रतिबद्धस्य च**–अन्यविवेकस्य **विशेषणत्वायोगात्** भावं प्रति। अयोगश्च **अतिप्रसङ्गात्**–यस्य कस्यचिद् विशेषणत्वापत्तेः। अत **उभयरूपमेव** भावाभावरूपतया **तत्**–वस्तु **इति**–एवं **प्रतिपत्तव्यम्, अन्यथा**–एवमनभ्युपगमे **तदनुपपत्तेः**–वस्त्वनुपपत्तेः **इति** ॥ ३०

१ प्रेक्ष्यतां ८३तमं पृष्ठम्। २ 'तत्प्रकाशस्वभाव०' इति घ–पाठः। ३ 'तस्य तत्र सम्बन्धा०' इति ग–पाठः। ४ समीक्ष्यतां ८३तमं पृष्ठम्। ५ 'द्रव्ययोरेव संयोगः' इति टिप्पणकं ङ–प्रतौ। ६ 'बन्धसिद्ध्यैव' इति ङ–पाठः।

( मूलम् )

**आह–एवमप्यस्तिनास्तीतिविकल्पौ स्वस्वरूपनियतौ न युज्येते, तत्त्वतः शबलवस्तुबलोत्पत्तेरिति। उच्यते–को वा किमाह? किन्तु ५ नेमौ स्वस्वरूपनियतावेव, क्षयोपशमभेदात्, प्रधानोपसर्जनभावत इतरेतराक्षेपेण प्रवृत्तेरिति। उक्तं च—**

**"अयमस्तीति यो ह्येष भावे भवति निश्चयः।**
**नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥[1]**
**[2]नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमं विना।**
१० **ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम् ॥"[3]**

**इति। एतेन यौगपद्यमपि प्रत्युक्तम्, क्षयोपशमवैचित्र्यादिति ॥**

---

( स्वो० व्या० )

**आहेत्यादि। आह–एवमप्यस्तिनास्तीतिविकल्पौ** यथोदितौ **स्वस्वरूपनियतौ** प्रत्येकरूपतया **न युज्येते**। कुत इत्याह–**तत्त्वतः**–परमार्थेन **शबल-** १५ **वस्तुबलोत्पत्तेः**–सदसद्रूपवस्तुसामर्थ्योत्पत्तेर्द्वयोरपि इति। **उच्यते**ऽत्र समाधिः–**को वा किमाह**–इत्थमेवैतत्, **किन्तु नेमौ**–अस्तिनास्तीतिविकल्पौ **स्वस्वरूपनियतावेव** एकान्ततः प्रत्येकरूपतया। कुत इत्याह–**क्षयोपशमभेदात्**–द्रव्यादिनिमित्तात् **प्रधानोपसर्जनभावत इतरेतराक्षेपेण**–अस्तित्वाद्यपेक्षया **प्रवृत्तेः** तयो**रिति। उक्तं च** अन्यैरपि–**अयमस्तीति**–एवं **यो ह्येष भावे**– २० सत्तारूपे **भवति निश्चयः** तदुत्थो **नैष** भवति **वस्त्वन्तराभावसंवित्त्यनुगमादृते,** तत्तदभावसंवित्पूर्वक इत्यर्थः ॥

**नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमं** [4]**विना** तुच्छा–असदाश्रयैव, [5]एवं **ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितं,** निरालम्बनमिति। एतेनेत्यादि। एतेन–तत्त्वतः क्षयोपशमभेदनिबन्धनगर्भेणानन्तरोदितपरि[6]हारेण **यौगपद्यमपि**

---

( विवरणम् )

२५ (२१) **तत्तदभावसंवित्पूर्वक** इति। तस्य–वस्त्वन्तरस्य घटापेक्षया पटादेस्तस्मिन् [7]घटे यकाभावसंवित् तत्पूर्वक इति ॥

(२४) **यौगपद्यमपीति** । एकवस्त्वात्मकतया सत्त्वासत्त्वयोः सन्निहितयोः सतोः सदसद्विकल्पयोर्यौगपद्यं [8]प्राप्नोतीति परस्याशयः ॥

---

१ अनुष्टुप्। २ 'नास्तीत्यपि न संवित्ति०' इति घ–पाठः। ३ अनुष्टुप्। ४ 'विना अतुच्छा' इति ङ–पाठः। ५ 'एवं विज्ञानं न' इति घ–पाठः। ६ 'हारेण आयौग० इति ङ–पाठः। ७ 'घटेकाभाव०' इति क–पाठः। ८ 'यौग्यपद्य(द्यं) प्राप्नोतीति' इति च–पाठः।

(मूलम्)

**यच्चोक्तम्–'न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यते' इत्यादि, एतदप्यनवकाशम्, वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात्। 'न च तत् कार्यकरणे** ५ **प्रवर्तमानं केनचिदाकारेण करोति, केनचिन्न करोति, एकस्य करणाकरणविरोधात्'[१] इत्याद्यप्यसारम्, विरोधासिद्धेः। तथाहि–पर्यायात्मना**

(स्वो० व्या०)

अनन्तरोदितविकल्पयोः, 'अपि'शब्दादेकत्वमपि निमित्ताभेदद्वाराऽऽयातं **प्रत्युक्तं**–निराकृतम्। कुत इत्याह–**क्षयोपशमवैचित्र्यात्**। स ह्यनेकधर्मात्मके वस्तुनि १० कस्यचित् कश्चिद् यस्तथा प्राथम्यादिभेदेन तद्धेतुरिति ॥

**यच्चोक्तमित्यादि**। यच्चोक्तं[३] मूलपूर्वपक्षे **'न च तत् कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यते' इत्यादि, एतदप्यनवकाशम्**। कुत इत्याह–**वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात्**, अनन्तरमेव। **'न च तत् कार्यकरणे प्रवर्तमानं** १५ **केनचिदाकारेण करोति, केनचिन्न करोति, एकस्य करणाकरणविरोधात्'** इत्याद्यपि मूलपूर्वपक्षोक्तमेव **असारम्**। कुत इत्याह–**विरोधासिद्धेः**।

(विवरणम्)

(९) **एकत्वमपि निमित्ताभेदद्वाराऽऽयातमिति**। एकत्वम्–एकरूपता सत्त्वासत्त्वविकल्पयोः। कीदृशमित्याह–निमित्ताभेदद्वाराऽऽयातं निमित्तस्य सदसद्रूप- २० वस्तुनो योऽभेदः–अनानात्वं स एव द्वारम्–उपायस्तेनायातम्–आपन्नं यो हि येन सह सर्वथाऽभिन्ननिमित्तः स तेन सह ऐक्यमाप्नोति, यथा सदसद्विकल्पयोरन्यतरस्य स्वरूपमभिन्ननिमित्तौ च घटाद्येकवस्त्वाश्रितौ सदसद्विकल्पाविति स्वभावहेतुप्रयोग इति पराकृतम्[५] ॥

(११) **यस्तथा प्राथम्यादिभेदेन तद्धेतुरिति**। विचित्रो हि ज्ञानावरणादिक्षयो- २५ पशमः प्राणिनाम्, ततस्तद्वशात् कस्यापि प्रथमतया सत्त्वांशमसत्त्वांशं[६] वा विषयतया समवलम्बमानो नियतैकरूपविकल्पहेतुः सम्पद्यते इति यौगपद्यदोषपरिहारः। एकत्वपरिहारस्तु निमित्ताभेदस्य सदसत्त्वयोः कथञ्चिद् भिन्नत्वेनासिद्धत्वादिति स्वयमेव बोद्धव्यं नैमित्तिकेन रूपेण ॥

---

१ षोडशे पृष्ठे। २ प्रेक्ष्यतां षोडशं पृष्ठम्। ३ षोडशे पृष्ठे। ४ समीक्ष्यतां षोडशं पृष्ठम्। ५ 'पराकृतम्' इति क–पाठः। ६ 'सत्त्वांशे'त्यादेरारभ्य 'घटादिरूपतया'पर्यन्तकः पाठो न वर्तते च–प्रतौ।

( मूलम् )

करोति, द्रव्यात्मना न करोतीति कुत एकस्य करणाकरणविरोध इति? । अथवा स्वकार्यकर्तृत्वेन करोति, कार्यान्तराकर्तृत्वेन न करोति,
५ अतः केनचिदाकारेण करोति, केनचिन्न करोतीति कोऽत्र विरोधः? ॥

न च स्वकार्यकर्तृत्वमेव कार्यान्तराकर्तृत्वम् । यदि स्याद्, यथा स्वकार्यं करोति, एवं कार्यान्तरमपि कुर्यात्, कर्तृत्वानन्यत्वादकर्तृत्वस्य, विपर्ययो वा, ततश्चाकारणत्वमिति । स्यादेतत् किं हि नाम कार्यान्तराकर्तृत्वमन्यद् यदाश्रित्यानन्यत्वयुक्त्यनुसारेणाकारणत्वं
१० प्रतिपाद्यते,किन्तु स्वकार्यकर्तृत्वमेवैकस्वभावं कार्यान्तराकर्तृत्वमिति।

( स्वो० व्या० )

एनामेव दर्शयति तथाहीत्यादिना । तथाहि **पर्यायात्मना करोति** नैमित्तिकेन रूपेण तथापरिणतेः, **द्रव्यात्मना न करोति** मृदादिरूपेण तथाऽपरिणतेः **इति कुत एकस्य करणाकरणविरोध इति?** । नैव । एतत् तावत् कार्यमधि-
१५ कृत्योक्तम् । अधुना कारणमधिकृत्याह–**अथवा स्वकार्यकर्तृत्वेन करोति, कार्यान्तराकर्तृत्वेन न करोति, अतः केनचिदाकारेण करोति, केनचिन्न करोतीति कोऽत्र विरोधः?** । न कश्चिदित्यर्थः ॥

**न च स्वकार्यकर्तृत्वमेव** एकरूपं **कार्यान्तराकर्तृत्वम्** । कथमित्याह–**यदि स्यात्**–एतदेकमेव, ततः किमित्याह–**यथा स्वकार्यं करोति** तत्, **एवं**
२० **कार्यान्तरमपि कुर्यात्** । कस्मादित्याह–**कर्तृत्वानन्यत्वात् अकर्तृत्वस्य** नान्यथाऽनन्यत्वमिति भावितमेतत् । **विपर्ययो वा**–यथा कार्यान्तरं न करोति, एवं स्वकार्यमपि न कुर्यात् अकर्तृत्वानन्यत्वात् कर्तृत्वस्येति भावः । **ततश्च** एवम्–अनेन प्रकारेण **अकारणत्वमिति** कुर्वतः कारणत्वयोगात् । **स्यादेतत्** । **किं हि नाम कार्यान्तराकर्तृत्वमन्यत्** स्वकार्यकर्तृत्वात् [2]**यदाश्रित्यान-**
२५ **न्यत्वयुक्त्यनुसारेण** उक्तलक्षणेन **अकारणत्वं** [3]**प्रतिपाद्यते**ऽधिकृतकारणस्य, नैव किञ्चिदन्यत्, **किन्तु स्वकार्यकर्तृत्वमेवैकस्वभावं कार्यान्तरा-**

( विवरणम् )

(१३) **तथापरिणतेरिति** । निमित्ताच्चक्रचीवरादेः सकाशाद् भवतीति नैमित्तिकं तेन रूपेण कारणेन तथा–घटादिरूपतया परिणतेर्मृदादेः कारणस्य मृत्तिका हि कार्यं
३० जनयन्ती नैमित्तिकेन घटादिना रूपेण निवर्तयति; न तु मृदादिरूपेणापि, तस्य त्रिष्वविचलितरूपत्वादिति ॥

१ 'स्वकार्यें' इति क–पाठः । २ 'तदाश्रित्या०' इति ङ–पाठः । ३ 'प्रतिपद्यते' इति क–पाठः ।

( मूलम् )

हन्त तर्हि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नम्। एवं चाभिन्ननिमित्तत्वे सत्येकत्र कर्तृत्वाकर्तृत्वयोर्विरोध इति। तथाहि-तेनैव स्वभावेन करोति, न करोति चेति व्याहतमेतत्, एकस्वभावस्यैकत्रैवोपयोगात्। कार्यान्तराकर्तृत्वं तत्र परिकल्पितमिति चेत्, एतदप्यमनोहरम्। कुतः?। कार्यान्तराकर्तृत्वस्य तत्र परिकल्पितत्वाद् वस्तुतोऽसत्त्वात् तद्भावापत्त्या कार्यान्तरभावप्रसङ्गात् ॥

अथाशङ्का-स्वकार्यकर्तृत्वव्यतिरिक्तं कार्यान्तराकर्तृत्वं परिकल्पितं स्वकार्यकर्तृत्वमेव पुनः कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत इति। एषाऽप्ययुक्ता, दत्तोत्तरत्वात्। तथाहि-येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमित्यादि तदेवावर्तते। अनेनैव

( स्वो० व्या० )

कर्तृत्वमिति-एवं च तदेकमेवेत्यभिप्रायः। एतदाशङ्क्याह-हन्त तर्हि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नम् अर्थतः। एवं चाभिन्ननिमित्तत्वे सत्येकत्र कर्तृत्वाकर्तृत्वयोर्विरोध इति। एतद्भावनायैवाह-तथाहि तेनैव स्वभावेन करोति, न करोति चेति व्याहतमेतत्। कुत इत्याह-एकस्वभावस्यैकत्रैवोपयोगात्, अन्यथा सर्वथैकत्वायोगः। कार्यान्तराकर्तृत्वं तत्र-कारणे परिकल्पितमिति चेत्, एतदप्यमनोहरम्। कुत इत्याह-कार्यान्तराकर्तृत्वस्य तत्र-कारणे परिकल्पितत्वात् कारणात्, अत [1]एव वस्तुतोऽसत्त्वात्-अविद्यमानत्वात् कार्यान्तराकर्तृत्वस्य तद्भावापत्त्या-कार्यान्तरकर्तृत्वभावापत्त्या। किमित्याह-कार्यान्तरभावप्रसङ्गात् न हि तद्भावमन्तरेण तदभाव इति भावना ॥

अथाशङ्का परस्य-स्वकार्यकर्तृत्वव्यतिरिक्तं कार्यान्तराकर्तृत्वं परिकल्पितं स्वकार्यकर्तृत्वमेव पुनः कार्यान्तराकर्तृत्वस्वभावमभ्युपगम्यत इति। एतदाशङ्क्याह-एषाऽप्ययुक्ता आशङ्का। कुत इत्याह-दत्तोत्तरत्वात्। एतदेव भावयति तथाहीत्यादिना। तथाहि येनैव स्वभावेन करोति तेनैव न करोतीत्येतदापन्नमित्यादि पूर्वोक्तं तदेवावर्तते। अनेनैव-

( विवरणम् )

(२३) न हि तद्भावमन्तरेण तदभाव इति। न-नैव हि[ः]-यस्मात् तद्भावं-कार्यान्तरभावमन्तरेण-विना तदभावः-कार्यान्तराकर्तृत्वाभावः ॥

१ प्रेक्ष्यतां प्रथमा पङ्क्तिः। २ 'एव च वस्तु०' इति ङ-पाठः।

( मूलम् )

'सर्वात्मना च करणे तद्भावरूपमेव स्यात्'[१] इत्यादि प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वात्, कथञ्चिदव्यतिरेकात्, कार्यान्तराकारण-
५ त्वादिति, तस्माद् व्यवस्थितमेतत् सदसद्रूपं वस्तु। तथा चोक्तम्—

"[२]यस्मात् प्रत्यक्षसंवेद्यं कार्यतोऽप्यवगम्यते।
तस्मादवश्यमेष्टव्यं वस्त्वेकमुभयात्मकम् ॥"[३]

इति ॥

अपरस्त्वाह—ननु च वस्तुनः स्वरूपेण सत्त्वं पररूपेण चासत्त्व-
१० मित्येतदिष्यत एवेति सिद्धसाध्यता। एतदप्ययुक्तम्, स्वमतवि-रोधात्। तथाहि—एवमिच्छता वस्तुन एव सत्त्वमसत्त्वं च धर्मावित्ये-ष्टव्यम्, वक्तव्यं च धर्मधर्मिणोरन्यत्वमनन्यत्वमन्यानन्यत्वं चेति। किञ्चातः?। यद्यन्यत्वमवस्तुत्वादिप्रसङ्गः। कथम्?। इह च वस्तु धर्म-

( स्वो० व्या० )

१५ उक्तन्यायेन 'सर्वात्मना च करणे तद्भावरूपमेव स्यात्'[४] इति एतत् प्रतिक्षिप्तम्, अभावस्य वस्तुधर्मत्वात्। 'न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नाम'[५] इत्यनेन प्रकारेण, अत एव कथञ्चिदव्यतिरेकाद् भावादभावस्य कार्यान्तराकारणत्वादिति। यस्मादेवं तत् तस्माद् व्यवस्थितमेतत् सदसद्रूपं वस्तु। तथा चोक्तमिति ज्ञापकमाह—यस्मात् प्रत्यक्षसंवेद्यम् उक्तवत् कार्यतो-
२० ऽप्यवगम्यते उक्तनीतेः, तस्मादवश्यमेष्टव्यं न्यायविदा वस्त्वेकमुभयात्मकं—सदसद्रूपमिति ॥

अन्यस्त्वाह वैशेषिकः—ननु च वस्तुनः—घटादेः स्वरूपेण सत्त्वं पररूपेण चासत्त्वमित्येतदिष्यत एव इति—एवं सिद्धसाध्यता, उभयात्मकमिति। एतदाशङ्क्याह—एतदप्ययुक्तम्, [६]स्वमतविरोधात्। एनमेवाह तथाहीत्या-
२५ दिना। तथाहीत्युपप्रदर्शने। एवमिच्छता यथोदितं वस्तुन एव सत्त्वमसत्त्वं च धर्मावित्येष्टव्यं परेण। वक्तव्यं च धर्मधर्मिणोरन्यत्वमनन्यत्वमन्यानन्यत्वं चेति विकल्पाः। किञ्चातः?। यद्यन्यत्वं धर्मधर्मिणोः अवस्तुत्वादिप्रसङ्गः तयोरेव। 'आदि'शब्दाद् धर्मधर्मिप्राप्तिपरिग्रहः। कथमि-

( विवरणम् )

३० (२८) धर्मधर्मिप्राप्तिपरिग्रह इति। धर्माणां धर्मिरूपेण प्राप्तिः धर्मधर्मिप्राप्तिः॥

१ प्रेक्ष्यतां षोडशं पृष्ठम्। २ सन्तुल्यतां सप्तदशपृष्ठगतं पद्यम्। ३ अनुष्टुप्। ४ प्रेक्ष्यतां षोडशं पृष्ठम्। ५ समीक्ष्यतां ४२तमं पृष्ठम्। ६ 'स्वस्वनिरोधात्' इति क-पाठः।

(मूलम्)

**व्यतिरिक्तं तच्च स्वरूपेण सत् पररूपेण चासदित्यभ्युपगमाद् धर्माणां च परत्वात् तद्रूपेणासत्त्वादवस्तुत्वप्रसङ्गः ॥**

**न च तन्न प्रक्रान्तधर्मव्यतिरिक्तमपि स्वरूपेण सत् पररूपेण चासत्, अत्यन्ताभावप्रसङ्गादित्युक्तदोषापत्तिरेव। नापत्तिः, तस्य यथोदिततत्वानुपपत्तेः। अथ कीदृक् तदिति कथनीयम्। अव्यपदेशार्हमिति चेत्, न, स्ववचनविरोधात्, अधिकृतव्यपदेशेन व्यपदेशात्; अन्यथाऽव्यपदेशार्हमिति शब्दाप्रवृत्तेः। सच्छब्दादिव्यपदेशार्हं न भवतीति चेत्, किमत्र क्षुण्णमिति वाच्यम्, यतो न तत् सन्नाप्यसदिति चेत्, सदसत् तर्हि नियमतः। एतदपि नैव तत्त्वत इति चेत्,** ५ १०

---

(स्वो० व्या०)

त्याह–**इह च वस्तु धर्मव्यतिरिक्तं तच्च स्वरूपेण सत् पररूपेण च असदित्यभ्युपगमात्** कारणात् तथा **धर्माणां च परत्वात् तद्रूपेण**–सदादिना धर्मरूपेण **असत्त्वात्** हेतोः **अवस्तुत्वप्रसङ्गः** ॥ १५

अत्रैव भावनां कुर्वन्नाह–**न चे**त्यादि। न च **तत्**–वस्तु **न प्रक्रान्तधर्मव्यतिरिक्तमपि**–मौलधर्मव्यतिरिक्तमपि **स्वरूपेण सत् पररूपेण चासत्**। न च न कस्मात्?। **अत्यन्ताभावप्रसङ्गात्**। यदि नैवंरूपम्, खरविषाणं तर्हि तदिति भावना। **इति**–एवं **उक्तदोषापत्तिरेव** स्वरूपेणाप्यसत्त्वात्, अवस्तुत्वादित्यभिप्रायः। अत्राह–**नापत्तिः** अनन्तरोदिता। कुत इत्याह–**तस्य**–मूलधर्मव्यतिरिक्तस्य वस्तुनो **यथोदिततत्वानुपपत्तेः**। स्वरूपेण सत् पररूपेण चासदिति[2] यथोदितं तदनुपपत्तेः, मूलधर्मव्यतिरिक्तं वस्तु [3]नैवेष्यत इत्यर्थः। अत्रोत्तरम्–**अथ कीदृक् तत्**–वस्तु **इति**–एतत् **कथनीयम्। अव्यपदेशार्हमिति चेत्**, अत्रोत्तरम्–**न, स्ववचनविरोधात्**। एनमेवाह–**अधिकृतव्यपदेशेन**–अव्यपदेशार्हमित्यनेन **व्यपदेशात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथाऽव्यपदेशार्हमिति**–एवं **शब्दाप्रवृत्तेः। सच्छब्दादिव्यपदेशार्हं न भवति इति चेत्**, अत्रोत्तरम्–**किमत्र** [4]**क्षुण्णं** यत् सच्छब्दादिव्यपदेशार्हं न भवत्येतद् **वाच्यम्, यतो न तत्**–वस्तु **सन्नाप्यसदिति चेत्**, [5]क्षुण्णम्। एतदाशङ्क्याह–**सदसत् तर्हि नियमतो** यद् वस्तु न च सन्नाप्यसत् तदित्थम्भूतमेव। **एतदपि नैव तत्त्वत इति चेत्**, यदुत सदसदिति। एतदाशङ्क्याह– २० २५ ३०

---

१ 'क्षणमिति' इति क–पाठः, 'क्षूणमिति' तु घ–पाठः। २ प्रेक्ष्यतां चतुर्थी पङ्क्तिः पञ्चमा च। ३ 'नैवेमिष्यत' इति ङ–पाठोऽशुद्धः। ४–५ उभयत्र 'क्षूणं' इति घ–ङ–पाठः।

( मूलम् )

**किं [1]तदन्यदतोऽतिरिक्तम्?। तथाविधबुद्धिग्राह्यमिति चेत्, तत्रापि बुद्धिरिति न्यायातीतमेतत्। तथाहि—तन्न सन्नासन्न सदसद् बुद्धि-**
५ **गोचरश्चेत्यद्भुतमेतत्। स्वकार्यसत्त्वाभ्युपगमे च व्यर्थाऽपरयोग-कल्पना, नियतरूपतादितया च स्वपररूपसत्त्वासत्त्वदोषोऽनिवा-रितप्रसर एवेति यत्किञ्चिदेतत्॥**

( स्वो० व्या० )

**किं तदन्यत्** वस्तु **[2]अतोऽतिरिक्तं** सदसतः?। **तथाविधबुद्धिग्राह्यमिति**
१० **चेत्**, तथाविधा—[3]अव्यपदेश्या। एतदाशङ्क्याह—**तत्रापि**—त्रिकोटीशून्ये **बुद्धि-रिति न्यायातीतमेतत्**। एतदेवाह **तथाहीत्यादिना**। **तथाहि तत्**—वस्तु **न सन्नासन्न सदसत्** त्रिकोटीशून्यं **बुद्धिगोचरश्चेत्यद्भुतमेतत्**, कर्मशक्त्यभावे विषयत्वायोगादित्यर्थः। स्वकार्यसत्त्वापेक्षया सदेव तदित्याशङ्कानिरासार्थमाह—**स्वकार्यसत्त्वाभ्युपगमे च** वस्तुनो **व्यर्थाऽपरयोगकल्पना**—सदन्तरयोग-
१५ कल्पना **नियतरूपादितया च** कारणेन वस्तुधर्माणां **स्वपररूपसत्त्वासत्त्व-दोषोऽनिवारितप्रसर एव**, धर्मान्यत्वे वस्तुनस्तद्रूपेणासत्त्वात्, **इति**—एवं **यत्किञ्चिदेतत्** परोदितम्॥

( विवरणम् )

(१२) **कर्मशक्त्यभाव** इति। कर्मणः—ज्ञानादिक्रियाविषयस्य वस्तुनः सामर्थ्यं
२० तस्याभावे॥

(१५) **नियतरूपादितया च कारणेन वस्तुधर्माणामिति**। वस्तुधर्माणां—वस्तुस्वरूपाणाम्। अयमत्राभिप्रायः—सत्त्वासत्त्वाभ्यां भिन्नमपि स्वकार्यसत्त्वं [4]धर्मि-स्वशरीरलक्षणमभ्युपगम्यमानं नियमात्—नियमेनैकेन केनचिद्रूपेणास्ति। ततश्च (१५) **स्वपररूपसत्त्वासत्त्वदोषोऽनिवारितप्रसर एव**। अत्रैव हेतुमाह—(१६) **धर्मान्यत्वे**
२५ **वस्तुनस्तद्रूपेणासत्त्वादिति**। धर्मान्यत्वे [5]सत्त्वासत्त्वलक्षणधर्मविभिन्नत्वे सति वस्तुनः [6]स्वकार्यसत्त्वलक्षणस्य तद्रूपेण विभिन्नधर्मस्वभावलक्षणेनासत्त्वात्—अविद्य-मानत्वात्। एवं च धर्मिस्वभावत्वं [7]धर्मासत्त्वभावमापन्नमिति॥

**इति श्रीमुनिचन्द्रसूरिविरचिते अनेकान्तजयपताकोद्द्योतदीपिका-[8]टिप्पणके सदसदधिकारः समाप्तः॥**

---

१ 'तदन्यदन्यतोऽति०' इति ङ-पाठः। २ 'यतोऽति०' इति घ-पाठः। ३ 'अव्यपदेश्या' इति क-पाठः। ४ 'धर्मस्वशरीर०' इति क-पाठः। ५ 'सत्त्वादिति धर्मान्यत्वे सत्त्वलक्षणे धर्म-विभिन्नत्वे सति' इति क-पाठः। ६ 'स्वकायस्वत्वलक्षणतद्रूपेण इति च-पाठः। ७ 'धर्मस्वभाव०' इति च-पाठः। ८ 'टिप्पनके' इति च-पाठः।

(मूलम्)

एवं धर्माणामपि वस्तुव्यतिरिक्तत्वात् स्वरूपेण सत्त्वं पररूपेण चासत्त्वमिति धर्मान्तरप्राप्तिः। तत्राप्ययमेव न्याय इत्यनिष्ठा। स्यादेतत् न धर्माणां धर्मान्तरमिष्यते, अपि तु त एव स्वरूपेण सन्ति, पररूपेण च न सन्तीति न तद्विलक्षणे सदसत्त्वे इति। एतदप्यसमीचीनम्, वस्तुन्यपि समानत्वात्। अङ्गीकरणे च धर्माभावप्रसङ्गेनाभ्युपगमविरोधात्, तद्भावेऽपि तस्येति सम्बन्धानुपपत्तेः। समवायभावात् कथमनुपपत्तिरिति चेत्, न, तस्यासिद्धत्वात् पदार्थान्तरत्वेन समवायिकल्पत्वात्, अन्यसमवायव्यतिरेकेण तत्सम्बन्धानुपपत्तेः। अभ्युपगमे च तत्राप्ययमेव वृत्तान्त इत्यनवस्था। स्वसमवायिसम्बन्धकस्वभावद्वयाङ्गीकरणे च ततस्तस्य व्यति-

(स्वो० व्या०)

एवं धर्माणामपि—प्रस्तुतानां वस्तुव्यतिरिक्तत्वात् कारणात् स्वरूपेण सत्त्वमिति पररूपेण चासत्त्वमिति कृत्वा धर्मान्तरप्राप्तिः। तत्रापि—धर्मान्तरे अयमेव न्याय इत्यनिष्ठा। स्यादेतत् न धर्माणां धर्मान्तरमिष्यते, अपि तु त एव—धर्माः स्वरूपेण सन्ति, पररूपेण च न सन्ति। इति—एवं न तद्विलक्षणे सदसत्त्वे, अतो न धर्माणां धर्मान्तरप्राप्तिरित्यभिप्राय इति। एतदप्यसमीचीनम्—अशोभनम्। कुत इत्याह—वस्तुन्यपि समानत्वात्। तथाहि—तदेव स्वरूपेण सत् पररूपेण चासदित्यपि वक्तुं शक्यत एव। अङ्गीकरणे च अस्य पक्षस्य धर्माभावप्रसङ्गेन हेतुना अभ्युपगमविरोधात्। तद्भावेऽपि—व्यतिरिक्तधर्मभावेऽपि तस्येति सम्बन्धानुपपत्तेः तस्य—वस्तुनः एते धर्मा इति सम्बन्धासिद्धेः, वस्त्वन्तरेण भेदाविशेषादित्यर्थः। समवायभावात् कारणात् कथमनुपपत्तिः तस्येति सम्बन्धस्य। इति चेत्, एतदाशङ्क्य आह—न, तस्यासिद्धत्वात्। तस्येति समवायस्य। असिद्धत्वं च पदार्थान्तरत्वेन समवायिकल्पत्वात् प्रस्तुतसमवायस्य। ततः किमित्याह—अन्यसमवायव्यतिरेकेण तत्सम्बन्धानुपपत्तेः तस्य—मूलसमवायस्य समवायिभिः सम्बन्धानुपपत्तेः। अभ्युपगमे च अन्यसमवायस्य तत्राप्ययमेव वृत्तान्तः—अन्यसमवायापत्तिलक्षण इत्यनवस्था। स हि स्वसम्बन्धकस्वभावः समवायिसम्बन्धकस्वभावश्चेत्यतो न दोष इति पराभिप्रायं चेतसि निधायाह—स्वसमवायीत्यादि। स्वश्च समवायात्मा, समवायिनौ च धर्मधर्मिणौ, स्वसमवायिनः तेषां सम्बन्धकं

१ 'रूपेणासत्त्व' इति ग-पाठः। २ 'द्वयीं अङ्गी०' इति क-पाठः। ३ 'वाऽसत्त्व०' इति ङ-पाठः। ४ 'वाऽसदित्यपि' इति क-पाठः। ५ 'शक्यत इत्याह अङ्गी०' इति क-पाठः। ६ 'धर्माभावेऽपि' इति घ-पाठः।

( मूलम् )

**रिक्तेतरविकल्पदोषाशनिरनिवारितप्रसरः। स इहप्रत्ययगम्य इति चेत्, न, तस्येहसमवायिषु समवाय इति व्यभिचारोपलब्धेः। ५ प्रतिनियतधर्मिधर्मस्वभावस्तत्सम्बन्ध इति चेत्, न, तत्स्वभावस्यापि धर्मत्वाद् धर्माद्यात्मभूतत्वानुपपत्तितो वाङ्मात्रत्वात्, आत्मभूतत्वे च भेदाभ्युपगमविरोधः ॥**

( स्वो० व्या० )

च तत् **स्वभावद्वयं** चेति विग्रहः, तस्य **अङ्गीकरणे च**–अभ्युपगमे च। किमित्याह–
१० **ततः**–समवायात् **तस्य**–स्वसमवायिसम्बन्धकस्वभावद्वयस्य **व्यतिरिक्तेतरविकल्पदोषाशनिरनिवारितप्रसरः**। तथाहि–यदि तत्[1] ततः–स्वभावद्वयसमवायात् व्यतिरिक्तं तस्येति कः सम्बन्धः ? । अथाव्यतिरिक्तमेकत्वमस्याधिकृतस्वभावद्वयस्य एकस्मात् समवायादव्यतिरिक्तत्वात्, तत्स्वरूपवत्; अनेकत्वं वा समवायस्याधिकृतस्वभावद्वयादव्यतिरिक्तत्वात् तत्स्वरूपवदेवेति । **स इह-**
१५ **प्रत्ययगम्य इति चेत्** सः–समवायः, इहप्रत्ययगम्यो वर्तते, यथोक्तम्–"अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्धः इहप्रत्ययहेतुः समवायः, भवति चायमिहेत्यविगानेन प्रत्यय इह तन्तुषु पट इत्यादौ न चायमनिमित्तः, सदाभावादिप्रसङ्गात्, न च समवायिनिमित्तः, अतत्परिच्छेदकत्वात्, अतो यन्निमित्तोऽयं स समवायः" इति। एतदाशङ्क्याह–**न तस्येत्यादि**। न–नैतदेवं तस्य–इहप्रत्ययस्य **इह-**
२० **समवायिषु समवाय इति**–एवं **व्यभिचारोपलब्धेः**। तथा च भवत्यत्रापीहप्रत्ययः, न च तदपरसमवायनिबन्धनः, तस्याभावात् विवक्षितसमवायस्य चात्र समवायिकल्पत्वात् समवायिबुद्ध्यैव ग्रहणात् तस्यैव प्रत्ययान्तरनिमित्तत्वेऽतिप्रसङ्ग इति भावनीयमेतत्। **प्रतिनियतेत्यादि**। प्रतिनियत**धर्मिधर्मस्वभावः** स एव धर्मी तद्धर्मी तद्धर्मधर्मिस्वभावः, त एव च धर्मास्तद्धर्मिधर्मस्वभावा इत्येवम्भूतः
२५ **तत्सम्बन्धः**–धर्मधर्मिणोः सम्बन्धः। **इति चेत्**, एतदाशङ्क्याह–**नेत्यादि**। न–नैतदेवम्। **तत्स्वभावस्यापि**–अनन्तरोदितधर्मिधर्मस्वभावस्यापि । किमित्याह–**धर्मत्वात्** कारणात् **धर्माद्यात्मभूतत्वानुपपत्तितः** "अन्ये धर्मा धर्मिणः" इत्यभ्युपगमेन **वाङ्मात्रत्वात्**। 'आदि'शब्दाद् धर्मिपरिग्रहः। **आत्मभूतत्वे च** अधिकृतस्वभावस्य, धर्मादेरिति प्रक्रमः। किमित्याह–**भेदाभ्युपगमविरोधः**
३० धर्मधर्मिणोर्भेद इति योऽभ्युपगमस्तद्विरोधः, धर्माणां च धर्मान्तरप्राप्तिरित्यस्योपलक्षणमेतत्, एवमप्यभ्युपगमविरोधादिति ॥

१ 'तत् ततो व्यतिरिक्तं तस्येति' इति घ–पाठः, 'तत् ततो (तः) स्वभावद्वयसमवायात् तत् ततो व्यतिरिक्तं' इति तु ङ–पाठः।

( मूलम् )

**अथानन्यत्वं तयोः, तद्व्यवस्थाऽयोगः अन्योन्यात्मकत्वेनेतरनिराकरणात्। अनिराकरणेऽपि सदसत्त्वयोरेकत्वेन तद् यथा स्वरूपेण सत्, एवं पररूपेणापि स्यादित्याद्युक्तम्। असम्भविनौ च निराधारौ धर्माविति यत्किञ्चिदेतत्॥** ५

**अथान्यानन्यत्वम्, अतो[1]ऽनेकान्तवादाभ्युपगमादेकान्तवादिनः स्वमतविरोध इत्यलं प्रसङ्गेन॥**

**इति [2]प्रथमोऽधिकारः।**

---

( स्वो० व्या० ) १०

**अथे**त्यादि। अथ **अनन्यत्वं तयोः**—धर्मधर्मिणोः। अत्राह—**तद्व्यवस्थाऽयोगः**—धर्मिधर्मव्यवस्थाऽयोगः। कथमित्याह—**अन्योन्यात्मकत्वेन** हेतुना **इतरनिराकरणात्**—द्वितीयनिराकरणात्। तथाहि—यदि धर्मिणोऽव्यतिरिक्ता धर्मास्ततो धर्ममात्रं ते, तदव्यतिरिक्तत्वात्, तत्स्वरूपवदिति न सन्त्येव धर्मा इतीतरनिराकरणम्। एवं धर्मिणोऽपि वाच्यम्—धर्माव्यतिरेकादिति धर्मधर्मिव्यवस्थाऽयोगः। **अनिराकरणेऽपि** इतरस्य। किमित्याह—**सदसत्त्वयोरेकत्वेन** एकधर्म्यव्यतिरेकद्वारायातेन हेतुना। किमित्याह—**तत्**—वस्तु यथा स्वरूपेण सदेवं पररूपेणापि स्यात्, सदसत्त्वयोरेकत्वादित्यर्थः। **इत्याद्युक्तं** प्राक् धर्माव्यतिरेकाद् धर्मिण एवासत्त्वं भविष्यतीत्यप्याशङ्क्याह—**असम्भविनौ च निराधारौ धर्मौ** सदसल्लक्षणौ न स्त एव **इति यत्किञ्चिदेतत्॥** १५ २०

**अथान्यानन्यत्वं** धर्मधर्मिणोः, **अतोऽनेकान्तवादाभ्युपगमात्** कारणात् **एकान्तवादिनः स्वमतविरोध इत्यलं प्रसङ्गेन॥**

[3]समाप्तः 'सदसद्रूपवस्तुवक्तव्यता'ऽधिकारः॥

---

१ 'अतो नैकान्त०' इति क-पाठः। २ 'प्रथमः परिच्छेदः' इति क-घ-पाठः। ३ 'समाप्तः॥ छ॥ सद०' इति ङ-पाठः।

# [1]द्वितीयोऽधिकारः ।

( मूलम् )

यच्चोक्तम्[2]–'एतेन नित्यानित्यमपि प्रत्युक्तमवगन्तव्यम्, विरोधादेव' इत्यादि, तदपि न सम्यक्, प्रमाणतस्तथाऽवगमात्। तथाहि–
५ अध्यक्षेण नित्यानित्यमेव तदवगम्यते; अन्यथा तदवगमाभावप्रसङ्गात्। तथा च यदि तदप्रच्युतानुत्पन्नस्थिरैकस्वभावं सर्वथा नित्यमभ्युपगम्यते[3], एवं तर्हि तद् विज्ञानजननस्वभावं वा स्यात्, अजननस्वभावं वा। [4]यद्याद्यः पक्षः, एवं सति सर्वत्र सर्वदा सर्वेषां तद्विज्ञानप्रसङ्गः, तस्यैकस्वभावत्वात्। न चैतदेवं क्वचित् कदाचित्
१० कस्यचिदेव तद्विज्ञानभावात् ॥

न च सर्वथैकस्वभावस्य देशादिकृतो विशेष इति कल्पना

---

( स्वो० व्या० )

अधिकारान्तरमधिकृत्याह–यच्चोक्तमित्यादि । यच्चोक्तं[5] पूर्वपक्षग्रन्थे 'एतेन नित्यानित्यमपि प्रतिक्षिप्तमवगन्तव्यम्, विरोधादेव' इत्यादि तदपि
१५ न सम्यक्। कुत इत्याह–प्रमाणतस्तथाऽवगमात्। तथेति नित्यानित्यप्रकारेणावगमात्। एतदेव भावयति तथाहीत्यादिना। तथाहि अध्यक्षेण नित्यानित्यमेव तत्–वस्तु अवगम्यते; अन्यथा–एवमनभ्युपगमे तदवगमाभावप्रसङ्गात्। एतद्भावनायाह–तथा चेत्यादि। तथा च यदि तत्–वस्तु 'अप्रच्युतानुत्पन्नस्थिरैकस्वभावम्' इति पूर्ववत्[6]। अनेन प्रकारेण सर्वथा नित्य-
२० मभ्युपगम्यते, एवं तर्हि तत्–वस्तु विज्ञानजननस्वभावं वा स्यात्, अजननस्वभावं वा। किञ्चातः? । यद्याद्यः पक्षः–विज्ञानजननस्वभावमित्ययम्, एवं सति सर्वत्र[7] क्षेत्रे सर्वदा काले सर्वेषां प्रमातॄणां तद्विज्ञानप्रसङ्गः–अधिकृतवस्तुविज्ञानप्राप्तिः। कुत इत्याह–तस्यैकस्वभावत्वात्, क्षेत्रादिभिर्विशेषानाधानादित्यर्थः। न चैतदेवं–यथोक्तम्। कुत इत्याह–क्वचित् क्षेत्रे
२५ कदाचित् काले कस्यचिदेव प्रमातुः तद्विज्ञानभावात् तस्मिन्–वस्तुनि विज्ञानभावात् ॥

प्रकृतमेव समर्थयते न[8] चेत्यादिना। न च सर्वथैकस्वभावस्य वस्तुनो देशा-

---

१ 'अर्हम् अथ द्वितीयः परिच्छेदः' इति घ–पाठः। २ सप्तदशे पृष्ठे। ३ सन्तुल्यतां यदुक्तं सप्तदशे पृष्ठे। ४ 'यद्याद्यपक्षः' इति क–पाठः। ५ सप्तदशे पृष्ठे। ६ प्रेक्ष्यतां सप्तदशं पृष्ठम्। ७ 'क्वचिदेव क्षेत्रे' इति ङ–पाठः। ८ 'न चेत्यादिना' इति पाठो ङ–प्रतौ नास्ति।

( मूलम् )

**युज्यते, तद्भावेऽनित्यत्वप्रसङ्गात्। सहकारिणमपेक्ष्य जनयतीति चेत्, न, एकान्तनित्यस्यापेक्षाऽयोगात्। तथाहि–सहकारिणा तस्य कश्चिद् विशेषः क्रियते न वेति वाच्यम्। यदि क्रियते स किमर्थान्तरभूतोऽनर्थान्तरभूतो[1] वेति?। यद्यर्थान्तरभूतस्तस्य किमायातम्?। स तस्य विशेषकारक इति चेत्, न[2], अनवस्थाप्रसङ्गात्। तथाहि–स विशेषस्ततो भिन्नोऽ[3]भिन्नो वेति तदेवावर्तत इत्यनवस्था॥** 5

**अथानर्थान्तरभूतः स विद्यमानोऽविद्यमानो वा। यदि विद्यमानः कथं क्रियते? करणे वाऽनवस्थाप्रसङ्गः। सकृत् करणेऽपि विद्यमानत्वाविशेषेण भूयो भूयः करणमित्यनवस्था॥** 10

( स्वो॰ व्या॰ )

**दिकृतो विशेष इति**–ए[4]वम्भूता कल्पना **युज्यते**। कुत इत्याह **तद्भावे**–देशादिकृतविशेषभावे**ऽनित्यत्वप्रसङ्गात्**। न हि प्राक्स्वस्वभावनिवृत्तिमन्तरेण वस्तुनो विशेषः। **सहकारिणमपेक्ष्य** आलोकादिकं **जनयतीति चेद्** वस्तुविज्ञानमिति। 15 अत्राह–**न, एकान्तनित्यस्य** वस्तुनः **अपेक्षाऽयोगात्**, एकरूपतयेति भावः। एतद्भावनायैवाह–**तथाहीत्यादि**। तथाहि **सहकारिणा तस्य**–वस्तुनः **कश्चिद् विशेषः क्रियते न वेति वाच्यम्**। उभयथाऽपि दोषमाह–**यदि क्रियते स किमर्थान्तरभूतोऽनर्थान्तरभूत इति?**। अत्राप्युभयथाऽपि [5]दोषमाह–**यद्यर्थान्तरभूतस्तस्य किमायातं** वस्तुनः?। तत्तदवस्थमेवेत्यर्थः। **सः**–विशेषो- 20 ऽर्थान्तरभूतः **तस्य**–वस्तुनो **विशेषकारकः। इति चेत्**, एतदाशङ्क्याह–**न, अनवस्थाप्रसङ्गात्**। एनमेवाह **तथाहीत्यादिना**। तथाहि **स विशेषः**–मूलविशेषकृतः **ततः**–वस्तुनो **भिन्नोऽभिन्नो वा (इति) तदेवावर्तते इति**–एवमनेन प्रकारेण **अनवस्था** चक्रकानिवृत्तेरिति[6]॥

**अथानर्थान्तरभूतः** सहकारिणा क्रियते विशेषो वस्तुनः। अत्रापि विकल्प- 25 युगलमाह–**स विद्यमानोऽविद्यमानो वा**[7]। इहापि दोषमाह–**यदि विद्यमानः कथं क्रियते? करणे वा**[8]**ऽनवस्थाप्रसङ्गः**। कथमित्याह–**सकृत्**–एकवारं **करणेऽपि विद्यमानत्वाविशेषेण** हेतुना **भूयो भूयः**–पुनः पुनः **करणमित्यनवस्था**॥

१ 'भूत इति' इति क–पाठः। २ 'नानावस्था॰' इति क–पाठः। ३ 'ऽभिन्नो वा तदे॰' इति क–पाठः। ४ 'एवम्भूतकल्पना' इति क–पाठः। ५ 'दोष इत्याह' इति क–पाठः। ६ सन्तुल्यतां यदुक्तं विवरणे चतुर्दशे पृष्ठे २७तमायां पङ्क्याम्। ७ 'वा क्रियते इहापि' इति ङ–पाठः। ८ 'चानव॰' इति क–पाठः।

( मूलम् )

**अथाविद्यमानः, व्याहतमेतत्–सतोऽनर्थान्तरभूतोऽविद्यमानश्च इति। करणे वाऽनित्यत्वापत्तिरिति। तथाहि–तस्मिन् क्रियमाणे ५ पदार्थ एव कृतः स्यात्, तदव्यतिरिक्तत्वात् तस्य ॥**

**अथ मा भूदयं दोषः, न क्रियत इत्याश्रीयते। न तर्हि स तस्य सहकारी, अकिञ्चित्करत्वात्। अकिञ्चित्करत्वेऽपि सहकारित्वेऽतिप्रसङ्गः। तथाहि–यदि कञ्चन विशेषमकुर्वन्नपि स तस्य सहकार्यभ्युपगम्यते, सर्वभावानामेव तत्सहकारित्वप्रसङ्गः, तद्विशेषाकरणेन १० अविशेषादिति व्यर्था सहकारिकल्पना ॥**

**अथोच्यते–एवम्भूत एव तस्य वस्तुनः स्वभावो येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य कार्यं जनयतीति।**

---

( स्वो० व्या० )

**अथाविद्यमानः** क्रियते। अत्राह–**व्याहतमेतत् सतः**–विद्यमानस्य १५ वस्तुनो**ऽनर्थान्तरभूतोऽविद्यमानश्च**, विद्यमानाव्यतिरिक्तो हि विद्यमान एव **इति** कृत्वा। **करणे वा** अव्यतिरिक्तस्य अविद्यमानस्य **अनित्यत्वापत्तिः**, वस्तुन इति प्रक्रमः। एतदेव भावयति **तथाहीत्यादिना**। तथाहि **तस्मिन्**–अव्यतिरिक्तेऽविद्यमाने विशेषे **क्रियमाणे पदार्थ एव कृतः स्यात्, तदव्यतिरिक्तत्वात् तस्य**–विशेषस्य ॥

२० **अथ मा भूदयं दोषः**–अनन्तरोदितः, **न क्रियत इत्याश्रीयते** सहकारिणा कश्चिद् विशेषः। अत्राह–**न तर्हि स तस्य**–वस्तुनः **सहकारी**। कुत इत्याह–**अकिञ्चित्करत्वात्** कारणात्। एवमभ्युपगमे दोषमाह–**अकिञ्चित्करत्वेऽपि** सति **सहकारित्वे**ऽभ्युपगम्यमाने। किमित्याह–**अतिप्रसङ्गः**। एनमुपदर्शयन्नाह–**तथाहीत्यादि**। तथाहि **यदि कञ्चन** विशेषम् **अकुर्वन्नपि सः**–पदार्थ २५ आलोकादिः **तस्य**–वस्तुनः **सहकार्यभ्युपगम्यते**, ततः किमित्याह–**सर्वभावानामेव तत्सहकारित्वप्रसङ्गः**। कुत इत्याह–**तद्विशेषाकरणेन अविशेषात्** तस्य–वस्तुनो विशेषाकरणेनाविशेषात् सर्वभावानाम्, इति–एवं **व्यर्था सहकारिकल्पना** ॥

**अथेत्यादि**। अथ **उच्यते** परेण–**एवम्भूत एव**[1] **तस्य वस्तुनः स्वभावः**–३० धर्मो **येन विशेषाकारकमपि प्रतिनियतमेव सहकारिणमपेक्ष्य**

---

१ 'एवास्य वस्तुनः' इति ङ–पाठः।

( मूलम् )

**एतदपि मनोरथमात्रम्, विकल्पानुपपत्तेः। तद्धि यदाऽभीष्टसहकारिसन्निधौ कार्यं जनयति तदाऽस्यानन्तरोदितसहकार्यपेक्षालक्षणः स्वभावो निवर्तते न वेति वाच्यम्। यदि निवर्ततेऽनित्यत्वप्रसङ्गः, स्वभावनिवृत्तौ स्वभाविनोऽपि तदव्यतिरेकेण तद्वदेव निवृत्तेः।** ५

**अथ न निवर्तते, कार्याजननप्रसङ्गः, तत्स्वभावानिवृत्तेः, पूर्ववत्। तथाहि—य एव तस्य कार्याजननकाले स्वभावः, जननकालेऽपि स एव; इति कथं जनयति कथं वा न पूर्वमपीति चिन्त्यम्॥**

**तेन सह जननस्वभावत्वात् तद्भावे जनयति, तदभावाच्च न पूर्वमपीति चेत्, न, अविचारितरमणीयत्वात्। तेन सह तज्जननस्वभावत्वस्यापि नित्यत्वे सति सदा तज्जननप्रसङ्गात्, अन्यथाऽधि-** १०

( स्वो० व्या० )

आलोकादि **कार्यं जनयति** विज्ञानादिकमिति। एतदाशङ्क्याह—**एतदपि मनोरथमात्रम्**। कुत इत्याह—**विकल्पानुपपत्तेः**। एनामेवाह **तद्धी**त्यादिना। तत्—वस्तु यस्माद् **यदाऽभीष्टसहकारिसन्निधौ कार्यं जनयति** विज्ञानादि, **तदाऽस्य**—वस्तुनो**ऽनन्तरोदितसहकार्यपेक्षालक्षणः**—अकिञ्चित्करसहकार्यपेक्षालक्षणः **स्वभावः**—धर्मो **निवर्तते न वेति वाच्यम्**। उभयथाऽपि दोषमाह—**यदि निवर्तते**ऽधिकृतस्वभावस्ततः किमित्याह—**अनित्यत्वप्रसङ्गः**। कुत इत्याह—**स्वभावनिवृत्तौ** सत्यां **स्वभाविनोऽपि**—धर्मिणः **तदव्यतिरेकेण**—स्वभावाभेदेन हेतुना **तद्वदेव**—स्वभाववदेव **निवृत्तेः** कारणात्॥ १५ २०

**अथ न निवर्तते** स स्वभावः। अत्राह—**कार्याजननप्रसङ्गः**। कथमित्याह—**तत्स्वभावानिवृत्तेः**—अकिञ्चित्करसहकार्यपेक्षालक्षणस्वभावानिवृत्तेः। **पूर्ववदि**ति दृष्टान्तः। एतदेव भावयति **तथाही**त्यादिना। तथाहि **य एव तस्य**—वस्तुनः **कार्याजननकाले स्वभावो जननकालेऽपि स एव**, सर्वदा स्वस्वभावानिवृत्तेः। **इति**—एवं **कथं जनयति** कार्यं तदा **कथं वा न पूर्वमपि** जनयति स्वभावाभेदादिति भाव **इति**—एवं **चिन्त्यम्**॥ २५

आह—**तेन**—सहकारिणा **सह जननस्वभावत्वात्** कारणात् **तद्भावे**—सहकारिभावे **जनयति** तदा **तदभावाच्च**—सहकार्यभावाच्च **न पूर्वमपि** जनयति। **इति चेत्**, एतदाशङ्क्याह—**न, अविचारितरमणीयत्वात्**। एतदेव दर्शयति **तेने**त्यादिना। तेन—सहकारिणा **सह तज्जननस्वभावत्वस्यापि**—कार्यजननस्वभाव- ३०

१ 'भावस्यापि कार्य०' इति ङ-पाठः।

( मूलम् )

**कृतस्वभावस्य नित्यत्वानुपपत्तेः। तथाहि—यदि सदा तेन सह तज्जनन-स्वभावं किं न जनयति? अजनयद् वा कथं सदा तत्स्वभाव-**
५ **मिति?। ततश्च यदा तद्[1] भवति तदा तेन सह तज्जननस्वभावम्, न तु सदेत्यवश्यमङ्गीकर्तव्यम्; अन्यथा सदा तस्यापि भावापत्तिः, सदा तेन सह तज्जननस्वभावत्वादिति। एवं च स्वभावभेदे कथमेकान्त-नित्यतेति चिन्त्यम् ॥**

**स्यादेतत् न तत्र स्वभावभेदः[2], आकालमपि तस्य तथैकस्वभाव-**
१० **त्वात्। तथाहि—आकालमविचलितस्वभावमेवेदमित्थंविधं येन तत एव तत्तत्सहकारिसन्निधावेव तदैव तदैव तस्यैव तस्यैवावस्था-**

---

( स्वो० व्या० )

तस्यापि **नित्यत्वे सति सदा तज्जननप्रसङ्गात्**—कार्यजननप्रसङ्गात्। विपक्षे बाधामाह **अन्यथे**त्यादिना। अन्यथा—एवमनभ्युपगमेऽ**धिकृतस्वभावस्य**—तेन
१५ सह तज्जननस्वभावस्य **नित्यत्वानुपपत्तेः**। एतदेव भावयति **तथाही**त्यादिना। तथाहि **यदि सदा तेन**—सहकारिणा **सह तज्जननस्वभावं**—कार्यजनन-स्वभावम्, वस्त्विति प्रक्रमः, **किं न जनयति** कार्यम्?। **अजनयद् वा कथं सदा तत्स्वभावं**—तेन सह तज्जननस्वभाव**मिति**?। नैव। **ततश्चे**त्यादि। ततश्च—एवं च सति **यदा तद् भवति** कार्यं **तदा तेन**—सहकारिणा **सह तज्जननस्वभावं**—
२० कार्यजननस्वभावं वस्तु, **न[3] तु सदेत्यवश्यमङ्गीकर्तव्यं** परेण; **अन्यथा**—एवमन-भ्युपगमे **सदा तस्यापि भावापत्तिः[4]** सहकारिणः। कुत इत्याह—**सदा तेन**—सहकारिणा **सह तज्जननस्वभावत्वात्**—विवक्षितकार्यजननस्वभावत्वाद् वस्तुन **इति। एवं च स्वभावभेदे** सति वस्तुनः **कथमेकान्तनित्यतेति**—एतत् **चिन्त्यम्**, नैवेत्यर्थः ॥

२५ **स्यादेतदि**त्यादि। स्यादेतत्—अथैवं मन्यसे **न तत्र**—वस्तुनि **स्वभावभेदः**। कुत इत्याह—**आकालमपि**, यावदपि कालस्तावदित्यर्थः, **तस्य**—वस्तुनः **तथा**—चित्रसहकारियोगानेककार्यसाधकत्वेन **एकस्वभावत्वात्**। एतदेव भावयति **तथाही**त्यादिना। तथाहि **आकालं**—यावदपि कालः **अविचलितस्वभाव-मेव**—अप्रच्युतानुत्पन्नस्थिरैकस्वभावमेव **इदं**—वस्तु **इत्थंविधम्**—एवम्प्रकारं **येन**
३० **तत एव** वस्तुनः **तत्तत्सहकारिसन्निधावेव** सति **तदैव तदैव**—विशिष्टे काले

---

१ 'यद् भवति' इति ग-पाठः। २ 'भावे मेदः' इति ग-पाठः। ३ 'नतु सदे०' इति ङ-पाठः। ४ 'पत्तेः सह०' इति घ-पाठः।

( मूलम् )

**संवेदनादेर्भावः । तथा च सति तदनिवृत्तावपि न पूर्ववत् तदभावः, तस्य सहकारिणस्तदैव भावात् । न च पूर्वमपि भावः, तस्यैवाभावात् । न च तदुदयेऽपि तन्निवृत्तिः, तथास्वभावत्वात् । न च पुनस्तस्यैव ५ करणम्, तथास्वभावत्वादेव । किमेतदेवम् ? । अचिन्त्योऽपर्यनुयोगार्हः स्वभाव इति ॥**

**अहो दुरन्तः स्वदर्शनानुरागः । एवमपि मिथो विरुद्धं भाषयति—**

( स्वो० व्या० )

**तस्यैव तस्यैव**—विशिष्टस्य कार्यस्य **अवस्थासंवेदनादेः**—स्वारूपिकस्य निमित्त- १० भावजन्यस्य च **भाव** इत्युत्पादः[2] । **तथा च सति** किमित्याह—**तदनिवृत्तावपि**—अनन्तरोदितस्वभावानिवृत्तावपि **न पूर्ववत् तदभावः**—कार्याभावः । कुत इत्याह—**तस्य सहकारिणो** विशिष्टस्य **तदैव भावात्** कारणात् । **न च पूर्वमपि भावः**, प्रक्रमात् कार्यस्य, **तस्यैव**—सहकारिणोऽ**भावात्**, [3]पूर्वमस्य चानवस्थानात् तेन न कादाचित्कत्वविरोधः । **न च तदुदयेऽपि**—अधिकृत[4]कार्योत्पादेऽपि १५ **तन्निवृत्तिः**—अनन्तरोदितस्वभावनिवृत्तिः । कुत इत्याह—**तथास्वभावत्वात्**, तथा—तेन [5]प्रकारेण कालभवनलक्षणेन आत्मसत्तायाः [6]स्थितेरित्यर्थः । [7]**न च पुनः तस्यैव**—कृतकार्यस्य **करणं तथास्वभावत्वादेव** एवंविध एवासाविति । **किमेतत्**—अनन्तरोदितम् **एवं** स्वतन्त्रराजक्रीडाप्रख्यम् ? । एतदाशङ्क्याह—**अचिन्त्यः**—अचिन्तनीयो योगिज्ञानवत् **अपर्यनुयोगार्हः**—न पर्यनुयोगमर्हत्यग्न्यादेरौष्ण्यादिवत् २० **स्वभाव इति** किमत्र कुर्मः ? ॥

एतदाशङ्क्याह—**अहो दुरन्तः स्वदर्शनानुराग** इति पूर्ववत्[8] । **एवमपि**—

( विवरणम् )

अथ 'नित्यानित्या'धिकारे किञ्चिल्लिख्यते—(१०-११) **स्वारूपिकस्य निमित्तभावजन्यस्य चेति** । स्वारूपिकस्य—स्वरूपमात्रभावस्य नवपुराणत्वादेर्निमित्त[9]भावेन २५ जन्यते यद् घटादि तन्निमित्तभावजन्यं तस्य । घटादिगोचरसंवेदनस्यैव नवपुराणत्वादिकाद्यवस्था घटस्य स्वाभाविक्य एव । यच्च स्वगोचरं संवेदनं तत्र निमित्तभावेनैव घटो व्याप्रियते, न च स्वयं तद्रूपतया [10]परिणामेनेति ॥

१ 'कारिणस्तदैवाभावाभावात्' इति ग-पाठः । २ 'इत्युत्पादेः' इति ङ-पाठः । ३ 'पूर्वं अस्य वाऽव०' इति ङ-पाठः । ४ 'कार्योत्पातेऽपि तन्निवृत्तिः' इति ङ-पाठः । ५ 'प्रकारेणाकाल०' इति क-पाठः । ६ 'स्थितिरित्यर्थः' इति क-पाठः । ७ 'तत्र पुनस्तस्यैव' इति ङ-पाठः । ८ 'प्रेक्ष्यतां ५७तमं पृष्ठम् । ९ 'भावे जन्यते' इति क-पाठः । १० 'परिणामतेति' इति च-पाठः ।

( मूलम् )

**तदुदयेऽपि तन्निबन्धनस्य सतो न तस्य निवृत्तिः, अविकलतथात्वे च न पुनस्तस्यैव करणमिति व्याहतम् । यद्यनिवृत्तिः कथमकरणम्? अकरणं चेत्, कथमनिवृत्तिः?। यदैव[1] तत् कृतं न च भूयः करिष्यति तदेव तदैव तत्तत्करणस्वभावो[2] जरयेव यौवनं तदकरणस्वभावेनापनीतः, अन्यथा तद्भावेन बलात् तत्फलप्रसङ्गः । न ह्यग्निरनपगते दहनस्वभावे न दहति, स्वभावापगमे च नियतमनित्यता[3] । तथापि एकदाह्यदहने तददहनाद् दाह्यान्तरदहनाच्चादोष इति चेत्, न,**

१०

( स्वो० व्या० )

यथोक्तं **मिथः**–परस्परं[4] **विरुद्धं भाषयति**–असङ्गतमुल्लापयति । कथमेतद् विरुद्धमित्याह–**तदुदयेऽपी**त्यादि । तदुदयेऽपि तस्मात्–स्वभावात् उत्पादेऽपि, विवक्षितकार्यस्येति प्रक्रमः, **तन्निबन्धनस्य**–विवक्षितकार्यनिबन्धनस्य **सतः**–भवतः **न तस्य**–स्वभावस्य **निवृत्तिः** । **अविकलतथात्वे च** तत्स्वभावस्य, **न पुनः**
१५ **तस्यैव**–विवक्षितकार्यस्य **करणमिति व्याहतम्**, तत्तादवस्थ्ये तदकरणविरोधात् । तथा चाह–**यद्यनिवृत्तिरि**त्यादि । यद्यनिवृत्तिर्विवक्षितकार्यकरणस्वभावस्य **कथमकरणं** विवक्षितकार्यस्य? **अकरणं चेद्** विवक्षितकार्यस्य **कथमनिवृत्तिः** विवक्षितकार्यकरणस्वभावस्य?। एतद्भावनायैवाह–**यदैवे**त्यादि । यदैव **तत् कृतं**–विवक्षितकार्यं **न च भूयः**–पुनः **करिष्यति तदेव तदैव**[5] । किमित्याह–**तत्तत्-**
२० **करणस्वभाव** इति । तस्य–वस्तुनस्तत्करणस्वभावः–विवक्षितकार्यकरणात्मभावः । **जरयेव यौवनमिति** दृष्टान्तः । **तदकरणस्वभावेन**–विवक्षितकार्याकरणात्मभावलक्षणेन **अपनीतः**–तिरस्कृतः । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथे**त्यादि । अन्यथा–एवमनभ्युपगमे **तद्भावेन**–तत्तत्करणस्वभावभावेन **बलात्**–सामर्थ्यात् **तत्फलप्रसङ्गः**–विवक्षितकार्यप्रसङ्गः । अमुमेवार्थं स्थूरोक्त्या निदर्शनान्तरेणाह
२५ **न ही**त्यादिना । न हि **अग्निरनपगते दहनस्वभावे** नैश्चयिके **न दहति**, किन्तु दहत्येव, नैश्चयिकस्य दहनस्वभावस्यैवमात्मकत्वात् । **स्वभावापगमे**[6] **च** विवक्षितकार्योदये सत्यभ्युपगम्यमाने **नियतमनित्यता**ऽधिकृतवस्तुनः, अतादवस्थ्यस्यैवानित्यत्वादिति । निदर्शनमधिकृत्याह–**तथापी**त्यादि । तथापि–एवमपि **एकदाह्यदहने** सत्यग्नेः **तददहनाद्** दग्धत्वेनैव **दाह्यान्तरदहनाच्च** तददग्धत्वेन **अदोषो**

१ 'यदेव' इति क–पाठः । २ 'तत्करण०' इति ग–पाठः । ३ 'नित्यमनित्यता' इति क–पाठः । ४ 'परस्परविरुद्धं' इति घ–पाठः । ५ 'तदैव तदैव' इति क–पाठः । ६ 'गमे विवक्षित०' इति ङ–पाठः ।

(मूलम्)

**सर्वथा स्वभावभेदमन्तरेणोक्तानुपपत्तेः। न च येनैव स्वभावेनैकं दाह्यं दहति तेनैव दाह्यान्तरम्, तस्य तथातदनियतत्वे दाह्यान्तरवत् तदा तददहनप्रसङ्गात्। नियतत्वे च तद्दहनादहनयोरन्यत्र [1]तदसिद्धेः स्थितः कथञ्चित् स्वभावभेदः, इति आकालमपि तस्य** ५

(स्वो० व्या०)

न ह्यग्निरनपगते दहनस्वभावे न दहतीत्यादि[2]। **इति**—एवं चेन्मन्यसे, एतदाशङ्क्याह—**नेत्यादि**। न—नैतदेवम्। कुत इत्याह—**सर्वथा**—एकान्तेन **स्वभावभेदमन्तरेण**, तदेकस्वभावत्व[3] एवेत्यर्थः। **उक्तानुपपत्तेः** एकदाह्यदहने तददहनं दाह्यान्तरदहनं चेत्युक्तम्, न चैतद् द्वयमेकस्वभावत्वादुपपद्यते, तददहनवद् दाह्यान्तरदहनायोगाद् विपर्ययो वा हेत्वभेदादिति सूक्ष्मधिया भावनीयम्॥ १०

दोषान्तरमाह **न चे**त्यादिना। न च **येनैव स्वभावेनैकं दाह्यं दहति**, अग्निरिति प्रक्रमः, **तेनैव दाह्यान्तरम्**—अन्यत्। कुत इत्याह—**तस्य**—स्वभावस्य **तथा**[4]—तेन दहनादहनप्रकारेण **तदनियतत्वे** तयोः—दाह्ययोरनियतत्वे दहनादहनं प्रति। किमित्याह—**दाह्यान्तरवत्**—यन्न दहति तद्वत्, **तदा**—तस्मिन् काले **तददहनप्रसङ्गात्**, यद् दहति त[5]ददहनप्रसङ्गात्। प्रसङ्गश्च तदनियतत्वाविशेषेण उभयदहनस्वभावोऽप्यसौ तद् दहनादहनं प्रत्यनियत इत्येकं न दहति तदेतदनियतत्वं यदपि दहति तत्राप्यविशिष्टमेवेति तददहनप्रसङ्गः स्पष्टः। **नियतत्वे च** त[6]स्य वस्तुस्वभावस्याभ्युपगम्यमाने केत्याह—**तद्दहनादहनयोः** तयोः—दाह्ययो[7]र्दहनादहने तयोर्यद् दहति तद् दहत्येव, यच्च न दहति तन्न दहत्येवेत्येवम्भूते। किमित्याह—**अन्यत्र**—प्रतियोगिनि यत् तदा न दहति तत्र, त[8]**दसिद्धेः**—दहनासिद्धेः, न चैतदेवमिति **स्थितः कथञ्चित् स्वभावभेदः**, **इति**—एवम् **आकाल**- १५ २०

(विवरणम्)

(२३) **न चैतदेवमिति**—न पुनरेतदेवं यदुत दहनस्यासिद्धिरेव। यदि हि नित्यस्वरूपतया [8]एकस्वभावः, तदा [9]यावत्त्वेन कालान्तरयोगेनापि दाह्यमस्ति तदेकदाह्यदहनकाले सर्वं दह्येत, न च तदस्ति, अतो बलादस्य [10]दग्धुंशक्यतृणकाष्ठाद्यपि प्रतीत्य दहनादहनस्वभावतेति॥ २५

१ 'तदसिद्धिरिति' इति क-पाठः। २ प्रेक्ष्यतां १०२तमं पृष्ठम्। ३ 'भाव एवेत्यर्थः' इति ङ-पाठः। ४ 'तथानेन दहना०' इति ङ-पाठः। ५ 'तदहन०' इति घ-पाठोऽशुद्धः। ६ 'तस्या स्वभाव०' इति ङ-पाठः। ७ 'तदसिद्धिर्दहनासिद्धिर्न' इति ङ-पाठः। ८ 'एकत्वभावस्वभाव एक तदा' इति ख-पाठः। ९ 'यावत् तेन' इति च-पाठः। १० 'दग्धुं शक्य०' इति ख-च-पाठः।

( मूलम् )

**तथैकस्वभावत्वमनेककार्यभावादेर्न सन्न्यायसङ्गतमिति सूक्ष्मधिया भावनीयमिति । एवं तावदेकान्तनित्यपक्षे विज्ञानादिकार्यायोगात् ५ तदवगमाभाव इति ॥**

**अथापि प्रकृत्यैकक्षणस्थितिधर्मकमेकान्तानित्यमभ्युपगम्यते[1] । एवमपि विज्ञानादिकार्यायोगात् तदवगमाभाव एव, तदभाव-भाविनो विज्ञान[2]स्य तत्कार्यत्वानिश्चयात् । न च सर्वथैकक्ष[3]णस्थिति-धर्मणः सत्त्वैव युक्ता, द्वितीयादिक्षणास्थित्यभावे सति तत्क्षण-१० स्थितिधर्मकत्वायोगेन तदन्यत्वादिविकल्पानुपपत्तेः । स्यादेतत्**

( स्वो० व्या० )

**मपि**—यावदपि कालस्तावदपि **तस्य**—वस्तुनः **तथैकस्वभावत्वम्**—अप्रच्युता-नुत्पन्नस्थिरैकरूपतया **अनेककार्यभावादेः** कारणात् । 'आदि'शब्दात् त[4]त्तत्कृतौ तत्तदवस्थाभावग्रहः । **न सन्न्यायसङ्गतमिति**—एवं **सूक्ष्मधिया भावनीयम्**, १५ तदेककरणाकरणयोः स्व[5]भावभेदेनान्तरीयकत्वादिति । **एवं तावदेकान्तनित्यपक्षे** किमित्याह—**विज्ञानादिकार्यायोगात्** कारणात्, 'आदि'शब्दादवस्थापरिग्रहः, **तदवगमाभाव इति**—एकान्तनित्यावगमाभाव इति ॥

द्वितीयपक्षमधिकृत्याह—**अथापीत्यादि** । अथापि **प्रकृत्यैकक्षणस्थितिधर्म-कमेकान्तानित्यमभ्युपगम्यते** वस्तु । **एवमपि विज्ञानादिकार्यायोगात्** २० कारणात् **तदवगमाभाव एव**—एकान्तानित्यावगमाभाव एव । कुत इत्याह—**तदभावभाविनः**—वस्त्वभावभाविनः । **विज्ञानस्य तत्कार्यत्वानिश्चयात्**, अर्थात्यन्तपरोक्षतयेति भावः । **न चेत्यादि** । न च **सर्वथा**—एकान्तेन **क्षणस्थिति-धर्मणः**—वस्तुनः **सत्त्वैव युक्ता** । कुत इत्याह—**द्वितीयादीत्यादि** । द्वितीयादि-**क्षणास्थित्यभावे सति तत्क्षणस्थितिधर्मकत्वायोगेन** तस्यैव वस्तुनः २५ क्षणस्थितिधर्मकत्वायोगेन हेतुना **तदन्यत्वादिविकल्पानुपपत्तेः**, तयोः—

( विवरणम् )

**(१३-१४) तत्तत्कृतौ तत्तदवस्थाभावग्रह** इति । तस्य तस्य स्थास-कोश-कुशूलादेः कार्यस्य कृतौ करणे तस्यास्तस्यास्तत्तत्कार्यकरणानुकूलाया अवस्थायाः कुम्भकारादेः कार्यकर्तुः सम्बन्धिन्या भावग्रहः सत्ताङ्गीकारः । कुम्भकारो हि अन्यावस्थातोऽपरिणतो ३० घटं कुरुतेऽवस्थान्तरगतश्च शरावोदञ्चनादीनि कार्याणि, व्यापारभेदस्योपलम्भात् ॥

१ प्रेक्ष्यतां सप्तदशं पृष्ठम् । २ 'स्तत्र कार्य०' इति क-पाठः । ३ 'क्षणस्थित्य०' इति क-पाठः । ४ 'तत्कृतौ' इति क-पाठः । ५ 'भावभेदनान्तरीय०' इति घ-पाठः ।

( मूलम् )

**द्वितीयादिक्षणास्थितौ प्रथमक्षणस्थितेरभावाद् भावे वा तदनुपपत्तेः प्रतियोग्यभावात् तदन्यत्वादिविकल्पानुपपत्तिः । तथाहि–द्वितीयक्षणे तदेव न भवतीति । उक्तं च[2]–** ५

**"न तत्र किञ्चिद् भवति न भवत्येव केवलम्"[3] इति ॥**

---

( स्वो० व्या० )

प्रथमक्षणस्थिति-द्वितीयादिक्षणास्थित्योरन्यत्वादिविकल्पैरघटमानत्वात् क्षणस्थितिधर्मसत्तायाः । तथाहि–तयोः प्रथमक्षणस्थिति-द्वितीयादिक्षणास्थित्योः अन्यत्वमनन्यत्वमन्यानन्यत्वमवाच्यत्वं वा स्यात् । अन्यत्वे क्षणान्तरस्थितेरिव प्रस्तुतास्थित्यविरोधात् १० क्षणस्थितित्वाभावः । अनन्यत्वे प्रथमक्षणेऽप्यस्थितिः, द्वितीयादिष्वपि वा स्थितिः, अन्यथाऽनन्यत्वायोगात्, तयोरैक्ये ह्यनन्यत्वमिति भावनीयम् । अन्यानन्यत्वे विरोधः, सहानवस्थानात् । अवाच्यत्वे स्ववचनविरोधः, अवाच्यत्वेनैव वाच्यत्वात् । **स्यादेतदित्यादि** । स्यादेतत्–अथैवं मन्यसे **द्वितीयादिक्षणास्थितौ** सत्यां **प्रथमक्षणस्थितेरभावात्** कारणाद् **भावे वा** प्रथमक्षणस्थितेः **तदनुपपत्तेः**–द्वितीयादिक्षणास्थित्यनुपपत्तेः तस्यासावस्थितिरिति कृत्वा । किमित्याह– १५ **प्रतियोग्यभावात्** पक्षद्वयेऽपि **तदन्यत्वादिविकल्पानुपपत्तिः** तयोः–प्रथमक्षणस्थिति-द्वितीयादिक्षणास्थित्योरन्यत्वादिविकल्पाघटमानता । एतद्भावनायैव आह–**तथाहीत्यादि** । तथाहीत्युपप्रदर्शने । **द्वितीयक्षणे तदेव न भवति** यत् प्रथमक्षणेऽभूदिति । **उक्तं च** धर्मकीर्तिना– २०

**"न तत्र किञ्चिद् भवति न भवत्येव केवलम्"[4] इति वार्तिके ॥**

---

( विवरणम् )

(१०-११) **क्षणान्तरस्थितेरिव प्रस्तुतास्थित्यविरोधात् क्षणस्थितित्वाभाव** इति । यथाहि–क्षणिकस्य घटादेः[5] स्वकाले पटादिक्षणेन सह वस्त्वन्तरत्वान्न विरोधः, एवं द्वितीयक्षणभाविन्या अस्थित्याऽपि सह प्रथमक्षणस्थितेर्न विरोधः २५ सङ्गच्छते, अन्यत्वाविशेषात्, ततश्च स्खलनाभावात् । द्वितीयेऽपि क्षणे प्रथमक्षणभाक् सत्त्वं स्थितिमदुपपद्यत इति ॥

(१६) **तस्यासावस्थितिरिति कृत्वेति[6]** । तस्य–प्रथमक्षणभाविनः पदार्थस्य सम्बन्धिनी असौ–द्वितीयक्षणभाविनी अस्थितिरिति ॥

---

१ 'क्षणस्थितौ' इति क–पाठः । २ 'धर्मकीर्तिकृते वार्तिके' । ३–४ अनुष्टुप् । ५ 'काले घटादि०' इति ख–पाठः । ६ 'कृत्वा तस्य' इति क–पाठः ।

( मूलम् )

**नन्वेवमपि भवनादूर्ध्वमभवनात् तत्कादाचित्कत्वतस्तदुत्पत्तेः, अत एव नाशाद् भवनोन्मज्जनप्रसङ्गः। स्यादेतत् न भवतीति भवन-**
५ **क्रियाप्रतिषेधमात्रमहेतुकमदः, तत् कथमस्य कादाचित्कत्वादि ?। उच्यते—भवनकादाचित्कतया तत्पूर्वकत्वेन तद्धेतुत्वोपपत्तेः, अन्यथा भवनेऽप्युत्पत्त्याद्यभावः, तस्यापि अभवनक्रियाप्रतिषेधमात्रत्वात्**

( स्वो० व्या० )

एतदाशङ्क्याह—**नन्वेवमपीत्यादि** । नन्वेवमपि—तदेव न भवतीत्यस्मिन्नपि
१० पक्षे **भवनादूर्ध्वमभवनात्** कारणात् **तत्कादाचित्कत्वतः** तस्य—अभवनस्य कादाचित्कत्वेन हेतुना **तदुत्पत्तेः**—अभवनोत्पत्तेः कारणात् । **अत एव**—उत्पत्तेरेव हेतोः किमित्याह—**नाशात्** अभवनस्य **भवनोन्मज्जनप्रसङ्गः**, तदभवननाशान्यथाऽनुपपत्तेरिति भावनीयम् ॥

**स्यादेतदित्यादि** । अथैवं मन्यसे **न भवतीति भवनक्रियाप्रतिषेध-**
१५ **मात्रमहेतुकमदः**—एतत्, **तत् कथमस्य**—अभवनस्य **कादाचित्कत्वादि**, हेतुभावाधीनत्वात् कादाचित्कत्वस्य ? । 'आदि'शब्दात् तन्नाशभवनोन्मज्जनग्रहः ॥

**उच्यते**ऽत्र समाधिः—**भवनकादाचित्कतया** कारणेन **तत्पूर्वकत्वेन**—भवनपूर्वकत्वेन हेतुना **तद्धेतुत्वोपपत्तेः**—भवनहेतुत्वोपपत्तेः, अभवनस्य यद्भवनानन्तरं तत् स एव तस्य हेतुरिति । **अन्यथेत्यादि** । अन्यथा—एवमनभ्युपगमे **भवने-**
२० **ऽप्युत्पत्त्याद्यभावः**—उत्पत्तिनाशाभावः । कुत इत्याह—**तस्यापि**—भवनस्य **अभवनक्रियाप्रतिषेधमात्रत्वात्** कारणात् । काऽभवनस्य क्रियेत्याशङ्क्य

( विवरणम् )

(१३) **तदभवननाशान्यथाऽनुपपत्तेरिति** । तस्य—प्राच्यक्षणवर्तिनो भवनस्य यद्भवनं द्वितीयक्षणेन तस्य योऽसौ नाशस्तृतीयक्षणे तस्य अन्यथा—विनष्टभावेन
२५ उन्मज्जनमज्जनमन्तरेणानुपपत्तेः—अघटनात् ॥

(१८-१९) **यद्भवनानन्तरं तत् स एव तस्य हेतुरिति** । यस्य—घटादेः सम्बन्धिनो भवनादनन्तरं तत्—अभवनं स एव—घटादिर्भवनरूपस्तस्य—अभवन(स्य) हेतुः पंक्तौ भवनस्य हेतुः, अन्वयाभावेन तस्यानन्तर्यमात्रनिबन्धनत्वाद् भवन्मते कार्यकारणभावस्य ॥

१ 'पत्तिरिति' इति क-पाठः । २ 'लक्षणस्तस्य' इति क-पाठः । ३ 'भावोन्मज्जनमन्तरेणानु०' इति च-पाठः । ४ 'यस्य घटादिर्भवनरूपस्तस्य' इति च-पाठः । ५ 'पत्तौ भवनस्य' इति क-पाठः । ६ 'कारणाभावस्य' इति ख-पाठः ।

( मूलम् )

**उभयत्र तदतिरिक्तक्रियाऽभावात्, सत्स्वभावादिजन्याजन्यकत्वेन हेत्वयोगतोऽहेतुकत्वापत्तेश्च ॥**

**न चायं भवनक्रियाप्रतिषेधो ज्यायान्, विकल्पानुपपत्तेः। स** ५
**हि भवनस्वभावस्याभवनस्वभावस्य वा क्रियेत। न तावद् भवनस्वभावस्य, अशक्यत्वात्; अन्यथा भवनस्वभावत्वविरोधात्। अभवनस्वभावभवनक्रियाप्रतिषेधे तु प्रयासवैयर्थ्यं भवनापत्तिर्वेति,**

( स्वो० व्या० )

आह–**उभयत्र**–भवनेऽभवने च **तदतिरिक्तक्रियाऽभावात्**–भवनाभवनाति- १०
रिक्तक्रियाऽभावात्। अभवनस्य नाशत्वेन हेत्वयोग इत्येतदपि समानमित्यभिधातुमाह–**सत्स्वभावादिजन्याजनकत्वेन** कारणेन **हेत्वयोगतः** कारणात् **अहेतुकत्वापत्तेश्च** भवनस्य, उत्पत्त्याद्यभाव इति क्रियायोगः। तथाहि–भवनं जन्योत्पादस्तस्यापि हेतुर्न युज्यत एवेति स हि सत्स्वभावजन्यजनकः, असत्स्वभावजन्यजनकः, उभयस्वभावजन्यजनकः, अनुभयस्वभावजन्यजनको वा भवेत्। १५
सर्वथाऽपि दोषः। यदि सत्स्वभावं जन्यम्, कथं तज्जनकः?। अथासत्स्वभावमेव तत् तथापि कथं तज्जनकः?। उभयस्वभावत्वे विरोधः। अनुभयस्वभावत्वे अवस्तुता इत्युत्पादहेत्वभाव इति भावनीयम् ॥

दोषान्तरमाह–**न चायमित्यादि**। **न चायं भवनक्रियाप्रतिषेधो ज्यायान्**–शोभनः। कुत इत्याह–**विकल्पानुपपत्तेः** कारणात्। एनामेवाह **स हीत्या**- २०
दिना। स यस्माद् भवनक्रियाप्रतिषेधो **भवनस्वभावस्य** सतोऽ**भवनस्वभावस्य वा क्रियेत**। किञ्चातः?। उभयथाऽपि दोष इत्याह–**न तावद् भवनस्वभावस्य** भवनक्रियाप्रतिषेधः। कुत इत्याह **अशक्यत्वात्**, भवनस्वभावस्य तत्त्वं निषेद्धुमशक्यमिति। अत एवाह–**अन्यथा भवनस्वभावत्वविरोधात्**, न तत्क्रियानिषेध इति। **अभवनस्वभावभवनक्रियाप्रतिषेधे तु** अभ्युपगम्यमाने २५
**प्रयासवैयर्थ्यम्**, यतो नाभवनस्वभावं भवनमिति। तथा **भवनापत्तिर्वेति**

( विवरणम् )

(२६) **नाभवनस्वभावं भवनमिति**। भवनमिति हि शब्दः सत्त्वमाह, अभवनमिति तु तद्विपर्ययम्, ततो न–नैवाभवनं स्वभावं–तुच्छरूपं भवनं–सत्त्वं भवति, किन्त्वभवनस्वभावमभवनमेव भवति। एवं चैकान्ततुच्छाभवनस्य प्रतिषेधे ३०
केवलतुषखण्डनवत् प्रयासवैयर्थ्यमेव, स्वयमेव तत्र प्रतिषेधस्य सिद्धत्वात् ॥

१ 'कत्वोपपत्तेश्च' इति ग–पाठः। २ 'जन्यैत्पादः' इति क–पाठः। ३ 'प्रतिषेधाभवन०' इति क–पाठः। ४ 'नाभावनस्वभावं भवनमिति' इति ख–पाठः। ५ 'कण्डनवत्' च–पाठः।

(मूलम्)

**एवं च 'तदेव न भवति' इति वाङ्मात्रमेतत्, शब्दार्थानुपपत्तेश्च। तथाहि–'तदेव' इति भवनस्वभावं परामृश्य 'न भवति' इत्यभिदधतः ५ शब्दार्थविरोधः। यदा न भवति न तदा भवनस्वभावमिति चेत्, अभवनस्वभावं तर्हि न भवतीति तदेवेति न शोभन उपन्यासः। तत् क्षणभवनस्वभावमिति चेत्, कथं द्वितीयक्षणे न भवति?। एकक्षणभवनस्वभावमिति चेत्, न ह्यसावपि नैकः। तदेकक्षणभवनस्वभावमिति चेत्, नासौ तदतिरेकेण कश्चित् इति**

१० (स्वो० व्या०)

अभवनस्वभावभवनक्रियाप्रतिषेधे बलाद् भवनापत्तिः। **एवं च तदेव न भवतीति वाङ्मात्रमेतत्**, उक्तवत्, अभवनायोगात्; तथा **शब्दार्थानुपपत्तेश्च** तदेव न भवतीत्यत्र। एनामेव दर्शयति **तथाहीत्यादिना**। तथाहीति पूर्ववत्। **तदेवेति भवनस्वभावं परामृश्य** वस्तु **न भवतीत्यभिदधतः** सतः **शब्दार्थ-** १५ **विरोधः** प्रकट एव। **यदा न भवति** तत्, **न तदा भवनस्वभावं** सन्न भवति। इति–एवं **चेन्मन्यसे**, एतदाशङ्क्याह–**अभवनस्वभावं तर्हि न भवतीति**–एवं **तदेवेति न शोभन उपन्यासः**, तदेवेत्यनेन भवनस्वभावस्याभिधानात्। **तत्**–भवनं **क्षणभवनस्वभावम्। इति चेत्**, एतदाशङ्क्याह–**कथं द्वितीयक्षणे न भवति?** तस्यापि क्षणत्वादित्यभिप्रायः। **एकक्षणस्थितिस्वभावमिति** २० **चेत्**, एतदाशङ्क्याह–**न ह्यसावपि नैकः**। किं तर्हि?। एक एव। **तदेकक्षणभवनस्वभावं** तस्मिन्नेवैकस्मिन् क्षणे भवनं स्वभावो यस्य तत् तथा। **इति**–एवं **चेन्मन्यसे**, एतदाशङ्क्याह–**नासौ**–क्षणः **तदतिरेकेण**–भवनातिरेकेण **कश्चित्**, तदक्षणिकत्वप्रसङ्गात्। तदैव तदपरक्षणाभावात्, अनवस्थापत्तेरिति भावनीयम्। **इति**

(विवरणम्)

२५ (२३) **तदक्षणिकत्वप्रसङ्गादिति**। येन क्षणेन–कालेन समयलक्षणेन घटादिरर्थः क्षणिकतया व्यवह्रियते [१]तस्य क्षणस्य अक्षणिकत्वप्रसङ्गात्। कुत इत्याह–(२३) **तदैव तदपरक्षणाभावादिति**। तदैव–विवक्षितप्रथमक्षणकाले तस्माद् अपरस्य क्षणस्याभावात् येन तदेव क्षणिकः क्रियते। अथ तस्याप्यपरः क्षणोऽभ्युपगम्यते, तर्हि तस्याप्यपरेण क्षणेन भाव्यं तस्यापि चान्येनेत्यनवस्थालता नभोमण्डलमालिनी ३० सर्पति। अत एवाह–(२३) **अनवस्थापत्तेरिति**। व्याख्यातार्थमेव॥

१ 'तस्य क्षणिक०' इति क–पाठः, 'तस्मात् क्षणाद्या क्षणिक०' इति तु ख–पाठः। २ 'क्षणिकः क्रियते। तदैवापरक्षणस्याभावात्। अथ तस्याप्यपरः' इति च–पाठः।

(मूलम्)

**निबन्धनाभावतो यत्किञ्चिदेतत् ॥**

**एवं च तदतिरिक्तोत्पत्त्यभावादविशिष्टभवनानन्तरमभवनमिति प्राप्तम्। तथा च सति क्षणिकत्वेऽप्यनिश्चयः, तत्कादाचित्कतया तु तदुत्पत्त्याद्यपरिहृतमेव। न नश्वरमभवनम्, तुच्छत्वादिति चेत्, भवनेऽप्यतुच्छतया समानमेतत्। न समानम्, तस्य अभवनविरोधात्। अभवनस्य भवने को विरोधः?। नीरूपस्य सरूपतापत्तिरिति चेत्, सरूपस्य कथं नीरूपतापत्तिरिति वाच्यम्। स्वहेतोस्तत्स्वभावत्वात्** ५ १०

(स्वो० व्या०)

**निबन्धनाभावतः** कारणाद् **यत्किञ्चिदेतद्** यदुत तदेकक्षणभवनस्वभावमिति ॥

**एवं चे**त्यादि। एवं च–उक्तनीत्या **तदतिरिक्तोत्पत्त्यभावात्**–भवनातिरिक्तोत्पत्त्यभावात् **अविशिष्टभवनानन्तरमभवनमिति प्राप्तं** न्यायतः। **तथा च सति** किमित्याह–**क्षणिकत्वेऽप्यनिश्चयः**, अविशिष्टभवनमात्रसिद्धेः **तत्कादाचित्कतया तु**–अभवनकादाचित्कतया तु तदनन्तरभावेन **तदुत्पत्त्यादि** अभवनोत्पत्तिनाशोत्तरोन्मज्जनाख्यम् **अपरिहृतमेव**, उक्तनीतितादवस्थ्यादिति ॥ १५

पराभिप्रायमाह–**ने**त्यादि। **न नश्वरमभवनं** भवनान्तरमपि [1]भवतु। कुत इत्याह–**तुच्छत्वात्**–निःस्वभावत्वात्। **इति चेत्**, एतदाशङ्क्याह–**भवनेऽप्यतुच्छतया** सत्स्वभावत्वेन **समानमेतत्**–अनश्वरत्वम्। **न समानम्, तस्य**–भवनस्य **अभवनविरोधात्** कारणात्। एतदाशङ्क्याह–**अभवनस्य भवने को विरोधः?। नीरूपस्य** अभवनस्य **सरूपतापत्ति**र्विरोधः। **इति चेत्**, एतदाशङ्क्याह–**सरूपस्य** भवनस्य **कथं नीरूपतापत्तिरिति**–एतद् **वाच्यम्**, समानमेतदित्यभिप्रायः। न समानमित्यावेदयति **स्वहेतो**रित्यादिना। स्वहेतोः सकाशात् **तत्स्वभावभावात्**–क्षणादूर्ध्वं नीरूपतास्वभावोत्पादात्। २० २५

(विवरणम्)

(४-५) **तदतिरिक्तोत्पत्त्यभावादविशिष्टभवनानन्तरमभवनमिति प्राप्त**मिति। तदतिरिक्तायाः–पदार्थातिरिक्ताया उत्पत्तेरभावात्, पदार्थ एवोत्पत्तिरित्यर्थः। किमित्याह–(अ)विशिष्टभवनानन्तरं क्षणिकमिति प्राप्तमिति [2]विशेषण[3]विकलसत्त्वमात्रानन्तरं अभवनमिति प्राप्तम् ॥

(१४) **क्षणिकत्वेऽप्यनिश्चय** इति। अविशिष्टभवनमात्रसिद्धेः क्षणिकमिदमिति प्रागुक्तयुक्तेरेव निश्चेतुमशक्यतयेत्यर्थः ॥ ३०

१ 'भवतु। कुत' इति **घ**–**ङ**–पाठः। २ 'क्षणिकमिति विशेषण०' इति **च**–पाठः। ३ 'विकलमात्रानन्तरं' इति **च**–पाठः।

(मूलम्)

**इति चेत्, अभवनस्यैवंस्वभावभवनेऽपि को दोषः?। हेत्वभावनिःस्वभावते इति चेत्, न, तद्भवनस्यैव तद्धेतुत्वात्, तद्भावभावित्वात्, भावाभवनस्याभावभवनात्, तुच्छतया तद्भावसिद्धेः, अन्यथा तन्नाशायोगात् इति ॥**

**न च तन्निःस्वभावमेव, तुच्छज्ञेयस्वभावत्वात्, अन्यथा तज्ज्ञानानुपपत्तेः 'तदेव न भवति'[1] इत्यज्ञातोक्तप्रसङ्गात्, तज्ज्ञानेनाभवनाज्ञानात्, कालभेदेन तदतत्त्वादिति । तस्यैव क्षणादूर्ध्वमभवनस्वभावत्वात् प्रत्यक्षेण तथाग्रहणात् यथार्थं तत्प्रवृत्तेरभवनज्ञानादुक्तदोषाभाव इति चेत्, न, विहितोत्तरत्वात्, 'कालभेदेन तदतत्त्वात्',**

(स्वो० व्या०)

**इति चेत्**, एतदाशङ्क्याह–**अभवनस्यैवंस्वभावभवने**–क्षणादूर्ध्वं स्वरूपतास्वभावोत्पादे **को दोषः?**। न कश्चिदित्यर्थः। **हेत्वभावनिःस्वभावते** दोषः। **इति चेत्**, एतदाशङ्क्याह–**ने**त्यादि। (न–) नैतदेवं यदुक्तं भवता। कुत इत्याह–**तद्भवनस्यैव** यद्[2]भवनमेतत् तस्यैवेत्यर्थः। किमित्याह–**तद्धेतुत्वात्**–अभवनहेतुत्वात्। कुत एतदेवमित्याशङ्क्याह–**तद्भावभावित्वात्**–भवनभावभावित्वात् अभवनस्य। कस्तुच्छस्य भाव इत्याशङ्कापोहायाह–**भावाभवनस्य**–तुच्छस्य **अभावभवनात्**, एतदेव ह्यभावभवनं यद् भावाभवनमिति। एवं च **तुच्छतया** नीरूपतया **तद्भावसिद्धेः**–अभवनभावसिद्धेः, अभवनं च भावश्चेति विरुद्धम्। भाव एव नाश इति तु कथं न विरुद्धम्?। तत्क्षणस्थितिधर्मकत्वेन अभवनमपि कादाचित्कतयेति। अत एवाह–**अन्यथा तन्नाशायोगादिति**[3]–भवननाशायोगादिति ॥

अभ्युच्चयमाह **न चे**त्यादिना। न च **तन्निःस्वभावमेव** अभवनम्। कुत इत्याह–**तुच्छज्ञेयस्वभावत्वात्, अन्यथा तज्ज्ञानानुपपत्तेः**–अभवनज्ञानानुपपत्तेः। ततः किमित्याह–**'तदेव न भवति' इत्यज्ञातोक्तप्रसङ्गात्**। प्रसङ्गश्च **तज्ज्ञानेन**–भवनज्ञानेन **अभवनाज्ञानात्**, अज्ञानं च **कालभेदेन** भवनाभवनयोस्**तदतत्त्वात्**–भवनस्यैवाभवनत्वादिति ॥

पराभिप्रायमाह–**तस्यैवे**त्यादि। तस्यैव–भवनस्य वस्तुनः **क्षणादूर्ध्वमभवनस्वभावत्वात्** कारणात्। यदि नामैवं ततः किमित्याह–**प्रत्यक्षेण तथाग्रहणात्**–क्षणादूर्ध्वमभवनस्वभावतया ग्रहणात्। किमेतदेवमित्याह–**यथार्थं तत्प्रवृत्तेः**–प्रत्यक्षप्रवृत्तेः। किमित्याह–**अभवनज्ञानात्** कारणात् **उक्तदोषाभावः**–

१ प्रेक्ष्यतां १०८तमं पृष्ठम्। २ 'यदभवन०' इति घ–पाठः। ३ 'योगाद् भवन०' इति ङ–पाठः।

(मूलम्)

**अन्यथा तदनुपपत्तेः, भाविनश्चेन्द्रियेणाग्रहणात्, अतिप्रसङ्गात्, नीरूपत्वाच्च। न चानेन क्वचिद् भवनवदभवनग्रहः, तथानिश्चयाभावात्। न च निरंशानुभवभावेऽपि विभ्रमात् तदभावः, भवननिश्चयस्याप्यभावापत्तेः। न च तन्निबन्धनानुभवे न विभ्रमः, तस्यैव तत्त्वात्। न चैकस्य क्वचिद् विभ्रमः क्वचिन्नेति, एकत्वविरोधात्। न चान्तेऽभवननिश्चयात् तद्गतिः, तत्रापि तदयोगात्। न च कपाल-** ५

(स्वो० व्या०)

तज्ज्ञानेनाभवनाज्ज्ञानादित्यादिदोषाभावः। इति चेत्, एतदाशङ्क्याह–नेत्यादि। न–नैतदेवम्। कुत इत्याह–**विहितोत्तरत्वात्**। तदेव स्मारयति **कालभेदेने**त्यादिना। कालभेदेन भवनाभवनयोः **तदतत्त्वात्**–भवनस्यैवाभवनत्वात्। **अन्यथा**–एवमनभ्युपगमे **तदनुपपत्तेः**–अभवनानुपपत्तेः। तत्कालभाविभवनाभिन्नमभवनं च भवनमेवेति तदनुपपत्तिः। यदि नामैवं ततः किमित्याह–**भाविनश्च**–अभवनस्य **इन्द्रियेणाग्रहणात्**। ग्रहणे दोषमाह–**अतिप्रसङ्गात्** तद्वदन्यस्यापि ग्रहणेन। दोषान्तरमाह–**नीरूपत्वाच्च**। अभवनस्य नीरूपत्वं नीरूपसत्त्वाद्युपलक्षणमिति ॥ १० १५

अभ्युच्चयमभिधातुमाह–**न चे**त्यादि। न च **अनेन**–प्रत्यक्षेण **क्वचित्**–एकत्र सर्वत्र वा क्वचिदपि **भवनवद्**–यथा भवने तथा **अभवने ग्रहः**। कुतो नेत्याह–**तथानिश्चयाभावात्**–भवन इव निश्चयाभावात्। अभवने आशङ्कान्तरापोहायाह–**न चे**त्यादि। न च **निरंशानुभवभावेऽपि** सति **विभ्रमात्** हेतोः **तदभावः**–अभवननिश्चयाभावः। कुत इत्याह–**भवननिश्चयस्यापि** तन्निबन्धनस्य **अभावापत्तेः** कारणात्। आशङ्कान्तरापोहायाह–**न चे**त्यादि। न च **तन्निबन्धनानुभवे**–भवननिश्चयनिबन्धनानुभवे **न विभ्रमः**। कुत इत्याह–**तस्यैव**–अभवननिश्चयनिबन्धनानुभवस्यैव **तत्त्वात्**–भवननिश्चयनिबन्धनत्वात्। **न चैकस्य** सतोऽनुभवस्य **क्वचिद् विभ्रमः क्वचिन्नेति**–एतत्। कुत इत्याह–**एकत्वविरोधात्**। निरंशमेवैकम्, न तस्य क्वचिदिति विभागः। **न चे**त्यादि। न च **अन्ते**–सन्तानविनाशे २० २५

(विवरणम्)

(१३-१४) **तत्कालभाविभवनाभिन्नमभवनं च भवनमेवे**ति। अयमभिप्रायः–विवक्षितकालभाविना भवनेन सह यद्यभिन्नमभ्युपगम्यते अभवनं तदा तद्भवनमेव भवतीति ॥ ३०

(२१) **भवननिश्चयस्यापि तन्निबन्धनस्ये**ति। निरंशानुभवनिबन्धनस्य ॥

१ प्रेक्ष्यतां ११०तमं पृष्ठम्। २ 'भिन्नभवनं' इति क–पाठः।

(मूलम्)

**भवननिश्चय एव घटाभावनिश्चयः, तदभवनस्य निरुपाख्यत्वात् । न च तद्द्वारेण, तेन तस्य प्रतिबन्धासिद्धेः । न च तदभवनधर्मक-**
५ **मेव कपालभवनम्, अनभ्युपगमात् । इति तत्तुच्छत्वेऽपि नश्वर-त्वादिसिद्धिः । उत्पादादिमत्त्वे भवनाभवनयोरभेद इति चेत्, न, तुच्छेतरत्वविशेषात्, निवृत्तिभेदाद् ग्रहणनानात्वात् । इति कुतोऽस्य क्षणस्थितिधर्मकत्वमेव, क्षणान्तरेऽपि स्थित्यापत्तेः ? । इत्यलं विस्तरेण । तदेवमिहापि विज्ञानादिकार्यायोग इति स्थितम् ॥**

१० **नित्यानित्यं पुनः कथञ्चिदवस्थितत्वात्, अनेकस्वभावत्वात्,**

---

(स्वो० व्या०)

**अभवननिश्चयात्** कारणात् **तद्गतिः**–अभवनगतिः । कुत इत्याह–**तत्रापी**-त्यादि । तत्रापि–अन्ते **तदयोगात्**–अभवननिश्चयायोगात् । **न चे**त्यादि । न च **कपालभवननिश्चय एव,** कपालग्रहणं भस्माद्युपलक्षणम्, **घटाभवननिश्चयः,**
१५ घटाभवनं काष्ठाभवनादिसूचकम् । कुतो नेत्याह–**तदभवनस्य**–घटाद्यभवनस्य **निरुपाख्यत्वात्**–तुच्छत्वात् । **न च तद्द्वारेण**–कपालभवनद्वारेण, घटाभवन-निश्चय इति वर्तते । कुतो नेत्याह–**तेने**त्यादि । तेन–कपालभवनेन सह **तस्य**–घटा-भवनस्य । किमित्याह–**प्रतिबन्धासिद्धेः,** तादात्म्याद्यनभ्युपगमात् । **न च तद-भवनधर्मकमेव**–घटाभवनधर्मकमेव **कपालभवनम्** । कुत इत्याह–**अन-**
२० **भ्युपगमात् । इति**–एवं **तत्तुच्छत्वेऽपि**–अभवनतुच्छत्वेऽपि सति **नश्वरत्वा-दिसिद्धिः**–उत्पत्तिनाशोत्तरोन्मज्जनसिद्धिः ॥

पराभिप्रायमाह–**उत्पादादिमत्त्वे** सति **भवनाभवनयोरभेदः** तुल्यधर्म-तया । **इति चेत्,** एतदाशङ्क्याह–**ने**त्यादि । न–नैतदेवम् । कुत इति हेतूनाह–**तुच्छेतरत्वविशेषाद्** भवनाभवनयोः । तथाहि–तुच्छमभवनम्, अतुच्छं भवनमिति
२५ विशेषः । तथा **निवृत्तिभेदाद्** भवनस्य ह्यभवनं निवृत्तिर्भवनं त्वभवनस्य । तथा **ग्रहणनानात्वात्** । एकमतुच्छतया गृह्यते, अन्यत् तुच्छतया, इत्येवमुत्पादादि-साम्येऽपि भवनाभवनयोः रूपरसादेरिव भेदः । सर्वोपसंहारमाह–**इति**–एवमुक्तनीतेः **कुतोऽस्य**–वस्तुनः **क्षणस्थितिधर्मकत्वमेव ?** । अभवने कारणमाह–**क्षणा-न्तरेऽपि** अस्थितिव्यतिरेकादिना **स्थित्यापत्तेः** । **इत्यलं विस्तरेण** । **तदेव-**
३० **मिहापि**–क्षणस्थितिधर्मके वस्तुनि **विज्ञानादिकार्यायोग इति स्थितम्** ॥

स्वपक्षमधिकृत्य आह–**नित्यानित्यं पुनः** वस्तु **कथञ्चिदवस्थितत्वात्,**

(मूलम्)

**निबन्धनोपपत्तेर्जनयति [1]विज्ञानादिकमित्यवगम्यते। नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वात्, अनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् प्रत्यक्षसिद्धमेवेति। तथाहि—मृत्पिण्ड-शिवक-स्थासक-घटकपालादिष्वविशेषेण सर्वत्रानुवृत्तो मृदन्वयः संवेद्यते, प्रतिभेदं च पर्यायव्यावृत्तिः। तथा च न यथाप्रतिभासं मृत्पिण्डादिसंवेदनं तथाप्रतिभासमेव शिवकादिषु, आकारभेदानुभवात्। न च यथाप्रतिभासभेदं तद्विजातीयेषु उदक-दहन-पवनादिषु तथाप्रतिभास-**

(स्वो० व्या०)

तत्तथाभवनेन तथाऽनेकस्वभावत्वात्, निमित्तोपादानहेतुस्वभावभेदेन **निबन्धनोपपत्तेः** तत्तत्स्वभावभावेन **जनयति विज्ञानादिकं** कार्यम्। 'आदि'शब्दात् स्वोपादानकार्यग्रहः। **इति**—एवम् **अवगम्यते**—ज्ञायते। एवं ज्ञानोपाय उक्तः॥

अधुना नित्यानित्यत्वमाह—**नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वात्** कारणात्। द्रव्यपर्यायोभयरूपत्वं च **अनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात्**। किमित्याह—**प्रत्यक्षसिद्धमेवेति**। एतदेव भावयति **तथा-हीत्यादिना**। [2]तथाहीत्युपदर्शने। **मृत्पिण्ड-शिवक-स्थासक-घटकपालादिषु** भेदेषु **अविशेषेण**—सामान्येन **सर्वत्रानुवृत्तो मृदन्वयः संवेद्यते**, तथाऽनुभवात्। **प्रतिभेदं च**—भेदं भेदं प्रति च मृत्पिण्डादि**पर्यायव्यावृत्तिः**, संवेद्यते इति वर्तते। एतद्भावनायैवाह—**तथा चेत्यादि**। तथा च **न यथाप्रतिभासं**—न यथाऽऽकारं **मृत्पिण्डादिसंवेदनं तथाप्रतिभासमेव शिवकादिषु**, संवेदनमिति वर्तते। कुतो नेत्याह—**आकारभेदानुभवात्** कारणात्। **न च यथाप्रतिभासभेदं तद्विजातीयेषु**—मृत्पिण्डादिविजातीयेषु। केष्वित्याह—

(विवरणम्)

**(११) तत्तथाभवनेनेति**। तस्य—प्राच्यक्षणवर्तिनो मृदादेस्तथाभवनेन—घटादिरूपतया परिणत्या॥

**(१२) स्वोपादानकार्यग्रह इति**। स्वः—आत्मा मृदादेः सम्बन्धी उपादानं यस्य तत् तथा तच्च तत् कार्यं च घटादिलक्षणं तस्य ग्रहः॥

[1] 'विज्ञानादिकमप्येवमव०' इति क–पाठः। [2] 'तथाहीत्युपप्रदर्शने' इति क–घ–पाठः।

(मूलम्)

**भेदमेव शिवकादिषु, मृदन्वयानुभवात्। न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवः कर्तुं युज्यते, प्रतीतिविरोधात्। न च निराकार-**
५ **मेव संवेदनम्, अर्थान्तरस्येव ततो विवक्षितार्थापरिच्छेदात्। न ह्यर्थाकारानुभवव्यतिरेकेणापरोऽर्थपरिच्छेद इति, अतिप्रसङ्गात्, सर्वस्य सर्वार्थपरिच्छेत्तृत्वापत्तेश्च ॥**

**प्रदीपवत् प्रतिनियतार्थप्रकाशकस्वभावत्वात् तस्यायमदोष इति चेत्, न, तद्धर्मातिक्रमात्, तदवगुण्ठितपदार्थस्यापरेणाप्रतीतेः,**
१० **तथाऽनुभवाभावात्, तस्यापि च ज्ञानत्वेन उक्तदोषानतिवृत्तेः ॥**

---

(स्वो० व्या०)

**उदक-दहन-पवनादिषु** भेदेषु **तथाप्रतिभासभेदमेव शिवकादिषु ।** कुत इत्याह—**मृदन्वयानुभवात्** कारणात् । **न चास्य स्वसंवेद्यस्यापि** [1]**संवेदनस्यापह्नवः**—अपलापः **कर्तुं युज्यते, प्रतीतिविरोधात्।** न चेत्यादि।
१५ **न च निराकारमेव** एकान्तेन स्वसंवेदनम् । कुत इत्याह—**अर्थान्तरस्येव** अविषयाभिमतस्य **ततः**—संवेदनात् । किमित्याह—**विवक्षितार्थापरिच्छेदात् ।** एतद्भावनायाह—**न** ह्रीत्यादि । न यस्मात् **अर्थाकारानुभवव्यतिरेकेणापरः**—अन्योऽ**र्थपरिच्छेद इति, अतिप्रसङ्गात् ।** अतिप्रसङ्गश्च तदाकारताऽभावे तद्व-दपरपरिच्छेदेन ॥

२० दोषान्तरमाह—**सर्वस्य,** संवेदनस्येति प्रक्रमः, **सर्वार्थपरिच्छेत्तृत्वापत्तेश्च,** परिच्छेद्यवदपरिच्छेद्याकारशून्यत्वाविशेषादिति हृदयम् ॥

पराभिप्रायमाह **प्रदीपवदि**त्यादिना । प्रदीपवदिति दृष्टान्तः । **प्रतिनियतार्थ-प्रकाशकस्वभावत्वात्** कारणात् **तस्य**—संवेदनस्य **अयम्**—अनन्तरोदितो दोषः **अदोषः । इति चेत्,** एतदाशङ्क्याह—**ने**त्यादि । न—नैतदेवम् । कुत
२५ इत्याह—**तद्धर्मातिक्रमात्**—प्रकाशकधर्मातिक्रमात् संवेदनस्य । अतिक्रमश्च **तद-वगुण्ठितपदार्थस्य** [2]संवेदने संवेदनप्रभोपचारात् संवेदनावगुण्ठितपदार्थस्य **अप-रेण**—तदर्थान्तरभूतेन केनचित् **अप्रतीतेः** कारणात् । अप्रतीतिश्च **तथाऽनु-भवाभावात्, तस्यापि च** अपरस्य **ज्ञानत्वेन** हेतुना **उक्तदोषानतिवृत्तेः**—तद्धर्मातिक्रमानतिवृत्तेः । प्रदीपस्तु [3]स्वभाऽवगुण्ठितं तदपरेण संवेदनेन प्रत्याययतीत्येवं
३० प्रकाशक इति तद्धर्मातिक्रमः ॥

---

१ 'संवेदस्याप०' इति ङ-पाठः । २ 'संवेदते संवेदन०' इति क-पाठः । ३ 'स्वप्रभाऽवगुण्ठितं' इति क-पाठः ।

(मूलम्)

प्रकाशकं ग्राहकमेवेति चेत्, अतदाकारं कथं तद्ग्राहकमिति वाच्यम्। किमत्रोच्यते?। तस्यार्थाकारताऽनुपपत्तेः, अर्थात् तस्य व्यतिरिक्तेतरविकल्पायोगेन तत्रासम्भवात्। व्यतिरिक्तत्वे, नासौ ५ अर्थस्य, सङ्गानुपपत्तेः। अव्यतिरिक्तत्वे तु न संवेदने, अर्थात्मकत्वात्, अर्थतुल्याकारताया अप्यमूर्त्तस्योपरञ्जकयोगाभावेन अभावादिति। यत्किञ्चिदेतत्, अभिप्रायापरिज्ञानात्, संवेदनार्थग्रहणपरिणामस्यार्थाकारताऽभ्युपगमात्, तथा चोक्त-

(स्वो० व्या०) १०

पराभिप्रायमाह–**प्रकाशकं ग्राहकमेवेति चेत्**, निदर्शनमात्रं तु प्रदीपः। एतदाशङ्क्याह–**अतदाकारमिति**, प्रक्रमादनर्थाकारमर्थाकारशून्यम्, **कथं तद्ग्राहकम्**–अर्थग्राहकमिति **वाच्यमेतत्**। आह–**किमत्रोच्यते?**। **तस्येति** प्रक्रमात् संवेदनस्य **अर्थाकारताऽनुपपत्तेः**। अनुपपत्तिश्च **अर्थात्** सकाशात् **तस्य**–आकारस्य **व्यतिरिक्तेतरविकल्पायोगेन** हेतुना **तत्र**–संवेदने **अ- १५ सम्भवात्** कारणात्। एतदेव भावयति **व्यतिरिक्तत्व** इत्यादिना। व्यतिरिक्तत्वेऽर्थाकारस्याभ्युपगम्यमाने **नासौ अर्थस्य** आकारः। कुत इत्याह–**सङ्गानुपपत्तेः** तस्येति सम्बन्धाभावात्। **अव्यतिरिक्तत्वे तु न संवेदने**ऽर्थाकारः। कुत इत्याह–**अर्थात्मकत्वात्** अर्थ एवासाविति। अर्थतुल्याकारताऽर्थाकारतेत्यप्यसदित्यावेदयन् आह **अर्थे**त्यादिना। **अर्थतुल्याकारताया अपि**। किमित्याह–**अमूर्त्तस्य** संवे- २० दनस्य **उपरञ्जकयोगाभावेन**, छायाऽण्वादिसम्बन्धाभावेनेत्यर्थः। **अभावात्** कारणात् अर्थाकारतानुपपत्तिः इति क्रिया। एतदाशङ्क्याह–**यत्किञ्चिदेतत्**–अनन्तरोदितम्। कुत इत्याह–**अभिप्रायापरिज्ञानात्**। एतदेवाह **संवेदने**त्यादिना। संवेदनस्य अर्थग्रहणपरिणामस्तथाऽनुभवसिद्धौ बहिर्मुखावभासः **संवेदनार्थग्रहणपरिणामः**, तस्य **अर्थाकारताऽभ्युपगमात्**। **तथा च**–एवं च २५

(विवरणम्)

(२१) **उपरञ्जकयोगाभावेनेति**। उपरञ्जकेन पदार्थेन सह योगस्य–सम्बन्धस्य अभावेन॥

(२१) **छायाऽण्वादिसम्बन्धाभावेनेति**। यदि हि दृश्यवस्तुनः छायाऽणुभिः, 'आदि'शब्दाददृश्यपदार्थेन च ज्ञानस्य संयोगो भवेत्, तदा युज्येताप्यर्थतुल्याकारता ३० ज्ञानस्य, न चैवममूर्त्तत्वेन ज्ञानस्य, [1]मूर्तविषयायास्तदाकारताया अभावादिति॥

१ 'मूर्तिविषयाया०' इति क-पाठः।

(मूलम्)

दोषानुपपत्तेः, तस्यैव तथारूपत्वादिति । उक्तं च वादिमुख्येन—
"न विषयग्रहणपरिणामादृते[1]ऽपरः संवेदने विषयप्रतिभासो युज्यते,
५ युक्त्ययोगात्" इति ॥

न चेदं संवेदनं भ्रान्तमिति शक्यते वक्तुम्, देशकालनरावस्थाऽभेदेन प्रवृत्तेः । तथाहि—देशान्तरे कालान्तरे नरान्तरेऽवस्थान्तरे च मृत्पिण्डादिषु यथोक्तलक्षणमेव संवेदनं प्रवर्तते । न चार्थप्रभवमविसंवादि संवेदनं विहाय जातिविकल्पेभ्यः पदार्थव्यवस्था युज्यते,

१० (स्वो० व्या०)

उक्तदोषानुपपत्तेः । अनुपपत्तिश्च तस्यैव—संवेदनस्य तथारूपत्वात्—अर्थग्रहणपरिणामरूपत्वात् । न चैतत् स्वमनीषिकयोच्यत इति ज्ञापकमाह—उक्तं च वादिमुख्येन—श्रीमल्लवादिना सम्म(?न्म)तौ । किमित्याह—न विषयग्रहणपरिणामादृतेऽपरः—अन्यः संवेदने विषयप्रतिभासः तत्प्रति-
१५ बिम्बादिरूपः । युक्त्ययोगादिति । युक्त्ययोगश्च लेशतो दर्शित एव । विशेषतस्तु सर्वज्ञसिद्धिटीकातोऽवसेयः ॥

न चेदमित्यादि । न चेदं संवेदनम्—अधिकृतमन्वयव्यतिरेकवद् भ्रान्तमिति शक्यते वक्तुम् । कुत इत्याह—देशकालनरावस्थाऽभेदेन प्रवृत्तेः कारणात् । एतद्भावनायैवाह—तथाहीत्यादि । तथाहीति पूर्ववत् । देशान्तरे
२० कालान्तरे नरान्तरेऽवस्थान्तरे च मृत्पिण्डादिषु यथोक्तलक्षणमेव संवेदनं प्रवर्तते, न तु गगनावनति-मायोदक-स्थाणुपुरुष-शङ्खादिपीतादिसंवेदनवद् देशान्तरादावन्यथारूपमिति । न चार्थप्रभवं तद्भावभावितया अविसंवादि [2]बाधाऽभावेन संवेदनं विहाय—परित्यज्य जातिविकल्पेभ्यः—व्यतिरिक्ताव्यति-

(विवरणम्)

२५ (२१-२२) [3]न तु गगनावनतिमायोदकस्थाणुपुरुषशङ्खादिपीतादिसंवेदनवद् देशान्तरादावन्यथारूपमिति । तत्र [4]गगनावनतेः प्रतिभासो दूरदेशवशेन, मायोदकस्य मरीचिकादौ ग्रीष्मादिप्रतप्तकालवशेन, स्थाणौ पुरुषप्रति[5]भासस्तु तथाविधासन्निहितप्रदेशवर्तिपुरुषव[6]शेन विद्यमानस्यापि [7]देशभेदस्याविवक्षणात्, शङ्खादौ पीतादिसंवेदनस्य तु काचकामलाद्युपहतलोचनत्वावस्थावशेन, [8]अनवस्थाया एव
३० प्राधान्येन विवक्षणात् ॥

१ 'हृते परः' इति क-पाठः । २ 'बाधाभावेन' इति क-ङ-पाठः । ३ 'गमनावत्तु गमनावनति०' इति ख-पाठः, 'गमनावनति०' इति तु च-पाठः । ४ 'गमनावनतेः' इति च-पाठः । ५ भासस्तु न तथा०' इति च-पाठः । ६ 'वचने विद्यमान०' इति क-पाठः । ७ 'देशभेदविवक्षणात्' इति च-पाठः । ८ 'अवस्था एव' इति क-पाठः ।

( मूलम् )

प्रतीतिबाधितत्वेन तेषामनादेयत्वात् । न चैकान्तनित्येषु यथोक्त-संवेदनसम्भवः, व्यावृत्ताकारनिबन्धनस्य पर्यायभेदस्याभावात्, अन्यथैकान्तनित्यत्वानुपपत्तेः । तथा चोक्तम्— ५

"भावेष्वेकान्तनित्येषु नान्वयव्यतिरेकवत् ।
संवेदनं भवेद् धर्मभेदाभावादिह स्फुटम् ॥"[1]

इत्यादि । तथैकान्तनश्वरेष्वपि नाधिकृतसंवेदनभावो युज्यते, अनु-वृत्ताकारनिबन्धनस्य द्रव्यान्वयस्याभावात् ॥

न च निरन्वयनश्वरवादिनस्ततस्तत्सदृशान्यप्रभवः सम्भवति, १० सर्वथा हेतुनिवृत्तावहेतुकत्वप्रसङ्गात्, अन्यथाऽन्वयसिद्धेरिति । उक्तं च—

( स्वो० व्या० )

रिक्तादिलक्षणेभ्यः पदार्थव्यवस्था युज्यते । कुत इत्याह-प्रतीतिबाधितत्वेन हेतुना तेषां—जातिविकल्पानाम्, अनादेयत्वात् । न चेत्यादि । न च एकान्त- १५ नित्येषु पदार्थेषु यथोक्तसंवेदनसम्भवः, यथोक्तमन्वयव्यतिरेकवत् । कुतो न सम्भव इत्याह-व्यावृत्ताकारनिबन्धनस्य पर्यायभेदस्याभावात् एकान्तनित्येषु, अन्यथा—पर्यायभेदे सति एकान्तनित्यत्वानुपपत्तेः । तथा चोक्तमिति ज्ञापकमाह-भावेष्वेकान्तनित्येषु—अप्रच्युतानुत्पन्नस्थिरैकस्वभावेषु नान्वयव्यतिरेकवत् संवेदनं भवेत् । कुत इत्याह-धर्मभेदाभावात्— २० पर्यायभेदाभावात् । इह स्फुटमित्यादि । तथैकान्तनश्वरेष्वपि, भावेष्विति प्रक्रमः, नाधिकृतसंवेदनभावो युज्यते, अधिकृतमन्वयव्यतिरेकवत् । कुतो न युज्यते इत्याह-अनुवृत्ताकारनिबन्धनस्य द्रव्यान्वयस्याभावात् ॥

न चेत्यादि । न च निरन्वयनश्वरवादिनस्ततः—निरन्वयनश्वराद् वस्तुनः तत्सदृशस्य अन्यस्य प्रभवः—उत्पादः सम्भवति । कुतो न सम्भवतीत्याह— २५ सर्वथा हेतुनिवृत्तौ सत्याम् अहेतुकत्वप्रसङ्गात्, तत्सदृशस्याभावात् तद्भाव इति कृत्वा । अन्यथा—तत एव तद्भावात् अन्वयसिद्धेरिति । उक्तं चेति ज्ञापकमाह—

( विवरणम् )

(२६-२७) तत्सदृशस्याभावात् तद्भाव इति कृत्वेति । तस्य—घटादेर्जन्यस्य यः सदृशः—मृत्पिण्डादिस्तस्य सम्बन्धिनोऽभावात् सकाशात्, तमाश्रित्येत्यर्थः । तद्भावः ३०

१ अनुष्टुप् ।

(मूलम्)

**"सर्वथा कारणोच्छेदाद् भवेत् कार्यमहेतुकम् ।
तच्छक्त्यवयवाधारस्वभावानामनन्वयात् ॥"** [१]

५ **इत्यादि । न चास्य संवेदनस्य बाधकः प्रत्ययोऽस्ति, कदाचिदप्यनुपलब्धेः । न च योगिप्रत्ययो बाधक इति युज्यते वक्तुम्, प्रमाणाभावात् । उक्तं च—**

**"नित्यं योगी विजानाति क्षणिकं नेति का प्रमा? ।
देशनाया विनेयानुगुण्येनापि प्रवृत्तितः ॥"** [२]

१० **इत्यादि । तस्मादन्वयाविनाभूतो व्यतिरेकः, व्यतिरेकाविनाभूतश्चान्वय इति वस्तुस्वभावः । तथा चोक्तम्—**

---

(स्वो० व्या०)

**सर्वथा कारणोच्छेदात्** तन्निरन्वयभवनेन **भवेत् कार्यमहेतुकम्** अभावाद् भावभूतेः । तच्छक्तेः—कारणशक्तेरवयवाः तच्छक्त्यवयवाः—शक्तिशक्तिमतोरभेदात्
१५ कारणावयवा एव, **तच्छक्त्यवयवाश्च ते आधारस्वभावाश्चेति**, प्रक्रमात् कार्यस्येति विग्रहः, तेषाम् **अनन्वयात्**, उच्छेदेन **इत्यादि । न चास्य संवेदनस्य** अन्वयव्यतिरेकवतो **बाधकः प्रत्ययोऽस्ति** । कुत इत्याह—**कदाचिदप्यनुपलब्धेः**, जातिविकल्पभावनाकालेऽपि । **न चे**त्यादि । न च **योगिप्रत्ययो**ऽपास्ताशेषप्रपञ्चो **बाधकः**, अस्य प्रत्ययस्येति प्रक्रमः, **इति युज्यते वक्तुम्** । कुतो न युज्यत इत्याह—
२० **प्रमाणाभावात्**, योगिप्रत्ययाग्रहणादित्यर्थः । **उक्तं चे**ति ज्ञापकमाह—**नित्यं योगी विजानाति क्षणिकं नेति का प्रमा?** । न किञ्चित् प्रमाणम्, तज्ज्ञानाग्रहणादिति । देशना प्रमाणं भविष्यतीति एतदपोहायाह—**देशनाया विनेयानुगुण्येनापि प्रवृत्तितः** भूतात्मनो द्वैताद्वैतदेशनावद् ब्राह्मणस्य मृतजायाऽमृतदेशनाव**च्चेत्यादि** । यस्मादेवं **तस्मादि**त्यादि । तस्मात् **अन्वयाविनाभूतो व्यतिरेकः**,
२५ तद्गर्भत्वात्, **व्यतिरेकाविनाभूतश्चान्वयः**, तद्गर्भत्वादेव, **इति वस्तुस्वभावः**— वस्तुन आत्मीया सत्ता । **तथा चोक्तमि**ति ज्ञापकमाह—**नान्वये**त्यादि । नान्वयः

---

(विवरणम्)

**तस्य—घटादेर्भावः—**उत्पाद इति कृत्वा अहेतुकत्वप्रसङ्गः । न हि घटोत्पत्तिकाले मृत्पिण्डलक्षणं त्रैलोक्येऽपि क्वचिदस्ति तद्विनाशे एव तदुत्पत्त्यभ्युपगमात्, इत्यहेतुकमेव
३० तत् । अतो निरन्वयनश्वराद् वस्तुनस्तत्सदृशान्योत्पादो[३] न सम्भवत्येवेति स्थितम् ॥

---

१-२ अनुष्टुप् । ३ 'वस्तुनस्त(?त्स)दृशोत्पादो न' इति च-पाठः ।

( मूलम् )

"नान्वयस्तद् विभेदत्वान्न भेदोऽन्वयवृत्तितः ।
मृद्भेदद्वयसंसर्गवृत्ति जात्यन्तरं हि तत् ॥[1]"[2]

तस्मात् तद् यत एव नित्यम्, अत एवानित्यम्, द्रव्यात्मना नित्य- ५
त्वात्, तस्य चाभ्यन्तरीकृतपर्यायत्वात्; यत एव चानित्यम्, अत एव
नित्यम्, पर्यायात्मनाऽनित्यत्वात्, तस्य चाभ्यन्तरीकृतद्रव्यत्वात्,
उभयरूपस्य चानुभवसिद्धत्वात्, एकान्तभिन्नस्य चोभयस्य
अभावात्, तथाऽनुपलब्धेः । उक्तं च—

"द्रव्यं पर्यायवियुतं पर्याया द्रव्यवर्जिताः ।　१०
क्व कदा केन किंरूपा दृष्टा मानेन केन वा ? ॥[3]"[4]

इत्यादि ॥

---

( स्वो० व्या० )

तत्, प्रक्रमाद् घटवस्तु । कुत इत्याह—(वि)भेदत्वात् ऊर्ध्वादिरूपेणावधारणप्रतिषेध-
श्चायमन्वय एव नेति । एवं न भेद इति न भेद एव । कुत इत्याह—अन्वयवृत्तितः— १५
मृद्रूपेण वृत्तेः । किं तर्हि ? । मृद्भेदद्वयसंसर्गवृत्ति अन्वयभेदसम्बन्धेन वर्तते ।
जात्यन्तरम् एव तत्—वस्त्वित्यादि ॥

पूर्वपक्षग्रन्थयोजनामाह—यस्मादेवं तस्मादित्यादि । तस्मात् तत्—वस्तु यत एव
नित्यम्—अनुवृत्ताकारप्रत्ययग्राह्यम्, अत एवानित्यं—व्यावृत्ताकारप्रत्ययग्राह्यम् ।
उपपत्तिमाह—द्रव्यात्मना नित्यत्वात् कारणात्, तस्य च—द्रव्यात्मनः अभ्य- २०
न्तरीकृतपर्यायत्वात्, अन्यथा द्रवणानुपपत्तिरिति भावना । यत एव च
अनित्यमत एव नित्यमिति पूर्ववत् । उपपत्तिश्च पर्यायात्मना अनित्यत्वात्
कारणात्, तस्य च—पर्यायात्मनः अभ्यन्तरीकृतद्रव्यत्वात्, अन्यथा पर्ययणा-
योग इति हृदयम् । उभयरूपस्य च द्रव्यपर्यायोभयापेक्षया अनुभव-
सिद्धत्वात् अनुवृत्तव्यावृत्ताकारसंवेदनभावेन । एकान्तभिन्नस्य चोभयस्य— २५
द्रव्यपर्यायलक्षणस्य किमित्याह—अभावात् । अभावश्च तथाऽनुपलब्धेः—तथेती-

---

१ 'सन्तुल्यतामिदं पद्यं तत्त्वार्थाधिगमसूत्रस्य ( अ. ५, सू.२९ ) श्रीसिद्धसेनगणिकृताया भाष्यानुसारिणीटीकायाः ३७७तमपृष्ठगतेन निम्नावतारितेन पद्येन सह—

"नान्वयो भेदरूपत्वान्न भेदोऽन्वयरूपतः ।
मृद्भेदद्वयसंसर्गवृत्तिर्जात्यन्तरं घटः ॥"

२ अनुष्टुप् । ३ इदं पद्यमुद्धृतमवतरणरूपेण श्रीसिद्धसेनगणिभिः तत्त्वार्थाधिगमसूत्रस्य (अ. ५, सू. २९) भाष्यानुसारिण्यां स्वकीयायां टीकायां ( पृ. ३७८ ) । ४ अनुष्टुप् । ५ 'न नैतदिति न भेद एव' इति ङ–पाठः । ६ 'पर्यायेणायोग' इति क–पाठः ।

( मूलम् )

**स्यादेतत् पर्यायनिवृत्तौ द्रव्यनिवृत्तिर्भवति, किं वा नेति ?। किञ्चातः ?। यदि भवति, अनित्यमेव तत्, निवृत्तिमत्त्वात्, पर्याय-**
५ **स्वात्मवत्। अथ न भवति, हन्त तर्हि द्रव्य-पर्याययोर्भेदप्रसङ्गः। तथाहि–पर्यायेभ्योऽन्यद् द्रव्यम्, तन्निवृत्तावपि तस्यानिवृत्तेः, क्रमेलकादिव कर्क इति। एतदप्ययुक्तम्, कथञ्चिन्निवृत्तिभावात्, तत्-तन्निवृत्तेः, सम्बन्धबीजभावात्। अनुभवसिद्धश्चायम्। तथाहि–द्रव्य-पर्यायोभयरूपं वस्तु, इतरेतरविनिर्मुक्तस्योभयस्याग्रहणात्, युक्त्य-**
१० **नुपपत्तेश्च। अनुपपत्तिश्चोर्ध्वाद्याकाररहितस्य मृद्द्रव्यस्यासम्भवात्, ऊर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्य। न हि मुकुलिताद्याकारशून्यं**

---

( स्वो० व्या० )

तरेतरविविक्ततयाऽदर्शनात्। **उक्तं चेति** ज्ञापकमाह–**द्रव्यं पर्यायवियुतम्** एकान्तेन तथा **पर्याया द्रव्यवर्जिता** एकान्तेनैव **क्व**–देशे **कदा**–काले **केन**–
१५ प्रमात्रा **किंरूपा** इतरेतरविकल्पेन नीरूपतापत्तेरित्यर्थः, **दृष्टाः**–उपलब्धा **मानेन केन वा**–प्रत्यक्षादिना इत्यादि ॥

**स्यादेतत्**–अथैवं मन्यसे **पर्यायनिवृत्तौ** सत्यां **द्रव्यनिवृत्तिर्भवति किं वा नेति ?। किञ्चातः ?। यदि भवति, अनित्यमेव तत्**–द्रव्यम् **निवृत्ति-मत्त्वात्** कारणात्, **पर्यायस्वात्मवदि**ति दृष्टान्तः। **अथ न भवति, हन्त तर्हि**
२० **द्रव्यपर्याययोर्भेदप्रसङ्गः**। एतदेव भावयति **तथाही**त्यादिना। तथाहि **पर्या-येभ्यः** सकाशात् **अन्यद् द्रव्यम्, तन्निवृत्तावपि**–पर्यायनिवृत्तावपि **तस्या-निवृत्तेः**–द्रव्यस्यानिवृत्तेः कारणात्। **क्रमेलकात्**–उष्ट्रादिव **कर्कः**–अश्वविशेष इति **निदर्शनमिति**। एतदाशङ्क्याह–**एतदप्ययुक्तम्**। कुत इत्याह–**कथञ्चित्**–केनचित् प्रकारेण तन्निमित्तत्वलक्षणेन **निवृत्तिभावात्**। कुत इत्याह–**तत्**
२५ **तन्निवृत्तेः** तस्य–द्रव्यस्य पर्यायनिवृत्तेः। यदि नामैवं ततः किमित्याह–**सम्बन्ध-बीजभावात्** तस्य निवृत्त इति तत्र सम्बन्धबीजभावः। **अनुभवसिद्धश्चायम्**–कथञ्चिन्निवृत्तिभावः। एतदेव दर्शयति **तथाही**त्यादिना। तथाहीत्युपप्रदर्शने। **द्रव्य-पर्यायोभयरूपं वस्तु, इतरेतरविनिर्मुक्तस्योभयस्याग्रहणा**दित्युक्त-प्रायम्। तथा **युक्त्यनुपपत्तेश्च। अनुपपत्तिश्चोर्ध्वाद्याकाररहितस्य मृद्-**
३० **द्रव्यस्यासम्भवात्**। न मूर्तमनाकारमित्यनुमानमेतत्। **ऊर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्य,** असम्भवादिति वर्तते। **न ही**त्यादि **निदर्शनम्। न हि**

(मूलम्)

**वियत्कुसुमद्रव्यमस्ति । न चाद्रव्यास्तन्मुकुलितादयः । इत्यन्योन्यानुविद्धोभयरूपवस्तुसिद्धिः ॥**

**अत एव घटपर्यायनिवृत्तौ कपालकालेऽपि तद्बुद्ध्या मृदनुभूयते, मृन्निवृत्तौ चोर्ध्वादिपर्यायवन्नानुभूयेत । मृदनिवृत्तावप्यूर्ध्वादिनिवृत्तित एव तद्भेदसिद्धिरिति चेत्, न, ऊर्ध्वादेर्मृदः सर्वथा भेदासिद्धेः, तत्स्वरूपाननुविद्धस्यानुपलम्भात् । क्षीरोदकादिभिर्व्यभिचार इति चेत्, न, तेषां पूर्वं पश्चाच्च भेदेनापि सिद्धेः, भिन्नोपादानत्वेन च तन्निवृत्तावपि पृथग् मृदस्तद्विकारापत्तेश्च । कपालाद्याकार एव तद्विकार इति चेत्, न, तस्यापि मृदः सर्वथा भेदासिद्धेः । अत एव**

(स्वो० व्या०)

**मुकुलिता**र्धमुकुलिताद्याकारशून्यं **वियत्कुसुमद्रव्यमस्ति,** सर्वाविसंवादात् । **न चाद्रव्यास्तन्मुकुलितादयः**—वियत्कुसुममुकुलितादयः । **इति**—एवम् **अन्योन्यानुविद्धोभयरूपवस्तुसिद्धिः ॥**

यत एवम् **अत एव घटपर्यायनिवृत्तौ** सत्यां **कपालकालेऽपि तद्बुद्ध्या**—कपालबुद्ध्या **मृदनुभूयते । मृन्निवृत्तौ च** सत्याम् **ऊर्ध्वादिपर्यायवन्नानुभूयेत ।** न हि मृन्निवृत्तावूर्ध्वादिपर्यायोऽनुभूयते । **मृदनिवृत्तावपि** सत्याम् **ऊर्ध्वादिनिवृत्तित एव** कारणात् **तद्भेदसिद्धिः**—मृद ऊर्ध्वादेर्भेदसिद्धिः । **इति चेत्,** एतदाशङ्क्याह—**न, ऊर्ध्वादेः** पर्यायस्य **मृदः** सकाशात् **सर्वथा भेदासिद्धेः ।** असिद्धिश्च **तत्स्वरूपाननुविद्धस्य**—मृत्स्वरूपाननुविद्धस्य **अनुपलम्भात्** ऊर्ध्वादिपर्यायस्य ॥

पराभिप्रायमाह—**क्षीरोदकादिभिः,** 'आदि'शब्दान्मज्जितादौ गुडदध्यादिग्रहः, **व्यभिचारः,** तेषामपीतरेतरस्वरूपाननुवेधेनानुपलम्भेऽपि भेदात् । **इति चेत्,** एतदाशङ्क्याह—नेत्यादि । न—नैतदेवम्, **तेषां**—क्षीरोदकादीनां **पूर्वं** सम्बन्धात् **पश्चाच्च** हंसादिविभागकरणेन **भेदेनापि सिद्धेः** कारणात् । न चैवमिह भेदेनापि सिद्धिः ॥

दोषान्तरमाह **भिन्ने**त्यादिना । **भिन्नोपादानत्वेन च,** मृदूर्ध्वाकारयोरिति प्रक्रमः, **तन्निवृत्तावपि**—ऊर्ध्वाकारनिवृत्तावपि सत्यां **पृथग् मृदः** सकाशात्, **तद्विकारापत्तेश्च**—ऊर्ध्वादिविकारापत्तेश्च काष्ठभस्मवदिति । **कपालाद्याकार एव तद्विकारः**—ऊर्ध्वाद्याकारविकारः काष्ठभस्मकल्पः । **इति चेत्,** एतदाशङ्क्याह—

१ 'मृत्तद्विकारा०' इति क-पाठः । २ 'मृन्निवृत्ता०' इति क-पाठः । ३ 'तेषामपीतरस्वरूपा०' इति ङ-पाठः । ४ 'करणेनापि सिद्धेः' इति क-पाठः ।

(मूलम्)

कथञ्चिदूर्ध्वादिनिवृत्तिः, तदात्मभूतकपालाद्याकारानिवृत्तेः, मृदोऽपि च निवृत्तिः, तथाविधोर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्तेः । इति ५ सर्वत्रैव तद्भेदाभेदनान्तरीयकः शबलवस्तुव्यवस्थाकारी सकलप्रमात्रभ्रान्तसंवेदननिबन्धनः कथञ्चिन्निवृत्तिभावः सुयुक्तियुक्त इति त्यक्त्वा परोदित इति मात्सर्यं तत्त्वव्यवस्थाहेतुरित्याश्रित्य महागुणं भाव्यतामेष इति ॥

न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या १० अमृत्त्वप्रसङ्गात्, यथोदकं न मृत्, ततोऽत्यन्तभेदात्, एवमसावपि स्यात्, तस्याविशेषादिति। [1]स्यादेतत् अतत्स्वभावेभ्यो व्यावृत्तत्वात्

(स्वो० व्या०)

न, तस्यापि—कपालाद्याकारस्य मृदः सकाशात् सर्वथा भेदासिद्धेः। अत एव कथञ्चिदूर्ध्वादिनिवृत्तिः, न सर्वथा । कुत इत्याह—तदात्मभूतो(?)र्ध्वा- १५ द्यात्मभूतकपालाद्याकारानिवृत्तेः। मृदोऽपि च निवृत्तिः, कथञ्चिदिति वर्तते, तथाविधोर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्तेः, तदनिवृत्तौ तु तद(?त्)-पृथग्भवनायोग इति भावना। इति—एवं सर्वत्रैव—पटादिदीर्घत्वादौ तद्भेदाभेद-नान्तरीयकः—द्रव्यपर्यायभेदाभेदनान्तरीयकः, कथञ्चिन्निवृत्तिभाव इति सम्बन्धः । अयमेव [2]विशिष्यते—शबलवस्तुव्यवस्थाकारी—द्रव्यपर्यायशबलवस्तुव्यवस्था- २० करणशीलः। पुनरपि [3]विशिष्यते सकलेत्यादिना । सकलप्रमातृणाम् अभ्रान्तं यत् संवेदनं तन्निबन्धनः—तत्कारणभूतः तद्व्यवस्थापितो वेति कथञ्चिन्निवृत्ति-भावः अनन्तरनिदर्शितस्वरूपः, अनुभवविरुद्धकुयुक्त्यपोहेन सुयुक्तियुक्तः, इति—अस्माद्धेतोः त्यक्त्वा परोदित इति—एवं निबन्धनं मात्सर्यं तथा तत्त्व-व्यवस्थाहेतुः सर्वापरिकल्पितसिद्धेरिति—एवं निबन्धनमाश्रित्य महागुणम् । २५ किमित्याह—भाव्यतामेषः—कथञ्चिन्निवृत्तिभाव इति ॥

आरेकान्तरनिरासायाह—न चेत्यादि । न च असौ कपालमृद् घटमृदः सकाशात् सर्वथाऽन्यैव—अर्थान्तरभूतैव । कुत इत्याह—तदत्यन्तभेदे—घटमृदोऽत्यन्तभेदेऽभ्युपगम्यमाने तस्याः—कपालमृदः अमृत्त्वप्रसङ्गात् । कथमित्याह—यथोदकं न मृत् ततः—घटमृदः अत्यन्तभेदात्, एवमसावपि—कपालमृत् ३० स्यादमृदेव । कुत इत्याह—तस्य—अत्यन्तभेदस्य घटमृदा सह अविशेषादिति ॥

पराभिप्रायमाह स्यादेतदित्यादिना । स्यादेतत् अतत्स्वभावेभ्यः—अमृत्-

१ 'स्यादेतत् स्वभावेभ्यो' इति घ-पाठः । २-३ 'विशेष्यते' इति ङ-पाठः ।

( मूलम् )

**कपालपदार्थस्य मृत्स्वभावता, नोदकस्य, तेभ्यो व्यावृत्त्यभावात् । इत्यप्यसमीक्षिताभिधानम्, वस्तुनोऽसजातीयेतरव्यावृत्ताव्यावृत्तो-भयस्वभावापत्तेः । तथाहि—अमृत्स्वभावेभ्य एवोदकादिभ्यो व्यावृत्ति(?त्त)स्वभावः। एवं सति कपालपदार्थः स्यात्, न तु मृत्पिण्ड-शिवक-घटादिभ्यो मृत्स्वभावेभ्योऽपि, तद्व्यावृत्तौ अमृत्स्वभावत्व-प्रसङ्गात् । यथैवामृत्स्वभावेभ्यो व्यावृत्तः सन् मृत्स्वभावो भवति, एवं मृत्स्वभावेभ्योऽपि व्यावृत्तोऽमृत्स्वभावः स्यात्, न्यायानुगतमे-तत्, अन्यथाऽमृत्स्वभावव्यावृत्तावपि मृत्स्वभावत्वानुपपत्तेः ॥**

( स्वो० व्या० )

स्वभावेभ्य उदकादिभ्यो **व्यावृत्तत्वात्** कारणात् **कपालपदार्थस्य**—अधिकृतस्य **मृत्स्वभावता, नोदकस्य** मृत्स्वभावता । कुत इत्याह—**तेभ्यः**—अमृत्स्वभावेभ्य उदकादिभ्य एव **व्यावृत्त्यभावात्** । न ह्युदकममृत्स्वभावेभ्यो व्यावृत्तम्, अमृत्त्वा-देव । इति—एतदपि **असमीक्षिताभिधानं** वर्तते । कुत इत्याह—**वस्तुनः**—कपाल-मृदादेः **असजातीयेतरेभ्यो व्यावृत्ताव्यावृत्ततया उभयस्वभावापत्तेः** । एतदेव भावयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **अमृत्स्वभावेभ्य एवोदकादिभ्यः**, 'आदि'शब्दाद् दहनादिग्रहः, **व्यावृत्तस्वभावः**—भिन्नस्व-भावः । **एवं सति**—अतत्स्वभावव्यावृत्त्यभ्युपगमे सति **कपालपदार्थः स्यात्, न तु मृत्पिण्ड-शिवक-**[1]**घटादिभ्यो मृत्स्वभावेभ्योऽपि** व्यावृत्तस्व-भावः । कुत इत्याह—**तद्व्यावृत्तौ**—यथोदितमृत्स्वभावव्यावृत्तौ सत्याम् **अमृत्स्वभावत्वप्रसङ्गात्**, कपालपदार्थस्येति प्रक्रमः । एतद्भावनायैवाह—**यथैवे**त्यादि । यथैव **अमृत्स्वभावेभ्यो व्यावृत्तः सन्** कपालपदार्थः **मृत्स्व-भावो भवति, एवं मृत्स्वभावेभ्योऽपि व्यावृत्तः** सन् **अमृत्स्वभावः स्यात्**—भवेत्, **न्यायानुगतमेतत्**, न्यायश्च यो यत्स्वभावेभ्यो व्यावर्तते नासौ तत्स्वभावो भवतीत्ययम् । इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथे**त्यादि । अन्यथा—एवमनभ्युपगमे । किमित्याह—**अमृत्स्वभावव्यावृत्तावपि** सत्याम्, प्रक्रमात् कपालपदार्थस्य, **मृत्स्वभावत्वानुपपत्तेः** । यो यत्स्वभावेभ्यो व्यावर्तते न स तत्स्वभाव एव भवतीति कृत्वा न्यायानुगतमेतदिति ॥

१ 'घटादिभ्योऽमृत्स्व०' इति क-पाठः ।

( मूलम् )

**स्यादेतत् वस्तुतः सजातीयेतरव्यावृत्तस्वरूपत्वात् प्रतिनियतैक-स्वभावत्वात् सर्वभावानां[1] यथोक्तदोषाभावः । तथा च यथैवासौ ५ कपालभाव उदकादिभ्यो व्यावृत्तः सन् मृत्स्वभावः, एवं घटादि-भ्योऽपि, तस्यैकस्वभावत्वात् तेनैव रूपेण व्यावृत्तत्वादिति । एतदप्ययुक्तम्, अनुभवविरुद्धत्वात् । तथाहि—यदि स येनैव स्व-भावेनामृत्स्वभावेभ्यो व्यावृत्तस्तेनैव मृत्स्वभावेभ्योऽपि, हन्त तर्हि यथैवामृत्स्वभावभावैकान्तविभिन्नावभासहेतुः, तथाऽव्यावृत्तेः, एवं १० मृत्स्वभावापेक्षयाऽपि स्यात्, तदत्यन्तविलक्षणबुद्धिजननस्वभाव-व्यावृत्त्यन्यथाऽनुपपत्तेः । न च भवति, मृत्स्वभावस्य तत्रानु-**

---

( स्वो० व्या० )

पराभिप्रायमाह **स्यादेतदि**त्यादिना । स्यादेतद् **वस्तुतः**—परमार्थतः **सजा-तीयेतरव्यावृत्तस्वरूपत्वात्** कारणात् **प्रतिनियतैकस्वभावत्वात् सर्व-** १५ **भावानां**—कपालादीनाम् । किमित्याह—**यथोक्तदोषाभावः**—अमृत्स्वभावव्यावृ-त्तावपि मृत्स्वभावत्वानुपपत्त्यवसानदोषाभावः । एतद्भावनायैवाह—**तथा चे**त्यादि । तथा च **यथैवासौ कपालभाव उदकादिभ्यो व्यावृत्तः सन् मृत्स्व-भावः, एवं घटादिभ्योऽपि** व्यावृत्तो मृत्स्वभाव एव । कुत इत्याह—**तस्यैक-स्वभावत्वात् तेनैव**—एकस्वभावेन **रूपेण व्यावृत्तत्वादि**ति । एतदाशङ्क्याह— २० **एतदप्ययुक्तम्** । कुत इत्याह—**अनुभवविरुद्धत्वात्** कारणात् । एतदेव भावयति **तथाही**त्यादिना । तथाहीत्युपदर्शने[2] । **यदि सः**—कपालपदार्थो **येनैव स्वभावेन अमृत्स्वभावेभ्यो व्यावृत्त** उदकादिभ्यः **तेनैव मृत्स्वभावेभ्योऽपि**[3]— मृत्पिण्डादिभ्यः । एतदाशङ्क्याह—**हन्त तर्ही**ति । 'हन्त'शब्दो विवादे । तर्ह्यक्षमा-याम् । **यथैव**—येनैव प्रकारेण **अमृत्स्वभावेभ्यो भावेभ्य** उदकादिभ्य **एकान्त-** २५ **विभिन्नावभासहेतुरसौ** । कुत इत्याह—**तथा**—तेन प्रकारेण व्यावर्त्यमाना-[4] त्यन्तविलक्षणबुद्धिजननस्वभावलक्षणेन **व्यावृत्तेः** कारणात्, **एवं मृत्स्वभावा-पेक्षयाऽपि स्यात्** तदेकान्तविभिन्नावभासहेतुरेव । कुत इत्याह—**तदत्यन्त-विलक्षणबुद्धिजननस्वभावव्यावृत्त्यन्यथाऽनुपपत्तेः**, व्यावर्त्यमानात्यन्त-[5]

---

१ 'भावानामयथोक्त०' इति क-पाठः । २ 'तथाहीत्युपप्रदर्शने' इति क-घ-पाठः । ३ 'भावेभ्यो मृत्पिडा०' इति ङ-पाठः । ४ 'व्यावर्त्तमानाऽत्यन्त०' इति क-पाठः । ५ 'व्यावर्त्तमानात्यन्त०' इति ङ-पाठः ।

( मूलम् )

**भूयमानत्वात् । प्रतिनियतैकस्वभावानुभवनिबन्धनाभ्युपगमे च पर्यायतः समानपरिणाम एवाभ्युपगत इति न[1] काचिन्नो बाधेति । अतो न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे[2] तस्या अमृत्त्वप्रसङ्गादिति स्थितम् ॥** ५

**तत्तन्मृत्त्वेनान्वयः साधयितुमिष्टः, एतच्च मृत्त्वमधिकृतघटमृदोऽत्यन्तभिन्नायामपि घटान्तरकपालमृदि विद्यत एवेति व्यभिचारि**

( स्वो० व्या० )

विलक्षणबुद्धिजननस्वभावेन व्यावृत्तेरन्यथाऽनुपपत्तेरिति । **न च भवति** तदेकान्तविभिन्नावभासहेतुः । कुत इत्याह—**मृत्स्वभावस्य तत्र**—कपालपदार्थेऽ**नुभूयमानत्वात्** कारणात् ॥ १०

अथ ज्वरादिशमनौषधिनिदर्शनेन प्रतिनियतं मृत्पिण्डादिषु तथैकस्वभावानुभवनिबन्धनं किञ्चिदिष्यत इत्येतदाशङ्क्याह—**प्रतिनियते**त्यादि । प्रतिनियतं च तत् **एकस्वभावानुभवनिबन्धनं** च—तुल्यस्वभावानुभवकारणं चेति विग्रहः,तस्य **अभ्युपगम**स्तस्मिन् सति **पर्यायतः**—पर्यायेण **समानपरिणाम एवाभ्युपगतः** प्रतिनियतशब्देन, **इति**—एवं **न काचित् नः**—अस्माकं **बाधेति । अतो न चासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तदत्यन्तभेदे तस्या अमृत्त्वप्रसङ्गादिति स्थितं** निगमनमेतत् पूर्ववत् ॥ १५

पराभिप्रायमाह **तत्तन्मृत्त्वेने**त्यादिना । तस्याः—विवक्षितकपालमृदः तन्मृत्त्वम्—अधिकृतघटमृत्त्वं तत्तन्मृत्त्वं तेन, तस्या एव तथाभावेनेत्यर्थः । **अन्वयः साधयितुमिष्टो** जैनस्य । मृत्त्वमत्र साधनम्, तन्मृत्त्वं तु साध्यम् । **एतच्च मृत्त्वमधिकृतघटमृदः** सकाशात् **अत्यन्तभिन्नायामपि** । कस्यामित्याह—**घटान्तरकपालमृदि** भिन्नसन्तानवर्तिन्यां **विद्यत एवेति** कृत्वा **व्यभिचारि**—अनैकान्तिकं २०

( विवरणम् ) २५

(२२) **मृत्त्वमत्र साधनम्, तन्मृत्त्वं तु साध्यमिति** । अत्र हि परेण स्वमति[3]मोहान्मृत्त्वेन हेतुना किलाचार्येण कपालेषु विवक्षितघट[4]मृत्त्वं साधयितुमारब्धमास्त इत्युत्प्रेक्षितम् ॥

१ 'न कदाचिन्नो' इति क-पाठः । २ 'तदभ्यन्तरभेदे' इति क-पाठः । ३ 'स्वमितिमोहा०' इति क-पाठः । ४ 'घटे मृत्त्वं' इति क-पाठः ।

( मूलम् )

**तत् कथं न बाधेति?। अत्रोच्यते–अधिकृतघटमृद एव स्वकपाल-मृत्त्वात् एकवस्तुसन्तानत्वात् सतः सर्वथाऽसत्त्वानापत्तेः, तदुत्प-**
५ **त्त्यादिदोषप्रसङ्गात्। इति नैवासौ कपालमृद् घटमृदः सर्वथाऽन्यैव, तस्या एव तथाभावात्, अन्यथाऽबीजत्वेन कपालानुपपत्तेः, असत एव सत्ताऽयोगादतिप्रसङ्गादिति। न चैवं घटान्तरकपालमृदधिकृत-घटमृदात्मिका, अतत्पूर्विकत्वात् सदन्तरस्य सदन्तरत्वविरोधात्,**

( स्वो० व्या० )

१० तन्मृत्त्वेऽतन्मृत्त्वे च भावात् प्रमेयत्ववदनित्यत्वसिद्धौ[1]। यस्मादेवं **तत्**–तस्मात् **कथं न बाधा** येनोच्यते 'न काचिन्नो बाधेति?'[2]। एतदाशङ्क्याह–**अत्रे**त्यादि। अत्र **उच्यते**। किमित्याह–**अधिकृतघटमृद एव स्वकपालमृत्त्वात्**, बाधाऽभाव[3] इति वक्ष्य-[4]माणक्रियायोगः। 'स्व'ग्रहणं घटान्तरकपालमृद्व्यवच्छेदार्थम्। स्वकपालमृत्त्वं च **एक-वस्तुसन्तानत्वात्**। एक एवासौ वस्तुसन्तानो भावाव्यवच्छेदेन। एकवस्तुसन्तानत्वं
१५ च **सतः सर्वथाऽसत्त्वानापत्तेः**। न हि सदसद् भवति। कुत इत्याह–**तदुत्पत्त्यादिदोषप्रसङ्गात्**, असदुत्पत्तितन्नाशसदन्तरोन्मज्जनप्रसङ्गादित्यर्थः। **इति**–एवं **नैवासौ कपालमृद्** विवक्षिता **घटमृदो** विवक्षितताया एव **सर्वथाऽन्यैव**, अन्या तु भवत्यूर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्त्या, किन्त्वन्यैव न। कुत इत्याह–**तस्या एव**–विवक्षितघटमृदः **तथाभावात्**–विवक्षितकपालमृत्त्वेन भावात्।
२० [भावश्च] **अन्यथा**–अन्येन प्रकारेण तस्या एव तथाऽभवनलक्षणेन **अबीजत्वेन** हेतुना **कपालानुपपत्तेः**–विवक्षितकपालानुपपत्तेः। अनुपपत्तिश्च **असत एव सत्ताऽयोगात्**। अयोगश्च **अतिप्रसङ्गात्** तत्प्रतिनियतशक्त्यभावेन तद्वत् तदन्तरापत्तेरिति हृदयम्। **न** [5]**चैव**मित्यादि। न चैवं **घटान्तरकपालमृत्** अविव-क्षिता **अधिकृतघटमृदात्मिका**–विवक्षितघटमृदात्मिका। कुत इत्याह–**अतत्-**
२५ **पूर्विकत्वात्**। सा–अधिकृतघटमृत् पूर्वा यस्याः–विवक्षितकपालमृदः सा तत्पूर्विका, न तत्पूर्विका अतत्पूर्विका, तद्भावस्तस्मात्। इहैव युक्तिमाह **सदन्तरस्ये**त्या-दिना। सदन्तरस्य–अधिकृतघटमृदादेः **सदन्तरत्वविरोधात्**–घटान्तरकपाल-

( विवरणम् )

(२२-२३) **तत्प्रतिनियतशक्त्यभावेन तद्वत् तदन्तरापत्तेरिति**। तस्य–
३० असतः प्रतिनियतायाः–विवक्षितैककार्यजनिकायाः शक्तेरभावेन हेतुना तद्वत्–विव-क्षितकार्यवत् तदन्तरापत्तेः–कार्यान्तरभवनप्रसङ्गात् ॥

१ 'भावप्रमेयत्व०' इति ङ–पाठः। २ प्रेक्ष्यतां १२५तमं पृष्ठम्। ३ 'बाधाभाव इति' इति घ–पाठः। ४ दृश्यतां १२८ तमं पृष्ठम्। ५ 'चैवमित्यादिना। न' इति क–पाठः।

( मूलम् )

**तद्भावेन इतरोच्छेदापत्तेः, तद्वदितरस्यातदुपादानत्वप्रसङ्गात्,**

( स्वो० व्या० )

मृत्त्वादिविरोधात् । एनमेवाह—**तद्भावेन**—सदन्तरस्य सदन्तरत्वभावेन अधिकृ[1]तघट- ५
मृदादेः,घटान्तरकपालमृदादिभावेनेत्यर्थः । किमित्याह—**इतरोच्छेदापत्तेः**—घटान्तर-
कपालमृदाद्युच्छेदापत्तेः, अधिकृतघटमृदादौ तत्प्रवेशादित्यर्थः । ततः किमित्याह—
**तद्वदितरस्ये**ति । अत्र तद्वदिति घटान्तरकपालमृदाद्युच्छेदापत्तिवदितरस्य—सदन्तर-
स्याधिकृतघटमृदादिनिबन्धनस्य विवक्षितकपालमृदादेरुच्छेदापत्तिः । कुत इत्याह—
**अतदुपादानत्वप्रसङ्गात्**, तत्—अधिकृतघटमृद्वस्तु उपादानं यस्य सदन्तरस्य— १०
विवक्षितकपालमृल्लक्षणस्य तत् तदुपादानं तद्भावस्तदुपादानत्वं त[2]स्य नञा प्रतिषेधः,
न तदुपादानत्वमतदुपादानत्वम्, तत्प्रसङ्गात्, तस्यान्यत्र प्रविष्टत्वादित्यर्थः । यदि

( विवरणम् )

(७) '**अधिकृतघटमृदादौ तत्प्रवेशादित्यर्थः**' इत्यादिकस्य (१२) '**तस्यान्यत्र प्रविष्टत्वादित्यर्थः**' इति पर्यन्तस्यायमभिप्रायः—इह बौद्धः प्राह—यथा 'पाटलिपुत्रक'- १५
घटस्य सम्बन्धिनी कपालमृत् न 'माथुर'घटेन सह क[3]ञ्चनान्वयमावहति, एवं
'पाटलिपुत्रक'घटेनापि कपालमृदः त[4]स्याप्रयोगः । या या कपालमृत् सा सा न
त[5]त्सम्बन्धिनी, कपालमृत्त्वात्, यथा 'माथुर'घटक[6]पालमृत् कपालमृच्चेयमतो न
तत्सम्बन्धिनीति व्या[7]पकत्वानुपलब्धिः ॥ अत्र सूरिः प्राह:—न ह्यस्माभिः कपालमृत्त्व-
[8]मात्रमृन्मयनिबन्धनमभ्युपगम्यते, किन्तु 'पाटलिपुत्रक'घटवर्णगन्धरसादिध[9]र्मान्वयेन २०
तत्पूर्वकत्वम्, तच्च 'माथुर'घटकपालमृदि नास्ति । अतो न तया 'पाटलिपुत्रीय'घट-
कपालेष्वन्वयव्यभिचार उद्भावनीयः । एवं च 'पाटलिपुत्र'घटात् स्वकपालमृदेव जन्म
लभते, [10]नं तु 'माथुर'घटकपालमृत् (यदि) स्यात् तदा 'माथुर'घटकपालमृदो 'माथुर'-
घटाजन्यत्वेन 'माथुर'घटकपालमृदिति ज्ञानाभिधानायोगेन चाभावव्यवहा[11]रयोग्यैव
सा स्यात् । एवं च परमार्थचिन्तायां 'माथुर'घटकपालमृदः 'पाटलिपुत्रक'घट- २५
कपालमृदि प्रवेश आपन्नः पार्थक्यानुप[12]लम्भप्रसङ्गवशेनेति । [13]एवं च 'पाटलिपुत्रक'-

---

१ 'कृतमृदादेः' इति ङ-पाठः । २ 'तस्यानया प्रतिषेधः' इति क-पाठः । ३ 'काञ्चनान्वयमावहति' इति च-पाठः । ४ 'तस्याः प्रयोगः' इति क-पाठः । ५ 'तस्य सम्बन्धिनी' इति च-पाठः । ६ 'कपालमृच्चे०' इति क-पाठः । ७ 'व्यापकत्वानुपकत्वानुपलब्धिः' इति ख-पाठः । ८ 'मात्राय निबन्धन०' इति क-पाठः, 'मात्रमन्मयनिबन्धन०' इति तु ख-पाठः । ९ धर्मा च येनातत्०' इति क-पाठः । १० 'न माथुर०' इति क-पाठः । ११ 'योग्येव सा' इति च-पाठः । १२ 'लम्भेन प्रसङ्गो वशेन' इति क-पाठः । १३ 'एवं पाटलि०' इति ख-पाठः ।

(मूलम्)

**अहेतुकत्वापत्तेः, युक्त्यनुभवविरोधात्। मृत्समानपरिणामा तु भवति, तथाप्रतीतेः। न चैतावदन्वयलक्षणम्, अपि त्वनेकस्वभावे**
५ **वस्तुनि तत्तन्मृत्त्वम्, एतच्च तद्रूपशक्तिपरिणामादिसङ्गतं तत्तथाभावाध्यवसायहेतुरविगानप्रतीयमानं विशिष्टमेव, इति नात्यन्तभिन्नायां मृदि वर्तत इति बाधाऽभावः॥**

**एवमन्वयव्यतिरेकवद् वस्तुसिद्धौ यदपि परैश्चोद्यते-"तथापि तत्र**

(स्वो० व्या०)

१० नामैवं ततः किमित्याह-**अहेतुकत्वापत्तेः**, इतरस्य[2] प्राग्निदर्शितस्वरूपस्य, एवं **युक्त्यनुभवविरोधात्** कारणात्, न घटान्तरकपालमृदधिकृतघटमृदात्मिकेति[3] योजनीयम्, किन्तु **मृत्समाने**त्यादि। मृत्समानपरिणामा तु भवति घटान्तरकपालमृत्। कुत इत्याह-**तथाप्रतीतेः** तथा-मृत्समानपरिणामतया प्रतीतेः-परिच्छेदात्। अधिकृतघटकपालमृदप्य(?पी)यमेवाऽस्त्विति तद्वदन्वयाभाव इति। एतदाश-
१५ ङ्क्याह-**न चैतावदि**त्यादि। न चैतावत्-समानपरिणाममात्रम् **अन्वयलक्षणम्, अपि तु अनेकस्वभावे वस्तुनि**-घटमृदादौ **तत्तन्मृत्त्वमि**ति पूर्ववत्। एतच्च-तत्तन्मृत्त्वं **तद्रूपशक्तिपरिणामादिसङ्गतम्**-अधिकृतघटमृद्रूपशक्तिपरिणामादिना सङ्गतं-युक्तियुक्तम्। 'आदि'शब्दात् तद्गन्धादिग्रहः। एतदेव विशिष्यते-**तत्-तथाभावाध्यवसायहेतुः** तस्याः-अधिकृतघटमृदस्तथाभावः-विवक्षितकपाल-
२० मृद्भावस्तत्तथाभावस्तस्मिन्नध्यवसायस्तत्तथाभावाध्यवसायस्तथा तत्स्वरूपग्राहको बोधविशेषस्तस्य हेतुः-कारणं तत्तन्मृत्त्वम्, तथा च सोऽयं घट इति तत्कपालेषु भवत्यध्यवसायः। एवम**विगानप्रतीयमानं विशिष्टमेव** तत्तन्मृत्त्वमिति **नात्यन्तभिन्नायां मृदि**, प्रक्रमाद् घटान्तरकपालमृदि, **वर्तत इति**-एवं **बाधाऽभावः**। ततश्च साधूक्तं[8] 'न काचिन्नो बाधेति'॥

२५ अतिदेशेन दूषणान्तरं परिहरन्नाह-**एवमि**त्यादि। एवम्-उक्तनीत्या **अन्वयव्यतिरेकवद् वस्तुसिद्धौ** सत्यां **यदपि परैश्चोद्यते** कुशाग्रीयबुद्धिभिः **तथापि**

(विवरणम्)

घटस्यापि परमार्थतो 'माथुर'घटकपालेषु व्यापारात् स्वकपालानां पृथग् जन्मप्रसङ्गेन तेषां तेषु प्रवेशादुच्छेद एव स्यात्। न चैतद् दृष्टमिष्टं वा कस्यचिदिति॥

१ 'दन्वयनिमित्तं' इति क-पाठः। २ 'इतरस्य सदन्तरस्य प्राग्' इति क-पाठः। ३ प्रेक्ष्यतां १२६तमं पृष्ठम्। ४ 'परिणामानुभवति' इति क-ङ-पाठः। ५ 'मेवास्ति तद्वद०' इति क-पाठः। ६ 'परिणामादिना गतं' इति क-पाठः। ७ 'हेतुस्तया अधि०' इति ङ-पाठः। ८ १२५ तमे पृष्ठे।

( मूलम् )

**किञ्चिन्निवर्तत एवापरं तिष्ठत्येवेति तद्भेदापत्त्याऽनेकान्तवादहानादि", तदपि परिहृतमेव, केवलोभयासिद्धेः, वस्तुन एव शबलरूपत्वात् निवर्तमानस्य कथञ्चिदनिवर्तमानाव्यतिरिक्तस्वभावत्वात्, तत्तदनु- ५ भवसिद्धेस्तदेतदित्यवगमात्, न तदवेदिनोऽक्षयोपशमात्, अनिवर्तमानस्यापि कथञ्चिन्निवर्तमानाव्यतिरिक्तस्वभावत्वात्, स्वभावस्य चापर्यनुयोगात्, न्याययुक्तत्वात्, अन्यथा वस्त्वनुपपत्तेरिति ॥**

( स्वो० व्या० )

**तत्र**–नित्यानित्ये वस्तुनि **किञ्चिन्निवर्तत एव,** अन्यथैकान्तनित्यत्वापत्तेः; १० **अपरं तिष्ठत्येव,** अन्यथैकान्तानित्यतापत्तेः । **इति**–एवं **तयोः**–निवर्तमान-तिष्ठतो**र्भेदापत्त्या** कारणेन **अनेकान्तवादहानादि**–अनेकान्तवादहानं निवर्तमानस्यैकान्तानित्यतया तिष्ठतश्च नित्यतया, 'आदि'शब्दात् तदेकान्तदोषश्चोक्तनीत्येति, **तदपि परिहृतमेव** । कुत इत्याह–**केवलोभयासिद्धेः** केवलयोरुभयोः–निवर्तमान-तिष्ठतोः असिद्धेः कारणात् परिहृतम् । एतदेव भावयति **वस्तुन** १५ इत्यादिना । **वस्तुन एव शबलरूपत्वात्,** उक्तनीतेः । एवं च **निवर्तमानस्य कथञ्चित्**–केनचित् प्रकारेण तत्सम्बन्धबीजनिबन्धनेन **अनिवर्तमानाव्यतिरिक्तस्वभावत्वात्** । एतत् स्वभावत्वं च **तत्तदनुभवसिद्धेः** तस्मिन्ननिवर्तमाने तदनुभवसिद्धेः–निवर्तमानानुभवसिद्धेः । सिद्धिश्च **तदेतदित्यवगमात्** कपालेषु घटकपालानीति परिच्छेदात् । नायं 'नालिकेर'द्वीपवासिनः प्रथमदर्शन इत्याशङ्का- २० पोहायाह–**न तदवेदिनोऽक्षयोपशमात्,** कपालेषु न घटकपालानीति परिच्छेदः । कस्य ? । तदवेदिनः–घटावेदिनः । कस्मादित्याह–अक्षयोपशमात्–क्षयोपशमाभावात् । धूमाग्निजन्यत्ववदिति भावनीयम् ॥

लेशतः प्रासङ्गिकमभिधाय प्रकृतमेवाह–**अनिवर्तमानस्यापि कथञ्चिदिति** पूर्ववत्[3] **निवर्तमानस्वभावाव्यतिरिक्तस्वभावत्वात्** तत्तदनुभवसिद्धेरित्यादि २५ यथायोगं योजनीयम् । किमयमेवम्भूतस्वभाव इत्येतत्परिजिहीर्षयाऽऽह–**स्वभावस्य चापर्यनुयोगात्**–पर्यनुयोगाभावात् । अभावश्च **न्याययुक्तत्वात्** । अनुभवसहायत्वेन विपक्षे बाधामाह–**अन्यथा वस्त्वनुपपत्तेः** । तद्भेदाभेदमन्तरेण निवर्तमान-तिष्ठतोरग्रहणेनाभावप्रसङ्गादित्युक्तप्रायम् । ततश्चैतदुक्तं भवति–

( विवरणम् )　　३०

(२८–२९) **तद्भेदाभेदमन्तरेण निवर्तमान-तिष्ठतोरग्रहणेनाभावप्रसङ्गादिति** । तयोः–द्रव्य-पर्याययोर्भेदाभेदमन्तरेण–विना किमित्याह–निवर्तमान-तिष्ठतोः

१ 'दोषाश्चोक्त०' इति क–पाठः । २ 'रुभयोर्निवर्त०' इति घ–पाठः । ३ 'वत् अनिवर्त०' इति क–पाठः ।

( मूलम् )

**न[1] चेह किञ्चिन्न निवर्तते, एकान्तानिवृत्तौ तद्विलक्षणबुद्ध्यभावतः कपालप्रतिपत्त्यसिद्धेर्विशेषाभावात् तस्याप्रच्युतानुत्पन्नस्थिरैकस्व-**
५ **भावत्वात्। न चोर्ध्वाद्याकार एव कपालाद्याकारः, प्रतीत्यादिभेदतः तद्भेदसिद्धेः, न चासन्ताविमौ, तथाप्रतिपत्तेः। न च द्विचन्द्रादिप्रति-पत्तिवद् भ्रान्तेयम्, अविगानतस्तद्भावात्। न च चित्रे निम्नोन्नत-**

( स्वो० व्या० )

अनेकान्तात्मके तस्मिन् वस्तुतत्त्वे एकान्तविकल्पानवसर एव, यथा मेचके एकान्त-
१० कृष्णादिविकल्पस्य। एवं च न तत्र किञ्चिदेकान्तेन निवर्तते, नापि तिष्ठति। किं तर्हि?। वस्त्वेव तत् तथा भवतीति सिद्धमेतत्। एवंविधे चास्मिन् एकान्तविकल्पनं सत्त्वादिनाऽग्न्यौष्ण्यादिप्रतिषेधकल्पमिति भावितस्याद्वादमार्गेणापकर्णयितव्यम्। इति अलं विस्तरेण ॥

**न चेत्यादि**। न च **इह**–वस्तुनि[2] **किञ्चिन्न निवर्तते,** अपि तु निवर्ततेऽपि
१५ किञ्चित्। कुत इत्याह–**एकान्तेत्यादि**। एकान्ता**निवृत्तौ** सत्यां तत्त्वेन **तद्विलक्षणबुद्ध्यभावतः**, प्रक्रमाद् घटविलक्षणबुद्ध्यभावतः कारणात्। किमित्याह– **कपालप्रतिपत्त्यसिद्धेः**। असिद्धिश्च **विशेषाभावात्**। विशेषाभावश्च **तस्य,** प्रक्रमाद् घटवस्तुनः, **अप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वात्। न चेत्यादि**। न च **ऊर्ध्वाद्याकार एव**–एकान्तेन **कपालाद्याकारः प्रतीत्यादिभेदतः**। 'आदि'-
२० शब्दात् कार्यभेदग्रहः। **तद्भेदसिद्धेः**–ऊर्ध्वाद्याकार-कपालाद्याकारयोर्भेदसिद्धेः। **न चासन्ताविमौ**–ऊर्ध्वाद्याकार-कपालाद्याकारौ **तथाप्रतिपत्तेः**–अस्तित्वेन प्रतिपत्तेः। **न च द्विचन्द्रादिप्रतिपत्तिवद् भ्रान्तेयम्**–ऊर्ध्वाद्याकारकपालाद्याकार-प्रतिपत्तिः। कुत इत्याह–**अविगानतः**–अविगानेन **तद्भावात्**–अधिकृतप्रतिपत्ति-

( विवरणम् )

२५ अंशेन ग्रहणेन हेतुना अभावप्रसङ्गात्। अयमत्राभिसन्धिः–भेदाभेद एव सति द्रव्य-पर्याययोर्निवर्तमान-तिष्ठतोरंशयोर्ग्रहणमुपपद्यते। एकान्ततो[3] भेदे तु कथमस्येदं निवर्तते इति व्यपदेशः। अभेदे त्वविचलितरूपत्वात् कथं निवृत्तिग्रहणम्?। अत[4] एकान्तभेदे-ऽभेदे च सति वस्तुनोऽभाव एव स्यादिति ॥

(१५) **तत्तत्त्वेनेति**। तस्य–घटादेर्वस्तुनोऽविचलितरूपत्वेन तत्त्वं–घटादित्व-
३० मेव तेन ॥

१ 'न चेह न किञ्चिन्न' इति क–पाठः। २ 'वस्तुनि न किंचिन्न' इति क–पाठः। ३ एकान्ताभेदे' इति क–पाठः। ४ 'अथ' इति ख–च–पाठः।

( मूलम् )

प्रतिपत्त्या व्यभिचारः, तत्र समस्पर्शज्ञानबाधकोपलब्धेः । न चैवमस्यास्तत्सिद्धिः, तथाऽनुभवाभावात् । न च दोषक्षये तद्भावे तत्तुल्यता, तद्भावे प्रमाणाभावात् । न च योगिज्ञानं प्रमाणमत्र, तत ५ एव हेतोः । न च तथाविधस्तदुपदेश एव प्रमाणम्, तस्याप्याकारशून्यत्वे तदसम्भवात् । न चासत्यपृष्ठा भ्रान्तिप्रतिपत्तिः, क्वचिददर्शनात्, अन्तरुपप्लवसमुद्भवाया अपि तद्द्रष्टुस्तदध्यारोपेण

( स्वो० व्या० )

भावात् । **न च चित्रे निम्नोन्नतप्रतिपत्त्या** अविगानभावोत्पन्नया **व्यभिचारः**—अनैकान्तिकता । कुत इत्याह—**तत्र**—चित्रनिम्नोन्नतप्रतिपत्तौ **समस्पर्शज्ञानबाधकोपलब्धेः** । **न चैवमस्याः**—ऊर्ध्वादिभेदप्रतिपत्तेः **तत्सिद्धिः**—अभेदज्ञानबाधकसिद्धिः । कुत इत्याह—**तथाऽनुभवाभावात्** । तथा—तेन प्रकारेण अभेदज्ञानबाधकभावलक्षणेनानुभवाभावात् । **न च दोषक्षये** सत्यात्मन एव **तद्भावे**—अभेदज्ञानबाधकभावे **तत्तुल्यता**—चित्रनिम्नोन्नतप्रतिपत्तितुल्यता । कुत इत्याह—**तद्भावे**—अभेदज्ञानबाधकभावे **प्रमाणाभावात्**, दोषक्षये एवम्भूतं ज्ञानं भविष्यति नान्यादृशमित्यत्र न प्रमाणम् । **न च योगिज्ञानं प्रमाणमत्र**—तद्भावे । कुत इत्याह—**तत एव हेतोः**, प्रमाणभावादेवेत्यर्थः । **न** **चे**त्यादि । न च **तथाविधः**—भेदाभावप्रतिपादकः "असन्तो भेदाः सदाभावात्" इत्यादिः **तदुपदेश एव**—योग्युपदेश एव **प्रमाणम्** अत्र । कुत इत्याह—**तस्यापि**—योगिन **आकारशून्यत्वे** सति **तदसम्भवात्**—उपदेशासम्भवात् । किं हि अनाकार उपदिशति? ॥

दोषान्तरमाह **न चे**त्यादिना । न च **असत्यपृष्ठा**—असत्यपूर्वा **भ्रान्तिप्रतिपत्तिः** । कुत इत्याह—**क्वचिददर्शनात्** असत्यपृष्ठाया भ्रान्तेः, **अन्तरुपप्लवसमुद्भवाया अपि** चिन्मात्रोपलब्धादिरूपायाः **तद्द्रष्टुः**—सत्यमात्रा(त्र)द्रष्टुः **तद**-

( विवरणम् )

(१९) **असन्तो भेदाः सदाभावादिति** । यदि हि कपालादयोऽवस्थाभेदा वस्तुसन्तो भवेयुस्तदा सर्वदाऽप्यमीषां भावः स्यात् । न च सर्वदाऽप्येतेषां भावः । अतस्त्रिष्वपि कालेषु विद्यमानतया प्रतीयमानं मृन्मात्रमेव वस्तु सदिति ॥

इति श्रीमुनिचन्द्रसूरिविरचिते **अनेकान्तजयपताकोद्द्योतदीपिकाटिप्पणके नित्यानित्यवस्त्वधिकारः** ॥

१ 'प्रमाणान्तरस्याप्याकार०' इति क-पाठः । २ 'न चासत्यपीष्ठा भ्रान्ति०' इति ङ-पाठः । ३ 'प्रकारेण भेद०' इति घ-पाठः । ४ 'क्षये तद्भावे तत्तुल्यतानवदोषक्षये सत्यामन एव' इति ङ-पाठः । ५ सदाऽभावात् इति क-पाठः । ६ 'अपि वियन्मात्रोप०' इति ङ-पाठः ।

( मूलम् )

**प्रवृत्तेः । न चाजन्मानुपलब्धपीतभावकामलिशङ्खपीतप्रतिपत्त्या व्यभिचारः, तद्भावजन्मान्तरोपलब्धिबलेन तत्प्रवृत्तेः, अन्यथाऽति-**
५ **प्रसङ्गात् । इति अनुपचरिताकारसिद्ध्या पर्यायसिद्धिरिति[१] ।**

**एतेन 'स्यादारेका—न हि कूटस्थनित्यतया' इत्यादि[२] यदाशङ्क्योक्तं[३] 'पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः' इत्यादि, तदपि प्रतिक्षिप्तमेवावगन्तव्यम्, कथञ्चिद् व्यतिरेकसिद्धेरिति । तथाहि—**

**"अन्योन्यव्याप्तिभावेन द्रव्य-पर्याययोः कथम् ।**
१० **भेदाभेदो विरुद्धः स्यात् तद्भावानुपपत्तितः ? ॥[४]**
**नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते ।**
**अतिप्रसङ्गादैक्याच्च, शब्दार्थानुपपत्तितः ॥[६]**

---

( व्यो० व्या० )

**ध्यारोपेण**—सत्यमात्राध्यारोपेण केशाद्यपेक्षया **प्रवृत्तेः** कारणात् । **न चे**त्यादि । **न**
१५ **च आजन्मानुपलब्धपीतभाव**श्चासौ **कामली** च 'नालिकेर'द्वीपवासिप्रख्यस्तस्य **शङ्खपीतप्रतिपत्तिः** तया **व्यभिचारो** न च । कुत इत्याह—**तद्भाव**श्च—पीतभावश्च जन्मान्तरोपलब्धिश्च संसारानादितया **तद्भावजन्मान्तरोपलब्धी** एतयोर्**बलं**—सामर्थ्यं तेन, **तत्प्रवृत्तेः**—अनन्तरोदितपीतप्रतिपत्तिप्रवृत्तेः । **अन्यथा**—एवमनभ्युपगमे । किमित्याह—**अतिप्रसङ्गात्**, पञ्चवर्णातिरिक्तवर्णान्तरप्रतिपत्तिप्रसङ्गादित्यर्थः ।
२० **इति**—एवम् **अनुपचरिताकारसिद्ध्या** हेतुभूतया[७] **पर्यायसिद्धिः**, आकारस्यैव पर्यायत्वात् **इति** ॥

**एतेने**त्यादि । **एतेन**—अनन्तरोदितेन **'स्यादारेका—न हि कूटस्थनित्यतया'** **इत्यादि यदाशङ्क्योक्तं** पूर्वपक्षग्रन्थे **'पर्यायव्यतिरिक्तस्य द्रव्यस्यासिद्धेः'** **इत्यादि तदपि** सर्वं **प्रतिक्षिप्तमेवावगन्तव्यम्** । कुत इत्याह—**कथञ्चिद्**
२५ **व्यतिरेकसिद्धेः** पर्यायेभ्यो द्रव्यस्य **इति** । एतदेवोपदर्शयति **तथाही**त्यादिना । तथाहीति पूर्ववत् । **अन्योन्यव्याप्तिभावेन** हेतुना । कयोरित्याह—**द्रव्य-पर्याययोः** । किमनयोरित्याह—**कथं भेदाभेदो विरुद्धः स्यात् ?** । नैव । कुत इत्याह—**तद्भावानुपपत्तितः**—अन्योन्यव्याप्तिभावानुपपत्तेः ॥

तथाहि **नान्योन्यव्याप्तिरेकान्तभेदेऽभेदे च युज्यते** । कुत इत्याह—**अति-**
३० **प्रसङ्गात्** एकान्तभेदे 'हिमवद्-विन्ध्य'योरन्योन्यव्याप्तिप्रसङ्गात्, **ऐक्याच्च** एकान्ताभेदेऽणोरप्यात्मनैव अन्योन्यव्याप्तिप्रसङ्गात् तथा **शब्दार्थानुपपत्तितः** कारणात् ॥

---

१ 'इति' इति पाठो घ-पुस्तके नास्ति । २ प्रेक्ष्यतां १८ तमं पृष्ठम् । ३ १९ तमे पृष्ठे । ४ अनुष्टुप् । ५ 'प्रसङ्गाच्चैक्याच्च' इति क-पाठः । ६ अनुष्टुप् । ७ 'भूतयो (?) पर्याय०' इति ङ-पाठः । ८ १९तमे पृष्ठे ।

(मूलम्)

अन्योन्यमिति यद्भेदं व्याप्तिश्चाह विपर्ययम् ।
भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भवः ॥[1]
एवं शबलरूपेऽस्मिन् व्यावृत्त्यनुगमावपि । ५
स्याद्वादनीतितः सिद्धौ तथाऽनुभवसुस्थितौ ॥"[2]
इत्थं प्रमाणसिद्धेऽस्मिन् विरोधोद्भावनं नृणाम्[3] ।
व्यसनं धीजडत्वं वा प्रकाशयति केवलम् ॥[4]

इत्यलं विस्तरेण ॥

नित्यानित्यवस्त्वधिकारः समाप्तः ॥[5] १०

---

(स्वो० व्या०)

अनुपपत्तिश्चान्योन्यमिति यद्भेदं व्याप्तिश्चाह–विपर्ययम् अभेदम् यस्मादेवं भेदाभेदे द्वयोस्तस्मादन्योन्यव्याप्तिसम्भवः ॥

एवं जात्यन्तरात्मकभेदाभेदविकल्पसिद्ध्या शबलरूपेऽस्मिन् वस्तुनि व्यावृत्त्यनुगमावपि स्याद्वादनीतितः सिद्धौ । तथा–तच्चित्रभावतयाऽनुभवसुस्थितौ–व्यावृत्त्यनुगमानुभवसुस्थिताविति निदर्शितमेतत् ॥ १५

इत्थम्–एवं प्रमाणसिद्धेऽस्मिन् भेदाभेदे विरोधोद्भावनं नृणाम्[6] किं करोतीत्याह–व्यसनं धीजडत्वं वा प्रकाशयति केवलम्, न किञ्चिदन्यत् । इत्यलं विस्तरेण इति पूर्वपक्षोपन्यस्तस्य समस्तस्यैव निराकृतत्वात् ॥

इति नित्यानित्यवस्त्वधिकारः समाप्तः ॥ २०

---

१–२ अनुष्टुप् । ३ 'नृणाम्' इति क–पाठः । ४ अनुष्टुप् । ५ 'इति द्वितीयः परिच्छेदः' इत्यधिको घ–पाठः । ६ 'नृणाम्' इति क–पाठः ।

# तृतीयोऽधिकारः ।

**यच्चोक्तम्–'एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यम्' इत्यादि तदप्ययुक्तम्, सामान्यविशेषरूपस्य वस्तुनोऽनुभवसिद्धत्वात्। तथाहि–घटादिषु घटो घट इति सामान्याकारा बुद्धिरुत्पद्यते, मार्त्तिकस्ताम्रो राजत इति विशेषाकारा च, पटादिर्वा न भवतीति। न चार्थसद्भावोऽर्थसद्भावादेव निश्चीयते, सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात्, सर्वार्थानामेव सद्भावस्याविशेषात्। किं तर्हि?। अर्थज्ञानसद्भावात्। ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति, अतोऽनुभवसिद्धत्वात् सामान्यविशेषरूपं वस्त्विति ॥**

**न चैतद् विज्ञानं भ्रान्तमिति युज्यते, घटादिसन्निधावविकलतदन्यकारणानां सर्वेषामेवाविशेषेणोपजायमानत्वात्। भ्रान्तमेतत्,**

---

(स्वो० व्या०)

अधिकारान्तरमधिकृत्याह **यच्चोक्तमित्यादिना** । यच्चोक्तं[1] पूर्वपक्षग्रन्थे–**एतेन सामान्यविशेषरूपमपि प्रतिक्षिप्तमवगन्तव्यमित्यादि, तदप्ययुक्तम्।** कुत इत्याह–**सामान्यविशेषरूपस्य वस्तुनोऽनुभवसिद्धत्वात्।** एतदेवाह **तथाहीत्यादिना।** तथाहि **घटादिषु** पदार्थेषु **घटो घट इति**–एवं **सामान्याकारा बुद्धिरुत्पद्यते** तथा **मार्त्तिकः**–मृदादिनिर्वृत्तो मार्त्तिकः, ताम्र[3]स्ताम्रविकारस्ताम्रः, रजतविकारो **राजतः, इति विशेषाकारा च** बुद्धिरुत्पद्यते **पटादिर्वा न भवतीति**–एवम्। इयं च वस्तुतत्त्वव्यवस्थानिर्बन्धनमित्यधिकृत्याह–**न चेत्यादि।** न च **अर्थसद्भावोऽर्थसद्भावादेव** कारणात् **निश्चीयते।** कुत इत्याह–**सर्वसत्त्वानां सर्वज्ञत्वप्रसङ्गात्।** प्रसङ्गश्च **सर्वार्थानामेव** भुवनोदरवर्तिनां **सद्भावस्याविशेषात्। किं तर्हि?। अर्थज्ञानसद्भाद्** अर्थसद्भावो निश्चीयते। यदि नामैवं ततः किमित्याह–**ज्ञानं च सामान्यविशेषाकारमेवोपजायत इति** निदर्शितम्। **अतोऽनुभवसिद्धत्वात्** कारणात् **सामान्यविशेषरूपं वस्त्विति ॥**

**न चेत्यादि।** न च एतद् **विज्ञानम्**–अनन्तरोदितं **भ्रान्तमिति युज्यते।** कुत इत्याह–**घटादिसन्निधौ** सति **अविकलतदन्यकारणानाम्,** सम्पूर्णालोकादिकारणानामित्यर्थः। **सर्वेषामेव,** प्रमातॄणामिति सामर्थ्यगम्यम्, **अविशेषेण**–

---

१–२ २०तमे पृष्ठे। ३ 'ताम्रविकारस्ताम्रः' इति ङ-पाठः। ४ 'बन्धनमभि०' इति क-पाठः।

(मूलम्)

विकल्पकत्वादिति चेत्, अभ्रान्तं तर्हि[2] कीदृगिति वाच्यम्। निर्विकल्पकमिति चेत्, न, तस्यापि निर्विकल्पकत्वेन भ्रान्ततापत्तेः। अर्थसामर्थ्यजन्यत्वादनापत्तिरिति चेत्, न, अस्य[1] विकल्पकेऽपि तुल्यत्वात्। क्वचिद् व्यभिचारदर्शनादतुल्यत्वमिति चेत्, न, तस्य निर्विकल्पकेऽपि भावात्। न तन्नः प्रमाणं तदाभासत्वादिति चेत्, विकल्पकेऽपि तुल्यः परिहारः। अर्थधर्मातिरिक्तशब्दभावतोऽस्यार्थसामर्थ्यजन्यत्वानुपपत्तिरिति चेत्, न, बोधनियतार्थतादिभि-

(स्वो० व्या०)

सामान्येन भिक्षूपासकादीनामपि उपजायमानत्वात् कारणात्। भ्रान्तमेतत्—अधिकृतज्ञानम्। कुत इत्याह—विकल्पकत्वात्। इति चेत्, एतदाशङ्क्याह—अभ्रान्तं तर्हि[2] कीदृगिति एतद् वाच्यम्। निर्विकल्पकमिति चेत् अभ्रान्तम्[3], एतदाशङ्क्याह—न, तस्यापि—निर्विकल्पकस्य निर्विकल्पकत्वेन हेतुना भ्रान्ततापत्तेः, स्वरूपमेव भ्रान्तिनिबन्धनम्, एतच्चास्यापि विद्यत एवेत्यभिप्रायः। अर्थसामर्थ्यजन्यत्वाद् निर्विकल्पकस्य अनापत्तिः। इति चेत्, भ्रान्ततायाः इति प्रक्रमः, एतदाशङ्क्याह—न, अस्य—अर्थसामर्थ्यजन्यत्वस्य विकल्पकेऽपि तुल्यत्वात्। एतदप्यर्थसामर्थ्यजन्यमेवेत्यर्थः। क्वचित्—छात्रमनोराज्यविकल्पादौ व्यभिचारदर्शनात् कारणात् अतुल्यम् (?)। इति चेत्, न ह्यसावर्थसामर्थ्यजन्य इति। एतदाशङ्क्याह—न, तस्य क्वचिद् व्यभिचारस्य निर्विकल्पकेऽपि भावात्। न हि तदपि सर्वमर्थसामर्थ्यजन्यम्। न तत्—अर्थसामर्थ्याजन्यं[4] नः[5]—अस्माकं प्रमाणम्। कुत इत्याह—तदाभासत्वात्—प्रमाणाभासत्वात्। इति चेत्, एतदाशङ्क्याह—विकल्पकेऽपि तुल्यः परिहारः अर्थसामर्थ्याजन्यं विकल्पकमपि न नः प्रमाणम्, तदाभासत्वादेवेति। अर्थधर्मातिरिक्तश्चासौ शब्दश्चेति विग्रहः, तद्भावतः कारणात् अस्य—विकल्पकस्य अर्थसामर्थ्यजन्यत्वानुपपत्तिः—असम्भव एव। इति चेत्, उक्तं च धर्मकीर्त्तिना "न ह्यर्थे शब्दाः सन्ति तदात्मानो वा येन तस्मिन्[6] प्रतिभासेरन्"

(विवरणम्)

अथ 'सामान्यविशेषा'धिकारे किञ्चिच्चर्च्यते। (२७) न ह्यर्थे शब्दाः सन्ति तदात्मानो वेति। न—नैव हिः—यस्मादर्थे कुण्डवत् आधारभूते शब्दा आधेयरूपतया[7] बदरकल्पा विद्यन्ते नापि तदात्मानः तत्स्वरूपा घटात्मस्वरूपवत्॥

१ 'अस्य सविकल्पके' इति क–पाठः। २ 'कीदृगिति वाच्यम्' इति क–पाठः। ३ 'अभ्रान्तमित्येतदा०' इति ङ–पाठः। ४ 'जन्यं तदनर्थसामर्थ्या०' इति ङ–पाठः। ५ 'जनं नः' इति क–पाठः। ६ 'तस्मिन् प्रतिभासमाने प्रतिभासेरन्' इति क–पाठः। ७ 'आधेयवद् ब०र०' इति क–पाठः।

(मूलम्)

**व्यभिचारात्। न ते, अर्थादन्यतो भावादिति चेत्, शब्दोऽपि तद्योग्यद्रव्येभ्य इति समानः समाधिः॥**

(स्वो० व्या०)

५ इति। एतदाशङ्क्याह–**न, बोधनियतार्थतादिभिः**, 'आदि'शब्दात् [1]कुशलतादिपरिग्रहः, **व्यभिचारात्** अर्थसामर्थ्यजन्यत्वानुपपत्तेरिति। **न** [2]**ते**–बोधादयोऽ**र्थादन्यतः**–समनन्तरादे**र्भावात्। इति चेत्**, एतदाशङ्क्याह–**शब्दोऽपि तद्योग्यद्रव्येभ्यः**–शब्दप्रायोग्यद्रव्येभ्योऽन्येभ्य एव **इति**–एवं **समानः**–तुल्यः
१० **समाधिः**–परिहारः। अनेन च "अयमर्थासंस्पर्शी संवेदनधर्मः, अर्थेषु तन्नियोजनात्" इत्यपि प्रत्युक्तम्, अनभ्युपगमादिति॥

(विवरणम्)

**(६–७) बोधनियतार्थादिभिरादिशब्दात् कुशलतादिपरिग्रह** इति। यदि [3]ह्यर्थधर्मातिरिक्तशब्दसद्भावात् सविकल्पकज्ञानमप्रमाणम्, एवं तर्हि बोधरूपताया
१५ [5]ज्ञानस्वरूपभूतायाः [4]तथानियतार्थतायाः–प्रतिनियतविषयरूपतायाः कुशलतारूपताया अकुशलरूपतायाश्च शुद्धाशुद्धवासनारूपताया [6]ज्ञानगताया एव सर्वथाऽर्थेष्वविद्यमानाया निर्विकल्पकज्ञानेऽपि भवदभिगमेनार्थाल्लब्धात्मलाभे सद्भावात् कथं प्रमाणता तस्य स्यादिति॥

**(८) समनन्तरादेर्भावादिति**। समनन्तराच्चोपादानरूपात् प्राच्यबोधक्षण-
२० लक्षणात् सकाशाद् बोधरूपताया भावः। 'आदि'शब्दाच्चक्षुरादेरिन्द्रियान्नियतार्थताया प्राग्वासनातश्च कुशलाकुशलताया इति॥

**(१०) अयमर्थासंस्पर्शी संवेदनधर्मोऽर्थेषु तन्नियोजनादिति**। अयं विकल्पः संवेदन[7]धर्मः–ज्ञानप्रकृतिरर्थासंस्पर्शी अर्थमनालम्ब्य[8]त्यत्र वर्तते। कुत इत्याह–अर्थेषु–घटादिषु सर्वथा शब्दस्वभावरहितेषु तस्य–शब्दस्य नियोजनात्–अध्यारोपणात्॥

२५ **(११) इत्यपि प्रत्युक्तमनभ्युपगमादिति**। न हि जैनैरित्थमभ्युपगम्यते यदुतार्थे दृष्टिः पश्चात् तद्वाचको ध्वनिस्तत्रारोप्यते, किन्तु तथाविधक्षयोपशमवशात् शब्दारूषितमेव तज्ज्ञानं सविकल्पं प्रवर्तते, न तु देवदत्तकटन्यायेन शब्दा अर्थेष्वध्यारोप्यन्ते, प्रदीपवत्, तेषां विच्छिन्नस्वभावानामेवार्थवाचकस्वभावत्वादिति॥

---

१ 'कुशलादिपरि०' इति ङ–पाठः। २ 'तेन बोधा०' इति ङ–पाठः। ३ 'यदि ह्यधर्माति०' इति ख–पाठः। ४ 'यथा नियता०' इति क–पाठः। ५ 'रूपाया ज्ञान०' इति क–पाठः। ६ 'ज्ञानताया एव' इति ख–पाठः। ७ 'धर्म्मा ज्ञान०' इति च–पाठः। ८ 'लम्ब्योतपन्नो वर्तते' इति ख–च–पाठः। ९ 'भाववदिति' इति ख–पाठः।

(मूलम्)

**न चैतदभ्युपगममात्रम्, तावत् सङ्घातजस्यैव तथाऽर्थग्रहणस्वभावत्वात्, अविगानतस्तथाऽनुभवसिद्धेः, एवमेव व्यवहारदर्शनादिति। तथाहि—एतदिन्द्रियद्वारानुसार्येव विज्ञानमाविष्टाभिलापम् ५ 'अहिरहिः' इति योजकं दर्शकं च धारावाहि तथा व्यवहारबीजं प्रतिप्राण्यनुभवसिद्धमेव। [1]न चेहान्यदेव दर्शनम्, अन्य [2]एव च विकल्पः,**

(स्वो० व्या०)

**न चे**त्यादि। न च एतत्—'शब्दोऽपि तद्योग्यद्रव्येभ्यः' इति यदुक्तं[3]मेतत् **अभ्युपगममात्रम्**, अपि तु सोपपत्तिकमित्यभिप्रायः। कुत इत्याह—**तावदि**त्यादि। तावत् १० **सङ्घातजस्यैव**—रूपालोकमनस्कारचक्षुःशब्दसङ्घातजस्यैव, विकल्पज्ञानस्येति प्रक्रमः, **तथा**—तेन [4]निश्चितप्रकारेण **अर्थग्रहणस्वभावत्वात्**। एतच्चैवमर्थग्रहणस्वभावत्वम् **अविगानतः**—अविगानेन **तथा**—तेन प्रकारेण **अनुभवसिद्धेः**। अनुभवसिद्धिश्च **एवमेव व्यवहारदर्शनादिति**। एतदेव निदर्शनेनाह—**तथाही**त्यादि। तथाहीत्युपप्रदर्शने। **एतत्**—वक्ष्यमाणम् **इन्द्रियद्वारानुसार्येव**, तद्व्यापाराभावे- १५ ऽभावात्। **विज्ञानम्**। किंविशिष्टमित्याह—**आविष्टाभिलापं**—प्रविष्टशब्दम्, शब्दसम्मिश्रमित्यर्थः। किंविशिष्टमित्याह—**अहिरहिः**—सर्पः सर्प **इति**—एवं **योजकं** शब्दस्य, **दर्शकं च** अर्थस्येन्द्रियव्यापारेण **धारावाहि तथा** सन्तानप्रवृत्तम्। एतदेव विशिष्यते **व्यवहारबीज**मिति। ततस्तथाविधव्यवहारसिद्धेः **प्रतिप्राण्यनुभवसिद्धमेव**—प्राणिनं प्राणिनं प्रति तत्तद्द्रष्ट्रपेक्षया प्रतिप्राणि प्रतिग्राम- २० भिक्षालाभवत्, अनुभवसिद्धमेव नेह कस्यचिद् विगानमिति। **न चे**हेत्यादि। न चेह—प्रस्तुते ज्ञाने **अन्यदेव दर्शनं** [5]निर्विकल्पकम् **अन्य एव च विकल्पो**

(विवरणम्)

(२०-२१) **प्रतिग्रामभिक्षालाभव**दिति। प्रतिशब्देनाव्ययीभावसमासः[6]। निदर्शनमेतत्। २५

(२२, पृ. १३८,१०) **अन्यदेव दर्शनं निर्विकल्पकमन्य एव विकल्पो निश्चयात्मक** इति। परो हि अहिरहिरिति विकल्पकाले [7]एकक तावदहिग्राहकं [8]निर्विकल्पकं चाक्षुषं प्रत्यक्षमिच्छति अन्यं च शब्दोल्लेखभावं विकल्पमिति। एतत्प्रतिषेधायोवाच[9] सूरिः—'[10]न चेहान्यदेव दर्शनम्' इत्यादि॥

१ 'न चेदान्यदेव' इति क-पाठः। २ 'एव विकल्पः' इति क-पाठः। ३ १३६तमे पृष्ठे। ४ 'निश्चयप्रकारेण' इति ङ-पाठः। ५ 'निर्विकल्पं अन्य' इति ङ-पाठः। ६ 'समासनिदर्शन०' इति च-पाठः। ७ 'एकैकं' इति च-पाठः। ८ निर्विकल्पकल्पकं चाक्षुषं इति च-पाठः, 'निर्विकल्पकल्पचाक्षुषं' इति तु ख-पाठः। ९ अस्मिन्नेव पृष्ठे। १० 'निर्वेहान्यदेव' इति क-पाठः।

( मूलम् )

**विकल्पेनादर्शनात्, दर्शनेन चाविकल्पनात्, तयोरसहवृत्तेरुपादानादिभावात्। इत्येकमेवेदमिति ॥**

५ **स्यादेतत् सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेर्विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तत्, अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात्, अतीताद्यर्थगतविकल्पेनापि इन्द्रियज्ञानतो रूपादिग्रहणसिद्धेः। न च स**

( स्वो० व्या० )

१० निश्चयात्मकः। कुत इत्याह—**विकल्पेनादर्शनात्**। कान्तादिविकल्पे तथाऽनुभवसिद्धमेतत्, **दर्शनेन चाविकल्पनात्** अनभिप्रेतभूतृणादिदर्शने एतदपि सिद्धमेव। तथा **तयोः**—दर्शनविकल्पयोः **असहवृत्तेः**, युगपद्वृत्तेरित्यर्थः। कुत इत्याह—**उपादानादिभावात्**, अवग्रहादिक्रमेणोपादानोपादेयभावादित्यर्थः। **इति**—एवम् **एकमेवेदम्**—अधिकृतं विज्ञान**मिति** ॥

१५ पराभिप्रायमाह **स्यादेतदि**त्यादिना। स्यादेतत्—अथैवं मन्यसे **सविकल्पाविकल्पयोर्विज्ञानयोः** सामान्येन **स्वभावभेदेऽपि** सति **प्रतिभासभेदेन** हेतुना **युगपद्वृत्तेः** कारणात् **विमूढः प्रतिपत्ता** पुरुषः **तमपश्यन्** स्वभावभेदं **ऐक्यं व्यवस्यति** तयोः सविकल्पाविकल्पयोः, **न तु तथा तत्**—न पुनस्तदैक्यमेव। कुत इत्याह—**अन्यत्र**—जातिभेदे **अनयोः**—सविकल्पाविकल्पयोः
२० **यौगपद्येऽपि** सति[1] **भेददर्शनात्**। एतदेवाह—**अतीताद्यर्थगतविकल्पेनापि** प्रमात्रा **इन्द्रियज्ञानतः**—इन्द्रियज्ञानेन **रूपादिग्रहणसिद्धेः**। कस्येत्याह—अन्यस्याश्रुतत्वात् तस्यैव प्रमातुः। **न चे**त्यादि। न च **स विकल्पः**—

( विवरणम् )

(१०—११) **कान्तादिविकल्पे तथाऽनुभवसिद्धमेतदि**ति। न हि कामुकादेर्वि-
२५ रहादिपीडितस्य कान्तापरोक्षतायां दृढावेशेन कान्तां विकल्पयतोऽपि साक्षात् तद्दर्शनमुपलभ्यते। एवमत्रापि ज्ञाने विकल्पात्मकतायां केवलायां न साक्षादहेर्दर्शनमुपपद्यत इति ॥

(११) **दर्शनेन चाविकल्पनादि**ति। पथि गच्छतो हि पुरुषस्यावग्रहरूपदर्शन-सद्भावेऽपि अनभिमततृणादिषु न तद्विषयोपात्तो विकल्पः प्रवर्तते, अतो विकल्प-
३० मात्र-दर्शनमात्राभ्यामन्यदेव किञ्चिदहिरहिरित्याद्युल्लेखवत् ज्ञानमिति भावः ॥

१ 'इत्यत एकमेवेद०' इति क—पाठः। २ 'सति निदर्शनात्' इति क—पाठः। ३ 'कल्पे तथा तथा०' इति च—पाठः। ४ 'ग्रहदर्शन०' इति क—पाठः। ५ 'तद्विषयो यतो विकल्पः वर्त्तते' इति च—पाठः। ६ 'भावम्' इति क—पाठः।

( मूलम् )

विकल्पो रूपाद्येव गृह्णातीति शक्यं कल्पयितुम्, तस्यातीताद्यर्थाभिधायकत्वत्यागतो वर्तमानार्थयोजनेन प्रवृत्तिप्राप्तेः । नापि वर्तमानार्थाभिधानसंसर्गी तदाऽपरो विकल्पः समस्ति, द्वयोर्विकल्पयोः सममप्रवृत्तेः, अविगानेन तथाऽनुभवाभावात् । अतोऽत्र प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाऽग्रहः स्पष्ट एव, तन्नामग्रहणसम्भूता च कल्पना तन्नामग्रहाभावे कल्पनाऽभावः । इति सिद्धमविकल्पकमिन्द्रियज्ञानम्, अतोऽन्य[1] एव च विकल्पः । इति न क्वचिदनयोरैक्यम्, न्यायानुपपत्तेः, भिन्नजातीयत्वादिति । इतश्चैतदेवम्, अन्यथा स्वाभिधानविशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम् ॥

( स्वो० व्या० )

अतीताद्यर्थगतो रूपाद्येव गृह्णाति, वार्तमानिकमिति प्रक्रमः, इति–एवं शक्यं कल्पयितुम् । कुतो न शक्यमित्याह[2]–तस्येत्यादि । तस्य–अतीताद्यर्थगतविकल्पस्य अतीताद्यभिधायकत्वत्यागतः–अतीतादिवाचकशब्दादित्यागतः । वर्तमानार्थयोजनेनेति[3] । वर्तमानोऽर्थः–अभिधेयो यस्य, अभिधायकस्येति प्रक्रमः, स वर्तमानार्थस्तद्योजनेन । प्रवृत्तिप्राप्तेः कारणात् । नापीत्यादिना । नापि वर्तमानार्थाभिधानेन संसृज्यते तच्छीलश्चेति विग्रहः तदा–तस्मिन्नेव कालेऽपरो विकल्पः समस्ति–विद्यते । कुत इत्याह–द्वयोर्विकल्पयोः समं–युगपत् अप्रवृत्तेः कारणात् । अप्रवृत्तिश्च अविगानेन–अविप्रतिपत्त्या तथा–तेन समकालभावेन अनुभवाभावात् । अत इत्यादि । अतः स्थितमेतत्–प्रत्युत्पन्नविषयग्रहणकाले दृश्यमानार्थनामाऽग्रहः स्पष्ट एव । यदि नामैवं ततः किमित्याह–तन्नामग्रहणेन सम्भूता तन्नामग्रहणसम्भूता एवम्भूता च कल्पना । ततः किमित्याह–तन्नामग्रहाभावे[4] कल्पनाऽभाव । इति कृत्वा सिद्धमविकल्पकमिन्द्रियज्ञानम्, अतः–इन्द्रियज्ञानात् अन्य एव च विकल्पः । इति–एवं न क्वचित्–सजातीयादौ अनयोः–दर्शन-विकल्पयोः ऐक्यम्–एकभावो न्यायानुपपत्तेः, इयं चोक्तैव । सर्वगर्भं त्वाह–भिन्नजातीयत्वात् सामान्येनैव दर्शन-विकल्पयोः इति । इतश्चैतदेवम्, अङ्गीकर्तव्यमिति शेषः । अन्यथा–एवमनभ्युपगमे स्वाभिधानविशेषणापेक्षा एवार्था

१ 'ततोऽन्य' इति क-पाठः । २ 'शक्नुमित्याह' इति ङ-पाठः । ३ 'योजनेनेत्यादि वर्त०' इति क-पाठः । ४ 'ग्रहणाभावे विकल्पना' इति क-पाठः ।

(मूलम्)

**अस्त्वेवमपि को दोष इति चेत्, निवृत्तेदानीमिन्द्रियज्ञानवार्ता, अभिधानविशेषस्मृतेरयोगात्। सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ५ ततः स्मृतिः स्यात्, अग्निधूमवत्। न चायमशब्दमर्थं पश्यति, अप-श्यन् न शब्दविशेषमनुस्मरति, अननुस्मरन् न योजयति, अयोजयन् न प्रत्येति, इत्यायातमान्ध्यमशेषस्य जगतः। अभिपतन्नेवार्थः**

---

(स्वो॰ व्या॰)

**विज्ञानैर्व्यवसीयन्त इति प्राक्तम्।** व्यवसीयन्ते—प्रतीयन्त इत्यर्थः। कीदृशा १० इत्याह—स्वाभिधानेत्यादि। स्वाभिधानमेव विशेषणम्, व्यवच्छेदकत्वात् तस्मिन्नपेक्षा येषामर्थानामिति विग्रहः॥

**अस्तु**—भवत्वेतत्, **एवमपि को दोषः?। इति चेत्**, एतदाशङ्क्याह—**निवृत्ते**-त्यादि। निवृत्ता **इदानीमिन्द्रियविज्ञानवार्ता**। कस्मान्निवृत्तेत्याह—**अभिधान-विशेषे**त्यादि। अभिधानविशेषो योऽर्थस्तदानीं ग्राह्यस्तस्य यो वाचकः-शब्दस्तत्र १५ स्मृतिस्तस्याः **स्मृतेरयोगात्**। कथमयोग इत्याह—**सति ह्यर्थदर्शन** इत्यादि। यस्माद् व्यवहारकाले सत्यभिधेयार्थदर्शने तदभिधायिन्यभिधाने स्मरणं भवति। तत्रापि न सर्वस्य शब्दस्येत्याह—**अर्थसन्निधौ** सङ्केतकाले **दृष्टे शब्द** इति **तत** इत्यर्थदर्शनात् **स्मृतिः स्यात्**, नान्यथा। निदर्शनमाह—**अग्निधूमवत्**। यथा अग्नि-धूमयोः सम्बन्धज्ञस्याग्निदर्शने धूमे स्मृतिर्भवति, धूमदर्शने चाग्नौ स्मृतिः, तद्वदत्रा-२० प्यवसेयम्। स्यान्मतम्—अर्थं तर्हि दृष्ट्वा शब्दं स्मरिष्यतीत्याह—**न चायमि**त्यादि। न खल्वयं—सविकल्पकप्रत्यक्षवादी **शब्दरहितमर्थं पश्यति**, 'स्वाभिधानविशेषणा-पेक्षा एवार्था विज्ञानैर्व्यवसीयन्ते'[४] इति नियमात्। ततः को दोष इत्याह—[५]**अप-श्यन् न शब्दविशेषमनुस्मरति**, नियमेनेति शेषः, यस्मादर्थदर्शनं शब्दवि-शेषस्मृतेर्हेतुः सा च तेन व्याप्ता [६]कारणं विवर्तमानं कार्यं निवर्तयति। भवतु नाम—२५ एवम्। ततः को दोष इत्याह—**अननुस्मरन् न योजयति**। अत्रापि शब्दविशेषानु-स्मरणं स्मृतियोजनायाः कारणम्, तदभावात् कार्याभावः। अत्रापि को दोषः?। इति चेत्, आह—**अयोजयन् न प्रत्येति**। योजनं ह्यर्थप्रतीतेः कारणमित्यत्रापि कारणा-नुपलब्धिरेव इति तस्मा**दायातमान्ध्यमशेषस्य जगतः**। न चेष्यते, तस्मान्नेन्द्रियज्ञाने शब्दकल्पना सम्भवतीति। अथापि स्यान्नार्थदर्शनात् स्मृतिः। किं ३० तर्हि?। योग्यदेशावस्थितादेवार्थात् स्मृतिरित्याह—**अभिपतन्नेवे**त्यादि। अभि-

---

१ 'अपश्यंश्च न' इति ग-पाठः। २ 'चेत् तदाशङ्क्याह' इति ङ-पाठः। ३ 'विशेष इत्यादि' इति क-घ-च-पाठः। ४ अवेक्ष्यतां १३९ तमं पृष्ठम्। ५ 'अपश्यंश्च न' इति क-पाठः। ६ 'करणं' इति क-पाठः।

( मूलम् )

**प्रबोधयत्यान्तरं संस्कारम्, तेन स्मृतिः, नार्थदर्शनादिति चेत्, न, तत्सम्बन्धस्यास्वाभाविकत्वात् समयादर्शनेऽभावात्, पुरुषेच्छातः अर्थानां स्वभावापरावृत्तेर्न समयकालोत्पत्तिः, स्वभावस्य परावृत्तौ** ५ **च तस्य तादात्म्यात्, अन्यस्यासमयदर्शिनोऽपि स्यात्। न हि प्रति-**

---

( स्वो० व्या० )

पतन्–अभिमुखीभवन्। कोऽसावित्याह—**अर्थः**–रूपादिको विषयः। किं करोति?। **प्रबोधयति**–कार्यनिर्वर्तनं प्रत्यनुकूलयति। कं [1]प्रबोधयति?। **आन्तरं संस्कारं**–शब्दस्मृतिवासनाख्यं **तेन**–अर्थाभिपातमात्रेण सा **स्मृतिः** । तेन वा कारणेन १० स्मृतिः, **नार्थदर्शनात्**[2]। **इति चेत्**, तथा च नान्ध्यं जगतः, विकल्पकत्वं चेन्द्रियज्ञानस्योपपन्नमिति मन्यते। अर्थाभिपातस्य स्मृतिजनकत्वं निराकुर्वन्नाह–**न, तत्-सम्बन्धस्ये**त्यादि । यदेतदुक्तम्–'अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारम्' इति तन्न। कुत इत्याह–तत्सम्बन्धस्य तयोः–शब्दार्थयोः सम्बन्धस्तत्सम्बन्धस्तस्य **अस्वाभाविकत्वात्**, पौरुषेयत्वादित्यर्थः। कथमवसेयमित्याह–**समयादर्शने** १५ सङ्केतस्याग्रहणे सति **अभावात्**, स्मृतिसंस्कारप्रबोधस्य, अर्थप्रतीतेर्वेति वाक्यशेषः। एतदुक्तं भवति–ययोः स्वाभाविकः सम्बन्धो न तयोः समयं प्रति काचिदपेक्षा, यथा चक्षू-रूपयोः, विपर्ययस्त्वत्र इति नाकृतिमत्त्वं सम्बन्धस्येति। तत्रैतत् स्यात् समयादुत्तरकालं स्वा[3]भाविकः शब्दार्थसम्बन्धः, न पूर्वम्, अतः कृतसमयस्याभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारमित्याह–**पुरुषेच्छातः** सकाशात् **अर्थानां स्वभावा-** २० **परावृत्तेः**–पूर्वस्वभावपरित्यागेन विशिष्टस्वभावान्तरानुत्पत्तेः कारणात् **न समय-कालोत्पत्तिः**, न समयकाले स्वाभाविकत्वेन शब्दार्थसम्बन्धस्य प्रादुर्भाव इत्यर्थः। दोषान्तराभिधित्सयाऽभ्युपगम्यापि स्वभावान्तरपरावृत्तिमाह–**स्वभावस्य परावृत्तौ च** सत्यां **अन्यस्यासमयदर्शिनोऽपि स्यात्** स्मृतिसंस्कारप्रबोधः, अर्थप्रतीतिर्वेति शेषः। न केवलं [4]समयदर्शिन इत्यपि शब्दार्थः। कस्मादित्याह–**तस्य** २५ **तादात्म्यात्**। [5]स स्मृतिसंस्कारप्रबोधकोऽर्थप्रतीतिहेतुको वा आत्मा–स्वभावोऽस्येति तदात्मा, तदात्मनो भावस्तादात्म्यं ब्राह्मणादेराकृतिगणत्वात् ष्यञ्। अथोच्यते-समयदर्शिनं प्रति स्वभावः, न [6]पुनरदृष्टसमयं प्रति, इत्यत आह—**न ही**त्यादि।

---

१ 'प्रयोजयति' इति क–पाठः। २ १४० तमे पृष्ठे १४१ तमे च। ३ 'भाविकशब्दा०' इति क–पाठः। ४ 'सम्यग्दर्शिन' इति क–पाठः। ५ 'न स्मृति०' इति क–पाठः। ६ 'पुनदृष्ट०' इति ङ–पाठोऽशुद्धः।

( मूलम् )

**पुरुषमर्थानामात्मभेदः, नैरात्म्यप्रसङ्गात्, आत्मस्थितेरभावात्, तस्मादयमशब्दसंयोजनमेवार्थं पश्यति, दर्शनादिति ॥**

५ **किञ्च विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्यनेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात्, नित्यत्वादौ भ्रान्त्यनुपपत्तेः ॥**

( स्वो० व्या० )

न हि पुरुषं पुरुषं प्रति **अर्थानामात्मभेदः**—स्वभावभेदो भवति । कुत इत्याह—**नैरात्म्यप्रसङ्गात्** । अयमभिप्रायः—पुरुषेच्छानामानन्त्यात् तदनुवर्तिनश्च १० यद्यर्थाः स्युस्तदा तेषां नैःस्वाभाव्यमेव स्यात्, एकस्य अनेकस्वभावाभावात् । स्यान्मतम्—भवतु सामायिकस्वभावस्याभावः, अन्योऽपि तद्व्यतिरिक्तो वस्तुसत्स्वभावोऽस्यास्त्येव, अतो नैरात्म्यप्रसङ्गो न भविष्यतीत्याह—**आत्मस्थितेरभावादिति** । उपलब्धिलक्षणप्राप्तस्य तद्व्यतिरेकेणान्यस्य स्वभावस्यानुपलम्भादित्यभिप्रायः । अथवा नन्वेवं सति बहुतरस्वभावसिद्धिरेव[3]; तत् किमुच्यते नैरात्म्यप्रसङ्गा-१५ दिति ? । आह—आत्मस्थितेरभावात् । पुरुषाणां स्वाभिप्रायवशेनैकत्र विरुद्धस्यापि स्वभावस्याभ्युपगमसम्भवात्, न चैकस्य विरुद्धानेकस्वभावो युक्त इति मन्यते । तदेवं स्मृत्यसम्भवेन निर्विकल्पतां प्रतिपाद्योपसंहरन्नाह—**तस्मादित्यादि** । यस्मादेवमनन्तरोक्तेन प्रकारेण शब्दविशेषस्मृतिर्न सम्भवति, तस्मादयं—प्रतिपत्ता **अशब्दसंयोजनमेवार्थं पश्यति** । अविद्यमानं शब्दसंयोजनं यस्यार्थस्येति विग्रहः । कुत २० इत्याह—**दर्शनात्** । अयमस्यार्थः—यस्मादयं प्रतिपत्ताऽर्थमुपलभते तस्मादशब्दसंयोजनमेवार्थं पश्यति इति निश्चीयते ॥

किञ्चेत्यादि । किञ्चायमपरो दोषः—**विकल्पात्मकत्वेऽस्य**—प्रत्यक्षस्य **निश्चयात्मकमिदमिति**—एवं विकल्पात्मकत्वेन हेतुना । यदि नामैवं ततः किमित्याह—**अनेकप्रमाणवादहानिः**—प्रत्यक्षा-ऽनुमाना-ऽऽगमप्रमाणवादहानिः । कुत इत्याह-२५ **तेनैव**—निश्चयात्मना प्रत्यक्षेण **वस्तुनो निश्चयात्** कारणात् । यथोक्तनिश्चयेऽपि किमित्याह—**नित्यत्वादौ** धर्मे **भ्रान्त्यनुपपत्तेः** इति ॥

( विवरणम् )

(१३) **उपलब्धिलक्षणप्राप्तस्य तद्व्यतिरेकेणान्यस्य स्वभावस्यानुपलम्भादिति** । विशिष्टवस्त्वन्तरेण न कश्चिद् धर्मभूतः स्वभाव उपलब्धिलक्षणप्राप्त ३० उपलब्ध्यपेक्षया प्रवर्तते । [ स्वामीति च ध्वनिरस्य स्वस्यापेक्षयेति भावः ॥ ][5]

१ 'अर्थानां स्वभावभेदः । आत्मभेदो भवति' इति ङ-पाठः । २ 'उपलक्षितलक्षण०' इति क-पाठः । ३ 'बहुशः स्वभाव०' इति ङ-पाठः । ४ 'तस्मादेव०' इति क-पाठः । ५ किमयं पाठ उपपन्नः १४४ तमे पृष्ठे १४५ तमे वा ? ।

( मूलम् )

**अनेकधर्मके वस्तुन्यन्यतरधर्मनिश्चयात् तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत्, न, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयीकुर्वतः स्मृतिरूपानतिक्रमात्, एकधर्मद्वारेणापि तद्वतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो निश्चयात्। न ह्यन्य एवान्योपकारको नाम, ततो यदेवास्यैकोपकारकत्वेन निश्चयनं तदेव तदन्योपकारकत्वेनापि। न चासत्युपकार्योपकारकभावे तद्व्यवस्थाऽतिप्रसङ्गतो युक्ता ॥**

( स्वो० व्या० )

पराभिप्रायमाह—**अनेकधर्मके वस्तुनि** नित्यत्वादिधर्मापेक्षया **अन्यतरधर्मनिश्चयाद्** [१]यथोदितप्रत्यक्षेण **तदन्यनिश्चयाय**—धर्मान्तरनिश्चयार्थं **प्रमाणान्तरसाफल्यम्**—अनुमानादिसाफल्यम्। **इति चेत्**, एतदाशङ्क्याह—**नैके**त्यादि। न—नैतदेवम्। कुत इत्याह—**एकधर्मविशिष्टस्यापि**, वस्तुन इति प्रक्रमः। **निश्चये** सति किमित्याह—सर्वे च ते धर्माश्च सर्वधर्माः, तेऽस्य वस्तुनो विद्यन्त इति सर्वधर्मवत् तद्भावः **सर्वधर्मवत्ता** तया **निश्चयात्**। एवं च **प्रमाणे**त्यादि। **प्रमाणान्तरस्य**—अनुमानादेर्**निश्चितमेव**, 'धर्मान्तरम्' इति प्रक्रमः। **विषयीकुर्वतः** सतः **स्मृतिरूपानतिक्रमात्**। अनेकप्रमाणवादहानिरिति वर्तते, 'एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्' इति यदुक्तं[४] तदुपदर्शयन्नाह[५]—**एकधर्मे**त्यादि। **एकधर्मद्वारेणापि तद्वतः**—धर्मवतो वस्तुनो **निश्चयात्मना प्रत्यक्षेण** सविकल्पकेन **विषयीकरणे** सति। किमित्याह—**सकला**श्च ते **धर्मा**श्च तेषा**मुपकारिका**श्च ताः **शक्तय**श्चेति विग्रहः, ताभ्यो**ऽभिन्न**श्चासा**वात्मा** चेति समासस्तस्य **निश्चयात्** कारणात्, सर्वधर्मवत्तया निश्चयः। एतत्समर्थनायैवाह—**न ही**त्यादि। न यस्मा**दन्य एव**, धर्मी वस्त्वात्मा इति प्रक्रमः। **अन्योपकारको नाम**—धर्मान्तरोपकारको नाम। किं तर्हि ? । स एव, धर्मिण एकत्वादिति हृदयम्। **ततो यदेवास्य**—वस्तुनो धर्मिण **एकोपकारकत्वेन** अन्यतरधर्मापेक्षया **निश्चयनं तदेव अन्योपकारकत्वेन**—धर्मान्तरोपकारकत्वेनापि निश्चयनम्, अन्यथा तदेकत्वहानिरिति गर्भः। **न चासत्युपकार्योपकारकभावे तद्व्यवस्था**—वस्तुनो धर्मधर्मिव्यवस्था **अतिप्रसङ्गतः** कारणाद् **युक्ता**। अतिप्रसङ्गश्च तद्वद् धर्मान्तराद्यपेक्षयाऽपि धर्म्यादिभावप्रसङ्गः, निमित्ताभावाविशेषादिति ॥

१ 'द्वारेण तद्वतो' इति क–पाठः। २ 'यथोचितप्रत्यक्षेण' इति घ–पाठः। ३ 'कुर्वतः स्मृति०' इति ङ–पाठः। ४ अस्मिन्नेव पृष्ठे। ५ 'दर्शनायाह' इति क–पाठः।

(मूलम्)

**न चोपकारिकाः शक्तयस्ततो भेदमनुभवन्ति, असत्युपकारेऽस्येमाः शक्तय इति सम्बन्धायोगात्, आधाराधेयभावस्यापि तन्नि-**
५ **बन्धनत्वात्, अन्यथा कल्पनामात्रं स्यात्। तथा च शक्तीनामनवस्था, ततः स्वात्मैवास्याशेषधर्मोपकारिकाः शक्तयः, तस्य सर्वधर्मोपकारकत्वेन निश्चये तदुपकार्या अपि धर्मा निश्चिता एव, तन्निश्चयनान्तरीयकत्वादुपकारकनिश्चयस्य। न हि ये यदपेक्षस्थितयस्ते तदनिश्चये तथा निश्चीयन्ते स्वस्वामित्ववदिति। एवमपि सविकल्पक-**
१० **प्रत्यक्षानुपपत्तिरिति ॥**

(स्वो० व्या०)

**न चे**त्यादि। न च **उपकारिकाः शक्तय** उपकारकसम्बन्धिन्यस्**ततः**–उपकारकाद् धर्मिणो **भेदमनुभवन्ति**। कुत इत्याह–**असत्युपकारे** उपकारकसम्बन्धिनि। **अस्य**–उपकारकस्य धर्मिण **इमाः शक्तय इति**–एवं **सम्बन्धा-**
१५ **योगात्**। अयोगश्च निमित्ताभावेन। आधाराधेयभावः सम्बन्धो भविष्यतीत्याशङ्कापोहायाह–**आधाराधेयभावस्यापि** कुण्डबदराद्युदाहरणादिसिद्धस्य **तन्निबन्धनत्वात्**–उपकारनिबन्धनत्वात्। तथाहि–पतनधर्माणां[2] बदराणामपतनस्वभावाधानेनोपकारकं कुण्डं बदराणामिति भावनीयम्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथे**त्यादि। अन्यथा–एवमनभ्युपगमे **कल्पनामात्रं स्या**दाधाराधेयभावः। न चैत-
२० देवमित्युपकारसिद्धिः। **तथा चे**त्यादि। तथा चैवं चोपकारसिद्धौ सत्यां **शक्तीनामनवस्था**–यकाभिः[3] शक्तिभिः शक्तीनामुपकरोति ता अपि ततो भिन्ना इति तत्राप्ययमेव वृत्तान्त इति अनवस्था **ततः**–तस्मात् **स्वात्मैवास्य**–उपकारकस्य धर्मिणः। **अशेषधर्मोपकारिकाः शक्तय** इति। यतश्चैवमतः **तस्य**–उपकारकस्य धर्मिणः **सर्वधर्मोपकारकत्वेन निश्चये** सति। किमित्याह–**तदु-**
२५ **पकार्या अपि**–विवक्षितोपकारकोपकार्या अपि **धर्मा**[1] **निश्चिता एव**। कुत इत्याह–**तन्निश्चयनान्तरीयकत्वात्**–उपकार्यधर्मनिश्चयनान्तरीयकत्वात्। **उपकारकनिश्चयस्य** तदपेक्षमस्योपकारकत्वमित्यर्थः। एतत्स्पष्टनायैवाह–**न ही**त्यादि। न यस्माद् **ये** भावा **यदपेक्षस्थितयः** प्रकृत्या **ते**–भावास्**तदनिश्चये**–अपेक्षाऽ[4]निश्चये **तथा निश्चीयन्ते**–तदपेक्षकत्वेन निश्चीयन्ते नहि। निदर्शनमाह–
३० **स्वस्वामित्ववत्**। स्वं च स्वामी च स्वस्वामिनौ, तद्भावः स्वस्वामित्वम्, तद्वत्

१ 'धर्मनिश्चिता' इति क–पाठः। २ 'पतनधर्मणां' इति घ–पाठः। ३ 'वस्थायिकाभिः' इति क–पाठः। ४ 'अपेक्ष्याऽनिश्चये' इति क–पाठः। ङ–प्रतौ तु पाठाभावः।

(मूलम्)

अत्रोच्यते–यदुक्तम्[1]–'सविकल्पाविकल्पयोर्विज्ञानयोः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेः' इत्यादि, तदयुक्तम्, एकविषययोः सविकल्पाविकल्पयोर्युगपद्वृत्त्यसिद्धेः[2], तदविकल्पपूर्वकत्वात् तद्विकल्पस्य, अन्यथाऽस्याहेतुकत्वापत्तिः, तथा च सदा सदसत्त्वप्रसङ्गः। सोऽपि तत्पूर्वक एवेति चेत्, कथमनयोर्युगपद्वृत्तिः?। प्रबन्धापेक्षयेति चेत्, कथमाद्याविकल्पादुभयजन्म?। तत्तत्स्वभाव[3]त्वादिति चेत्, कथं कारणभेदो भेदहेतुः?। यदि न, ततः को दोष इति चेत्, प्रधानादीनामनिषेधप्रसङ्गः। ते तथाभावजनका इति

(स्वो० व्या०)

'स्वमस्य, अस्य स्वामी' इतीतरेतरप्रतिपत्तिनान्तरीयकी स्वस्वामिप्रतिपत्तिः। उपसंहरन्नाह–एवमपि–अनेकप्रमाणवादहानितोऽपि सविकल्पकप्रत्यक्षानुपपत्तिरिति ॥

एतदाशङ्क्याह–अत्रोच्यते–यदुक्तम्[4]–'सविकल्पाविकल्पयोर्विज्ञान[5]योः स्वभावभेदेऽपि प्रतिभासभेदेन युगपद्वृत्तेः' इत्यादि पूर्वपक्षे तदयुक्तम्। कुत इत्याह–एकविषययोः सविकल्पाविकल्पयोः। किमित्याह–युगपद्वृत्त्यसिद्धेः। असिद्धिश्च तदविकल्पपूर्वकत्वात्–विवक्षितैकविषयाविकल्पपूर्वकत्वात् तद्विकल्पस्य–सामान्येन विवक्षितैकविषयविकल्पस्य,अन्यथा–अतत्पूर्वकत्वेऽस्य–विकल्पस्य अहेतुकत्वापत्तिः, तदपरहेत्वयोगात्। तथा च सदा–सर्वकालं सदसत्त्वप्रसङ्गोऽधिकृतविकल्पस्य,

"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्"

इति वचनात्। सोऽपि–अधिकृतविकल्पः तत्पूर्वक एव–विवक्षितैकविषयाविकल्पपूर्वक एव। इति चेत्, एतदाशङ्क्याह–कथमनयोः–अविकल्पविकल्पयोः युगपद्वृत्तिः?। प्रबन्धापेक्षया। इति चेत् युगपद्वृत्तिः, एतदाशङ्क्याह–कथमित्यादि। कथं–केन प्रकारेण आद्यं च तत् अविकल्पं चेति विग्रहः तस्मात् उभयजन्म–सविकल्पाविकल्पजन्म। तत्तदित्यादि। तस्य–आद्याविकल्पस्य तत्स्वभावत्वात्–सविकल्पाविकल्पजननस्वभावत्वादुभयजन्म। इति चेत्, एतदाशङ्क्याह–कथं कारणभेदो भेदहेतुः?। कार्याणामिति शेषः। नैव, तदभावेऽपि तद्भेदसिद्धेरित्यभिप्रायः। यदि न कारणभेदो भेदहेतुः ततः को दोषः?। इति चेत्, एतदाशङ्क्याह–प्रधानादीनाम्, 'आदि'शब्दात् परमपुरुषग्रहः।

१ १३८तमे पृष्ठे। २ 'सविकल्पकाकल्प०' इति क–पाठः। ३ 'तत्स्वभाव०' इति क–पाठः। ४ १३८तमे पृष्ठे। ५ 'कल्पयोर्ज्ञान०' इति ख–पाठः।

( मूलम् )

चेत्, ततः को दोष इति वाच्यम्। नैकस्मादनेकजन्म इति चेत्, कथं न? तत्तत्स्वभावत्वेन, सङ्क्रान्त्या तदयुक्तेरिति चेत्, तदभावे
५ तद्युक्तिरित्यद्भुतम्। ततोऽसद्भावादनद्भुतमिति चेत्, तत्तथाभावतोऽभवदसद् भवतीत्यद्भुतमेवेति परिभाव्यतामेतत् ॥

न चानयोः स्वभावभेद एव, तत्त्वत एकविषयत्वात्, विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात् तदुत्थज्ञानोपादानत्वात्, तत्स्वभावानुकारातिरेकेण तदुपादानत्वायोगात्। न च तदतीत-

( स्वो० व्या० )

१० अनिषेधप्रसङ्गो दोषः। ते—प्रधानादयः तथा[1]भावजनकास्तथाभावेन—तत्तथाभवनलक्षणेन जनका महदादेः। इति चेत्, एतदाशङ्क्याह—ततः को दोष इति वाच्यम्। नैकस्मादनेकजन्म तत्तद्भावेन दोषः। इति चेत्, एतदाशङ्क्याह—कथं न एकस्मादनेकजन्म? । तत्तत्स्वभावत्वेन तस्य—प्रधानादेः
१५ तत्स्वभावत्वेन, तथाभावतोऽनेकजन्मस्वभावत्वेनेत्यर्थः। सङ्क्रान्त्या हेतुभूतया तत्तद्भावेन तदयुक्तेः—तत्तत्स्वभावत्वायुक्तेर्नैकस्मादनेकजन्म। इति चेत्, एतदाशङ्क्याह—तदभावे—सङ्क्रान्त्यभावे तदेकान्तनिवृत्त्या तद्युक्तिः—तत्तत्स्वभावत्वयुक्तिः इति अद्भुतम्—आश्चर्यमेतत्। ततः कारणात् असद्भावात्—असतो भावेन अनद्भुतम्—अनाश्चर्यम्। इति चेत्, एतदाशङ्क्याह—तत्तथाभावतः तस्य—कारणस्य
२० तथाभावेन—कार्यभावेन अभवत् एकस्मादनेकम् असद् भवति तुच्छातुच्छप्रतिपत्त्या इत्यद्भुतमेवेति परिभाव्यतामेतत्। न ह्यसत् सद् भवति, अतिप्रसङ्गादित्यभिप्रायः ॥

न चेत्यादि। न च अनयोः, प्रक्रमात् सविकल्पाविकल्पयोः प्रस्तुतज्ञानयोः, स्वभाव[2]भेद एव एकान्तेन। कुत इत्याह—तत्त्वतः—परमार्थेन एकविषयत्वात्।
२५ कथमेतदेवमित्याह—विकल्पस्यापि पारम्पर्येण तद्वस्त्वालम्बनत्वात्। एतच्च परदर्शने विकल्पस्य गृहीतग्राहित्वाभ्युपगमेन, स्वदर्शने [3]त्ववग्रहावायभावेन इति सामान्येनैव तद्वस्त्वालम्बनत्वमाह। तदुत्थज्ञानोपादानत्वात्—विवक्षितविषयोत्थाविकल्पज्ञानोपादानत्वाद् विकल्पस्य। यदि नामैवं ततः किमित्याह—तत्स्वभावे-

( विवरणम् )

३० (११-१२) तत्तथाभवनलक्षणेनेति। तस्यैव—प्रधानादेस्तथाभवनं—महदादिरूपतया परिणमनं तदेव लक्षणं यस्य तथाभावस्य स तथा तेन ॥

१ 'भवे जनका०' इति ङ—पाठः। २ 'भेद एकान्तेन' इति ङ—पाठः। ३ 'त्ववग्रहापायभावेन' इति घ—पाठः।

( मूलम् )

**मित्यनालम्बनम्, अविकल्पस्यालम्बनत्वात् । न च तद्भावकाले तद्भावः, तदसदुदयाभ्युपगमात् । न चैवमपि न तदतीतता, तदा तदसत्त्वेन तदुपपत्तेः । न च तदाकारतादिना भेदः, द्वयोरपि तदाकारताऽसिद्धेः, तस्य प्रतिभावनियमात्, बोधामूर्तत्वरूपतया तत्तुल्याकारताऽयोगात्, स्वाकारस्य तु विकल्पेऽपि भावात्, तस्यापि तन्निश्चयात्मकत्वेन तदनुगुणत्वात् । इति व्यवहारतः स्वभावभेदाभावः ॥** ५

( स्वो० व्या० )

त्यादि । तत्स्वभावानुकारातिरेकेण—तदुत्थज्ञानस्वभावानुकारातिरेकेण, विकल्पस्येति प्रक्रमः, तदुपादानत्वायोगात्—तदुत्थज्ञानोपादानत्वायोगाद् विकल्पस्य । न हि अमृत्स्वभावमुदकं मृदुपादानम्, अपि तु घट एव, तत्स्वभावानुकारादिति भावनीयम् ॥ १०

दोषान्तरपरिजिहीर्षयाऽऽह—**न चे**त्यादि । न च **तत्**—विषयवस्तु **अतीतमिति** कृत्वा क्षणिकत्वेन **अनालम्बनम्**, प्रक्रमाद् विकल्पस्य, किन्त्वालम्बनमेव । कुत इत्याह—**अविकल्पस्यालम्बनत्वात्**, अतीतत्वेऽपीत्यभिप्रायः । **न च तद्भावकाले**—अविकल्पभावकाले **तद्भावः**—विषयवस्तुभावः । कुत इत्याह—**तदसदुदयाभ्युपगमात्** तस्मिन्—विषयवस्तुनि असत्युदयाभ्युपगमात्, प्रक्रमादविकल्पस्य । **न चैवमपि**—तदसदुदयेऽपि **न तदतीतता**—न विषयवस्त्वतीतता । कुत इत्याह—**तदा**[1]—विकल्पोदयकाले **तदसत्त्वेन**—विषयवस्त्वसत्त्वेन **तदुपपत्तेः**—अतीतत्वोपपत्तेः । **न च तदाकारतादिना**—विषयवस्त्वाकारतादिना, 'आदि'शब्दादानन्तर्यादिग्रहः, **भेदः**, सविकल्पाविकल्पयोरिति प्रक्रमः । कुत इत्याह—**द्वयोरपि** अनयोः **तदाकारताऽसिद्धेः**[2]—विषयवस्त्वाकारताऽसिद्धेः । **तस्य**—आकारस्य **प्रतिभावनियमात्**—भावं भावं प्रति नियमात् । न ह्यन्यभावाकारोऽन्यभावे भवति, तदेकत्वप्रसङ्गादित्यर्थः । तत्तुल्याकारतैव तदाकारतेत्यप्यसदित्यावेदयन्नाह—**बोधे**त्यादि । बोधाऽमूर्तत्वरूपेण हेतुनाऽविकल्पज्ञानस्य **तत्तुल्याकारताऽयोगात्**—विषयवस्तुतुल्याकारताऽयोगात् । स्वाकार एव तदाकारतेत्यप्ययुक्तमित्याह—**स्वाकारस्य तु विकल्पेऽपि भावात्** । न ह्यविकल्प एव स्वाकारः, अपि तु विकल्पेऽपि । तदनुगुणत्वं[3] तदाकारतेत्यपि समानमित्यावेदयन्नाह—**तस्यापी**त्यादि । तस्यापि—विकल्पस्य **तन्निश्चयात्मकत्वेन**—विषयवस्तुनिश्चयात्मकत्वेन **तदनु-** १५ २० २५

१ 'तदाऽविकल्पोदय०' इति क-पाठः । २ 'कारताप्रसिद्धेः' इति क-पाठः । ३ 'गुणत्व-तदा०' इति ख-पाठः ।

( मूलम् )

**यच्चोक्तम्–'विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तत्' इत्येतदप्ययुक्तम्, अनालोचिताभिधानत्वात्, विचारा-**
५ **क्षमत्वात्। तथाहि–कः पुनरत्र प्रतिपत्ता यस्य तत्स्वभावभेदादर्शनाद् विमोह ऐक्यव्यवसायो वा?। न तावदेक उभयद्रष्टा, अनभ्युपगमात्। न च सविकल्पाविकल्पे विज्ञाने एव, तयोर्विमोहासिद्धेः, स्वसंवेदनरूपत्वेन स्वस्वभावदर्शनात्। इत्थमपि विमोहे तदनुच्छेदापत्तिः, उपायाभावात्। न चानयोरैक्यव्यवसायः, मिथो**
१० **भेदाभ्युपगमात् स्वविषयनियतत्वेन तथाप्रतिभासानुपपत्तेः, एवमपि तदभ्युपगमेऽतिप्रसङ्गात्॥**

---

( स्वो० व्या० )

**गुणत्वात्**–बोधापेक्षया विषयवस्त्वनुगुणत्वात् इति–एवं **व्यवहारतः स्वभावभेदाभावः**। निश्चयतस्तु प्रतिव्यक्त्ययं[2] विद्यत एवेति॥

१५ **यच्चोक्तं**[3] पूर्वपक्षग्रन्थे–**'विमूढः प्रतिपत्ता तमपश्यन्नैक्यं व्यवस्यति, न तु तथा तत्' इत्येतदप्ययुक्तम्**। कुत इत्याह–**अनालोचिताभिधानत्वात्**। अनालोचिताभिधानत्वं च **विचाराक्षमत्वात्**। विचाराक्षमत्वमुपदर्शयन्नाह–**तथाहीत्यादि**। तथाहि **कः पुनरत्र प्रतिपत्ता** भवतोऽभिप्रेतो **यस्य तत्स्वभावभेदादर्शनाद्** हेतोः **विमोह ऐक्यव्यवसायो वा?**।
२० **न तावदेक** आत्मा, **उभयोः**–सविकल्पाविकल्पयोर्**द्रष्टा**। कुत इत्याह–**अनभ्युपगमात्** एवंविधैकस्य। **न च सविकल्पाविकल्पे ज्ञाने एव** प्रतिपत्तृणी। कुत इत्याह–**तयोः**–सविकल्पाविकल्पज्ञानयोर्**विमोहासिद्धेः**। असिद्धिश्च **स्वसंवेदनरूपत्वेन** हेतुना। ताभ्यां **स्वस्वभावदर्शनादिति**। **इत्थमपि**–स्वस्वभावदर्शनेऽपि सति **विमोहे तदनुच्छेदापत्तिः**–मोहानुच्छेदापत्तिः। कुत इत्याह–
२५ **उपायाभावात्**। न हि स्वसंवेदनरूपे कदाचिदन्यथा भवत इत्युपायाभावः। **न चेत्यादि**। न च **अनयोः**–सविकल्पाविकल्पयोर्विज्ञानयोः **ऐक्यव्यवसायः**। कुत

---

( विवरणम् )

(१४) **निश्चयतस्तु प्रतिव्यक्त्ययं**[4] **विद्यत एवेति**। निश्चयनयाभिप्रायेण हि चाक्षुषादिप्रत्यक्षाणामपि अन्यान्यालम्बनत्वेन भेदो विद्यत एवेति न व्यक्तिभेदेन
३० प्रामाण्याप्रामाण्यलक्षणो भेदो निर्विकल्पाविकल्पयोर्ज्ञानयोर्व्यवहर्तुमुचितः॥

---

१ १३८ तमे पृष्ठे। २ 'व्यक्ति स विद्यत' इति ङ–पाठः। ३ १३८ तमे पृष्ठे। ४ 'व्यक्तायां विद्यत' इति ख–पाठः। च–पाठस्तु 'वक्तायां विद्यत' इति।

(मूलम्)

**स्यादेतत् ऐक्यव्यवसायस्तदपरो विकल्प एव, व्यवसायस्य परिच्छेदात्मकत्वात् । स किंविषय इति वाच्यम् । तदुभयविषय इति चेत्, कथमतत्प्रतिभासी तद्विषयः ? । तत्प्रतिभासित्वे वा कथमैक्यं व्यवस्यति ? । न चात्यन्तभिन्नयोस्तथाव्यवसाये निमित्तम् । भ्रान्त एवायमिति चेत्, तदन्यैवंविधभावे कथं नेतरयोर्भेदव्यवसायः ? । व्यवसाय एवेति चेत्, न, तथायुक्त्यनुभवाभावेन[1] वाङ्मात्रत्वात् ।** ५

(स्वो० व्या०)

इत्याह—**मिथः**—परस्परं **भेदाभ्युपगमात्** । यदि नामैवं ततः किमित्याह—**स्वविषयनियतत्वेन** हेतुना **तथाप्रतिभासानुपपत्तेः**—ऐक्यप्रतिभासानुपपत्तेः प्रतिभासश्च व्यवसाय इति । **एवमपि**—तथाप्रतिभासानुपपत्तावपि **तदभ्युपगमे**—ऐक्यव्यवसायाभ्युपगमेऽ**तिप्रसङ्गात्**—शशविषाणादिव्यवसायापत्तेः ॥ १०

**स्यादेतदि**त्यादि । स्यादेतत् **ऐक्यव्यवसायो**ऽधिकृतस्ताभ्यां—सविकल्पाविकल्पविज्ञानाभ्या**मपरः**—अन्यो **विकल्प एव** । कुत इत्याह—**व्यवसायस्य परिच्छेदात्मकत्वात्** । एतदाशङ्क्याह—**स किंविषयो** विकल्प **इति वाच्यम्** । **तदुभयविषयः**—सविकल्पाविकल्पविज्ञानोभयविषयः । **इति चेत्**, एतदाशङ्क्याह—**कथमतत्प्रतिभासी**—सविकल्पाविकल्पविज्ञानाप्रतिभासी सन् **तद्विषयः**—सविकल्पाविकल्पज्ञानविषयः ? । **तत्प्रतिभासित्वे वा**—सविकल्पाविकल्पविज्ञानप्रतिभासित्वे वा सति **कथमैक्यं व्यवस्यति**—परिच्छिनत्ति ? । तद्भेदव्यवसायरूपत्वादित्यर्थः । **न चे**त्यादि । न च **अत्यन्तभिन्नयो**र्जातिभेदेन, सविकल्पाविकल्पविज्ञानयोरिति प्रक्रमः, **तथाव्यवसाये**—ऐक्येन व्यवसाये **निमित्तं** नीलपीतयोरिव । **भ्रान्त एवायम्**—अपरो विकल्पः । **इति चेत्**, एतदाशङ्क्याह—**तदन्ये**त्यादि । तस्मात्—भ्रान्तादन्यः—अभ्रान्त **एवंविध** उभयविषयस्तस्य **भावे** सति **कथं न इतरयोः**—सविकल्पाविकल्पविज्ञानयो**र्भेदव्यवसायः** तदन्येन ? । न ह्यस्मिन् सत्यरूपेऽसत्यस्य भ्रान्ततेति हृदयम् । **व्यवसाय एवेति चेत्**, अन्येनेतरयोरिति । एतदाशङ्क्याह—**ने**त्यादि । न—नैतदेवम्, **तथायुक्त्यनुभवाभावेन** हेतुना **वाङ्-** १५ २० २५

(विवरणम्)

(१०-११) **स्वविषयनियतत्वेन हेतुने**ति । निर्विकल्पज्ञानस्य हि सौगताभ्युपगमेन परस्परविनिर्लुठितक्षणक्षयि परमाणुलक्षणस्वलक्षणानि[2] गोचरः । सविकल्पकज्ञानस्य तु बुद्धौ परिप्लवमानमूर्तिसामान्यं विषयः ॥ ३०

१ 'तथाह्युक्त्यनु०' इति क–पाठः । २ 'लक्षणामिगोचरः' इति ख–पाठः ।

(मूलम्)

एतेन 'अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात्' 'इत्यादि प्रत्युक्तम्, तत्त्वतस्तुल्ययोगक्षेमत्वात् ॥

५ किञ्च अनयोर्भिन्नविषयत्वेन तथापि जन्मायुक्तम्, अन्यदर्शनस्य अन्यविकल्पानिमित्तत्वात्, निमित्तत्वे चातिप्रसङ्गात्, नीलदर्शनात्

(स्वो० व्या०)

**मात्रत्वात्**–अर्थशून्यत्वादधिकृतवचसः। युक्त्यभावश्चेह स्वलक्षणसामान्यलक्षणयोरेकत्राप्रतिभासनात्, अनुभवस्य[3] चासङ्कीर्णोभयग्राहिणो भावादिति।

१० **एतेनेत्यादि**। एतेन–अनन्तरोदितेन दूषणजातेन **'अन्यत्रानयोर्यौगपद्येऽपि भेददर्शनात्'** इत्यादि पूर्वपक्षोक्तं[4] **प्रत्युक्तं**–निराकृतम्। कुत इत्याह–**तत्त्वतः**–परमार्थतः **तुल्ययोगक्षेमत्वादिति** ॥

किञ्चेत्यादिनाऽभ्युच्चयमाह–किञ्च **अनयोः**–सविकल्पाविकल्पज्ञानयोरुदाहृतयोः **भिन्नविषयत्वेन** हेतुना जातिभेदतः **तथापि**, प्रक्रमात् क्रमेणापि, यथैकजाती-

१५ ययोस्तथापि **जन्मायुक्तम्**–अघटमानकम्। कुत इत्याह–**अन्यदर्शनस्य**–रूपादिदर्शनस्य **अन्यविकल्पानिमित्तत्वात्**–अतीताद्यर्थगतविकल्पानिमित्तत्वात्

(विवरणम्)

(८–९) **स्वलक्षणसामान्यलक्षणयोरेकत्राप्रतिभासनादिति**। न हि यत्रैव स्वलक्षणं प्रतिभासते तत्रैव सामान्यम्, विरोधात्। न चाप्रतिभासमानयोर्भेद-

२० व्यवसायः, अतिप्रसङ्गात् ॥

(१२) **तुल्ययोगक्षेमत्वादिति**। तुल्यरूपत्वाद् दूषणस्य। तथाहि[5]–कथमेकस्मादविकल्पक्षणादतीतार्थप्रतिबद्धो[6] विकल्पो वर्तमानार्थगोचरं च निर्विकल्पकमिति यौगपद्येन द्वयं प्रादुर्भवति? कारणभेदपूर्वकत्वात् कार्यभेदस्य ॥

(१४-१५) **यथैकजातीययोरिति**। अयमत्राभिप्रायः–यथा नीलस्वलक्षणक्षणाव-

२५ लोकनानन्तरं तद्विषयो विकल्पः प्रवर्तते सजातीयत्वात्, एवं कथं नीलस्वलक्षणावलोकनसमयानन्तरमतीतार्थप्रतिबद्धो भिन्नजातीयो[7] विकल्पः स्यात्?। न तु[8] यदेव निर्विकल्पकगोचरस्तत्रैव विकल्पो नान्यत्रेति प्रसङ्गात् ॥

१ प्रेक्ष्यतां १३८ तमं पृष्ठम्। २ 'वाऽति०' इति घ–पाठः। ३ 'भवस्य वा सङ्कीर्णो०' इति क–पाठः। ४ १३८तमे पृष्ठे। ५ 'तथाऽऽह कथ०' इति क–पाठः। ६ 'कल्पकलक्षणा०' इति क–पाठः। ७ 'जातीययोर्विकल्पः इति क–पाठः। ८ 'ननु यदेव' इति ख–पाठः।

(मूलम्)

**अपि पीतादिविकल्पापत्तेः तदभावप्रसङ्गात्, निश्चयबलाद्धि तद्भावसिद्धिः, स चेदन्यदर्शनादप्यन्यविषयः, अप्रामाणिकाऽन्यसत्तेति विश्वस्य नीलमात्रतापत्तिः[1]। भिन्नदर्शनविषयाः पीतादय इति चेत्, न, तेषामनिश्चयात्मकत्वेन तथाताऽनधिगतेः। न च तन्निश्चयात् तदधिगतिर्युक्ता, तस्यान्यतोऽपि भावेन तत्प्रतिबन्धासिद्धेः। स पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव, सदाऽतद्दर्शिनोऽभावादिति चेत्, न, इत्थं सर्वत्रानाश्वासेनासमञ्जसत्वापत्तेः, सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वारेकातः प्रवृत्त्या-** १०

(स्वो० व्या०)

**निमित्तत्वे चातिप्रसङ्गात्[2]।** एनमेवाह—**नीलदर्शनादपि** सकाशात् **पीतादिविकल्पापत्तेः।** यदि नामैवं ततः किमित्याह—**तदभावप्रसङ्गात्**—पीताद्यभावप्रसङ्गात्। एतदेव स्पष्टयति **निश्चये**त्यादिना। **निश्चयबलाद्** यस्मात् **तद्भावसिद्धिः**—पीतादिभावसिद्धिः। **स चेत्** निश्चयः, **अन्यदर्शनादप्यन्यविषयो** १५ भवति। **अप्रामाणिकाऽन्यसत्ता** इह तावत् प्रक्रमादन्यत् पीतादि। ततश्चाप्रामाणिका पीतादिसत्ता **इति** कृत्वा **विश्वस्य**—सर्वस्य **नीलमात्रतापत्तिः** यावत् किञ्चित् सत् तत् सर्वं नीलमिति। पीतादिनिश्चयस्तु नीलदर्शनादेवेति न्यायोपपत्तेः **भिन्नदर्शनविषयाः**—पीतादिदर्शनविषयाः **पीतादयः। इति चेत्**, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। **तेषां**—दर्शनानाम**निश्चयात्मकत्वेन** हेतुना २० **तथाताऽनधिगतेः**—पीतादिरूपतया भिन्नताऽनधिगतेः। **न चे**त्यादि। **न च तन्निश्चयात्**—पीतादिनिश्चयात् **तदधिगतिः**—दर्शनानां तथाभिन्नताधिगतिः **युक्ता।** कुत इत्याह—**तस्य**—सामान्येन निश्चयस्य **अन्यतोऽपि**—दर्शनान्तरादपि **भावेन** हेतुना **तत्प्रतिबन्धासिद्धेः**—पीतादिदर्शनभेदेन सह [3]पीतादिनिश्चयस्य प्रतिबन्धासिद्धेः। **सः**—पीतादिनिश्चयः **पारम्पर्येण तद्दर्शनसामर्थ्योद्भूत एव**— २५ पीतादिदर्शनसामर्थ्योद्भूत एव। कुत इत्याह—**सदाऽतद्दर्शिनः**—पीताद्यदर्शिनः **अभावात्। इति चेत्**, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। **इत्थम्**—एवं **सर्वत्रानाश्वासेन** हेतुना। किमित्याह—**असमञ्जसत्वापत्तेः।** एनमेवाह—**सन्निहितार्थदर्शनबलोत्पन्ननिश्चयादपि** सकाशात् **पारम्पर्येणार्थान्तरदर्शनशक्तिजत्वारेकातः**—आशङ्कातः कारणात् **प्रवृत्त्याद्ययोगात्।** 'आदि'- ३० शब्दात् प्राप्तिपरिग्रहः॥

---

१ 'मात्रत्वापत्तिः' इति ग-पाठः। २ 'वाऽतिप्रसङ्गात्' इति घ-पाठः। ३ पीत्यादिनिश्चयात्' इति ङ-पाठः।

( मूलम् )

**द्ययोगात् । समानविषययोः पुनरनयोर्भावस्तथा भवन्नपि न नो बाधायै, अक्रमेणाप्रवृत्तेः । एवं च 'अतीताद्यर्थगतविकल्पेनापीन्द्रिय-**
५ **ज्ञानतो रूपादिग्रहणसिद्धेः' इत्यादि, यावद् 'भिन्नजातीयत्वात्' इत्येतद् व्युदस्तमवसेयम्, अक्रमप्रवृत्तावतीतादिविकल्परूपादि-ग्रहणयोरस्य साफल्योपपत्तेः, अन्यथा वाङ्मात्रत्वात् ॥**

**आह–यद्यत्र क्रमः कथं न संलक्ष्यत इति ? । उच्यते–उत्पलपत्र-शतव्यतिभेदवत् कालसौक्ष्म्यात्, छद्मस्थप्रमातुरनाभोगबहुलत्वात्,**
१० **अदृष्टप्रतिबन्धात्, वस्तुनोऽनेकधर्मत्वात्, यथाक्षयोपशममव-**

( स्वो० व्या० )

एवं तावद् भिन्नविषययोः सविकल्पाविकल्पज्ञानयोर्यौगपद्यमसम्भव्येव निदर्श्य साम्प्रतमिदमाह–**समाने**त्यादि । **समानविषययोः पुनरनयोः**–सविकल्पाविकल्प-ज्ञानयो**र्भावः । तथा**–हेतुफलभावेन **भवन्नपि** अहिरहिरित्यादौ **न नो बाधायै**–
१५ नास्माकं बाधार्थम् । कुत इत्याह–**अक्रमे**त्यादि । अक्रमेण **अप्रवृत्तेः** । अवग्रह-कल्पादविकल्पादवायकल्पसविकल्पभावेन क्रमेण प्रवृत्तेरित्यर्थः । '**एवं चे**त्यादि । एवं सति **अतीताद्यर्थगतविकल्पेनापि** प्रमात्रा **इन्द्रियज्ञानतो रूपादि-ग्रहणसिद्धेः इत्यादि** पूर्वपक्षोक्तं[1] **यावद् 'भिन्नजातीयत्वात्' इत्येतद् व्युदस्तम्**–अपाकृत**मवसेयम्** । कुत इत्याह–**अक्रमप्रवृत्तौ** सत्या**मतीतादि-**
२० **विकल्परूपादिग्रहणयोरस्य**–पूर्वपक्षोक्तस्य **साफल्योपपत्तेः । अन्यथा**–अक्रमप्रवृत्तिमन्तरेण **वाङ्मात्रत्वात्** इति ॥[2]

**आह–यद्यत्र**–सविकल्पाविकल्पज्ञानद्वये **क्रमः कथं न संलक्ष्यत इति ? । उच्यते–उत्पलपत्रशतव्यतिभेदवत् कालसौक्ष्म्यात्**[4] न संलक्ष्यत इति । किमेतदेवमित्याह–**छद्मस्थप्रमातुरनाभोगबहुलत्वात्** । अनाभोगबहुलत्वं च
२५ **अदृष्टकर्मप्रतिबन्धात्**, तथा **वस्तुनः**–प्रमेयस्य **अनेकधर्मकत्वात्** तथा विभ्रमादिनिबन्धनत्वेन **यथाक्षयोपशमं** यस्य यथाक्षयोपशमस्तथाऽवबोध-

( विवरणम् )

(२५-२६) **तथा विभ्रमादिनिबन्धनत्वेने**ति । विभ्रमः–विपर्यासः । 'आदि'-शब्दात् सन्देहोऽनध्यवसायश्च परिगृह्यते[5] ततो विभ्रमादीनां निबन्धनं–कारणं तस्य
३० भावः–तत्त्वं तेन । अयमभिप्रायः–अनेकधर्मकं वस्तु ततस्तद्देशाद्यपेक्षया कस्यचित् [6]कथञ्चिद् विभ्रमादिनिबन्धनं सम्पद्यते ॥

१ प्रेक्ष्येतां १३८ तमं १३९ तमं च पृष्ठे । २ 'एवं चेत्यादि' इत्यधिको ङ–पाठः । ३ १३८-तमे पृष्ठे १३९ तमे च । ४ 'कालसूक्ष्मत्वाच्च' इति क–पाठः । ५ 'गृह्यतां ततो' इति क–पाठः । ६ 'कथं विभ्रमा०' इति च–पाठः ।

(मूलम्)

**बोधप्रवृत्तेः, तस्य च तत्तद्धेतुभेदतो वैचित्र्यादिति ॥**

**आह–यदि कालसौक्ष्म्यादत्र क्रमालक्षणमेवं तर्हि 'सरः' इत्येवमादिकयोर्वर्णयोरुच्चारणे नितरां कालसौक्ष्म्यमित्यक्रमग्रहणं स्यात् ।** ५
**तथा च क्रमालक्षणाच्छ्रुतिभेदो न भवेत्, यथा सरो रस इति । इतश्च न भवेद् युगपद् गोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धौ क्रमपक्षेऽप्यक्रमस्यैव दर्शनात् । स हि वंशादिवादयितू रूपं पश्यति, तदैव ततः शब्दं शृणोति, नीलोत्पलादि गन्धं जिघ्रति, कर्पूरादे रसमास्वादयति, आसनादिस्पर्शं स्पृशति, चिन्तयति च किञ्चित्,** १०
**इति तत्त्वतोऽस्यानवरतं सर्वपरिच्छित्तिः । एवं यावदत्राप्ययुगपत्-**

---

(स्वो० व्या०)

**प्रवृत्तेः; तस्य च**–क्षयोपशमस्य **तत्तद्धेतुभेदतो** द्रव्यादिभेदेन **वैचित्र्यात्** क्रमो न संलक्ष्यत **इति ॥**

**आह–यदि कालसौक्ष्म्यादत्र**–अधिकृते सविकल्पाविकल्पज्ञानद्वये **क्रमा-** १५
**लक्षणम्, एवं तर्हि 'सरः' इत्येवमादिकयोर्वर्णयोः**, 'आदि'शब्दाद् रसादिग्रहः, **उच्चारणे नितरां कालसौक्ष्म्यम्**, अव्यवधानेनोच्चारणात् **इत्यक्रमग्रहणं** सरवर्णयोः **स्यात्** । **तथा** चेत्यादि । तथा च सति **क्रमालक्षणात्** कारणात् **श्रुतिभेदः**–श्रवणभेदो **न भवेद् यथा सरो रस इति** द्विवर्णविषयः ।
**इतश्च न भवेत्** श्रुतिभेदः । कुत इत्याह–**युगपद्**दित्यादि । युगपत्–एकदैव २०
**गोचरीभूतविषयाणि** च तानि **इन्द्रियाणि** चेति विग्रहः, तान्यस्य विद्यन्त इति तद्वान् तस्य **अविच्छेदेन**–प्रबन्धवृत्त्या सर्वेषाम्, प्रक्रमाद् विषयाणामुपलब्धिः सर्वोपलब्धिः अस्यां **सर्वोपलब्धौ** सत्याम् । किमित्याह–**क्रमपक्षेऽपि** विज्ञानविषयेऽ-
**क्रमस्यैव दर्शनात्** । एतदेवाक्रमदर्शनमाह **स ही**त्यादिना । स हि–युगपद्गोचरीभूतविषयेन्द्रियवान् **वंशादिवादयितू रूपं पश्यति । तदैव ततः**–वंशादि- २५
वादयितुः सकाशात् **शब्दं शृणोति**, तथा **नीलोत्पलादि गन्धं जिघ्रति**, तथा **कर्पूरादे रसमास्वादयति**; एव**मासनादिस्पर्शं स्पृशति, चिन्तयति च किञ्चि**न्मनसा । **इति**–एवं **तत्त्वतोऽस्य**–युगपद्गोचरीभूतविषयेन्द्रियवतः प्रमातुः । किमित्याह–**अनवरतं सर्वपरिच्छित्तिः**, अनवरतसर्वपरिच्छित्तिरेव,

---

१ 'भेदो भवेत्, यथा' इति घ-पाठः ।  २ 'पक्षेऽपि ज्ञान०' इति ङ-पाठः ।

( मूलम् )

**पक्षेऽपि समाश्रीयमाणे पञ्चभिर्विज्ञानैर्व्यवधानेऽपि क्रमभावि सत् तेषामेकैकं विज्ञानमविच्छिन्नमिव प्रतिभाति, तथाऽनुभूतेः ॥**

५ **यदैतदेवं तदा कथमन्यविज्ञानावृत्तौ वर्णयोर्न सकृच्छ्रुतिरिति ? । अविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं न भवति, न च भवति, तथाऽप्रतीतेः । इति यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव । न च प्रतीतिं विहाय पदार्थतत्त्वव्यवस्थापनोपायः, इति यथा-प्रत्ययं युगपद् विज्ञानप्रवृत्तिर्न्यायविदाऽङ्गीकर्तव्या, अन्यथोक्तवत्** १० **न्यायोच्छेदप्रसङ्गादिति ॥**

---

( स्वो० व्या० )

युगपदेवेन्द्रियविषयसम्बन्धसिद्धेः । एवं तत्त्वे व्यवस्थिते सति **यावदत्रापि**-युगपदनुभवेऽपि तात्त्विके **अयुगपत्पक्षेऽपि समाश्रीयमाणे** किमित्याह-**पञ्चभिर्विज्ञानैर्व्यवधानेऽपि** सत्यधिकृतन्यायेन **क्रमभावि सत्**-भवत् १५ **तेषां**-षण्णां विज्ञानानामेकैकं **विज्ञानं**-शब्दादिगोचरादि **अविच्छिन्नमिव**-युगपदिव **प्रतिभाति** । कुत इत्याह-**तथाऽनुभूतेः**-अविच्छेदेनानुभूतेः ॥

प्रकृतयोजनायाह-**यदे**त्यादि । यदा **एतदेवम्**-अनन्तरोदितं **तदा कथमन्यविज्ञानावृत्तौ** अपान्तराले **वर्णयोः**-सरादिरूपयोर्न **सकृच्छ्रुतिः**-न युगपच्छ्रवणमिति ? । एतदेवाह-**अविच्छिन्नम्**-एकदैव एकघनीभूतश्चासौ **आयत**-२० **वर्ण**श्चेति विग्रहः । तदाकारं **दर्शनं न भवति** । स्यादेतद् भवत्येवेत्याशङ्कानिरासायाह-**न च भवति** । कुत इत्याह-**तथाऽप्रतीतेः** । **इति**-एवं **यत्र क्रमस्तत्र कालसौक्ष्म्येऽप्युपलभ्यत एव** यथाऽधिकृतवर्णयोः । **न च प्रतीतिं विहाय**-परित्यज्य **पदार्थतत्त्वव्यवस्थापनोपायः, इति**-एवं **यथाप्रत्ययं**-यथाऽनुभवं **युगपद् विज्ञानप्रवृत्तिः** षडपेक्षया प्रस्तुतद्वयापेक्षया वा **न्याय**-२५ **विदा** प्रमात्राऽङ्गीकर्तव्या, **अन्यथा**-एवमनभ्युपगमे **उक्तवत्**-यथोक्तं तथा **न्यायोच्छेदप्रसङ्गात्**-प्रतीतिबाधेन न्यायानुपपत्तेस्तस्यापि प्रतीतिबीजत्वादित्यभिप्राय **इति** ॥

---

१ 'भावी सन्' इति क-पाठः । २ 'अन्यदपि विज्ञाना०' इति क-पाठः । ३ 'तत्त्वव्यव०' इति घ-पाठः । ४ 'प्रकृतयोजनामाह' इति घ-पाठः । ५ 'स्यादेतन्न भवत्येवे०' इति क-पाठः । ६ 'निरासार्थमाह न भवति' इति ङ-पाठः ।

( मूलम् )

**अत्रोच्यते–यत्किञ्चिदेतत्, वर्णयोः सावयवत्वेनोक्तदोषानुपपत्तेः, सरादयो हि वर्णाः सावयवत्वेनानेकक्षणलब्धवृत्तयः, तथोपलब्धितः तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः। न क्षणिकज्ञानग्राह्याः, तस्य परमाणुव्यतिक्रान्तिमात्रत्वेनात्यन्तसूक्ष्मत्वात्, तदनुभवस्य तत्त्वेनैवार्वाग्दर्शिनाऽनुपलक्षणात् तथाऽप्रतीतेः। इति पूर्ववर्णज्ञानेनोत्तरवर्णज्ञानस्य मिश्रणाभावात्, उभयोः प्रदीर्घस्थूरोपयोगरूपत्वात्, तथाऽऽलम्बनजातिभेदात्, तत्तत्स्वाभाव्यात्, तथाक्षयो-**

( स्वो० व्या० )

**अत्रोच्यते–यत्किञ्चिदेतत्**, असारमित्यर्थः। कुत इत्याह–**वर्णयोः**–सरादिलक्षणयोः **सावयवत्वेन** हेतुना **उक्तदोषानुपपत्तेः**। एतदेव प्रकटयति **सरादयो** हीत्यादिना[1]। सरादयो हि **वर्णाः सावयवत्वेन** जातिभेदतः **अनेकक्षणलब्धवृत्तयो** वर्तन्ते। कुत इत्याह–**तथोपलब्धितः**–अनेकक्षणवृत्तित्वेनोपलब्धेः[2]। उपलब्धिश्च **तत्तत्स्वभावत्वात्** तयोः–उपलब्धवर्णयोः तत्स्वभावत्वात्–अनेकक्षणवृत्तिनोपलब्धिस्वभावत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा तदनुपपत्तेः**। एवमनभ्युपगमे वर्णोपलब्ध्ययोगादित्यर्थः। यत एवम्, अतो **न क्षणिकज्ञानग्राह्याः**। कुत इत्याह–**तस्य**–क्षणस्य **परमाणुमात्रव्यतिक्रान्तिमात्रत्वेन**–परमाणुव्यतिक्रान्तिकाल एकः क्षणो मत इति न्यायेन **अत्यन्तसूक्ष्मत्वात्**। **तदनुभवस्य**–क्षणानुभवस्य **तत्त्वेनैव**–क्षणानुभवत्वेनैव **अर्वाग्दर्शिना** प्रमात्राऽ**नुपलक्षणात्**। अनुपलक्षणं च **तथा**–तत्त्वेनैव **अप्रतीतेः**। **इति**–एवं **पूर्ववर्णज्ञानेन**–सकारादिज्ञानेन **उत्तरवर्णज्ञानस्य**–रेफादिज्ञानस्य **मिश्रणाभावात्** कारणात्। कथं सकारादाविवाविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनम्, भवेदिति योगः। मिश्रणाभावश्च **उभयोर्ज्ञानयोः**[3] सकारादिगोचरयोः **प्रदीर्घस्थूरोपयोगरूपत्वात् तथाऽऽलम्बनजातिभेदात्** भिन्नजातीयौ सकार-रेफाविति कृत्वा तथा **तत्तत्स्वाभाव्यात्** तयोः–वर्णोपयोगयोस्तत्स्वाभा-

( विवरणम् )

(१९) **परमाणुव्यतिक्रान्तिकाल** इति। यावता कालेन परमाणुना परमाणुरतिक्रम्यते स परमाणुर्व्यतिक्रान्तिकालः[4] ॥

१ 'सरादय इत्यादिना' इति घ–पाठः। २ 'वृत्तित्वेनोपलब्धि०' इति क–पाठः। ३ 'उभयथा ज्ञानयोः' इति क–पाठः। ४ 'व्यतिक्रो( ? )क्रान्तिकालः' इति क–पाठः।

( मूलम् )

**पशमयोगात्, दृढानुभवसिद्धेः, अविगानेन तथावेदनात्, कोटिसङ्गस्याप्रयोजकत्वात्, तद्वीर्यतिरस्करणात्, इत्थमपि तदापादने ५ अतिप्रसङ्गात् नीलपीतज्ञानयोरपि तद्भावेन क्वचिन्मिश्रणप्रसङ्गात्। इति कथं सकारादाविवाविच्छिन्नमेकघनीभूतायतवर्णाकारं दर्शनं भवेत्?। सकारादौ तु कालादिभेदेऽपि प्रभूततरधर्मप्रत्यासत्तेर्भवति, तथाऽनुभवादिति। एतेनालातचक्रादिदर्शनं प्रत्युक्तम्, प्रत्यवयवं**

( स्वो० व्या० )

१० व्यात्—अमिश्रणस्वाभाव्यात्। एतच्च **तथाक्षयोपशमयोगात्**—तेन मिश्रणाभावज्ञानजनकवत्प्रकारेण[1] क्षयोपशमयोगात्। एतद्योगश्च **दृढानुभवसिद्धेः**। इयमपि **अविगानेन तथावेदनात्**—दृढानुभवरूपेण वेदनात्। **कोटिसङ्गस्य** वर्णज्ञानसम्बन्धिनः[2] **अप्रयोजकत्वात्**। प्रभूततरासङ्गेन **तद्वीर्यतिरस्करणात्** तयोः—वर्ण-ज्ञानयोर्वीर्यं—प्रदीर्घस्थूरोपयोगलक्षणं सामर्थ्यं तेन तिरस्करणात् कोटि-१५ सङ्गस्य। **इत्थमपि**—एवमपि कोटिसङ्गस्य तद्वीर्यतिरस्करणेऽपि **तदापादने**, प्रक्रमात् मिश्रणापादने, **अतिप्रसङ्गात्**। एनमेवाह—**नीलपीतज्ञानयोरपि तद्भावेन**—कोटिसङ्गभावेन **क्वचित्**—[3]चित्रपट्यादौ **मिश्रणप्रसङ्गात्**। न चैतदेव**मिति**—एवम् **कथं सकारादाविव** सजातीयव्यक्तिरूपे **अविच्छिन्नम्**—एकदैव **एकघनीभूतायतवर्णाकारं दर्शनं भवेत्?**। नैव भवति, निमित्ताभावात्। **सकारादौ** २० **तु** सजातीये तथैकावयवित्वेन **कालादिभेदेऽपि**, 'आदि'शब्दादजादिग्रहः[4], **प्रभूततरधर्मप्रत्यासत्तेः** तथैकारम्भकत्वेन **भवति** एकघनीभूतायतवर्णाकारं[5] दर्शनम्। कुत इत्याह—**तथाऽनुभवात्**—एकघनीभूतायतवर्णाकारदर्शनत्वेनानुभवा**दिति**। **एतेन**—अनन्तरोदितेन **अलातचक्रदर्शनं प्रत्युक्तम्**। कथमित्याह—

( विवरणम् )

२५ (२०) **अजादिग्रह** इति। स्वरव्यञ्जनविसर्गभेदग्रहः। तथाहि-सकार-रेफयोः [6]स्वराकारौ व्यञ्जनविसर्गौ[7] च प्रतीतरूपावेव ॥

(२३) **अलातचक्रदर्शनं प्रत्युक्त**मिति। परेण हि यथाऽऽशु भ्रमणवशादलाते चक्रभ्रान्तिः सर्वजनप्रतीत्या सम्पद्यते, एवं सरो रस इत्यादि वर्णेष्वप्याशूच्चारणवशादेकवर्णाकारा भ्रान्तिः किं नोत्पद्यते इति दूषणं शास्त्रान्तरे प्रसञ्जितमास्ते। ३० तच्च दूषणमेव, वैधर्म्यादिति ॥

१ 'जनकत्वप्रकारेण' इति ङ-पाठः। २ 'सम्बन्धिनः, प्रयोजक०' इति घ-पाठः। ३ 'चित्रपद्यादौ' इति क-ङ-पाठः। ४ 'जातिग्रहः' इति घ-पाठः। ५ 'कारदर्शनम्' इति घ-पाठः। ६ 'स्वरो कारो व्यञ्जन०' इति च-पाठः। ७ 'विसर्गौ विप्रतीत०' इति क-पाठः।

( मूलम् )

**प्रदीर्घस्थूरोपयोगादिविपर्ययात्, अन्यथा तत्रापि तथादर्शनानुपपत्तेः ॥**

**न चैवं सर्वं क्रमोपलम्भनिबन्धनं सविकल्पाविकल्पयोः, अविकल्पे क्षणिकत्वेन जात्यादिभेदेऽपीहादेस्तदितरवैकल्यादिति । या च युगपद्गोचरीभूतविषयेन्द्रियवतोऽविच्छेदेन सर्वोपलब्धिरुक्ता, साऽसिद्धा, द्रव्येन्द्रियविषययोगेऽप्यर्वाग्दर्शिनः प्रतिबन्धकसामर्थ्येन तावतां विज्ञानानां एकदाऽनुदयात्, तथाऽननुभूतेः, प्रतीत्यभावात्, युक्त्यनुपपत्तेः, उपादानायोगात्, एकोपादानतोऽनेकासिद्धेः,**

( स्वो० व्या० )

**प्रत्यवयवम्**–अवयवमवयवं प्रति अलातचक्रसम्बन्धिनं **प्रदीर्घस्थूरोपयोगादिविपर्ययात्**–अप्रदीर्घसूक्ष्मोपयोगभावात् । एवं च तत्र भवति [1]तन्मिश्रणमित्यर्थः । **अन्यथा**–एवमनभ्युपगमे **तत्रापि**–अलातचक्रे **तथादर्शनानुपपत्तेः**, प्रत्यवयवं प्रदीर्घस्थूरोपयोगभावेन तन्मिश्रणाभावेनेति भावः ॥

प्रकृतयोजनायाह–**न चैवं** यथाऽधिकृतवर्णयोः **सर्वं**–निरवशेषं सावयवत्वादि **क्रमोपलम्भनिबन्धनम्** । कयोरित्याह–**सविकल्पाविकल्पयोः** प्रस्तुतविज्ञानयोः । कुत इत्याह–**अविकल्पे क्षणिकत्वेन** अवग्रहस्य क्षणिकत्वात् । **जात्यादिभेदेऽपीहादेः** सविकल्पत्वेन, 'आदि'शब्दात् प्रतिभासग्रहः, **तदितरवैकल्यात्**–प्रदीर्घस्थूरोपयोगरूपवैकल्यादिति । **या चे**त्यादि । या च **युगपद्गोचरीभूतविषयेन्द्रियवतः** प्रमातुः **अविच्छेदेन सर्वोपलब्धिरुक्ता** पूर्वपक्षग्रन्थे [6] **साऽसिद्धा** । कुत इत्याह–**द्रव्येन्द्रियविषययोगेऽपि**–निर्वृत्त्युपकरणरसादिसम्बन्धेऽपि **अर्वाग्दर्शिनः** प्रमातुः **प्रतिबन्धकसामर्थ्येन** हेतुना–कर्मसामर्थ्येन **तावतां विज्ञानानां** षण्णाम् **एकदा**–एकस्मिन् काले **अनुदयात्**–अनुत्पादात् । अनुदयश्च **तथाऽननुभूतेः**–एकदा भावेनाननुभूतेः । अननुभूतिश्च **प्रतीत्यभावात्** । प्रतीत्यभावश्च **युक्त्यनुपपत्तेः** । युक्त्यनुपपत्तिश्च **उपादानायोगात्** । उपादानायोगश्च **एकोपादानतोऽनेकासिद्धेः** स्वतः परतश्च ।

( विवरणम् )

(२७) **स्वतः परतश्चे**ति । स्वसामर्थ्यात् सहकारिसामर्थ्याच्च ॥

१ १५३तमे पृष्ठे । २ 'सूक्ष्मापयोग०' इति क-ङ-पाठः । ३ 'तन्मिश्रण इत्यर्थः' इति ङ-पाठः । ४ 'वैकल्पात्' इति ङ-पाठः । ५ 'वैकल्पादिति' इति ङ-पाठः । ६ १५३तमे पृष्ठे ।

( मूलम् )

भिन्नोपादानत्वे तदत्यन्तभेदेनानुसन्धानायोगात्, अस्य चानुभवसिद्धत्वात्। एवं च 'क्रमपक्षेऽप्यक्रमस्यैव दर्शना'दित्ययुक्तम्, तथाऽननु-
५ भवात्, एकदैकज्ञानसंवेदनात्, कालसौक्ष्म्यविभ्रमतस्तथाऽप्रतीतेः॥

किञ्च कुतोऽयममीषामत्यन्तभेदे युगपत् सर्वानुभव इत्यवगमः? न तेभ्य एव, प्रत्यर्थनियतत्वात्, इतरेतरानवगमात्, अवगमे स्वरूपहानिप्रसङ्गात्, ज्ञानान्तरालम्बनत्वापत्तेः, तस्यापि चायोगात्, युग-

( स्वो० व्या० )

१० **भिन्नोपादानत्वे तेषां**–षण्णामपि **अत्यन्तभेदेन** सन्तानान्तरवत् **अनुसन्धानायोगात्** मया रूपं दृष्टं शब्दः श्रुत इत्यनुसन्धानायोगात् । **अस्य च**–अनुसन्धानस्य **अनुभवसिद्धत्वात्** । यदि नामैवं ततः किमित्याह–**एवं च क्रमपक्षेऽप्यक्रमस्यैव दर्शनादित्ययुक्तं** पूर्वपक्षोक्तम्[1] । कुत इत्याह–**तथाऽननुभवात्**–अक्रमदर्शनेनाननुभवात् । अननुभवश्च **एकदैकज्ञानसंवेदनात्**
१५ इति कल्पनान्तरबाधिका युक्तिः। अत एवाह–**कालसौक्ष्म्यविभ्रमतः** कारणात्, **तथाऽप्रतीतेः**–एकदैकज्ञानसंवेदनत्वेनाप्रतीतेः, विभ्रमाद् युगपत्प्रवृत्तेरित्यर्थः ॥

दूषणान्तरमाह **किञ्चे**त्यादिना । किञ्चायमपरो दोषः–**कुतोऽयममीषां**–षण्णां[2] विज्ञानानाम् **अत्यन्तभेदे** सति **युगपत् सर्वानुभव इति**–एवम्भूतोऽ**वगमः**–परिच्छेदः? । **न तेभ्य एव**–षड्भ्यो विज्ञानेभ्यः । कुत इत्याह–**प्रत्यर्थ-**
२० **नियतत्वात्** तेषाम् । तथाहि रूपादिविषयत्वेन नियतानि तानि । यदि नामैवं ततः किमित्याह–**इतरेतरानवगमात्** । न रूपज्ञाने रसादिज्ञानमवगम्यते, नापि तैस्तत् इतीतरेतरानवगमः । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अवगमे स्वरूपहानिप्रसङ्गात्** । यदैव रूपज्ञानं रसादिज्ञानान्यवैति तदैव तदालम्बनत्वात् तदाकारतया रूपज्ञानतां परित्यज्यान्यथा[4] तदवगमः, एवं रसादिज्ञानेष्वपि योजनीयमित्यवगमे
२५ स्वरूपहानिप्रसङ्गः । एतदेवाह–**ज्ञानान्तरालम्बनत्वापत्तेः** । न ह्येतदालम्बनं तदवगमयतीति भावः । यदि नामैवं ततः किमित्याह–**तस्यापि चायोगात्**–तस्यापि च–ज्ञानान्तरालम्बनत्वस्यायोगात् । अयोगश्च **युगपद्भावात्**[5] । रूपरसादिज्ञानानां युगपद्भावे दोषमाह–**प्रतिबन्धविरहात्**–तादात्म्यतदुत्पत्त्ययोगात् ॥

( विवरणम् )

३० (१५) **इति कल्पनान्तरबाधिका युक्तिरिति** । कल्पनान्तरस्य शास्त्रान्तरे बुद्धस्य दीर्घशष्कुलीभक्षणे[6] षड्ज्ञानोत्पादप्रज्ञापनालक्षणस्य बाधिका–निराकरणकारिणी ॥

१ प्रेक्ष्यतां १५३तमं पृष्ठम् । २ 'षण्णामत्यन्त०' इति घ–पाठः । ३ प्रेक्ष्यतां १५३तमं पृष्ठम् । ४ 'परित्यजति, अन्यथा' इति क–ङ–पाठः । ५ 'योगेन' इति घ–ङ–पाठः । ६ 'दीर्घस्य शष्कुली०' इति क–पाठः ।

( मूलम् )

**पद्भावात्, प्रतिबन्धविरहात्, इतरेतरालम्बनत्वानुपपत्तेः, युक्तिभिरयोगात्, स्वभावभेदप्रसङ्गात्, तथा च तदयोगादिति। न च अन्यतः, एकस्य तदालम्बनत्वाभावात्, [1]तेषां भिन्नजातीयत्वात्। अत एवैकाकरणादतदुत्पन्नात् तत्परिच्छित्त्यसिद्धेः, तदाकारत्वायोगात्; योगेऽपि मेचकरूपतापत्तेः, तत्सारूप्याभावात् तेषामस-** ५

( स्वो० व्या० )

दोपान्तरमाह–**इतरेतरालम्बनत्वानुपपत्तेः**–रूपज्ञानस्य [2]रसान्तरालम्बनत्वानुपपत्तेः। रसादिज्ञानस्य च रूपज्ञानान्तरालम्बनत्वानुपपत्तेः। अनुपपत्तिश्च **युक्तिभिरयोगात्**। युक्त्ययोगश्च **स्वभावभेदप्रसङ्गात्**। रूपज्ञानं हि रसादिज्ञानान्तरालम्बनमालम्ब्यं च। न चैतदुभयं स्वभावाभेदे इति स्वभावभेदः। यदि नामैवं ततः किमित्याह–**तथा च तदयोगादिति**। स्वभावभेदे च रूपादिविज्ञानायोगात् ततस्तद्व्यतिरिक्तेतरविकल्पद्वारेण, इति न तेभ्य एवामीषां युगपत् सर्वानुभव इत्यवगम[3] इत्येतत् स्थितम्। अन्यतो भविष्यतीत्याशङ्कापनोदायाह–**न चान्यत** इत्यादि। न चान्यतोऽमीषां युगपत् सर्वानुभव इत्यवगमः। कुत इत्याह–**एकस्येत्यादि**। एकस्य–अन्यस्य **तदालम्बनत्वाभावात्**–अधिकृतषड्विज्ञानालम्बनत्वाभावात्। अभावश्च **तेषां भिन्नजातीयत्वात्** षण्णां विज्ञानानाम्। यदि नामैवं ततः किमित्याह–**अत एवैकाकरणात्**। न हि भिन्नजातीया रूपादय एकं पृथग्जनज्ञानं कुर्वन्ति। न[4] चैतदुत्पन्नं तत्परिच्छेदकमित्येतदाह–**अतदुत्पन्नादि**त्यादि। तेभ्यः–षड्भ्यो विज्ञानेभ्य उत्पन्नं तदुत्पन्नम्, न तदुत्पन्नमतदुत्पन्नं तस्मात्, एकस्मादिति प्रक्रमः। **तत्परिच्छित्त्यसिद्धेः**–षड्ज्ञानपरिच्छित्त्यसिद्धेः। असिद्धिश्च **तदाकारत्वायोगात्**–[5]षड्ज्ञानकारत्वायोगात्। उपचयमाह–**योगेऽपि** कथञ्चित् तदाकारत्वस्य **मेचकरूपतापत्तेः** अधिकृतग्राहकज्ञानस्य। यदि नामैवं ततः किमित्याह–**तत्सारूप्याभावात्**। तैः–ज्ञेयज्ञानैः षड्भिः सारूप्याभावात् १० १५ २० २५

( विवरणम् )

(११–१२) **रूपज्ञानं हि रसादिज्ञानान्तरालम्बनमालम्ब्यं चेति**। रसादीनि ज्ञानान्तराण्यालम्बन्ते विषयतया यत् तद् रसादिज्ञानान्तरालम्बनम्, आलम्ब्यं च रूपादिज्ञानमेव रसादिज्ञानानाम्॥

१ 'तथा' इति क–पाठः। २ 'रस्य(?)रसादिज्ञानान्तरा०' इति ङ–पाठः। ३ प्रेक्ष्यतां १५८तमं पृष्ठम्। ४ 'न चातदुत्पन्न०' इति ङ–पाठः। ५ षड्ज्ञानकारत्वायोगात्' इति पाठो नास्ति घ–पुस्तके।

(मूलम्)

**ङ्कीर्णत्वात्, एवमप्यवगमेऽतिप्रसङ्गात्। तत एव सर्वार्थावगमापत्तेः, तथाऽनुभवाभावाच्चेत्यनवगताभिधानमेतद् यदुत 'युगपत् सर्वानुभवः'[2] इति। चित्रज्ञानवत् परामर्शविकल्पात् तदवगम इति चेत्, न, अस्याप्ययोगात्। तथाऽनुभवसिद्धत्वात् कथमयोग इति चेत् स्वकृतान्तप्रकोपात्[3]। कथमत्र तत्प्रकोप इति चेत् यथोक्तं प्राक्[4]। परामर्शविकल्पोऽन्य एवेति चेत्, न, ततस्तदवगम इति यत्किञ्चिदेतत्। क्रमानुभवोऽपि कथं गम्यत इति चेत्, अन्वयिन्यात्मनि**

(स्वो० व्या०)

मेचकरूपस्य ग्राहकज्ञानस्य। अभावश्च **तेषामसङ्कीर्णत्वात्** ज्ञेयज्ञानानाम्। न च सारूप्याभावे तदवगमो न्याय्य इत्येतदाह–**एवमपी**त्यादि। एवमपि–सारूप्याभावेऽपि ज्ञान-ज्ञेययोः **अवगमे**ऽभ्युपगम्यमाने**ऽतिप्रसङ्गात्**। अतिप्रसङ्गश्च **तत एव**–सारूप्यरहिताज्ज्ञानात् **सर्वार्थावगमापत्तेः**, सारूप्याभावाविशेषादित्यर्थः। न [6]चेयमित्याह–**तथाऽनुभवाभावाच्च**–तत एव सर्वार्थावगमानुभवाभावाच्च। **इति**–एवम**नवगताभिधानमेतत्** पूर्वपक्षवचनं **यदुत युगपत् सर्वानुभव** उक्तवत् तद्यौगपद्याज्ञानादिति। **चित्रज्ञानव**दित्यादि। चित्रज्ञानवदिति निदर्शनम्। यथा चित्रज्ञाने सामर्थ्याच्चित्रावगमः तथा **परामर्शविकल्पात्** षड्ज्ञानगतात् **तदवगमः**, प्रक्रमादमीषां युगपत् सर्वानुभवावगमः। **इति चेत्**, एतदाशङ्क्याह–**न, अस्याप्ययोगात्** चित्रज्ञानस्य। **तथे**त्यादि। तथा–चित्रज्ञानत्वेन **अनुभवसिद्धत्वात्** कारणात् **कथमयोगः**?। **इति चेत्** चित्रज्ञानस्य, एतदाशङ्क्याह–**स्वे**त्यादि। **स्वकृतान्तप्रकोपात्**–स्वसिद्धान्तविरोधादयोगः। **कथमत्र**–तथाऽनुभवसिद्धौ **तत्प्रकोपः**–स्वकृतान्तप्रकोपः?। **इति चेत्**, एतदाशङ्क्याह–**यथोक्तं प्राक्**–पूर्वं [7]एकस्यानेकालम्बनत्वाभावादित्यादिना। **परामर्शविकल्पो**ऽनन्तरप्रस्तुतः **अन्य एव** तथाविधानुभवनिमित्तो न षड्ज्ञानगतः। **इति चेत्**, एतदाशङ्क्याह–**न, ततः**–[8]परामर्शविकल्पादन्यस्मात् **तदवगमः**, प्रक्रमादमीषां युगपत् सर्वानुभवावगमः। **इति**–एवं **यत्किञ्चिदेतत्**–अनन्तरोदितम्, सर्वमेवासारमित्यर्थः। **क्रमानुभवोऽपि**, रूपादिज्ञानगत इति प्रक्रमः, [9]**कथं गम्यत इति चेत्**, तत् क्रमग्राह्यन्यद् विज्ञानान्तरं न विद्यत

१ 'भावात्; इत्यनव०' इति घ–पाठः। २ प्रेक्ष्यतां १५८तमं पृष्ठम्। ३ 'प्रकोपः' इति क–पाठः। ४ १५९तमे पृष्ठे। ५ 'तत एव सर्वार्थावगमानुभवाच्च, इत्येवं' इति घ–पाठः। अतस्तत्र पाठलुप्ततेति भाति। ६ 'चेयमित्थमित्याह' इति ङ–पाठः। ७ १५९तमे पृष्ठे। ८ 'तत्, परामर्श०' इति घ–पाठः। ९ 'कथं मन्यत इति' इति क–पाठः।

( मूलम् )

**सुखेनैव, तस्यैव तथाभावात्, चित्रस्वभावत्वात्, बोधान्वयोपपत्तेः, तदावरणविगमात्, क्रमानुभवाविरोधात्, तथामनोवृत्तेः। इति न युगपत् सर्वथा सविकल्पाविकल्पज्ञानभावः ॥** ५

**परमाप्तवचनविरुद्धश्चायम्, "अस्थानमेतत् यद् द्वे चित्ते युगपदुत्पद्येयाताम्" इति वचनप्रामाण्यात् । अन्यार्थमेतदिति चेत्, कोऽस्यार्थ इति वाच्यम् । भिन्नजातीये नेति चेत्, न, अधिकृतज्ञानयोरपि तत्त्वात्। भिन्नालम्बने नेति चेत्, न, तयोरपि त्वन्मते भावात्। कथं पुनर्भाव इति चेत्, रसादिगतचित्तस्यापि रूपदर्शना-** १०

---

(स्वो० व्या०)

एवेत्यभिप्रायः । एतदाशङ्क्याह—**अन्वयिन्यात्मनि** [1]**सुखेनैव** गम्यते। एतदेवाह—**तस्यैव**—प्रक्रमाद् [2]रूपादिविज्ञानानुभवितुरात्मनः, **तथाभावात्**—रसादिज्ञानरूपेण भावात्। तत्तथा[3]भावश्च, **चित्रस्वभावत्वात्**, अनुवृत्तिव्यावृत्तिस्वभावत्वादित्यर्थः । एतच्च **बोधान्वयोपपत्तेः**, न व्यावृत्तिमन्तरेणान्वय इत्युपपत्तिः । युक्त्यन्तरमाह— १५ **तदावरणविगमात्**—क्रमानुभवज्ञानावरणविगमात् । न चायमसिद्ध इत्याह—**क्रमानुभवाविरोधात्**, कारणसाकल्येनेत्यर्थः। अविरोधश्च **तथामनोवृत्तेः**—युगपज्ज्ञानानुपत्तित्वेन मनोवृत्तेः कारणात् । प्रक्रान्तोपसंहारमाह **इति न युगपदि**त्यादिना। इति—एवं न युगपत् **सर्वथा** [4]**सविकल्पाविकल्पज्ञानभावः ॥**

उपचयमाह—**परमाप्तवचनविरुद्धश्चायं** परमाप्तः—भगवान् [5]बुद्धस्तद्वचन- २० विरुद्धश्चायम्—युगपत् सविकल्पाविकल्पज्ञानभावः । एतदेवाह **अस्थानमि**त्यादिना। अस्थानमिति एतद् न न्यायस्थानं **यद् द्वे चित्ते**—द्वे ज्ञाने **युगपद्**—एकदा **उत्पद्येयातामिति**—एवं **वचनप्रामाण्यात्** कारणात्, परमाप्तवचनविरुद्ध इति। **अन्यार्थमेतत्** परमाप्तवचनम् । **इति चेत्**, एतदाशङ्क्याह—**कोऽस्य**—परमाप्तवचनस्य **अर्थ इति वाच्यम्। भिन्नजातीये न द्वे** चित्ते युगपदुत्पद्येयाताम् । २५ **इति चेत्**, एतदाशङ्क्याह—**न, अधिकृतज्ञानयोरपि**—सविकल्पाविकल्पयोः **तत्त्वाद्** भिन्नजातीयत्वात् । **भिन्नालम्बने न द्वे** चित्ते युगपदुत्पद्येयाताम् । **इति चेत्**, एतदाशङ्क्याह—**न, तयोरपि**—भिन्नालम्बनयोरपि **त्वन्मते**—त्वत्पक्षे **भावात्। कथं पुनर्भावो** भिन्नालम्बनयोर्मत्पक्षे ?। **इति चेत्**, एतदाशङ्क्याह—

---

१ 'सुखेनैवं' इति ङ—पाठः । २ 'रूपादिज्ञानानु०' इति ङ—पाठः । ३ 'भावाच्च चित्रस्वभावात् अनु०' इति क—पाठः । ४ 'सविकल्पाकल्पज्ञानभावः' इति क—पाठः । ५ 'बुद्धस्तद्वचन' इति घ—पाठः ।

( मूलम् )

**भ्युपगमादिति। न चाविकल्पके नेति, पञ्चानां प्ररूपणात्। न चात एव न द्वे, छलमात्रत्वात्। न चेहैव न्याय्यो भरः, अस्थानप्रयासत्वात्।**
५ **न च नास्थानप्रयासः, द्वयोरुपलक्षणत्वात्, अन्यथा यत्र पञ्च न तत्र द्वे इत्यतिकौशलमाप्तस्य, त्र्यादीनामपि प्रतिषेधापत्तेः ॥**

**स्यादेतदलमनेन वाग्जालेन, सविकल्पे नोत्पद्येते इति वचनार्थात्। न, अत्र प्रमाणाभावात्, तद्विवक्षाया अत्यक्षत्वात्, बाधकवचनाभावात्, भावेऽपि तदर्थनिश्चयायोगात्, विनेयानुगुण्यतोऽन्यथाऽपि**

१० ( स्वो० व्या० )

**रसादिगतचित्तस्यापि** प्रमातुः **रूपदर्शनाभ्युपगमात्**। अभ्युपगमश्च 'अतीताद्यर्थगतविकल्पेनापि रूपादिग्रहणसिद्धेः'[२] इति वचनात्। **न चाविकल्पके नेति** द्वे चित्ते युगपदुत्पद्येयातामिति। कुत इत्याह–**पञ्चानां प्ररूपणात्** 'स हि वंशादिवादयितू रूपं पश्यति' इत्यादिना ग्रन्थेन[३]। **न चात एव**–
१५ पञ्चप्ररूपणादेव **न द्वे**। कुत इत्याह–**छलमात्रत्वात्**, यत्र पञ्च तत्र द्वे अपि भवत इति कृत्वा। **न चेहैव**, प्रक्रमाच्छलादौ, **न्याय्यो भरः** तथाविधास्थारूपः। कुत इत्याह–**अस्थानप्रयासत्वात्**। **न च नास्थानप्रयास** एषः, किन्त्वस्थानप्रयास एव। कुत इत्याह–**द्वयोरुपलक्षणत्वात्** पञ्चादीनाम्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–उपलक्षणत्वानभ्युपगमे **यत्र पञ्च न**
२० **तत्र द्वे इत्यतिकौशलमाप्तस्य** इत्युपहासवचनम्। अत[४] एवाह–**त्र्यादीनामपि प्रतिषेधापत्तेः** कारणात् ॥

**स्यादेतदलमनेन वाग्जालेन**–अनन्तरोदितेन, **सविकल्पे नोत्पद्येते** द्वे चित्ते युगपदिति **वचनार्थात्** कारणात्, अलमनेन। एतदाशङ्क्याह–**न, अत्र**–वचनार्थे, **प्रमाणाभावात्**। अभावश्च **तद्विवक्षायाः**–आप्तविवक्षाया **अत्यक्ष-**
२५ **त्वात्**। अतीत्याक्षम्–इन्द्रियं वर्तत इत्यत्यक्षा तद्भावस्तस्मात्, परोक्षत्वादित्यर्थः। अत्यक्षाऽपि वचनान्तरावसेया भविष्यतीत्याह–**बाधकवचनाभावात्**। अविकल्पयौगपद्याभिधायि बाधकं वचनम्, अत्र न च तदस्तीति गर्भः। उपचयमाह **भावेऽपी**त्यादिना। भावेऽपि बाधकवचनस्य "पञ्च बाह्यविज्ञानानि भिक्षवः! युगपदुत्पद्यन्ते" इत्यादेः। किमित्याह–**तदर्थनिश्चयायोगात्** अविकल्पज्ञानानां युगपद्
३० भावस्तदर्थस्तन्निश्चयायोगात्। अयोगश्च **विनेयानुगुण्यतः**–शिष्यानुगुण्येन,

१ 'गमात्। न' इति **ग**–पाठः। २ प्रेक्ष्यतां १३८तमं पृष्ठम्। ३ १५२तमपृष्ठगतेन।
४ 'एतदेवाह' इति **क**–पाठः।

( मूलम् )

**तद्वचनप्रवृत्तेः । साऽभिप्रायिक्येवेति चेत्, कस्तस्याभिप्राय इति क एतद् वेद? । यो युक्तिबाधितो न स स इति चेत्, कः पुनरसौ भवतोऽभिप्रेतः? । विकल्पद्वयायुगपद्भाव इति चेत्, का खल्वन्यथा युक्तिबाधेति कथनीयम् । तथाऽनुभव[1] एवेति चेत्, सोऽविल्पकद्वयेऽपि तुल्य एवेत्युक्तम्[2] । न च विकल्पयोरसदंशानुवेधतश्चित्ततैव युक्ता ॥** ५

**न च तत्स्वसंविदो[3] वस्तुत्वेनायमनपराधः, तत्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः, अन्यथा तदयोगादिति यत्किञ्चिदेतत् ॥**

( स्वो० व्या० ) १०

**अन्यथाऽपि**–श्रौतं शब्दार्थं विहायापि **तद्वचनप्रवृत्तेः**–आप्तवचनप्रवृत्तेः ब्राह्मणमृतजायाऽमृतवचनवत्[4] । **सेत्यादि** । सा–तद्वचनप्रवृत्तिः **आभिप्रायिक्येव** अभिप्रायेण निर्वृत्ता आभिप्रायिकी, अभिप्रायस्तथार्थदर्शनम् । **इति चेत्**, एतदाशङ्क्याह–**कस्तस्य**–आप्तस्य **अभिप्रायः?** । अर्थयाथात्म्यमधिकृत्य किमविकल्पयौगपद्यमेव उत विकल्पयौगपद्यमि**ति?** । **क एतद् वेद**–एतज्जानाति? । न १५ ह्यसौ पृथग्जनप्रज्ञाविषय इत्यर्थः । **य** इत्यादि । योऽभिप्रायो **युक्तिबाधितः**–युक्तिविरहितः **न स स** इति–नासौ तदभिप्रायः, अर्थयाथात्म्यमधिकृत्येति प्रक्रमः । **इति चेत्**, एतदाशङ्क्याह–**कः पुनरसौ**–अभिप्रायो **भवतोऽभिप्रेतः?** । **विकल्पे**त्यादि । विकल्पद्व**यायुगपद्भावो**ऽभिप्रायः 'अस्थानमेतत्' इत्यादि सूत्रे[5] । **इति चेत्**, एतदाशङ्क्याह–**का खल्वन्यथा** विकल्पद्वययुगपद्भावे **युक्तिबाधेति** २० एतत् **कथनीयम्** । **तथा** विकल्पद्वययौगपद्येन **अनुभव एव** युक्तिबाधा । **इति चेत्**, एतदाशङ्क्याह–**सोऽविकल्पद्वयेऽपि** यौगपद्येनाननुभवस्**तुल्य एवेत्युक्तं** प्राक् 'किञ्च कुतोऽयममीषामत्यन्तभेदे युगपत् सर्वानुभव इत्यवगमः' इत्यादिना सूत्रेण[6] । उपचयमाह **न चे**त्यादिना । न च **विकल्पयोः असदंशानुवेधतः** कारणात् अविद्यमानप्रतिभासित्वाभ्युपगमेन **चित्ततैव युक्ता,** यदसत्प्रतिभासि २५ तदसदेवेति भावनीयम् ॥

पराभिप्रायमाह **न चे**त्यादिना । न च **तत्स्वसंविदः**–विकल्पस्य स्वसंविदो **वस्तुत्वेन** हेतुना **अयम्**–असदंशानुवेधतश्चित्तताऽयोगलक्षणः **अनपराधः**–अदोषो न[7] च । कुत इत्याह–**तत्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः**–तस्याः[8]–

१ 'तथाऽननुभवत एवेति' इति क–पाठः । २ प्रेक्ष्यतां १५८तमं पृष्ठम् । ३ 'ततः स्वसंविदो' इति क–पाठः । ४ 'वचनात्' इति क–पाठः । ५ प्रेक्ष्यतां १६१तमं पृष्ठम् । ६ समीक्ष्यतां १५८तमं पृष्ठम् । ७ 'न वा इति क–पाठः । ८ असदंशेत्यादेरारभ्य दोषापत्तेः इति पर्यन्तकोऽधिकः पाठः क–प्रतौ ।

(मूलम्)

**अतः सामान्येनैवोभयचित्तप्रतिषेधोपपत्तेः, आप्तवचनप्रामाण्यात्, तथाऽनुभवभावतः सिद्धमिन्द्रियद्वारानुसार्येव विज्ञानमाविष्टाभिलापम् 'अहिरहिः'[1] इत्येवमादि ॥**

५

**न चेदं नेन्द्रियनिमित्तम्, तद्भावभावित्वानुविधानात्, अन्धादेरनुत्पत्तेः । इन्द्रियादविकल्पजन्म, तत इदमिति[2], तदनुत्पत्तिरिति चेत्, न, आद्यविद्युत्सम्पातादौ तद्भावेऽपि तदभावात् ।**

---

(स्वो० व्या०)

१० स्वसंविदस्तद्व्यतिरिक्तेतरविकल्पदोषापत्तेः–असदंशव्यतिरिक्ताव्यतिरिक्तविकल्पदोषप्रसङ्गात् । सा हि स्वसंविदसदंशाद् विकल्पानुवेधकाद् व्यतिरिक्ता वा स्यादव्यतिरिक्ता वा । व्यतिरिक्तत्वे तस्येति सञ्ज्ञायोगः[3] । अव्यतिरिक्तत्वे तस्यापि वस्तुता, स्वसंविदो वा अवस्तुतेत्यादि । **अन्यथा**–एवमनभ्युपगमे **तदयोगात्**–तत्स्वसंविदोऽयोगात् । तथाहि–यदि सा ततो न व्यतिरिक्ता नाप्यव्यतिरिक्ता न विकल्प एवेति,

१५ कुतस्तत्स्वसंविदित्यालोचनीयम् । **इति**–एवं **यत्किञ्चित्**–असारमेतत् यदुत 'तत्स्वसंविदो वस्तुत्वेनायमनपराधः'[4] इति ॥

अपान्तरालपूर्वपक्षमधिकृत्योपसंहारमाह **अत** इत्यादिना । अतः–अस्मात् कारणात् **सामान्येनैवोभयचित्तप्रतिषेधोपपत्तेः**, प्रक्रमादधिकृतसूत्रे 'अस्थानमेतत्'[5] इत्यादौ सविकल्पाविकल्पोभयचित्तप्रतिषेधोपपत्तेः । किमित्याह–**आप्तवचनप्रामा-**

२० **ण्यात्** कारणात्, **तथाऽनुभवभावतः**–एकचित्तरूपत्वेनानुभवभावतः **सिद्धं**–प्रतिष्ठितम् । किमित्याह–**इन्द्रियद्वारानुसार्येव विज्ञानम्** ईहादिक्रमेण **आविष्टाभिलापम्'अहिरहिः'इत्येवमादि** । 'आदि'शब्दात् तदन्यैवंविधपरिग्रहस्तदपि सिद्धमित्यर्थः ॥

इहैवोपचयमभिधातुमाह–**न चे**त्यादि । न च **इदं नेन्द्रियनिमित्तम्** । किं तर्हि?

२५ इन्द्रियनिमित्तमेव । कुत इत्याह–**तद्भावभावित्वानुविधानात्**–इन्द्रियभावभावित्वानुकरणात् । तदेवाह–**अन्धादेरनुत्पत्तेः** । 'आदि'शब्दादव्यापृतेन्द्रियग्रहः[6] । **इन्द्रियादि**त्यादि । इन्द्रियात् सकाशात् **अविकल्पजन्म**–अविकल्पोत्पादः **ततः**–अविकल्पात् **इदं**–विज्ञानमाविष्टाभिलापम् **इति**–एवं **तदनुत्पत्तिः**–अन्धादेर्विवक्षितविज्ञानानुत्पत्तिः । **इति चेत्**, एतदाशङ्क्याह–**न, आद्यविद्युत्-**

३० **सम्पातादौ**,'आदि'शब्दात् तदन्यादद्भुतदर्शनग्रहः,**तद्भावेऽपि**–इन्द्रियादविकल्प-

---

१ समीक्ष्यतां १२७तमं पृष्ठम् । २ 'इदमिति ततस्तदनु०' इति क–पाठः । ३ 'सयोज्ञायोगः' इति क–पाठः । ४ प्रेक्ष्यतां १६३तमं पृष्ठम् । ५ समीक्ष्यतां १६१तमं पृष्ठम् । ६ 'व्यावृत्तेन्द्रिय०' इति क–पाठः ।

( मूलम् )

**स मानसाभावतोऽभावो नाक्षव्यापाराभावत इत्यतोऽदोष इति चेत्, न अत्र किञ्चिदुभयसिद्धं प्रमाणमिति यत्किञ्चिदेतत् । तथाविधविकल्पानुपपत्तिरेव प्रमाणमिति चेत्, न, अस्या एव विवादगोचरापन्नत्वात् । अत एव एतन्निर्णीतेरयमदोष इति चेत्, न, चक्षुर्व्यापाराभावेऽप्यस्याः समानत्वादिति ॥** ५

**किञ्च इदमपि मानसं तद्विषयमात्रग्राहकत्वेन न तद्भिन्नशक्ति-**

( स्वो० व्या० )

जन्मभावेऽपि **तदभावात्**—आविष्टाभिलापविज्ञानाभावात् । **स मानसाभावतः** १० —स्वविषयानन्तरविषयसहकारीन्द्रियज्ञानजनितमानसाभावेन **अभावः**, आविष्टाभिलापविज्ञानाभावः । **नाक्षव्यापाराभावतः**—नेन्द्रियव्यापाराभावेन **इत्यतः**—अस्मात् कारणात् **अदोषः**, 'आद्यविद्युत्सम्पातादौ तद्भावेऽपि तदभावात्'[1] इत्ययमनपराधः । **इति चेत्**, एतदाशङ्क्याह—**नात्र** 'स मानसाभावतः' इत्यादौ **किञ्चिदुभयसिद्धं**—वादिप्रतिवादिप्रतिष्ठितं **प्रमाणम्** अक्षव्यापारापोहेन मानस- १५ निबन्धनत्वव्यवस्थापकम् । **इति**—एवं **यत्किञ्चिदेतत्**, असारमित्यर्थः । **तथाविधेत्यादि** । तथाविध**विकल्पानुत्पत्तिरेव**—आविष्टाभिलापविज्ञानानुत्पत्तिरेवेत्यर्थः । **प्रमाणम**क्षव्यापाराभावेन मानसनिबन्धनत्वव्यवस्थापकत्वम् । **इति चेत्**, एतदाशङ्क्याह—**न, अस्या एव**—तथाविधविकल्पानुत्पत्तेरेव **विवादगोचरापन्नत्वात्**, विप्रतिपत्तिविषयत्वादिति योऽर्थः । **अत एवेत्यादि** । अत एव— २० तथाविधविकल्पानुत्पत्तेरेव सकाशात्, **एतन्निर्णीतेः**—'स मानसाभावतोऽभावो[2] नाक्षव्यापाराभावतः' इत्येतन्निश्चयात् कारणात् **अयम्**—अनन्तरोदितः न, 'अस्या एव विवादगोचरापन्नत्वात्' इति **अदोषः**—अनपराधः । **इति चेत्**, एतदाशङ्क्याह—**न, चक्षुर्व्यापाराभावेऽप्यस्याः**—अत एव तन्निर्णीतेः **समानत्वात्**—**तुल्यत्वादिति** । तथाहि—अत[3] एव तथाविधविकल्पानुपपत्तेरेव सकाशात्, एतन्निर्णीतेः २५ सोऽक्षव्यापाराभावतोऽभावो न मानसाभावतः इत्येतन्निश्चयात् कारणात् इत्यपि वक्तुं शक्यत्वात् तुल्यत्वमिति भावनीयम् ॥

अभ्युच्चयमाह **किञ्चेत्यादिना** । किञ्च **इदमपि मानसं** स्वविषयानन्तरेत्यादिलक्षणवत्, **तद्विषयमात्रग्राहकत्वेन**, प्रक्रमादक्षज्ञानविषयमात्रग्राहकत्वेन

१ प्रेक्ष्यतां १६४तमं पृष्ठम् । २ 'भावतो भावो' इति क-पाठः । ३ 'यत एव' इति क-पाठः ।

(मूलम्)

**कमिति, किञ्चानेन। निरंशैकस्वभावत्वाच्च वस्तुनोऽनुभवोऽपि न पटीयानपटीयांश्च युज्यते, अत्यन्तासत उत्पादेन सर्वथा हेत्व-**
५ **नन्वयतोऽभ्यासवासने च; अन्यथाऽसम्पूर्णवस्तुग्रहणमपि स्यात्, तथा च न निरंशैकस्वभावमेवैतत् । न चान्यथा अपटीयस्त्वादि, अनुभवस्य तन्मात्रग्रहणत्वात्, तदतिरिक्तरूपान्तराभावात्,**

(स्वो० व्या०)

हेतुना, स्वलक्षणमात्रग्राहकत्वेनेत्यर्थः, **न तद्भिन्नशक्तिकं**–नाक्षज्ञानभिन्नशक्तिक-
१० **मिति । किञ्चानेन**–परिकल्पितेन तथाविधविकल्पोत्पत्तौ समानमेतदक्षज्ञाने-नेति भावः ॥

पक्षान्तरपरिजिहीर्षयाऽऽह–**निरंशैकस्वभावत्वाच्च** कारणाद् **वस्तुनोऽनुभवोऽपि**, प्रक्रमात् तदनुभवः, **न पटीयानपटीयांश्च युज्यते**, निरंशैक-स्वभावत्वाद् वस्तुनस्तथाविधैकस्वभावस्यैवास्य भावात्; तदेतद्भेदोऽपि न तथाविध-
१५ विकल्पोत्पत्त्यनुत्पत्तिनिमित्तमिति प्रकृतयोजना । तथा **अत्यन्तासत उत्पादेन** हेतुना अनुभवस्य **सर्वथा हेत्वनन्वयतः** कारणात् तत्तथाभावाभावेन **अभ्यास-वासने च**, 'अनुभवस्य न युज्येते' इति वर्तते, पौनःपुन्यकरणमभ्यासः, पूर्वानु-भूतं संस्कारानुवेधश्च वासना, नैते अत्यन्तासत उत्पादे भवत इति भावनीयम् । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **असम्पूर्णवस्तुग्रहण-**
२० **मपि स्यात्** अनुभवापटीयस्त्वादिभावेन । यदि नामैवं ततः किमित्याह–**तथा च न निरंशैकस्वभावमेवैतत्**–वस्तु, किन्तु सांशानेकस्वभावमिति । **न चान्यथा**–उक्तं प्रकारं विहाय **अपटीयस्त्वादि**, 'आदि'शब्दात् पटीयस्त्वग्रहः, **अनुभवस्य** अधिकृतस्य । कुत इत्याह–**तन्मात्रग्रहणत्वात्**–वस्तुमात्रग्रहण-स्वरूपत्वात्, अनुभवस्य **तदतिरिक्तरूपान्तराभावात्**–तन्मात्रग्रहणतत्त्वाति-

२५ (विवरणम्)

(१३) **तदनुभव** इति । तस्य–स्वलक्षणस्यानुभवः, परो हि तीव्रः स्वलक्षणानुभवो विकल्पज्ञानहेतुः, न पुनरितर इति प्रतिपद्यते ॥

(१४-१५) **तदेतद्भेदोऽपि न तथाविधविकल्पोत्पत्त्यनुत्पत्तिनिमित्तमिति ।** तत्–तस्मात् कारणात् एतद्भेदोऽपि–अनुभवभेदोऽपि न–नैव तथाविधस्य–विद्युदा-
३० द्यध्यवसायरूपस्य विकल्पस्य ये उत्पत्त्यनुत्पत्ती तयोर्निमित्तं–कारणं पटुरनुभवो विकल्पनिमित्तं [१]अपटुश्च न निमित्तमिति न भवतीत्यर्थः ॥

१ 'अपटुः स्वननिमित्त०' इति च–पाठः ।

(मूलम्)

अन्येनोपकाराद्ययोगादिति। एवमभ्यासवासनोपगमान्नात्यन्तासत एवोत्पादः, सत्यस्मिंस्तयोर्वाङ्मात्रत्वात्, तदात्वातिरेकेण आकालं तदभावात्, पूर्वस्मादत्यन्तभिन्नत्वात्, तथापि तदभ्यासादावति- ५ प्रसङ्गादितीन्द्रियजमेवैतत् ॥

एतच्चानेकधर्मके वस्तुनि ज्ञानावरणाच्छादितस्य प्रमातुस्तथाविध-क्षयोपशमभावत उभयोस्तथास्वभावत्वेनावग्रहेहावायधारणारूपं प्रवर्तत इति। अनेकधर्मकत्वं च वस्तुनोऽनेकविज्ञानजनकत्वात्, योग्ययोगिभिर्भेदेनोपलब्धेः, अन्यथा तदभेदप्रसङ्गात्, द्वयोरपि १०

(स्वो० व्या०)

रिक्तरूपान्तराभावात्। अभावश्च अन्येन—वस्तुव्यतिरिक्तेन उपकाराद्ययोगात्। ततश्च वस्तुग्रहणभेदकृतमेवापटीयस्त्वाद् यस्येति सांशानेकस्वभावमेतदिति स्थितम्। एवमभ्यासवासनोपगमात् कारणात् किमित्याह—नात्यन्तासत एव उत्पादः। कुत इत्याह—सत्यस्मिन्—अत्यन्तासत उत्पादे तयोः—अभ्यास- १५ वासनयोर्वाङ्मात्रत्वात्। वाङ्मात्रत्वमेवाह—तदात्वातिरेकेण—तदाभावाति-रेकेण आकालं—यावदपि कालस्तावदपि तदभावाद्—अत्यन्तासत उत्पद्यमान-स्याभावात्। अभावश्च पूर्वस्मादत्यन्तभिन्नत्वात् अत्यन्तासत उत्पद्यमानस्य। तथापि—एवमपि तदभ्यासादौ तस्य—अनुभवस्याभ्यासवासनाभावेऽतिप्रसङ्गात्—अनुभवान्तरस्याप्यभ्यासादिशून्यस्य तद्भावप्रसङ्गात्। इतीन्द्रियजमेवैतत्— २० 'विज्ञानमाविष्टाभिलापमहिरहिरित्येवमादि' इत्यधिकारोपसंहारः ॥

एतच्चेत्यादि। एतच्च—अधिकृतज्ञानम् अनेकधर्मके वस्तुनि—घटरूपादौ ज्ञाना-वरणाच्छादितस्य प्रमातुः—जीवस्य तथाविधक्षयोपशमभावतः—द्रव्यादिनिमित्तचित्रक्षयोपशमभावात्, उभयोः[3]—प्रमातृ-विषययोः तथास्वभाव-त्वेन—चित्रग्राह्यग्राहकस्वभावत्वेन हेतुना अवग्रहेहावायधारणारूपं प्रवर्तत २५ इति ग्रहणकवाक्यसमुदायार्थः। अवयवार्थं तु स्वयमेवाह ग्रन्थकारः अनेकधर्म-कत्वं च वस्तुन इत्यादिना ग्रन्थेन। अनेकधर्मकत्वं च वस्तुनः—घटरूपादेः। कुत इत्याह—अनेकविज्ञानजनकत्वात् अनेकेषां—विज्ञानजनकमनेकविज्ञानजनकं तद्भावस्तस्मात्। एकेनैव स्वभावेनैवं भविष्यतीत्याह—योग्ययोगिभिः प्रमातृभिः भेदेनोपलब्धेः सम्पूर्णासम्पूर्णधर्मसाक्षात्कारणत्वेन[4] दर्शनादित्यर्थः। अन्यथा—एव- ३०

१ 'तद्भेद०' इति क—पाठः। २ प्रेक्ष्यतां १६४तमं पृष्ठम्। ३ 'उभययोः' इति ङ—पाठः। ४ 'साक्षात्करणेन' इति घ—पाठः।

( मूलम् )

[1]**तत्तन्निमित्तत्वात्, तद्भावभावित्वानुविधानात्। मरावल्पभावे महद्दर्शनमनिमित्तमिति चेत्, न, अल्पस्यैव तन्निमित्तत्वात्, तदभावेऽभावाद् विप्रकर्षाद्युपप्लवात् तत्तत्स्वभावत्वात्, अन्यथा तदनुपपत्तेः। ततस्ततोऽन्यत्वाच्च, स्वभावभेदेन व्यावृत्तेः, अन्यथा**

---

( स्वो० व्या० )

मनभ्युपगमे **तदभेदप्रसङ्गात्**–योग्ययोगिनोरभेदप्रसङ्गात्। प्रसङ्गश्च **द्वयोरपि**–योग्ययोगिनोः **तत्तन्निमित्तत्वात्** तस्याः–उपलब्धेः तन्निमित्तत्वात्–अधिकृतवस्तुनिमित्तत्वात्। तन्निमित्तत्वं च **तद्भावभावित्वानुविधानात्**–अधिकृतवस्तुभावभावित्वानुकरणात्। अतन्त्रमेतदर्वाग्दृशामित्येतदेवाह **मरावित्यादिना**। मरौ विषये **अल्पभावे** अल्पस्य–छगणादेः सत्तायां **महद्दर्शनं** महतः–वत्सादेरिव दर्शनम् **अनिमित्तम्**, अल्पस्याप्रतिभासनेन निमित्तत्वायोगात्। **इति चेत्**, एतदाशङ्क्याह–**न, अल्पस्यैव**–छगणादेः **तन्निमित्तत्वात्**–महद्दर्शननिमित्तत्वात्। तन्निमित्तत्वं च **तदभावेऽभावात्**–अल्पाभावेऽभावाद् महद्दर्शनस्य। कथमिदमतत्प्रतिभासीत्याह–**विप्रकर्षाद्युपप्लवात्**। विप्रकर्षः–देशविप्रकर्षः। 'आदि'शब्दात् तथाविधज्ञानावरणक्षयोपशमपरिग्रहः, ताभ्यामुपप्लवाद् भ्रान्तेः। उपप्लवश्च **तत्तत्स्वभावत्वात्** तस्य–विप्रकर्षादेः तत्स्वभावत्वात्–उपप्लवजननस्वभावत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा तदनुपपत्तेः**। अन्यथा–एवमनभ्युपमगे तदनुपपत्तेः–उपप्लवानुपपत्तेः, न ह्यसावन्यनिमित्तोऽनिमित्तो वेति भावनीयम्। मूलसाध्य एव हेत्वन्तरमाह–**ततस्ततोऽन्यत्वाच्च**। ततस्ततः–सजातीयेतरादेर्विचित्राद् वस्तुनः अन्यत्वाच्च कारणादनेकधर्मकं वस्त्विवति। यदि नामैवं ततः किमित्याह–**स्वभावभेदेन व्यावृत्तेः** [2]ततस्ततः। किमित्येतदेवमित्याह–**अन्यथा**–एवमन-

---

( विवरणम् )

(११) **अतन्त्रमेतदर्वाग्दृशामिति**। अतन्त्रम्–अनायत्तमेतत्–वस्तुभावभावित्वानुकरणमर्वाग्दृशां प्रमातॄणां सम्बन्धिनः, ज्ञानस्येति गम्यते॥

(१२) **वत्सादेरिव दर्शनमिति**। 'मरु'भूमौ हि अल्पोऽपि छगणको भूमिस्वाभाव्यादेव वत्सक इति प्रतिभासते दूरात् तम्।

---

१ 'तत्तन्निमित्तत्वात' इति ग–पाठः। २ 'ततः किमि०' इति क–पाठः।

( मूलम् )

**तदेकत्वप्रसङ्गात्, तदन्यत्वहेतुत्वेनाविशेषात्, अन्यत्वस्य चाकल्पितत्वात्, कल्पितत्वे तत्त्वतस्तदभावापत्तेः ॥**

**स्वहेतुत एव तत् तदन्येभ्योऽन्यत्वैकस्वभावं भवतीति चेत्, न, पटान्यत्वैकस्वभावान्यत्वे पटवत् कटादीनां तद्भावापत्तेः, तथास्वभावादन्यस्वभावत्वात्, अचित्रस्यानेकान्यत्वैकत्वायोगे तच्चित्रतया** ५

( स्वो॰ व्या॰ )

भ्युपगमे स्वभावभेदमन्तरेण ततस्ततो व्यावृत्त्यभ्युपगम इत्यर्थः, **तदेकत्वप्रसङ्गात्**—व्यावर्त्यमानैकत्वप्रसङ्गात् । प्रसङ्गश्च **तदन्यत्वहेतुत्वेनाविशेषात्** १० तस्य—वस्तुनो व्यावृत्तिमतः अन्यत्वहेतुत्वेनाविशेषाद् व्यावर्त्यमानानाम्; तद्धि तेभ्योऽन्यत्, तदन्यत्वस्य च त एव हेतवः, यदेव चैकमपेक्ष्य तदन्यत्वं तदेवापरमपि, न चैतत् तदभेदमन्तरेणेति हृदयम् । किमनेन कल्पितेनेत्याशङ्कानिरासायाह—**अन्यत्वस्य चाकल्पितत्वात्** तस्य व्यावृत्तिमतो व्यावर्त्यमानेभ्यः । इत्थं चैतदङ्गीकर्तव्यमित्याह—**कल्पितत्वे** तदन्यत्वस्य तेभ्यः **तत्त्वतः**—परमार्थतः **तदभावापत्तेः** तस्य—व्यावृत्तिमतोऽभावापत्तेः, व्यावर्त्यमानाऽनन्यत्वेन ॥ १५

पराभिप्रायमाह—**स्वहेतुत एव तत्**—वस्तु प्रस्तुतं **तदन्येभ्यो** व्यावर्त्यमानेभ्य-**अन्यत्वैकस्वभावम्** अन्यत्वमेवैकः स्वभावो यस्य तत् तथा **भवति** । **इति चेत्**, एतदाशङ्क्याह—नेत्यादि । न—नैतदेवम् । कुत इत्याह—**पटान्यत्वैकस्वभावान्यत्वे** पटान्यत्वमेवैकः स्वभावो यस्य वस्तुनः—अधिकृतस्य तत् पटान्यत्वैकस्वभावं तस्माद- २० न्यत्वं पटान्यत्वैकस्वभावान्यत्वं तस्मिन् पटान्यकत्वैकस्वभावान्यत्वे सति **पटवदिति** निदर्शनम्, **कट**-शकटा**दीनां** भावानां **तद्भावापत्तेः**—पटभावापत्तेः । आपत्तिश्च **तथास्वभावात्**—पटान्यत्वैकस्वभावात् अधिकृतवस्तुनः; **अन्यस्वभावत्वात्**

( विवरणम् )

(११-१२) **तद्धि तेभ्योऽन्यत्, तदन्यत्वस्य च त एव हेतव इति** । तत्— २५ अघ(प)टादि वस्तु हि[ः]—यस्मात् तेभ्यः—व्यावर्तमानेभ्यः पटादिभ्योऽन्यत्—भिन्नं वर्तते । यदि नामैवं ततः किमिति चेत् उच्यते—अन्यत्वस्य च त एव—घटादयो हेतवः, न तु घटप्रतिबद्धा अपि स्वभावाः ॥

१ 'एवैतत्तदाऽन्येभ्योऽन्य॰' इति क-पाठः । २ 'तदन्यत्वं च' इति क-पाठः । ३ 'यदेव' इति क-पाठः । ४ 'मतो भावा॰' इति क-पाठः । ५ 'न' इति पाठो नास्ति घ-पुस्तके । ६ 'पटादयो' इति क-पाठः । ७ 'ननु घट॰' इति क-पाठः ।

(मूलम्)

**एकान्तैकत्वाभावात्, पारम्पर्येणानेकजन्यजनकत्वाच्च, अन्यथा तद्भावासिद्धेः, परम्पराहेतुतोऽपि भावात्, तथाविधतद्भावभावि-
५ त्वोपपत्तेः, पुष्कलस्य चानन्तरेणाप्ययोगात् तदा तद्भावाभावा- दिति। अनन्तरजन्यत्वमेव परम्पराजन्यत्वमिति चेत्, न, परम्परा-**

(स्वो० व्या०)

कटादीनां पटभावापत्तिः। पटकटादिसमुदायान्यत्वैकस्वभावं कथं पटान्यत्वैकस्वभाव- मुच्यते इत्युच्यते–अचित्रस्यानेकान्यत्वैकत्वायोगात्। तथा चाह–**अचित्रस्येत्यादि**।
१० अचित्रस्य–विवक्षितवस्तुन एकस्वभावस्य **अनेकान्यत्वैकत्वायोगे** अनेकेभ्यः– पटादिभ्यः अन्यत्वमनेकान्यत्वं तस्यैकत्वमनेकान्यत्वैकत्वं तस्यायोगे, उक्तवत् तदे- कत्वप्रसङ्गेन तस्मिन् सति **तच्चित्रतया**–विवक्षितवस्त्वेकस्वभावस्य चित्रतया। किमित्याह–**एकान्तैकत्वाभावात्** विवक्षितवस्तुनः, एकस्वभावस्येति प्रक्रमः। हेत्वन्तरमाह–**पारम्पर्येणानेकजन्यजनकत्वाच्च** अनेकधर्मकत्वं वस्तुन इति।
१५ पारम्पर्येण–एकादिव्यवधानापेक्षया, जन्यश्च जनकश्च जन्यजनकः, अनेकेषां जन्यज- नकः अनेकजन्यजनकस्तद्भावस्तस्मात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**– एवमनभ्युपगमे **तद्भावासिद्धेः**–अधिकृतवस्तुभावासिद्धेः। असिद्धिश्च **परम्परा- हेतुतोऽपि** सकाशाद् **भावात्** अधिकृतवस्तुनः। न हि [२]पितामहाद्यभावेऽपि पौत्रादिभाव इति भावनीयम्। इहैव युक्तिमाह–**तथाविधतद्भावभावित्[३]वोप-**
२० **पत्तेः** तथाविधम्–एकादिव्यवधानवच्च तत् तद्भावभावित्वं च–परम्पराकारणभाव- भावित्वं चैतदेवोपपत्तिस्ततः। एतदप्यङ्गीकर्तव्यमित्याह–**पुष्कलस्य च** तद्भाव- भावितस्य **अनन्तरेणापि** कारणेन सह **अयोगात्**। अयोगश्च **तदा**–कारणादि- काले **तद्भावाभावात्**–कार्यादिभावाभावात्, अन्यथा जन्यजनकत्वाभावः सव्ये- तरगोविषाणवदिति। **अनन्तरजन्यत्वमेव** कार्यस्य **परम्पराजन्यत्वम्**।

२५ (विवरणम्)

(८) **कटादीनां पटभावापत्तिरिति**। तथाहि–पटः पटान्यत्वैकस्वभावात् स्तम्भादेः परार्थात् सकाशात् अन्यत्वे सति पटः सम्पन्न एवं कटादिरपि पटः (?) प्राप्नोति, तस्यापि पटान्यत्वैकस्वभावात् स्तम्भादेः सकाशात् व्यावृत्तत्वात्। न चैतद् दृष्टमिष्टं वा। अतः सामर्थ्यादभ्युपगन्तव्यमिदम्। यावत्प्रमाणेभ्यः पदार्थेभ्यः
३० पटो व्यावर्तते, तावन्तस्तस्य व्यावर्तका स्वभावभेदा इति॥

१ 'तयोर्विवक्षित' इति क–पाठः। २ 'पिताद्यभावे' इति ङ–पाठः। ३ 'त्वापत्तेः' इति ख–पाठः।

(मूलम्)

**जनकानामनन्तरजनकत्वायोगात्, तत्स्वभावादिभेदात्, तद्भेदेन च तत्तज्जनकत्वे न तदेव तत् ॥**

**एवं जनकत्वेऽपि योजनीयमिति तच्चित्रस्वभावता। सुखदुःखा- ५ दिहेतुत्वाच्च स्वभावभेदेन सुखादिजनकत्वात्, तेषां चाह्लादादि-रूपत्वेन ज्ञानादन्यत्वात्, तत्स्वरूपेण बाह्यावेदनात्, ज्ञानभावेऽपि क्वचित् तदभावात्, तथाऽनुभवसिद्धत्वात्। अज्ञानत्वे कथममीषामनुभव इति चेत्, सत्त्वादिवत् कथञ्चिज्ज्ञानाभेदात्, तदु-**

(स्वो० व्या०) १०

इति चेत्, एतदाशङ्क्याह—**न, परम्पराजनकानां** हेतूनाम् **अनन्तरजनकत्वायोगात्**। अयोगश्च **स्वभावादिभेदात्**। स्वभावभेदः प्रतीतः। 'आदि'शब्दात् कालभेदपरिग्रहः। **तद्भेदेन च**—स्वभावादिभेदेन च **तत्तज्जनकत्वे** तेषाम्—अनन्तरपरम्पराहेतूनां तज्जनकत्वे, अक्रमाद् विवक्षितकार्यजनकत्वे। किमित्याह—**न तदेव तत्** नानन्तरजन्यत्वमेव परम्पराजन्यत्वमिति निगमनम् ॥ १५

**एवमित्यादि**। एवम्—उक्तनीत्या **जनकत्वेऽपि योजनीयम्**। पारम्पर्येणानेकजनकत्वादधिकृतवस्तुनः, अन्यथा तद्भावासिद्धेः ततोऽनेकभावासिद्धेः, परम्पराहेतुतोऽपि भावादनेकेषाम्। एवं शेषमपि स्वधिया योजनीयम्। **इति**—एवं **तच्चित्रस्वभावता** तस्य—वस्तुनश्चित्रस्वभावता, अनेकधर्मकत्वमित्यर्थः।

हेत्वन्तरमाह—**सुखदुःखादिहेतुत्वाच्च**, अनेकधर्मकं वस्तु। कथमेतदेवमि- २० त्याह—**स्वभावभेदेन सुखादिजनकत्वाद्** वस्तुनः। 'आदि'शब्दाद् दुःखमोहज्ञानादिग्रहः। न ते तत्कृतज्ञानतोऽन्ये इत्याशङ्कापोहायाह—**तेषां च**—सुखादीनाम् **आह्लादादिरूपत्वेन** हेतुना, आह्लादरूपं सुखम्, परितापरूपं दुःखम्, असंवित्स्वभावो मोह इति कृत्वा। किमित्याह—**ज्ञानादन्यत्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**तत्स्वरूपेण**—आह्लादादिलक्षणेन ज्ञानेनैव, **बाह्यावेदनात्**। २५ इतश्चैतदेवं **ज्ञानभावेऽपि क्वचित्**—विरक्तादौ **तदभावात्**—आह्लादाद्यभावात्। अभावश्च **तथाऽनुभवसिद्धत्वात्**, आह्लादाद्यभावेनापि भाववेदनादित्यर्थः। **अज्ञानत्वे** सति **कथममीषां**—सुखादीनाम् **अनुभवः?** । **इति चेत्**, एतदाशङ्क्याह—**सत्त्वादिवदि**ति निदर्शनम्। 'आदि'शब्दाज्ज्ञेयत्वादिग्रहः। **कथञ्चिज्ज्ञानाभेदात्**। तथाहि—न सत्त्वमेव ज्ञानम्, सत्त्वमात्रत्वे ज्ञानस्य सर्वत्र ३०

१ 'तदुग्रत्वेन' इति क-पाठः। २ सर्वत्रायमेव पाठः। ३ 'देव किमित्याह' इति क-पाठः। ४ 'शब्दात् प्रमेयत्वादि०' इति ङ-पाठः।

( मूलम् )

**दग्रत्वेन तथा तज्ज्ञानरञ्जनात्, उभयोस्तत्स्वभावत्वात्, युगपत् प्रवृत्त्यविरोधात्, सुखादिज्ञाने तथाऽनुभवसिद्धत्वात्, तत्तद्वचन-**
**५ सिद्धेश्च "आविर्भावतिरोभावधर्मकं वस्तु न कृतार्थे प्रकृतिप्रवृत्तिः तद्विरागात् तद्वृत्तिसङ्क्षयाच्च" इति वचनप्रामाण्याच्च ॥ तथा "अनित्यता सर्वसंस्कृतानां दुःखता, सर्वसाश्रवाणां शून्याना-**

( स्वो० व्या० )

ज्ञानप्रसङ्गः । अथ च ज्ञानेन तदात्मीयमनुभूयत इति । युक्त्यन्तरमाह–**तदुदग्र-**
१० **त्वेन**–सुखाद्युदग्रत्वेन **तथा**–एकलोलीभावेन **तज्ज्ञानरञ्जनात्**–सुखादिज्ञान-रञ्जनात् । एतच्चैवमित्थमित्याह–**उभयोः**–सुखादिज्ञानयोः **तत्स्वभावत्वात्**–रञ्ज्यरञ्जकस्वभावत्वात् । अत एव **युगपत् प्रवृत्त्यविरोधात्**, सुखादीनां ज्ञानस्य चेति प्रक्रमः । अविरोधश्च **सुखादिज्ञाने तथा**–कथञ्चिद् भिन्नसुखादिवेदकत्वेन **अनुभवसिद्धत्वात्** कारणात्, अमीषां अनुभव इति योगः । हेत्वन्तरमाह–
१५ **तत्तद्वचनसिद्धेश्च** हेतोः, अनेकधर्मकं वस्तु । तस्मिंस्तस्मिन् साङ्ख्यादिवचने यथा सिद्धं तत् तथाऽभिधातुमाह–**आविर्भावे**त्यादि । आविर्भावः–प्रकटभावः, **तिरोभाव**स्त्वप्रकटभावः, एतद्**धर्मकं वस्तु** प्रधानाख्यमित्यनेकधर्मकता । तथा **न कृतार्थे** पुंसि **प्रकृतिप्रवृत्ति**र्महदादिभावेन **तद्विरागात्**–पुरुषविरागात् **तद्वृत्तिसङ्क्षयाच्च**–प्रकृतिवृत्तिसङ्क्षयाच्च, ततश्चाविरक्ते प्रवृत्तिर्विरक्ते वृत्तिसङ्क्षयश्च,
२० पुरुषोऽपि विरक्तश्चाविरक्तश्चेत्यनेकधर्मकता **इति वचनप्रामाण्यात्** ॥

**तथाऽनित्यता**–नश्वरता **सर्वसंस्कृतानां**–सर्वकृतकानां **दुःखता**–बाधा-युक्तता दुःखपरिणाम-दुःखसंस्कार-दुःखापेक्षया यथासम्भवं **सर्वसाश्रवाणां**–

( विवरणम् )

(९) **अथ च ज्ञानेन तदात्मीयमनुभूयत**[3][4] इति । अयमत्राभिप्रायः–यथा
२५ ज्ञानेन कथञ्चिद् भिन्नमपि स्वसत्त्वमनुभूयते, एवं सुखादयोऽपि धर्मव्यतिरिक्ता अपि ज्ञानेन वेद्यन्त इति ॥

(२२) **दुःखपरिणामदुःखसंस्कारदुःखापेक्षये**ति । यत् कर्म इहलोकपरलोकयो-र्दुःखफलं[6] तद् दुःखं यथा धीवरादीनां, परिणामदुःखं यत् तथाविधानाचारवतां सम्प्रति सुखरूपतया वेद्यमानमपि परिणतौ नरकादिफलं यथा तथाविधभोगिनां, संस्कारदुःखा-
३० पेक्षयेति यद्[5] बाह्यसुखकारणसम्पत्तावपि शोकविषादान्तरोप्लववशेनास्वास्थ्यमिति ॥

१ 'तत् तद्वृत्ति०' इति ग–पाठः । २ 'सर्वथास्रवाणां' इति ङ–पाठः । ३ 'ज्ञाने न च तदा०' इति क–पाठः । ४ 'भूय इति' इति क–पाठः । ५ 'भागिनां संस्कारदुःखं यद् बाह्यं सुख०' इति च–पाठः । ६ 'यत् कर्म इहपरलोकयोर्दुःखफलम्' इति क–पाठः ।

(मूलम्)

त्मकते सर्वधर्माणामविकारिणी तथाता" इति वचनप्रामाण्याच्च इत्यनेकधर्मकं वस्तु ॥

इह च ज्ञानावरणाद्याच्छादितः छद्मस्थः प्रमाता, बोधविशेष- ५ दर्शनात् । तस्याहेतुकत्वेऽप्यप्रयोगात्(?), सदाभावादिप्रसङ्गात्, बोधमात्रस्याहेतुत्वात्, भेदकाभावे विशिष्टत्वाभावात्, न्यायतोऽतिप्रसङ्गात्, तद्भावे च तस्यैवावरणत्वात्, इति तथाविधनयनपटला-

(स्वो० व्या०)

सर्वरागादिक्लेशवतां शून्यानात्मकते—तत्त्वतस्तुच्छरूपे सर्वधर्माणां—व्यावृत्ति- १० द्वारपरिकल्पितानामनित्यदुःखादि[१]धर्मतोऽनेकधर्मकता । तथा अविकारिणी—उपादाननिमित्तकृतविकारशून्या तथाता—बुद्धता तथाभावरूपा प्राग्विकारभावेनानेकधर्मता इति वचनप्रामाण्याच्चेति—एवमनेकधर्मकं वस्तु । एते च सर्व एव वस्तुनोऽनेकविज्ञानाद्युपाधिभेदभिन्नाः स्वभावहेतुभेदा इति गमकाः । तथाहि—अनेकविज्ञानजनकत्वं तत्स्वभावः । स च कथञ्चित् त[२]द्भिन्नतयाऽनेकध[३]र्मकतया व्याप्तः, १५ अन्यथा ततस्ततोऽन्यत्वाद्यभावः । एवं शेषेष्वपि हेतुषु भावनीयमिति ॥

इह चेत्यादि । इह च—अनेकधर्मके वस्तुनि जगति वा । किमित्याह—ज्ञानावरणाद्याच्छादितः—तत्पुद्गलप्रतिबद्धसामर्थ्यः, छद्मस्थः प्रमाता—प्राणी । कुत एतदेवमित्याह—बोधविशेषदर्शनात्—बोधभेदोपलब्धेः इह वस्तुनि तस्य—बोधविशेषस्य, अहेतुकत्वे सति अयोगात्, अयोगश्च सदाभावादि- २० प्रसङ्गात् । 'आदि'शब्दादभावग्रहः । बोधमात्रस्याहेतुत्वाद् बोधविशेषं प्रति भेदकाभावे—तदन्यवस्त्वभावे विशिष्टत्वाभावात् बोधमात्रस्य न्यायतः, अतिप्रसङ्गात् सर्वबोधविशिष्टत्वापत्त्या । तद्भावे च—भेदकभावे च तस्यैव—

(विवरणम्)

(१०-११) व्यावृत्तिद्वारपरिकल्पितानामिति । ये हि घटादावर्थ्येरन् त[४]स्तदर्थ- २५ व्यावृत्तिवशेन मूर्तत्व-प्रमेयत्व-सत्त्वादयो धर्मास्ते शून्या वन्ध्यासुतवत् स्वभावरहिताः । अत एवानात्मानः क्ष[५]णान्तरेष्वनन्वयिनः । अत्रापि श[६]ब्दद्वयोच्चारणान्यथाऽनुपपत्तेरभिधेयभेदेन स्वभावद्वयं धर्माणां सिद्धमिति ॥

(१२) तथाभावरूपेति । निर्मलज्ञानसन्तानरूपा ॥

१ 'भेदतो०' इति क–पाठः । २ 'तद्भिन्नया' इति घ–पाठः । ३ 'धर्मतया' इति क–पाठः । ४ 'तदर्थं०' इति क–पाठः । ५ 'क्षणान्तरेष्वतत्त्वयिनः' इति च–पाठः । ६ 'शब्दे द्वयोच्चारणेऽन्यथा०' इति क–पाठः ।

( मूलम् )

**दिकल्पं तज्ज्ञानविशेषकारि विरुद्धचेष्टादिनिमित्तं ततोऽन्यत्[1] तदिति तत्त्ववादः । क्षयोपशमभावश्चास्य कालपरिणत्या विशिष्टा- ५ नुष्ठानतश्च तत्तत्स्वभावतया नयनपटलादिह्रासरूपः प्रतिप्राण्येव यथोचितं तथाविधचित्रावबोधलिङ्गावसेयः । तस्मिंश्च सति तत्- सामर्थ्यत एव विषयस्य तज्ज्ञेयत्वपरिणतिभावात्, विषयिणोऽपि**

( स्वो० व्या० )

भेदकस्य **आवरणत्वादिति**–एवं **तथाविधनयनपटलादिकल्पं** तथाविधं- १० स्वच्छं नैकान्ततो बोधविघातकारि नयनपटलं प्रतीतम् । 'आदि'शब्दाच्छ्रोत्रादि- मलग्रहः । एतत्कल्पम्–एतत्तुल्यं **तज्ज्ञानविशेषकारि** तस्य–छद्मस्थप्रमातुर्बोध- विशेषकरणशीलं क्षयोपशमतो भावाभावाभ्यामिति ज्ञानावरणव्यापार उक्तो वेदितव्यः । **विरुद्धचेष्टादिनिमित्तमित्यनेन** त्वादिशब्दात् क्षिप्तचारित्रमोहनीयादिव्यापार इति । **ततः**–छद्मस्थप्रमातुः तद्बोधादेर्वा **अन्यत्**–अर्थान्तरभूतं **तत्**–ज्ञानावरणा- १५ दिकर्म **इति तत्त्ववादः । क्षयोपशमभावश्चास्य**–कर्मणः **कालपरिणत्या** मन्दानुभावस्य **विशिष्टानुष्ठानतश्च** तीव्रविपाकस्य, अथवा कालपरिणत्या विशिष्टानुष्ठानतश्चेति समुच्चयपक्षः । **तत्तत्स्वभावतया** तस्य–कर्मणः तत्स्वभाव- तया–कालपरिणत्यादिक्षयोपशमस्वभावतयेत्यर्थः, **नयनपटलादिह्रासरूपः** क्षयो- पशमभावस्तदेकान्तानिवृत्तेरित्थं निदर्शनमिति भावनीयम्, **प्रतिप्राण्येव** प्राणिनं २० प्राणिनं प्रति प्रतिप्राण्येव **यथोचितमिति** क्रियाविशेषणम्, यस्य य उचितः **तथा- विधचित्रावबोधलिङ्गावसेयः**, तथाविधः–उच्चावचादिभेदेन चित्रावबोधस्तत्- तद्विषयभेदत एतल्लिङ्गावसेयः क्षयोपशमभावः । **तस्मिंश्च सति**–क्षयोपशमभावे **तत्सामर्थ्यत एव**–क्षयोपशमभावसामर्थ्यत एव, अवग्रहादिरूपमिन्द्रियज्ञानमुप- जायते इति योगः । कथमित्याह–**विषयस्य**–घटरूपादेस्तज्ज्ञेयत्वपरिणति- २५ **भावात्**–विवक्षितेन्द्रियज्ञानज्ञेयत्वपरिणतिभावाद् **विषयिणोऽपि**–अधिकृतेन्द्रिय-

( विवरणम् )

(१२) **क्षयोपशमतो भावाभावाभ्यामिति** । क्षयोपशमो हि वेदितानां ज्ञाना- वरणकर्मपुद्गलानामभावेन शेषाणां तु केषाञ्चिद् विष्कम्भितोदयत्वेनान्येषां चाप- नीतावारकस्वभावत्वेनोच्यते । अतः क्षयोपशमापत्तौ ज्ञानावरणकर्मपुद्गलानां भावा- ३० भावौ इति पर्यालोच्योक्तं क्षयोपशमतो भावाभावाभ्यामिति ॥

१ 'ऽन्यदिति' इति क–पाठः । २ 'भावस्य' इति क–पाठः । ३ 'आवरकत्वा०' इति ङ–पाठः । ४ 'स्वस्थं नैकान्ततो' इति घ–पाठः । ५ 'चेष्टादिनिमित्त्यनेन' इति क–पाठः । ६ 'लिङ्गोऽवसेयः' इति क–पाठः । ७ 'तस्मिन् सति' इति क–पाठः । ८ 'इतो योगः' इति पाठः । ९ 'अपनीता- वारक०' इति च–पाठः ।

(मूलम्)

**तज्ज्ञातृत्वपरिणत्युपपत्तेः, उभयोस्तथास्वभावत्वात्, अन्यथा तदनुपपत्तेः, अतिप्रसङ्गात्, नयनपटलादिह्रास इव स्थूरावबोधादि, तदानुरूप्यत आविद्वदङ्गनादिसिद्धं तथाविधवस्तुग्राह्येवावग्रहेहावायधारणारूपं मतिज्ञानसञ्ज्ञितमिन्द्रियज्ञानमुपजायते "तदिन्द्रियानिन्द्रियनिमित्तम्" [1] इति वचनात् ॥** ५

**तत्राऽव्यक्तं यथास्वमिन्द्रियैर्विषयाणामालोचनावधारणमवग्रहः ।**

---

(स्वो० व्या०)

ज्ञानस्य **तज्ज्ञातृत्वपरिणत्युपपत्तेः**—प्रस्तुतविषयज्ञातृत्वपरिणत्युपपत्तेः । उपपत्तिश्च **उभयोः**—विषय-ज्ञानयोः **तथास्वभावत्वात्**—तज्ज्ञेयत्वतज्ज्ञातृत्वभवनस्वभावत्वात्, **अन्यथा**—तत्तत्स्वभावत्वमन्तरेण **तदनुपपत्तेः**—विषय-विषयिणोः तज्ज्ञेयत्वतज्ज्ञातृत्वपरिणत्यनुपपत्तेः । अनुपपत्तिश्च **अतिप्रसङ्गात्** तत्तत्स्वभावतामन्तरेण तज्ज्ञेयत्व-तज्ज्ञातृत्वभावे तद्वत् तदन्तरापत्त्यतिप्रसङ्ग इति भावनीयम् । **नयनपटलादिह्रास इव** इति निदर्शनम् । **स्थूरावबोधादि**, 'आदि'-शब्दात् तथाविधचेष्टाग्रहः । **तदानुरूप्यतः**, प्रक्रमात् क्षयोपशमभावानुरूप्येण, **आविद्वदङ्गनादिसिद्धम**विप्रतिपत्त्या **तथाविधवस्तुग्राह्येव**—तज्ज्ञेयत्वपरिणतवस्तुग्राह्येव, न त्वविषयं सदाभावादिप्रसङ्गेन, **अवग्रहेहावायधारणारूपं** परिस्थूरजातिभेदेन **मतिज्ञानसञ्ज्ञितं** स्वतन्त्रे **इन्द्रियज्ञानमुपजायते** सविकल्पमेव । इन्द्रियज्ञानता चास्य **"तदिन्द्रियानिन्द्रियनिमित्तम्"** [2] **इति वचनात्** तत्—मतिज्ञानं इन्द्रियानिन्द्रियनिमित्तम्, अनिन्द्रियं—मनः, एतन्निमित्तमिति सविकल्पकमेतत् ॥ १० १५ २०

अवग्रहस्वरूपाभिधित्सयाऽऽह—**तत्राव्यक्तमि**त्यादि । तत्रेति पूर्ववत्, अव्यक्तम्—अस्फुटम्, आलोचनावधारणमिति योगः । तदेव विशिष्यते **यथास्वमिति** । यथाऽऽत्मीयम् **इन्द्रियैः**—स्पर्शनादिभि**र्विषयाणां**—स्पर्शादीनां यथाऽऽत्मीयं यो यस्य विषय इत्यर्थः, **आलोचनावधारणमिति** आङ् मर्यादायां लोचनं—दर्शनम् । एतदुक्तं भवति—मर्यादया सामान्यस्यानिर्देश्यस्य स्वरूपनामादिकल्पनारहितस्य दर्शनम्—आलोचनं तदेवावधारणमालोचनावधारणम् । एतत् **अवग्रहोऽभि**धीयते । अवग्रहणमवग्रह इत्यन्वर्थयोगादिति ॥ २५

---

१-२ **तत्त्वार्थाधिगमसूत्रे** (अ० १, सू० १४) ।

**अवगृहीते विषयार्थैकदेशाच्छेषानुगमनेन निश्चयविशेषजिज्ञासा चेष्टा ईहा। अवगृहीते विषये सम्यगसम्यगिति गुणदोषविचारणाव्यवसायापनोदोऽवायः। धारणा प्रतिपत्तिः, यथास्वं मत्यवस्थानमवधारणं च। न चैकत्वोदवबोधस्येह चातुर्विध्याभावः, सर्वथैकत्वा-**
५

( स्वो० व्या० )

एवमवग्रहं कथयित्वा ईहास्वरूपं कथयन्नाह–**अवगृहीत** इत्यादि। अवगृहीत इत्यनेन क्रमं दर्शयति। अवगृहीते सामान्ये ईहा प्रवर्तते। तामाह–**विषयार्थैके**त्यादि। विषयः–स्पर्शादिः, स एवार्यमाणत्वादर्थो विषयार्थस्तस्यैकदेशः सामान्यम-
१० निर्देश्यादिरूपं तस्माद् विषयार्थैक**देशात्** परिच्छिन्नादनन्तरं स्पर्शमात्रग्रहे तस्य सर्पमृणालस्पर्शसाधर्म्यात् **शेषानुगमनेन** सद्भूतासद्भूतोष्णत्वादिविशेषत्यागोपादानाभिमुख्यरूपेण, न संशये इव सर्वात्मपरिकुण्ठचित्तभावतोऽननुगमेन। किमित्याह–**निश्चयविशेषजिज्ञासा चेष्टे**ति। निश्चीयतेऽसाविति निश्चयः मृणालस्पर्शादिः, स एव विशेष्यतेऽन्यस्मादिति विशेषः, तस्य ज्ञातुमिच्छा जिज्ञासा तया
१५ चेष्टा–बोधः स्वतत्त्वात्मव्यापाररूपा **ईहा** उच्यते॥

एवमीहामभिधायावायमभिधातुमाह–**अवगृहीत** इत्यादि। अनेनापि क्रममाचष्टे। अवगृहीते **विषये**–स्पर्शसामान्यादौ ततः **सम्यगसम्यगि**ति मृणालस्पर्श इत्येवमादानाभिमुख्यं सम्यक्, तत्र तद्भावानुगुण्यात्, न अहिस्पर्श इत्येवं परित्यागाभिमुख्यमसम्यक्, तत्र तद्भाववैगुण्यात्। **इति**–एवमीहायां प्रवृत्तायां सत्यां
२० ततः किमित्याह–**गुणदोषविचारणाव्यवसायापनोदोऽवाय** इति। इह मृणालेऽसाधारणो धर्मो गुणः, तत्रासम्भवी तु दोषः, तयोर्विचारणा–मार्गणा तया व्यवसायः–विमलतरबोधः स एवापनोदः मृणालस्पर्श एवेति निश्चयादपनुदति तत्रेहामिति कृत्वा अवाय इत्ययमेवंविधोऽपनोदोऽवाय इति। अवैतीत्यवायः, निश्चयेन परिच्छिनत्तीत्यर्थः॥

२५ एवमवायमभिधायाधुना धारणामभिधित्सयाऽऽह–**धारणे**त्यादि। धारणेति लक्ष्यं **प्रतिपत्तिः**–उपयोगाप्रच्युतिः। **यथास्वमि**ति यथाविषयं यो यः स्पर्शादिविषयः मृणालस्पर्शानुभवस्यानाश इत्यर्थः। तथा **मत्यवस्थानमि**त्युपयोगान्तरेऽपि

( विवरणम् )

३० (१८) **तत्र तद्भावानुगुण्यादि**ति। तत्र–विज्ञाने तद्भावस्य–मृणालस्पर्शसद्भावलक्षणस्यानुगुणत्वात्॥

१ 'गृहीतविषया०' इति **ग**-पाठः। २ 'त्वाद् बोध०' इति **घ**-पाठः। ३ 'सद्भूतोद्भूत्वादि०' इति **क**-पाठः। ४ 'विचारणाध्यवसाया०' इति **ङ**-पाठः। ५ 'मृणाले साधारणे धर्मो' इति **ङ**-पाठः।

( मूलम् )

**सिद्धेः, क्रमेण भावात् संपूर्णभवनेऽनियमात्। दृश्यत एवेहाद्य-भावेऽपि क्वचिदवग्रहमात्रम्, तथा निरवायेहा। अनिर्द्धारणश्चा-वायः, तथा तदनुभवसिद्धेः। अत एवैकत्वमपि, कथञ्चिदेकाधि-** ५ **करणत्वात्, तत्रैव प्रवृत्तेः, तद्भेद्यधर्माणामितरेतरानुवेधात्। तथा च यदिदं तदा दृष्टमपि नोपलक्षितम्, ईषल्लक्षितमपि न सम्यग् ज्ञातम्, तदिदानीमवधारितम्, इत्यस्ति व्यवहारः। न चायं भ्रान्तः,**

---

( स्वो० व्या० )

शक्तिरूपाया मतेः क्वचिदवस्थानम्, तथाऽ**वधारणं चेति** कालान्तरानुभूतविषय- १० गोचरं स्मृतिज्ञानमिति भावः। एवमेतेनाविच्युति-वासना-स्मरणरूपा त्रिविधा धारणेत्युक्तं भवति ॥

**न चेत्यादि**। न च **एकत्वादवबोधस्य** अवबोधसामान्यापेक्षया इह—मतिज्ञाने इन्द्रियप्रत्यक्षे **चातुर्विध्याभावो**ऽवग्रहादिर्भेदेन। कुत इत्याह—**सर्वथैकत्वा-सिद्धेः** अवबोधस्य। असिद्धिश्च **क्रमेण भावात्** अवग्रहादीनाम्, तथा १५ **सम्पूर्णभवने**ऽवग्रहादारभ्य धारणान्तभवने **अनियमात्** कारणात्। अधिकृतोप-दर्शनायाह—**दृश्यत** इत्यादि। दृश्यत **एव** लोके **ईहाद्यभावेऽपि**। 'आदि'शब्दा-दवायादिग्रहः। **क्वचित्**—**देवदत्तादौ अवग्रहमात्रम्, तथा निरवायेहा** दृश्यते क्वचित्, **निर्द्धारणश्चावायो** दृश्यते क्वचित्, **तथा तदनुभवसिद्धेः**—केवलत्वेनावग्रहादीनामनुभवसिद्धेः कारणात्, न चातुर्विध्याभावः। **अत एव** २० तथातदनुभवसिद्धेरेव **एकत्वमपि** अवग्रहादीनाम्। युक्तिमाह—**कथञ्चिदेकाधि-करणत्वात्** तत्तद्धर्मग्रहणेन। अत एवाह—**तत्रैव प्रवृत्तेः**—अवग्रहादिगृहीत एव ईहादिप्रवृत्तेः, कथञ्चिदिति वर्तते। एतत्स्पष्टनायैवाह—**तद्भेद्यधर्माणाम्**—अवग्रहा-दिवेद्यस्वभावानाम् **इतरेतरानुवेधात्**—अन्योन्यानुवेधात्। एतदेव[3] भावयति **तथा चेत्यादिना**। तथा च **यदिदं तदा**—तस्मिन् काले **दृष्टमपि** सदि- २५ त्यनेनावग्रहव्यापारमाह। **नोपलक्षितं**—न सामीप्येन तदितरधर्मालोचनया लक्षि-तम्, अनेनेहाव्यापारनिषेधमाह। तथा **ईषल्लक्षितमपि** ईहया, **न सम्यग्-ज्ञातमवायरूपेण तदिदानीं** यन्न सम्यग् ज्ञातं तत् साम्प्रतम्, **अवधारितं**—सम्यग् विज्ञाय चेतसि स्थापित**मित्यस्ति व्यवहारः** तद्भेद्यधर्माणामितरेतरानुवेध-

---

१ 'सम्पूर्णे भवने' इति क-पाठः। २ 'मात्रः तथा' इति ङ-पाठः। ३ 'एतदेव कथयति' इति ङ-पाठः। ४ 'ग्रहापायमाह' इति क-पाठः।

(मूलम्)

**अविगानेन प्रवृत्तेः। अत इदमेकानेकमन्वयव्यतिरेकवद् दीर्घमपि कालसौक्ष्म्यात् तथाऽवभासत इति ॥**

५ **आह–एवमपि तत्तद्धर्मावग्रहणादेः सर्वेषामवग्रहादित्वप्रसङ्गः। न, स्थूरेतरधर्मालम्बनावरणभेदतः क्रमभवनेन तथाप्ररूपणात्, तत्त्वतस्त्वयमदोष एव। एवं चावग्रहादिभावे तत्तद्धर्मबोधात्**

(स्वो० व्या०)

व्यवस्थापकः। **न चायं**–व्यवहारो भ्रान्तः। कुत इत्याह **अविगानेन प्रवृत्तेः**

१० कारणात्। प्रकृतयोजनया निगमनमाह **अत** इत्यादिना। अतः–अस्मात् कारणात् **इदं**–मतिज्ञानसञ्ज्ञितमिन्द्रियज्ञानम्, **एकानेकम**वग्रहादिसमुदायात्मकत्वेन **अन्वयव्यतिरेकवद**नुवृत्तिव्यावृत्तिस्वभावं **दीर्घम**प्यवग्रहादिक्रमभावित्वेन **कालसौक्ष्म्यात्** हेतोः, **तथाऽवभासते,** प्रक्रमाद् युगपदिव अवभासते, न तु युगपदेवेत्यर्थः ॥

१५ **आह–एवमपि** अवग्रहादिभावे **तत्तद्धर्मावग्रहणादेः** 'आदि'शब्दात् तत्तद्धर्मासमर्थपर्यालोचनादिग्रहः। **सर्वेषाम्**–अवग्रहादीनां मतिभेदाना**मवग्रहादित्वप्रसङ्गः** अन्वर्थयोगेन। 'आदि'शब्दादीहादिग्रहः। एतदाशङ्क्याह–**नेत्यादि**। न–नैतदेवम्। कुत इत्याह–**स्थूरेतरधर्मालम्बनावरणभेदतः** कारणात्। स्थूरेतराश्च ते धर्माश्च स्थूरेतरधर्माः, इतरे–सूक्ष्माः, त एवालम्बनं एतच्चावरणं चेति

२० विग्रहस्तयोर्भेदस्तस्मात् **क्रमभवनेन तथाप्ररूपणात्**–अवग्रहादित्वेन प्ररूपणात्। तथाहि–स्थूरधर्मालम्बनोऽवग्रहः, सूक्ष्मधर्मालम्बना ईहादयः, एवमन्यदवग्रहावरणम्, अन्यच्चेहादेः। इह चावरणग्रहणं क्षयोपशमोपलक्षणमवसेयम्। इत्थमुपन्यासस्तु भिन्नमेव तद्बोधावारकमिति निदर्शनार्थम्, क्रमभवनं तु प्रसाधितमेवेतस्तथाप्ररूपणं न्याय्यमेवेति भावनीयम्। **तत्त्वतस्त्वयं** सर्वेषामवग्रहादित्वप्रसङ्गः

२५ **अदोष एव,** अन्वर्थयोगतः, तथाघटनादिति। **एवं च**–उक्तनीत्या **अवग्रहादिभावे,** सन्न्यायत एव सिद्धं सविकल्पकं प्रत्यक्षमिति योगः। कुत इत्याह–**तत्-**

(विवरणम्)

(२२-२३) **इत्थमुपन्यासस्तु भिन्नमेव तद्बोधावारकमिति निदर्शनार्थमिति।** इत्थमुपन्यासस्तु क्षयोपशमभेदभणनं परित्यज्यावरणभेदभणनलक्षणः।

३० पुनः किमर्थमित्याह–भिन्नमेव–पृथगेव तद्बोधावारकम्–अवग्रहादिमतिज्ञानभेदावारकं ज्ञानावरणकर्म इत्येतस्यार्थस्य निदर्शनमिति ॥

१ 'स्वभावं पदार्थमप्यव०' इति क–पाठः। २ प्रेक्ष्यतां १७९ तमं पृष्ठम्।

(मूलम्)

केषाञ्चित् तथास्वभावत्वेनाक्षरानुगतबोधबोध्यत्वात्, तेषु अन्यथा नीलादाविव पीतादित्वेन बोधाप्रवृत्तेः, क्षयोपशमसामर्थ्यतोऽक्षर-प्रायोग्यद्रव्यग्रहणाविरोधात्, तथाविधानुभवस्यान्यथाऽनुपपत्तेः, ५ स्वसंवेद्यत्वेन प्रतिक्षेपायोगात् सन्न्यायत एव सिद्धं सविकल्पकं प्रत्यक्षमिति ॥

एतेन यत् परेणाभ्यधायि 'इतश्चैतदेवं, अन्यथा स्वाभिधानवि-शेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम्। अस्त्वेवमपि को दोष इति चेत्[1] एतदाशङ्क्य 'निवृत्तेदानीमिन्द्रियज्ञानवार्त्ता १० अभिधानविशेषस्मृतेरयोगात्'[2] इत्यादि, तदपि परिहृतमेवावगन्त-

(स्वो० व्या०)

तद्धर्मबोधात्—वस्तुसदादिधर्मबोधात्। तथा केषाञ्चिद् धर्माणां तथास्वभाव-त्वेन हेतुना अक्षरानुगतबोधबोध्यत्वात् ईहादिगोचराणां विशिष्टमनोऽनु-गतत्वोपलक्षणमेतत्। यदि नामैवं ततः किमित्याह—तेषु—अक्षरानुगतबोधबोध्येषु १५ धर्मेषु अन्यथा नीलादाविव वस्तुनि पीतादित्वेन रूपेण बोधाप्रवृत्तेः कारणात्। कुतस्तत्राक्षरप्रायोग्यद्रव्यग्रहणमित्याशङ्कानिरासायाह—क्षयोपशमे-त्यादि। क्षयोपशमसामर्थ्यतः कारणात् अक्षरप्रायोग्यद्रव्यग्रहणाविरो-धात्। स हि क्षयोपशम एव तादृशो यो भाषाद्रव्याणि ग्राहयतीत्यर्थः। इत्थं चैतदङ्गीकर्तव्यमित्याह—तथाविधानुभवस्य—अक्षरानुगतबोधरूपस्य अन्यथा— २० अक्षरप्रायोग्यद्रव्यग्रहणमन्तरेण अनुपपत्तेः कारणात्। अस्य च स्वसंवेद्य-त्वेन हेतुना प्रतिक्षेपायोगात्। किमित्याह—सन्न्यायत एव उक्तनीत्या सिद्धं सविकल्पकं प्रत्यक्षमिति ॥

एतेन—अनन्तरोदितेन न्यायेन यत् परेण—पूर्वपक्षवादिना अभ्यधायि—अभि-हितं पूर्वपक्षग्रन्थे[3]। यदभ्यधायि तदाह—इतश्चैतदेवम्, अन्यथा स्वाभिधान- २५ विशेषणापेक्षा एवार्था विज्ञानैर्व्यवसीयन्त इति प्राप्तम्, अस्त्वेवमपि को दोषः इति चेत्, एतदाशङ्क्य निवृत्तेदानीमिन्द्रियज्ञानवार्ता अभिधानविशेषस्मृतेरयोगादित्यादि व्याख्यातमेवैतदिति न व्याख्यायते।

(विवरणम्)

(१६) बोधाप्रवृत्तेरिति। ये ह्यक्षरानुगतबोधबोध्या धर्मास्तेषु स्वभावादेव ३० निर्विकल्पज्ञानलक्षणो बोधो न प्रवर्तत एवेति ॥

१ प्रेक्ष्यतां १३९तमं पृष्ठं १४०तमं च। २ दृश्यतां १४०तमं पृष्ठम्। ३ १३९तमे पृष्ठे १४०तमे च।

( मूलम् )

**व्यम्, अभिधानविशेषयोजनाऽसिद्धेर्वाच्यतद्बोधयोरेव तत्स्वभावत्वात्। नहि सर्वत्रैव [1]स्मृत्यपेक्षो वाच्ये वाचकप्रयोगः, तथाऽननु-
५ भवात्, अन्तर्जल्पाकारबोधोपलब्धेः, प्रयोगे उच्चार्यमाणस्य शब्दान्तरत्वात्, तस्यापि तद्बलेनैव प्रवृत्तेः, तदसम्पृक्तबोधवताऽनुच्चारणात्। प्रष्ट्रा व्यभिचार इति चेत्, न, तस्यापि प्रश्नाभिलापसम्पृक्तबोधवत्त्वात्, अन्यथा प्रश्नाभावात्, वस्तुनश्चानेकस्वभावत्वेन तस्याप्यभिधेयत्वात्, सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्द-**

---

१० ( स्वो० व्या० )

**तदपि परिहृतमवगन्तव्यम्** । कथमित्याह–**अभिधानविशेषयोजनाऽसिद्धेः** कारणात् । असिद्धिश्च **वाच्यतद्बोधयोरेव**-अर्थतज्ज्ञानयोरेव **तत्स्वभावत्वात्** प्रक्रमात्, स्मृत्यनपेक्षाभिधानविशेषप्रवर्तनस्वभावत्वात् । अमुमेवार्थं स्पष्टयन्नाह–**न हीत्यादि** । न यस्मात् **सर्वत्रैव, वाच्य** इति योगः, **स्मृत्यपेक्षो वाचक-
१५ प्रयोगः** । कुतो नेत्याह–**तथा**–स्मृत्यपेक्षप्रयोगरूपत्वेन **अननुभवात्** कारणात् । कथमननुभव इत्याह–**अन्तर्जल्पाकारबोधोपलब्धेः** । इह प्रक्रमे तत्त्वतोऽस्यैव स्मृतित्वादित्यर्थः । तथा चाह–**प्रयोगे** भाषाविषये **उच्चार्यमाणस्य** शब्दस्य **शब्दान्तरत्वात्** । अन्तर्जल्पाकारबोधशब्दमधिकृत्य **तस्यापि**–प्रयोगे उच्चार्यमाणस्य शब्दान्तरस्य **तद्बलेनैव**–अन्तर्जल्पाकारबोधशब्दसामर्थ्येनैव **प्रवृत्तेः** ।
२० कुत एतदेवमित्याह–**तदसम्पृक्तबोधवता**–शब्दासम्पृक्तबोधवता, अविकल्पबोधवतेत्यर्थः, भाणकेनेति प्रक्रमः । किमित्याह–**अनुच्चारणात्** कारणात् **प्रष्ट्रा**–पुरुषेण **व्यभिचारः,** स हि तदसम्पृक्तबोधवान् तत् पृच्छन् समुच्चारयति, अन्यथा प्रश्नायोगः [2]तदज्ञानादेव । **इति चेत्**, एतदाशङ्क्याह–**न, तस्यापि**–[3]प्रष्टुः **प्रश्नाभिलापसम्पृक्तबोधवत्त्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–एवमनभ्युप-
२५ गमेऽविकल्पबोधवतः **प्रश्नाभावात्** । तस्मात् किञ्चिज्जानन् किञ्चिदजानानस्तत्रैव पृच्छतीति भावनीयम् । **वस्तुनश्च**–वाच्यस्य **अनेकस्वभावत्वेन** हेतुना । **तस्यापि**–प्रश्नशब्दस्य **अभिधेयत्वात्** कारणात्। अभिधेयत्वं च **सर्ववस्तूनामेव**

---

( विवरणम् )

(२७) **प्रश्नशब्दस्याभिधेयत्वादि**ति । प्रश्नशब्दस्यापि किमिदं[4]मित्या[ह]देस्तद्वस्तु
३० कथञ्चिद् वाच्यमित्यर्थः ॥

---

१ 'स्मृत्यपेक्ष्यो वाच्ये' इति क–पाठः । २ 'तज्ज्ञानादेव' इति क–पाठः । ३ 'द्रष्टुः प्रश्ना०' इति क–पाठः । ४ 'मितित्त्यानुदेस्तद् वस्तु' इति ख–पाठः, 'मित्त्यानुदेस्तद्वस्तु' इति तु च–पाठः ।

( मूलम् )

**वाच्यस्वभावत्वात्, तत्तद्द्रव्याद्यपेक्षक्षयोपशमभेदतस्ततस्तत्र तत्राविलम्बितादिप्रतीतिभावात्, अविगानेन तथा व्यवहारसिद्धेः, अस्य चान्यथाऽयोगात्, निमित्तानुपपत्तेः ॥** ५

**एवं च सर्वशब्दानामपि प्रायो यथोक्तं सर्ववस्तुवाचकत्वमिति । क्षयोपशमानुरूपा च छद्मस्थानां प्रतीतिः । इति न समं सर्वथा वा**

( स्वो० व्या० )

**प्रायः**—बाहुल्येनानभिलाप्यधर्मान् विहाय [1]तथा तथा—चित्रसमयादियोगेन **सर्वशब्दवाच्यस्वभावत्वात्** । एतदेव लेशतः प्रकटयति **तत्तदि**त्यादिना । तच्च १० तत् तद्द्रव्यं च तत्तद्द्रव्यम्—उदकादि, 'आदि'शब्दात् क्षेत्रकालादिग्रहः, तत्तद्द्रव्याद्यपेक्षत इति तत्तद्द्रव्याद्यपेक्षः, तत्तद्द्रव्याद्यपेक्षश्चासौ **क्षयोपशमभेदश्च** भेदः—विशेष इति विग्रहस्तस्मात् । **ततस्ततः**, प्रक्रमाच्छब्दात् नीरोदकादेः, **तत्र तत्र**—उदकादौ वस्तुनि **अविलम्बितादिप्रतीतिभावात्** अविलम्बिता—अव्यवहिता, यथा नीरशब्दाद् दाक्षिणात्यस्योदकार्थे तत्प्रतीतिः, विलम्बिता तु तस्यैव १५ अन्यदेशमागतस्य, अन्यथासमयग्रहे उदकशब्दात् तत्रेति इयमादिशब्देन गृह्यते । अन्या च चित्रा सत्येतरादिरूपेति प्रतीतिभावश्च **अविगानेन तथा**—अविलम्बितादित्वेन **व्यवहारसिद्धेः** कारणात् **अस्य च**—व्यवहारस्य **अन्यथा** सर्ववस्तूनामेव प्रायस्तथा सर्वशब्दवाच्यस्वभावतामन्तरेण **अयोगात्** । अयोगश्च **निमित्तानुपपत्तेः** । तथाहि—किमत्रान्यन्निमित्तं तत्तत्स्वभावतामन्तरेण ? अनिमित्तस्य २० च सदाभावादिदोष इति भावनीयम् ॥

**एवं च सर्वशब्दानामपि**—नीरोदकादीनां यथोक्तं [2]प्रायस्तथा तथा सर्ववस्तुवाचकस्वभावत्वेन इह प्रायोग्रहणात् मृषाभाषावर्गणोत्थवन्ध्यशब्दव्यवच्छेदः । एवं **यथोक्तं सर्ववस्तुवाचकत्वं** सर्वशब्दानामपि । **क्षयोपशमानुरूपा च छद्मस्थानां** विशेषणान्यथाऽनुपपत्त्या प्रमातॄणां **प्रतीतिः** । **इति** कृत्वा **न समं**— २५ न युगपत् **सर्वथा वा**—सर्वैर्वा प्रकारैरविलम्बितादिभिः **तदवसायः**, प्रक्रमाद् वाच्य-

( विवरणम् )

(२३) **मृषाभाषावर्गणोत्थवन्ध्यशब्दव्यवच्छेद** इति । प्रकृतीश्वरादयो हि शब्दाः प्रकृत्यैव मृषाभाषावर्गणोत्था विवक्षितार्थशून्यतया वन्ध्यस्वभावा इति ॥

(२६) **न युगपत् सर्वथा** वेति । अयमभिप्रायः—सन्निहितेऽपि विषये न ३०

१ 'तथा चित्र०' इति घ-पाठः । २ 'प्रायस्तथा सर्व०' इति घ-पाठः ।

( मूलम् )

**तदवसायः । न ह्यनेकप्रदीपावभासितेऽपीन्द्रनीलादौ मन्दलोचनादीनां सर्वाकारं समो वा तद्बोधः, तथाऽननुभवात्, निमित्त-**
५ **भेदात् । न चासौ न तन्निमित्तः, तद्भावे भावात्, तदभावे चाभावादिति[1] । दीपमण्डलादिदर्शनाद् व्यभिचार इति चेत्, न, तस्य**

( स्वो० व्या० )

वस्तुस्वभावावसायः । अमुमेवार्थं दृष्टान्तद्वारेणोपदर्शयन्नाह–**न [3]हीत्यादि** । न यस्मात् **अनेकप्रदीपावभासितेऽपीन्द्रनीलादौ**–रत्नविशेषे **मन्दलोचनादीनां** प्रमा-
१० तृणाम्, 'आदि'शब्दादमन्दलोचनादिग्रहः । **सर्वाकारं** [4]तत्तत्प्रदीपावभासापेक्षया **समो वा**–तुल्यो वा **तद्बोधः**–इन्द्रनीलादिबोधः । कुतो नेत्याह–**तथाऽननुभवात्**–सर्वाकारसमत्वेनाननुभवात् । अननुभवश्च **निमित्तभेदात्**, प्रदीपावभासितेन्द्रनीलादिज्ञेयधर्मभेदादित्यर्थः । **न चासौ**–असर्वाकारोऽसमश्चित्रस्तद्बोधो **न तन्निमित्तः**–नेन्द्रनीलादिनिमित्तः । कुत इत्याह–**तद्भावे**–प्रस्तुतेन्द्रनीलादि-
१५ भावे **भावात्, तदभावे चाभावादिति** । न तद्भावभावित्वमात्रं नियमेन तन्निमित्तत्वे निमित्तमित्याह–**दीपमण्डलादिदर्शनात्** 'आदि'शब्दाद् गुञ्जादिग्रहः । **व्यभिचार**स्तद्भावभावित्वस्य नियमनिमित्तत्वेऽपि । उक्तं च–

"मयूरचन्द्रकाकारं नीललोहितसन्निभम् ।
सम्पश्यन्ति प्रदीपादेर्मण्डलं मन्दचक्षुषः ॥"

२० ( विवरणम् )

सर्वप्रमातॄणां यौगपद्येनैव ज्ञानमुत्पद्यते, किन्तु कस्यचित् कियताऽपि कालव्यवधानेन कालस्य च व्यवधानेनापि प्रवर्तमानं कस्यचिद् विलम्बितं वस्त्वध्यवसायकारणं कस्याप्यविलम्बितमिति ॥

(९) **अनेकप्रदीपावभासितेऽपी**ति । यदा एक [5]एवेन्द्रनीलादिर्युगपदेव बहुभिः
२५ प्रदीपैः प्रकाश्यते तदा कश्चित् प्रमाता कथञ्चिद् धर्मं परिच्छिनत्ति, न तु सर्व एव प्रमातारः सर्वात्मना तं परिच्छिदन्ति, नापि युगपदेवासौ तैर्ज्ञायते, किं तर्हि ? कालभेदेनापि ॥

(१६) **'आदि'शब्दाद् गुञ्जादिग्रह** इति । काचादिदोषोपहतलोचना हि प्रमातारो दीपकलिकां गुञ्जासमूहमयीमिव केचिदवलोकयन्ति ॥

१ 'भावे वाऽभावा०' इति क-पाठः । २ 'इति' इति पाठो ग-प्रतौ नास्ति । ३ 'हीत्यादिना । न' इति घ-पाठः । ४ तत्तत्प्रतीपावभासा०' इति घ-पाठः । ५ 'एव चन्द्रनीला०' इति क-पाठः ।

(मूलम्)

तन्निमित्तत्वेऽपि भ्रान्तत्वात्, आन्तरदोषवैगुण्येनोत्पत्तेः, तद्विकलेनादर्शनात्, इन्द्रनीलादिधर्माणां तु तदन्यवेदिनाऽपि वेदनात्, सूक्ष्मधर्मद्रष्ट्राऽपि स्थूराणां ग्रहणात्, तथाप्रतीतेः। न चैवं दीपादि- ५ द्रष्ट्रा तद् गृह्यते इति दोषविजृम्भितमेतत् ॥

दोषादसद्दर्शनसिद्धेः सर्वधर्मदर्शनमेव दोषजमस्त्विति चेत्, अदोषजं तर्हि कीदृक्?। निर्विकल्पेन निरंशवस्तुग्रहणम्, न, तत्राप्युक्तवत् तदाशङ्काऽनिवृत्तेः, एकस्यानेकस्वभावत्वविरोधात्, तस्या-

(स्वो० व्या०) १०

इत्यादि। इति चेत्, एतदाशङ्क्याह—न, तस्य—मण्डलादिदर्शनस्य तन्निमित्तत्वे अपि—प्रदीपनिमित्तत्वेऽपि भ्रान्तत्वात् कारणात्। भ्रान्तत्वं च आन्तरदोषात्—नयनरोगाद् वैगुण्यमान्तरदोषवैगुण्यं तेन प्रधानहेतुना उत्पत्तेः। एतच्चैवमेवेति दृढयन्नाह—तद्विकलेन—आन्तरदोषविकलेन द्रष्ट्रेति सामर्थ्यात् अदर्शनात् दीपे सत्यपि दीपमण्डलादेरित्यान्तरदोषवैगुण्यस्य प्रधानता। मा भूदिन्द्रनीलादावप्येवमिति १५ व्यतिरेकमाह—इन्द्रनीलादिधर्माणां तु अनेकदीपावभासितानां तदन्यवेदिना अपि—धर्मान्तरवेदिनाऽपि प्रमात्रा वेदनात्। एतदेवाह—सूक्ष्मधर्मद्रष्ट्राऽपि प्रमात्रा स्थूराणां ग्रहणात्। ग्रहणं च तथाप्रतीतेः। सत्संस्थानादिधर्मग्रहणसङ्गतैव तत्कान्त्यादिप्रतीतिरिति भावनीयम्। न चैवं दीपादिद्रष्ट्रा—पुरुषेण अविशेषत एव तत्—दीपमण्डलादि गृह्यते। इति दोषविजृम्भितमेतत्—दीप- २० मण्डलादिदर्शनमिति ॥

दोषादित्यादि। दोषात् सकाशात् असद्दर्शनसिद्धेः कारणात् सर्वधर्मदर्शनमेव, सत्त्वादिदर्शनमित्यर्थः, दोषजमस्तु। इति चेत्, एतदाशङ्क्याह—अदोषजं तर्हि कीदृग् दर्शनं यदपेक्षायैतद् दोषजमित्यर्थः। निर्विकल्पेन ज्ञानेन निरंशवस्तुग्रहणम् अदोषजं दर्शनमित्यभिप्रायः। एतदाशङ्क्याह—न, २५ तत्रापि—यथोदिते दर्शने उक्तवत्—यथोक्तं[5] दोषादसद्दर्शनसिद्धेरित्यादि, तदाशङ्काऽनिवृत्तेः—दोषजाशङ्काऽनिवृत्तेः। एकस्य—वस्तुनोऽनेकस्वभावत्व-

(विवरणम्)

(१७-१८) सूक्ष्मधर्मद्रष्ट्राऽपि प्रमात्रा स्थूराणां ग्रहणादिति। ये हि संस्थानादयः परिस्थूरा धर्मा मन्दालोचनप्रमातृगम्यास्ते कान्त्यादिसूक्ष्मधर्मदृक्षाऽपि विशद- ३० लोचनबलेन प्रमात्रा परिच्छिद्यन्त इति ॥

१ 'द्रष्ट्रा हि स्थूराणां' इति ग-पाठः। २ 'दृढयन्नाह' इति क-पाठः। ३ 'दृष्ट्रेति सामर्थ्यात्, अदर्शनाद्' इति क-पाठः। ४ 'सामर्थ्य अदर्शनात्' इति ङ-पाठः। ५ आसन्नैव पृष्ठे। ६ 'धर्मद्रष्ट्राऽपि' इति क-पाठः।

(मूलम्)

**न्याय्यत्वात् तन्निवृत्तिरिति चेत्, किं तदेकमेकस्वभावम्?। किमत्रोच्यते? वस्तुस्वलक्षणमेव, न, [1]तस्य स्थूराकारप्रतिभासिनोऽ-**
५ **सत्त्वात्, अणूनां चाप्रतिभासनात्, समूहस्याद्रव्यसत्त्वात्, तेषामेव तत्त्वे तद्वदनुपलम्भात्, समुदायदृश्यस्वभावत्वे[2]ऽनेकस्वभावत्वप्रसङ्गात्, प्रत्येकमदृश्यस्वभावत्वात्, तत्तद्भेदे तदनणुत्वप्रसङ्गात् समुदायदृश्यस्वभावतया, अन्यथा योगिभिरप्यदर्शनात्, तथापि**

(स्वो० व्या०)

१० **विरोधात्** कारणात् तस्यान्याय्यत्वादनेकस्वभावत्वस्य **तन्निवृत्तिः**–निर्विकल्पेन निरंशवस्तुग्रहणे दोषजाशङ्कानिवृत्तिस्तद्भावसम्भवात् । **इति चेत्**, एतदाशङ्क्याह–**किं तदेकमेकस्वभावं** निरंशं यद्भावसम्भवेन तद्दर्शनमदोषजं स्यादिति?। **किमत्रोच्यते? वस्तुस्वलक्षणमेव** ऐ[3]कमेकैकस्वभावम्। एतदाशङ्क्याह–**न, तस्य**–स्वलक्षणस्य **स्थूराकारेण**–ऊर्ध्वादिलक्षणेन **प्रतिभासते** तच्छीलं
१५ चेति विग्रहः तस्य घटादेरित्यर्थः, **असत्त्वात्** कारणात् सञ्चयात्मकत्वेन **अणूनां चाप्रतिभासनादि**त्यादेः, बाह्याल[4]म्बनवादिनैकानेकस्वभावमेतदङ्गीकर्तव्यमिति[5] योगः । तथाऽणूनां चाप्रतिभासनादिति सिद्धमेव। न ह्यणवः पृथग्जनविज्ञाने प्रतिभासन्ते, तत्समूहः प्रतिभासत इ[6]त्येतन्निरासायाह–**समूहस्य**, प्रक्रमादणुसमूहस्य, **अद्रव्यसत्त्वात्**–अ[7]परमार्थसत्त्वात्। तद्व्यतिरिक्तोऽद्रव्यसंस्त एव तु सन्त इति
२० एतद्व्यपोहायाह–**तेषामेव** अणूनां **तत्त्वे**–समूहत्वे **तद्वत्**–अणुवत् **अनुपलम्भात्**। तथाहि–अणव एव समूहस्ते चादृश्या इति । समुदायदृश्यस्वभावा इति समूहे उपलभ्यन्त इत्यप्यसदित्याह–**समुदायदृश्यस्वभावत्वे**, प्रक्रमादणूनाम्। किमित्याह–**अनेकस्वभावत्वप्रसङ्गात्** । प्रसङ्गश्च **प्रत्येकमदृश्यस्वभावत्वात्**। अणूनां तेभ्य एव समुदितेभ्यो भेद इत्यत्रापि दोषमाह–**तत्तद्भेदे** तेभ्यः–
२५ प्रत्येकमदृश्यस्वभावेभ्यस्तद्भेदे–समुदायदृश्यस्वभावाणुभेदेऽभ्युपगम्यमाने **तदनणुत्वप्रसङ्गात्**, तेषां–समुदायदृश्यस्वभावानामनणुत्वप्रसङ्गात्। प्रसङ्गश्च **समुदायदृश्यस्व[8]भावतया** कारणेन, **अन्यथा** प्रत्येकत्वेनादृश्यस्वभावतया **योगिभिरप्यदर्शनात्**। ततश्च समुदायदृश्यस्वभावा अपर एवैते [9]भावा नाणव इति

(विवरणम्)

३० (११) **तद्भावसम्भवादिति । तद्भावस्य–निरंशवस्तुसत्त्वस्य सम्भवात् ॥**

१ 'तस्य' इति पाठो न विद्यते ग–प्रतौ । २ 'भावत्वेनैक०' इति घ–पाठः । ३ 'मेकस्वभावम्' इति घ–पाठः । ४ 'लम्बनत्वादिनैका०' इति क–पाठः । ५ प्रेक्ष्यतां १८५ तमं पृष्ठम् । ६ 'इत्येवं निरासायाह' इति ङ–पाठः । ७ 'अपरपरमार्थ०' इति ङ–पाठः । ८ 'भावत योगि०' इति क–पाठः । ९ भावानां अणव' इति क–पाठः ।

(मूलम्)

**तदणुत्वकल्पनेऽतिप्रसङ्गात्, अन्याणूनां समुदायादर्शनेऽपि तद्भावप्रसङ्गात्, तैस्तद्भेददर्शने चानेकस्वभावतापत्तेः, तेषामेवायोगिभिरन्यथादर्शनात्, अन्यथा अन्यतरविज्ञानस्य अविषयत्वप्रसङ्गात्, ५ दृष्टेष्टविरोधात्, भिन्नसंस्थानबुद्ध्यसिद्धेः, तत्त्वतः अणुसमुदायाविशेषतस्तदयोगात्, अस्याश्चानुभवसिद्धत्वात्, प्रतिक्षेपायोगात् सर्वत्रानाश्वासप्रसङ्गात्, विशेषहेत्वभावात्, तत्त्वव्यवस्थाऽनुप-**

(स्वो० व्या०)

भावार्थः । आह च–**तथापि**–योगिभिरप्यदर्शनेऽपि **तदणुत्वकल्पने**–समुदाय- १० दृश्यस्वभावानामणुत्वकल्पने । किमित्याह–**अतिप्रसङ्गात्** । प्रसङ्गश्च **अन्याणूनां** प्रत्येकमदृश्यस्वभावानां **समुदायादर्शनेऽपि** सति **तद्भावप्रसङ्गात्**–समुदायभावप्रसङ्गात् । **तैरित्यादि** । तैः, योगिभिरिति प्रक्रमः, **तद्भेददर्शने च** तेषां–समुदायदृश्यस्वभावानामेव भेददर्शने च–प्रत्येकदर्शने चाभ्युपगम्यमानेऽ**नेकस्वभावतापत्तेः** तेषाम् । आपत्तिश्च **तेषामेव**–योगिभेददर्शनगोचराणाम**योगिभिरन्यथादर्शनात्**, समुदायत्वेन दर्शनादित्यर्थः । इत्थं चैतदङ्गीकर्तव्यमित्याह– १५ **अन्यथा**–एवमनभ्युपगमे**ऽन्यतरविज्ञानस्य**–योगिविज्ञानस्यायोगिविज्ञानस्य वा **अविषयत्वप्रसङ्गात्** तदालम्बनस्वभावाभावेन । न चायं न्याय्यः प्रसङ्ग इत्याह–**दृष्टेष्टविरोधात्** । अयोगिज्ञानाविषयत्वे दृष्टविरोधः, योगिज्ञानाविषयत्वे चाभ्युपगमविरोध इति भावः । दोषान्तरमाह–**भिन्नसंस्थानबुद्ध्यसिद्धेः**, २० अणुसमुदायाविशेषेण घटशरावादिबुद्ध्यसिद्धेरित्यर्थः । अमुमेवार्थं स्पष्टयन्नाह–**तत्त्वतः**–परमार्थेन **अणुसमुदायाविशेषतः** कारणात् **तदयोगात्**–भिन्नसंस्थानायोगेन तद्बुद्ध्ययोगात् । यदि नामैवं ततः किमित्याह–**अस्याश्च**–भिन्नसंस्थानबुद्धेः **अनुभवसिद्धत्वात्**, अत एव **प्रतिक्षेपायोगात्** । अयोगश्च **सर्वत्रानाश्वासप्रसङ्गात्**, अनुभवप्रतिक्षेपे सति । न चासावनुभवमात्रविषय २५

(विवरणम्)

(२५) **न चासावनुभवमात्रविषय** इति । न च–नैवासौ–प्रतिक्षेपोऽनुभवमात्रविषयः, अनुभवमात्रं[३]–प्रतिभासमानार्थविकलं ज्ञानं विषयः–गोचरो यस्य तत् (?) तथा ॥

१ 'दर्शनेन प्रत्येक०' इति क–पाठः । २ 'स्वभावाभावाभावेन' इति क–पाठः । ३ 'मात्रप्रति०' इति ख–पाठः ।

( मूलम् )

**पत्तेः। इति बाह्यालम्बनवादिनैकानेकस्वभावमेव तदङ्गीकर्तव्यम्। तत्राप्यनुपप्लुतप्रमातृविगानसंवेद्याः स्वभावा वस्तुसन्तस्तदन्ये पुन-**
५ **र्नेति, तथालोकानुभवसिद्धेः, अन्यथा तद्बाधया सर्वमेवासमञ्जसम्, अनिबन्धनत्वात्। इत्ययुक्तैकान्ततः शुष्कतर्कानुसारिणी सूक्ष्मेक्षिका, अनया हि भवदध्यक्षलक्षणमप्यसम्भाव्येवेति वक्ष्यामः ॥**

**अतोऽनेकस्वभावे वस्तुनि क्षयोपशमानुरूपप्रतिपत्तावुक्तवदन्त-र्जल्पाकारबोधसिद्धेः, अभिधानविशेषस्मृत्ययोगोऽबाधक एव ।**

---

१० ( स्वो० व्या० )

इत्याह—**विशेषहेत्वभावात्** अनुभवस्याणुसमुदायमात्रालम्बनत्वेन। सर्वत्रानाश्वासे च **तत्त्वव्यवस्थाऽनुपपत्तेः** विसंवादिबोधाशङ्कया। **इति**—एवं **बाह्यालम्बनवादिना** सर्वेण **एकानेकस्वभावमेव तत्**—आलम्बनम**ङ्गीकर्तव्य**मित्याह—**तत्रापि**—एवम्भूत आलम्बनेऽ**नुपप्लुतप्रमातृविगानसंवेद्याः स्व-**
१५ **भावाः**—धर्मा **वस्तुसन्तः**—परमार्थसन्तः इन्द्रनीलादौ स्थूरादिधर्मवत् **तदन्ये पुनर्न** उपप्लुतप्रमातृविगानसंवेद्या दीपमण्डलादिवदिति। कुत एतदेवमित्याह—**तथालोकानुभवसिद्धेः** कारणात्। **अन्यथा**—एवमनभ्युपगमे **तद्बाधया**—लोकानुभवबाधया **सर्वमेवासमञ्जसम्**। कुत इत्याह—**अनिबन्धनत्वात्**—नियामकाभावात्। **इति**—एव**मयुक्तैकान्ततः शुष्कतर्कानुसारिणी**—जाति-
२० वादप्रधाना **सूक्ष्मेक्षिका**। किमित्ययुक्तेत्याह—**अनया** यस्माच्छुष्कतर्कानुसारिण्या सूक्ष्मेक्षिकया **भवदध्यक्षलक्षणमपि** भवतोऽध्यक्षलक्षणं "प्रत्यक्षं कल्पनापोढम्" इत्याद्यपि **असम्भाव्येवेति वक्ष्यामः** ॥

एवं प्रासङ्गिकमभिधाय प्रकृतमुपक्रमते **अत** इत्यादिना। **अतोऽनेकस्वभावे वस्तुनि** उक्तनीत्या व्यवस्थिते **क्षयोपशमानुरूपप्रतिपत्तौ** सत्यां **उक्तवत्**—
२५ यथोक्तं तथा **अन्तर्जल्पाकारबोधसिद्धेः** कारणात् **अभिधानविशेष-**

---

( विवरणम् )

(११) **अनुभवस्याणुसमुदायमात्रालम्बनत्वेने**ति। सर्वेऽपि हि बौद्धमतेऽनुभवा अणुसमुदायमात्रालम्बनाः, अन्यस्यापि विषयस्याभावात्। अतः किंकृतो विशेषो येनैकेऽनुभवमात्रत्वेन प्रतिक्षिप्यन्ते, अन्ये तु नेति ? ॥

(मूलम्)

**यदपि क्वचिद् वाच्योपलब्धौ तद्वाचकविशेषास्मरणं तदप्यनेकवाचकवाच्यत्वेऽस्य तथाविधावरणभावाद् विकल्पबोधवत एव, अभिलापाद्यसंसृष्टबोधेनाननुस्मरणात् तथाप्रतीतेरिति । एवं च** ५
**'सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः स्यात्, अग्निधूम-**

(स्वो० व्या०)

**स्मृत्ययोगोऽबाधक एव,** स्मृतेरेवान्तर्जल्पाकारबोधरूपतयाऽप्रवृत्तिप्रसङ्गादिति हृदयम् ॥

दोषान्तरपरिजिहीर्षयाऽऽह–**यदपि क्वचिद् वाच्योपलब्धौ** सत्यां **तत्**– १०
**वाचकविशेषास्मरणं** किमिदमित्यादि सामान्यवाचकप्रवृत्तावेव **तदप्यनेकवाचकवाच्यत्वेऽस्य**–वस्तुनः **तथाविधावरणभावात्**–वाचकविशेषस्मरणावरणभावाद् **विकल्पबोधवत एव,** अस्मृतिपूर्वकशब्दसम्पृक्तबोधवत एवेत्यर्थः । कुत इत्याह–**अभिलापाद्यसंसृष्टबोधेन,** 'आदि'शब्दाद् विशिष्टमनःपरिग्रहः, **अननुस्मरणात्** कारणात् । अननुस्मरणं च **तथाप्रतीतेः** । न ह्यवग्रहमात्रात् १५
स्मृतिः । एवं च कृत्वा **'सति ह्यर्थदर्शनेऽर्थसन्निधौ दृष्टे शब्दे ततः स्मृतिः**

(विवरणम्)

**(८) स्मृतेरेवान्तर्जल्पाकारबोधरूपतयाऽप्रवृत्तिप्रसङ्गादिति** । यदि हि प्रागुपलब्ध एव ध्वनिः स्मर्यमाणः सन् अर्थाभिधानाय प्रयुज्यते तदा स्मृतिरेव न युज्यते, अन्तर्जल्पाकारानुविद्धाया एव तस्याः किमेतदित्युल्लेखेन स्वत एव प्रथमतः २०
प्रवृत्तौ, पश्चाद् देवदत्तादिशब्दप्रयोगेण वक्ता बाह्यमर्थमभिदध्यात्, अतः स्वत एव व्यवहारार्हेषु ज्ञानेषु सामान्येन साभिजल्पतया प्रवृत्तेषु सत्सु पश्चाद् विशेषशब्दस्मरणमपि तदभिमतं युज्येतेति ॥

**(१४) अभिलापाद्यसंसृष्टबोधेनेति** । यदि हि अभिलापेन किमिदमित्यादिरूपेण स्वभावत एव संसृष्टो बोध ईहादिरूपो न प्रथमत उत्पद्यते तदा न च कथञ्च- २५
नापि विशेषवाचकस्मृतिरुज्जृम्भते । यत्र च सामान्याभिलापप्रवृत्तावपि कस्यचित् क्वचिदर्थे न वैशेषिकी वाचकस्मृतिरुत्पद्यते सोऽद्यापि दृढतरावारककर्मक्षयोपशमाभावेन, अतः सिद्धमिदं सामान्यतो वाच्योपलब्धौ किमिदमित्यादिवाचकप्रवृत्तिपूर्वकमेव विशेषवाचकस्मरणमिति ॥

१ 'बोधेन अर्थादिशब्दाद्' इति क–पाठः । २ 'लापे प्रवृत्ता०' इति क–पाठः । ३ 'विशेषवाचक०' इति क–पाठः । ४ 'सद्योऽपि' इति क–पाठः ।

( मूलम् )

वत्'[1] इति नैकान्तसुन्दरम्, तदर्थस्याभिलापासंसृष्टबोधेनादर्शनात्, तथास्वभावत्वात्, शब्दान्तरास्मृतौ चोक्तवददोषात्। एवं च 'न
५ चायमशब्दमर्थं पश्यति'[2] इति विचारणीयम्। यदि शब्दानास्कन्दितमिति तदसिद्धम्, केवलस्यैव दर्शनात्। अथाविकल्पज्ञानेन, ततः सिद्धसाध्यता, शब्दार्थस्य तेनादर्शनात्। एवं च 'अपश्यंश्च न

( स्वो० व्या० )

स्यात् अग्निधूमवत्' इति पूर्वपक्षोदितं[3] नैकान्तसुन्दरम्। कुत इत्याह—
१० तदर्थस्य—शब्दार्थस्य अभिलापासंसृष्टबोधेनादर्शनात्। अदर्शनं च तथास्वभावत्वात्—अभिलापासंसृष्टबोधेनादर्शनस्वभावत्वात्। शब्दान्तरास्मृतौ च—वाचकविशेषास्मृतौ[4] च उक्तवत्—यथोक्तं[5] 'तथाविधावरणभावात्' इत्यादि, तथाऽदोषात्। एवं च कृत्वा 'न चायमशब्दमर्थं पश्यती'ति एतत् पूर्वपक्षोदितं[6] विचारणीयम्। किमुक्तं भवति अशब्दमिति ?। यदि शब्दानास्कन्दित-
१५ मिति तदसिद्धम्। कुत इत्याह—केवलस्यैव तच्छब्दानास्कन्दितस्य दर्शनात्। अथाविकल्पज्ञानेन अशब्दमर्थं पश्यति। एतदाशङ्क्याह—ततः सिद्ध-

( विवरणम् )

(१२) वाचकविशेषास्मृतौ च उक्तवदिति। वाचकविशेषास्मरणं तथाविधावरणसद्भावाद् भवतीति अर्थः॥

२० (१६) अर्थाविकल्पज्ञानेन अशब्दमर्थं पश्यतीति। यत्र घटादावर्थे विशेषरूपे घटशब्दप्रवृत्तिर्भविष्यतीति तमर्थमशब्दं घट घट इत्यभिधाने योजनाविकलं सन्तं न पश्यति—न साक्षात्करोति निर्विकल्पकेन॥

(१६, पृ. १८९) ततः[10] सिद्धसाध्यतेति। यदि ह्यस्माभिरेतदभ्युपगम्यते यदुत निर्विकल्पकज्ञानेन साक्षात्क्रियते घटस्तदनुविशिष्टं नाम योज्यते, तदानीं[11] स्यादेतत् परोक्तं
२५ दूषणं यदुत 'न चायमशब्दमर्थं पश्यति अपश्यंश्च न शब्दविशेषमनुस्मरति' इत्यादि[12],

१–२ प्रेक्ष्यतां १४०तमं पृष्ठम्। ३ १४०तमे पृष्ठे। ४ 'विशेषस्मृतौ' इति ङ–पाठः। ५ १८७तमे पृष्ठे। ६ १४० तमे पृष्ठे। ७ 'तथाविधावधारण०' इति क–पाठः। ८ 'विकलज्ञानेन' इति ख–पाठः। ९ 'धानयोजना०' इति च–पाठः। १० 'सिद्धयेतेति' इति क–पाठः। ११ 'तदा न स्यादेतत्' इति क–पाठः। १२ प्रेक्ष्यतां १४०तमं पृष्ठम्।

( मूलम् )

**शब्दविशेषमनुस्मरति**[१] **इत्येतदपि विचारास्पदमेव । यदि येनैव संसृष्टविज्ञानः तमेव नानुस्मरतीति सिद्धसाध्यता, तस्य तदा तेनैव वेद्यमानत्वात् । अथ तत्प्रतिबद्धं शब्दान्तरमिति, तदसिद्धम्**[२]**, तस्य सति क्षयोपशमे तद्दर्शनात् स्मरणोपपत्तेः । एवम् 'अननुस्मरन् न** ५

( स्वो० व्या० )

**साध्यता** । कुत इत्याह—**शब्दार्थस्य तेन**—अविकल्पज्ञानेन **अदर्शनात्** । ततश्च विकल्पज्ञानेन सशब्दमर्थं पश्यतीति भवति । अयमेव च शब्दार्थ इति भावः । **एवं च 'अपश्यंश्च न शब्दविशेषमनुस्मरति' इत्येतदपि** पूर्वपक्षोपन्यस्तं[३] १० **विचारास्पदमेव** । किमुक्तं भवति? । न शब्दविशेषमनुस्मरति । **यदि येनैव**—शब्दविशेषेण [४]**संसृष्टविज्ञानः** प्रमाता **तमेव**—शब्दविशेषं **नानुस्मरतीति**—एवं **सिद्धसाध्यता** । कुत इत्याह—**तस्य**—शब्दविशेषस्य **तदा तेनैव**—ज्ञानेन **वेद्यमानत्वात्** तद्बोधाविनिर्भागेन[५] । **अथ तत्प्रतिबद्धं**, प्रक्रमाद् दृश्यवस्तुप्रतिबद्धम्, **शब्दान्तरं** न शब्दविशेषमनुस्मरति इति । एतदधिकृत्याह—**तदसिद्धं** १५ **तस्य**—शब्दान्तरस्य **सति क्षयोपशमे** तज्ज्ञानावरणकर्मणः **तद्दर्शनात्**—न्यायप्रापितशब्दार्थदर्शनात् **स्मरणोपपत्तेः**—स्मरणसम्भवात् । **एवम् 'अननुस्मरन् न**

( विवरणम् )

किन्तु निर्विकल्पज्ञानेन[६] स्वरूपनामादिकल्पनारहितम्, अत एवाभिधानसम्बन्धायोग्यं सामान्यमात्रं गृह्यते, तत्र च शब्दयोजना नास्त्येव यत् तु किमिदमित्याद्युल्लेखनज्ञानं २० तत् तथाविधक्षयोपशमसामर्थ्यात् प्रथमत एव [७]सशब्दमुज्जिहीते, न[८] तु विभिन्नमर्थमालोक्य प्रथमतः पश्चात् तन्नाम योजयति[९] । यच्च घट इत्यादिविशेषाभिधानयोजनं तत् तथाविधसङ्केतवशसमुपजातक्षयोपशमवशादिति, अतो निर्विकल्पज्ञानेन अशब्दमर्थं—घटादिकं न पश्यतीति यद्युच्यते परेण तदा सिद्धसाध्यतैवेति स्थितम् ॥

(८) **शब्दार्थस्य तेनाविकल्पज्ञानेन अदर्शनादिति** । शब्दसंयोजनायोग्यस्य २५ अर्थस्य—[१०]घटादेस्तेनाविकल्पज्ञानेनानवलोकनादित्यर्थः ॥

(९) **अयमेव च शब्दार्थ इति भाव** इति । न चायमशब्दमर्थं पश्यतीति वाक्यस्य परोपन्यस्तस्यायमेवार्थो यदुत विकल्पज्ञानेन सशब्दमर्थं पश्यतीति ॥

१ दृश्यतां १४०तमं पृष्ठम् । २ 'तदसिद्धेः तस्य' इति ग–पाठः । ३ १४०तमे पृष्ठे । ४ 'संस्पृष्टविज्ञानः' इति घ–पाठः । ५ 'निर्भागेन' इति ङ–पाठः । ६ 'ज्ञानस्वरूप०' इति च–पाठः । ७ 'ससब्दसजहीने(?) ननु' इति ख–पाठः । ८ 'ननु विभिन्न०' इति क–पाठः । ९ 'यच्च घट इत्यादि विशेषाभिधान (?) योजयति' इत्यधिकः क–पाठः । १० 'घटादिस्तेना०' इति च–पाठः ।

(मूलम्)

योजयति'[१] इत्यप्ययुक्तम्, तद्विज्ञानसंसृष्टस्य तथायोजनात्, इतरस्य अपि तत्सम्भवाविरोधात्। एवम् 'अयोजयन् न प्रत्येति'[२] इत्यप्य-
५ साम्प्रतमेव, शब्दान्तरमधिकृत्यायोजयतोऽपि प्रतीतेः, तद्व्यतिरि-क्तेन तूक्तवद् योग एव 'इत्यायातमान्ध्यमशेषस्य जगतः'[३] इत्युक्ति-मात्रम्, विवक्षिताभिधेयार्थशून्यत्वात्, उक्तवत् तदयोगादिति ॥

यत् पुनरेतदाशङ्कितम् 'अभिपतन्नेवार्थः प्रबोधयत्यान्तरं संस्कारं तेन स्मृतिर्नार्थदर्शनात्'[४] इति, एतदर्थतः साध्वेव, क्षयोपशमस्य
१० द्रव्यादिनिमित्तत्वाभ्युपगमात्, तदनुसारेण तत्प्रवृत्तिसम्भवात्। यत् पुनरिदमुक्तम्-'न, तत्सम्बन्धस्यास्वाभाविकत्वात्'[५] इति, एतद-

(स्वो० व्या०)

योजयति' इत्यपि पूर्वपक्षोक्तमयुक्तम्। कुत इत्याह-तद्विज्ञानसंसृष्टस्य, शब्दस्येति प्रक्रमः, तथा-वाचकत्वेन योजनात्, इतरस्यापि-तत्प्रतिबद्धशब्दा-
१५ न्तरस्य तत्सम्भवाविरोधात्-योजनासम्भवाविरोधात्। एवम् 'अयोजयन् न प्रत्येति' इत्यपि पूर्वपक्षवचोऽसाम्प्रतमेव-अशोभनमेव। कुत इत्याह-शब्दान्त-रमधिकृत्य तत्प्रतिबद्धम् अयोजयतोऽपि प्रतीतेः, प्रक्रमाद् वस्तुनः, इति तद्व्यतिरिक्तेन तु, प्रक्रमात् विज्ञानसंसृष्टेन, उक्तवत्-यथोक्तं तथा योग एव इति-एवमायातमान्ध्यमशेषस्य जगत इत्युक्तिमात्रं-वचनमात्रम्।
२० कुत इत्याह-विवक्षिताभिधेयार्थशून्यत्वात्, शून्यत्वं च उक्तवत्-यथोक्तं तथा तदयोगाद्-विवक्षितार्थायोगादिति ॥

यत् पुनरित्यादि। यत् पुनरेतदाशङ्कितं परेण। किमित्याह-'अभिपत-न्नेवार्थः प्रबोधयत्येवान्तरं संस्कारं तेन स्मृतिर्नार्थदर्शनात्' इति। एतदर्थतः-अर्थमधिकृत्य साध्वेव-शोभनमेव। कथमित्याह-क्षयोपशमस्य
२५ तत्तद्विज्ञाननिबन्धनस्य। किमित्याह-तत्तद्द्रव्यादिनिमित्तत्वाभ्युपगमात्। यदि नामैवं ततः किमित्याह-तदनुसारेण-अर्थाभिपतनानुसारेण तत्प्रवृत्तिस-म्भवात्-क्षयोपशमप्रवृत्तिसम्भवादिति। यत् पुनरिदमुक्तं पूर्वपक्षग्रन्थ एव-'न, तत्सम्बन्धस्यास्वाभाविकत्वात्' इति, एतदसाधु-अशोभनम्। कुत इत्याह-

१-३ ईक्ष्यतां १४०तमं पृष्ठम्। ४ प्रेक्ष्यतां १४०तमं पृष्ठं १४१तमं च। ५ समीक्ष्यतां १४१तमं पृष्ठम्। ६ १४०तमे पृष्ठे। ७ प्रेक्ष्यतां १४०तमं पृष्ठम्। ८ 'प्रबोधयत्यान्तरं' इति घ-पाठः। ९ क्षयोपशमस्येत्यारभ्य 'किमित्याह'पर्यन्तकः पाठो नास्ति घ-पुस्तके। 'क्षयोपशमतत्त-द्विज्ञान०' इति ङ-पाठः। १० १४१तमे पृष्ठे।

(मूलम्)

साधु, उक्तवदस्वाभाविकत्वासिद्धेः, वक्ष्यमाणत्वाच्चापोहाधिकारे, अतः [1]'समयादर्शनेऽभावात्' इत्ययुक्तम्, तस्य क्षयोपशमव्यञ्जकत्वात्, तद्भावे तु तदभावेऽपि भावात्, क्वचित् तथोपलब्धेः, ५ अन्यथा सदा तदपेक्षा स्यात्। एवं च 'पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेरित्यादि यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनात्'[2] इत्येतन्निर्विषयमेव, अत्र ह्यनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणम्। एतच्चैकानेकस्वभावतयाऽस्य तत्त्वतोऽदूषणमेव, अन्यथा तदसत्त्वप्रसङ्गादित्युक्तप्रायम्। अतो विरोधिशब्दवाच्यत्वेऽपि तत्- १० तत्स्वभावतया तथोपलब्धेर्न कश्चिद् दोषः॥

(स्वो० व्या०)

उक्तवत्–यथोक्तं [3]प्राक् 'सर्ववस्तूनामेव प्रायस्तथा तथा सर्वशब्दवाच्यस्वभावत्वात्' इत्यादिना तथाऽस्वाभाविकत्वासिद्धेस्तत्सम्बन्धस्य वक्ष्यमाणत्वाच्चापोहाधिकारे तदसाध्विति। अतः समयादर्शनेऽभावादिति यदुक्तं तत् अयुक्तम्। १५ कुत इत्याह–तस्य–समयस्य क्षयोपशमव्यञ्जकत्वात् तद्भावे तु–क्षयोपशमभावे तु तदभावेऽपि–समयाभावेऽपि भावात्, शब्दविशेषस्मृतेरिति प्रक्रमः। शब्दविशेषस्मृतिग्रहणं [4]चात्र प्रतिपत्त्युपलक्षणं वेदितव्यम्। भावश्च क्वचित्–विशिष्टक्षयोपशमवति प्रमातरि तथोपलब्धेः–समयाभावेऽपि शब्दविशेषस्मृत्युपलब्धेः। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथेत्यादि। अन्यथा–क्षयोपशम[5]भावेऽपि समया- २० पेक्षाभ्युपगमे सदा–सर्वकालं तदपेक्षा स्यात्–समयापेक्षा स्यात्। ततश्च सदा सङ्केतकरणाख्या व्यवहाराभावः। एवं च पुरुषेच्छातोऽर्थानां स्वभावापरावृत्तेरित्यादि पूर्वपक्षवचनं यावदशब्दसंयोजनमेवार्थं पश्यति दर्शनादित्येतन्निर्विषयमेव। कुत इत्याह–अत्रेत्यादि। अत्र यस्मात्–अनेकस्वभावतापत्त्या वस्तुनो नैरात्म्यमिति परं दूषणमुक्तम्। एतच्च दूषणमेकानेक- २५ स्वभावतया अस्य–वस्तुनः तत्त्वतोऽदूषणमेव, अन्यथा–एवमनभ्युपगमे तदसत्त्वप्रसङ्गात्–वस्तुनोऽसत्त्वप्रसङ्गादित्युक्तप्रायं–प्रायेणोक्तम्, अतो विरोधिशब्दवाच्यत्वेऽपि सति, वस्तुन इति प्रक्रमः, तत्तत्स्वभावतया कारणेन तथोपलब्धेः–विरोधिशब्दवाच्यत्वेनोपलब्धेर्नित्यानित्यादिशब्दप्रवृत्तितया न कश्चिद् दोष इति प्रस्तुताधिकारनिगमनम्॥ ३०

१ ईक्ष्यतां १४१तमं पृष्ठम्। २ समवलोक्यतां १४१तमं पृष्ठं १४२ तमं च। ३ १८०तमे पृष्ठे १८१तमे च। ४ 'चाऽत्र' इति घ–पाठः। ५ 'भावेऽपि समभावेऽपि समयापेक्षा०' इति ङ–पाठः।

( मूलम् )

**स्यादेतदनलशब्दो ह्यनले तदभिधानस्वभावतया यमभिधेयपरिणाममाश्रित्य प्रवर्तते स जले नास्ति, जलानलयोरभेदप्रसङ्गात्। प्रवर्तते च समयाज्जलेऽनलशब्दः, तथाप्रतीतेरिति कथमनयोर्वास्तवो योग इति?। उच्यते—शब्दस्यानेकस्वभावत्वात्। न ह्यनलशब्दस्यानलगताभिधेयपरिणामापेक्षी तदभिधानस्वभाव एवैकः स्वभावः, अपि तु तथाविलम्बितादित्वेन जलगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि, तथातत्प्रतीतेः, तद्वैचित्र्येण दोषाभावात्, क्षयोपशमवैचित्र्यतस्तथाप्रवृत्तेः, अन्यथाऽहेतुकत्वेन तदभावप्रसङ्गादिति। एतेन तथाऽनुभवसिद्धेन शब्दार्थक्षयोपशमस्व-**

( स्वो० व्या० )

**स्यादेतदिति**। स्यादेतत्, **अनलशब्दो ह्यनले**ऽभिधेये **तदभिधानस्वभावतया**—अनलाभिधानस्वभावत्वेन **यमभिधेयपरिणाममाश्रित्य प्रवर्तते,** वास्तवं **स जले नास्ति** परिणामः। कुत इत्याह—**जलानलयोरभेदप्रसङ्गात्,** तदेकाभिधेयपरिणामभावेन। यदि नामैवं ततः किमित्याह—**प्रवर्तते च समयात्**—सङ्केतेन **जलेऽनलशब्दः**। कुत इत्याह—**तथाप्रतीतेः**—समयद्वारेण प्रवृत्तिप्रतीतेः। **इति**—एवं **कथमनयोः,** प्रक्रमाद् वस्तुवाचकयोर्वा**स्तवो योगः**—तात्त्विकः सम्बन्ध इति?। एतदाशङ्क्याह—**उच्यते**ऽत्र परिहारः[2], **शब्दस्यानेकस्वभावत्वात्**। शब्दग्रहणं वस्तूपलक्षणम्, उभयोरनेकस्वभावत्वादनयोर्वास्तवो योग इति। अमुमेवार्थं प्रकटयन्नाह—**न ह्यनले**त्यादि। न यस्मात् **अनलशब्दस्यानलगताभिधेयपरिणामापेक्षी,** अनलगतमभिधेयपरिणाममपेक्षते, तच्छीलश्च इति विग्रहः, **तदभिधानस्वभाव एव**—अनलाभिधानस्वभाव एव **एकः स्वभावः, अपि तु तथाविलम्बितादित्वेन**—समयापेक्षिततत्स्मृतिपूर्वकत्वेन **जलगताभिधेयपरिणामापेक्षी तदभिधानस्वभावोऽपि**। कुत इत्याह—**तथातत्प्रतीतेः**—तथा-विलम्बितादित्वेन जलप्रतीतेरिति। **तद्वैचित्र्येण,** प्रक्रमादनलशब्दस्वभाववैचित्र्येण, **दोषाभावात्**—पूर्वोक्तदोषनिवृत्तेरित्यर्थः। **क्षयोपशमवैचित्र्यतः** कारणात् **तथाप्रवृत्तेः**—जलेऽनलशब्दसमयप्रवृत्तेः। **अन्यथा**—एवमनभ्युपगमे**ऽहेतुकत्वेन तदभावप्रसङ्गात्**—तथाप्रवृत्त्यभावप्रसङ्गा**दिति**। **एतेन**—अनन्तरोदितेन **तथाऽनुभवसिद्धे**नोक्तनीत्या समयाज्जलेऽप्यनलशब्दात्

१ 'प्रतीतेः अन्यथा' इति क-पाठः। २ 'उच्यते तत्र परिहारः' इति ख-पाठः।

(मूलम्)

भाववैचित्र्येणैतदपि प्रत्युक्तं यदुक्तम्—"शब्देन्द्रियार्थयोर्भेद एव, अव्यापृतेन्द्रियस्यान्यवाङ्मात्रेणैवेन्द्रियार्थाविभावनात् इन्द्रियादेव च शब्दार्थाप्रतीतेः" इत्यादि। न खल्वव्यापृतेन्द्रियोऽपि तत्- ५
क्षयोपशमयुक्तोऽन्यवाङ्मात्रेण न विभावयत्येवेन्द्रियार्थम्, तद्वर्ण- मानचिह्नादिनिश्चितेः, तदन्यतुल्यजातीयमध्येऽपि भेदेन प्रवर्त-

(स्वो० व्या०)

प्रतीतिभावतः संवेदनसिद्धेन **शब्दार्थक्षयोपशमानां स्वभाववैचित्र्येण**। किमित्याह—**एतदपि प्रत्युक्तं यदुक्तं** परैः। किं तदित्याह—**शब्देन्द्रियार्थयोः**, १० शब्दश्चेन्द्रियं च शब्देन्द्रिये, तयोरर्थौ—विषयौ तयोर्भेद एव। कुत इत्याह—**अव्यापृतेन्द्रियस्य** पुंसः **अन्यवाङ्मात्रेणैव** अन्यस्माद् वाङ्मात्रं तेनैव **इन्द्रियार्थाविभावनात्**—इन्द्रियार्थादर्शनाद् विभावनं—दर्शनम्। तथाहि—प्रतीतमेतत् न शब्दादेव पश्यतीति तथा **इन्द्रियादेव च** सकाशात् **शब्दार्थाप्रतीतेः**। न हि पनसं पश्यन्नप्यकृतसमयो वाह्लीकः पनसमित्यवैति **इत्यादि**। 'आदि'शब्दात् १५

"अन्यदेवेन्द्रियग्राह्यमन्यः शब्दस्य गोचरः।
शब्दात् प्रत्येति भिन्नाक्षो ननु प्रत्यक्षमीक्षते॥"[२]

इत्याद्येतत् समानं गृह्यते इत्येतदपि प्रत्युक्तम्। यथा प्रत्युक्तं तथा मन्दमतिहिताय मनागुपदर्शयन्नाह **न खल्वित्यादिना**। न खलु—नैव [३]**अव्यापृतेन्द्रियोऽपि** पुमान्। किंविशिष्ट इत्याह—**तत्क्षयोपशमयुक्तः**, प्रक्रमादिन्द्रियज्ञानावरणक्षयो- २० पशमयुक्तः, **अन्यवाङ्मात्रेण** हेतुना **न विभावयत्येव**—न पश्यत्येव मत्याभोगेन **इन्द्रियार्थम्**, "द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः" इति कृत्वा, किन्तु विभावयति एव। कुत इत्याह—**तद्वर्णमानचिह्नादिनिश्चितेः**, तस्य—इन्द्रियार्थस्य वर्णः—कृष्णादिः, मानं—प्रमाणं महदल्पादि, चिह्नं—खण्डादि, 'आदि'शब्दात् मसृणत्वादिग्रहः, एतन्निश्चितेः। तथाहि—कृष्णं महान्तं खण्डं मसृणमपूर्वमपवरकाद् घटमानयेत्युक्ते २५

(विवरणम्)

(१५) **अकृतसमयो** [५]**वाह्लीक इति**। [६]वाह्लीकदेशोद्भवो हि पुमान् सर्वथा तद्विषये [७]पनसाभावादसञ्[८]ज्ञातपूर्वतच्छब्दसङ्केतः कथञ्चिद् दक्षिणस्यां दिशि समायातः पनसं पश्यन्नपि न तत्र शब्दं नियोक्तुमुत्सहते॥

१ 'दर्शनादिभावनं' इति क-पाठः। २ अनुष्टुप्। ३ 'अव्यावृतेन्द्रियोऽपि' इति क-पाठः। ४ 'भावयति अवमत्या भागेनेन्द्रियार्थम्' इति क-पाठः। ५ 'वाष्णीक इति' इति क-पाठः। ६ 'वाष्णीकदेशो०' इति क-पाठः। ७ 'पनशाभावा०' इति च-पाठः। ८ 'सज्ञातपूर्व०' इति ख-च-पाठः।

( मूलम् )

**नात्, क्वचित् तत्प्राप्तेस्तथानिवेदनात्, तथाऽस्पष्टं तु तत् साक्षात्-कारेणाक्षव्यापारवैकल्यात्, न त्वतद्विषयत्वेन। एवमिन्द्रियादपि ५ क्वचित् तथाविधक्षयोपशमभावे सङ्केतमन्तरेणापि भवति शब्दार्थ-विभावनम्, तथाऽन्तर्जल्पाकारादिबोधसिद्धेः, लोकानुभवप्रामा-ण्यादिति ॥**

**स्यादेतत्, इत्थमनेकस्वभावत्वे वस्तुनो नैकस्यैवानेकप्रमातृभिरव-सायः। तथाहि–यदि य एव तत्स्वभाव एकावसायस्य निमित्तं स १० एवापरावसायस्य, ततस्तयोरैक्यम्, सर्वथैकनिमित्तत्वात्, इतरे-तरस्वात्मवत् तदभेदेऽपि तदवसायभेदे, तदेकस्वभावतापत्तिः,**

( स्वो० व्या० )

तज्ज्ञानावरणक्षयोपशमयुक्तः पुमानध्यक्षमिव मत्या तथैव प्रतिपद्यते। कथमेतदेवमि-त्याह–**तदन्यतुल्यजातीयमध्येऽपि** तदानयनाय तं प्रति **भेदेन प्रवर्तनात्**। १५ न ह्यसौ तथाभोगशून्यः प्रवर्तत इति भावनीयम्। तथा **क्वचित्**–प्रतिबन्धाभावे **तत्प्राप्तेः**, प्रक्रमात् तस्यान्यवाङ्मात्रोक्तस्य प्राप्तेः, **तथानिवेदनात्** तथा–अन्य-वाङ्मात्र[1]बोधितत्वेन निवेदनात् नैव न विभावयतीन्द्रियार्थमिति। **तथाऽस्पष्टं तु तत्**–विभावनं **साक्षात्कारेणाक्षव्यापारवैकल्यात्, न त्वतद्विषयत्वेन**–न पुनरिन्द्रियार्थाविषयत्वेन प्रणिधानव्यापारेण तत्रेन्द्रियव्यापारादिति। **एवमि-२० न्द्रियादपि** सकाशात् **क्वचित्**–न सर्वत्र **तथाविधक्षयोपशमभावे**–सङ्केता-[2]नपेक्षशब्दार्थविभावनफलक्षयोपशमभावे **सङ्केतमन्तरेणापि** किमित्याह–**भवति शब्दार्थविभावनम्**। कुत इत्याह–**तथाऽन्तर्जल्पाकारादिबोधसिद्धेः** किमिदमित्यालोचयतस्तदिदं पूर्वोक्तलिङ्गवत् पनसमिति बोधसिद्धेरित्यर्थः। सिद्धिश्च **लोकानुभवप्रामाण्यादिति** ॥

२५ **स्यादेतत्, इत्थम्**–उक्तनीत्या**ऽनेकस्वभावत्वे वस्तुनः**–इन्द्रियार्थादे**नै-कस्यैवानेकप्रमातृभिरवसायः**। एतदेव भावयति **तथाही**त्यादिना। तथाहि–**यदि य एव तत्स्वभावः**–वस्तुस्वभावः, **एकावसायस्ये**ति एकस्य, प्रमातुरिति प्रक्रमः, अवसाय एकावसायस्तस्य **निमित्तं स एवापरावसायस्य**–प्रमात्रन्त-रावसायस्य **ततस्तयोः**–अवसाययो**रैक्यम्**। कुत इत्याह–**सर्वथैकनिमित्त-३० त्वात्**, अविकृतवस्तुस्वभावैकत्वेन। **इतरेतरस्वात्मवदि**ति निदर्शनम्। एतच्च "यतः स्वभावतो जातमेकम्" इत्यादिना त्वयाऽप्यु[3]क्तमेव। **तदभेदेऽपि**–तत्स्व-

१ 'चोदितत्वेन' इति क–पाठः। २ 'नपेक्षं शब्दार्थं०' इति ङ–पाठः। ३ ४९तमे पृष्ठे।

( मूलम् )

**तदन्यकार्याणामपि, तत्तथातयाऽविरोधादिति । अत्रोच्यते—एकान्तवादिन एवायं दोषः, नानेकान्तवादिनः, तस्य ह्यचित्रमेवैकम्, न चानेककार्यजननैकस्वभावतां विहाय ततोऽनेकं भवति, अनेककार्यजनने च नाचित्रमेकत्वम्, तद्भावेऽपि कात्स्‍र्न्येनैकेन तद्ग्रहात् तदपरावसायग्रहणप्रसङ्गः, तस्य तज्जननस्वतत्त्वस्यान्यथाग्रहणायोगात्, तत्सावधिकत्वात् न निरवधिकं ग्रहणं तद् ग्रहणमिति** ५

( स्वो० व्या० )

भावाभेदेऽपि **तदवसायभेदे**—एकापरप्रमात्रवसायभेदे **तदेकस्वभावतापत्तिः** १० तस्य—वस्तुन एकस्वभावतापत्तिः । कुत इत्याह—**तदन्यकार्याणामपि** तस्मात्—विवक्षितस्वभावादन्ये तदन्ये, स्वभावा इति प्रक्रमः, तेषां कार्याणि—सदादिविज्ञानादीनि तत्कार्याणि तेषामपि **तत्तथातया** तस्य—वस्तुनस्तथाता—एकजातीयविज्ञानापेक्षया एकस्वभावा अनेककार्यजननैकस्वभावता तया सामान्येनाप्येकस्वभावापेक्षया सदाद्यनेकविज्ञानादिकार्यजननैकस्वभावतयाऽ**विरोधात्** तदेकस्वभावतापत्ति**रिति** । १५ एतदाशङ्क्याह—**अत्रोच्यते—एकान्तवादिन एवायम्**—अनन्तरोदितः "ततस्तयोरैक्य'मित्यादिलक्षणो[1] **दोषः, नानेकान्तवादिनः** । कुत एतदित्याह—**तस्ये**त्यादि । तस्य—एकान्तवादिनो यस्माद**चित्रमेवैकम्** एकान्तैकरूपम् । यदि नामैवं ततः किमित्याह—**न चानेककार्यजननैकस्वभावतां विहाय ततः**—एकस्मात्, इह प्रक्रमे, अधिकृतैकस्वभावात्, **अनेकं भवति** एकापरविज्ञानादि । यदि २० नामैवं ततः किमित्याह—**अनेककार्यजनने च[2] नाचित्रमेकत्वम्**, अनेकगर्भैकत्वस्य सर्वथैकत्वविरोधात् ॥

दोषान्तरमाह **तद्भावेऽपी**त्यादिना । तद्भावेऽपि—अचित्रैकस्वभावेऽपि **कार्त्स्न्येन**—सामस्त्येन **एकेन** प्रमात्रा **तद्ग्रहात्**—अधिकृतस्वभावग्रहात् **तदपरावसायग्रहणप्रसङ्गः**, तस्मात्—एकस्मात् प्रमातुरपरे, प्रक्रमात् प्रमातार एव, तदपरे तेषामव- २५ सायाः—ज्ञानानि तेषां ग्रहणम्—अवगमस्तत्प्रसङ्ग इति समासः । कुत इत्याह—**तस्ये**त्यादि । तस्य—अधिकृतस्वभावस्य । किंविशिष्टस्येत्याह—**तज्जननस्वतत्त्वस्य**—अपरावसायजननस्वभावत्वस्य, **अन्यथा**—तदपरावसायग्रहणमन्तरेण **ग्रहणायोगात्** । अयोगश्च **तत्सावधिकत्वात्** तत्—अपरावसायजननस्वभावो ह्यसाविति तत्सावधिकः । यदि नामैवं ततः किमित्याह—**न निरवधिकं ग्रहणं तत्**—अपरावसाय- ३० जननस्वभावविकलं **ग्रहणं** तद्ग्रहणम्, तदपरावसायजननस्वभावग्रहणमिति **भावनीयमेतत्** ॥

१ द्रष्टव्यं १९४ तमे पृष्ठे ।　२ 'वा' इति घ-पाठः ।

( मूलम् )

भावनीयम् ॥ मलसामर्थ्यात् तदग्रहणम्, तदग्रहणमेव सर्वथै-कत्वात्, अन्यथाऽस्य ग्रहणाग्रहणप्रसङ्गः, तथा च सत्यसन्मतानु-
५ वाद एव, गृह्यमाणागृह्यमाणयोरेकत्वविरोधात्। इति तच्चित्रतयैव कथञ्चित् तद्ग्रहणादेकस्याप्यनेकप्रमातृभिरवसायः, नान्यथा, उक्त-[1] दोषानतिवृत्तेरित्यलं प्रसङ्गेन ॥

यच्चोक्तम्[2]—'किञ्च विकल्पात्मकत्वेऽस्य निश्चयात्मकमिदमित्य-नेकप्रमाणवादहानिः, तेनैव वस्तुनो निश्चयात्, नित्यत्वादौ भ्रान्त्यनु-
१० पपत्तेः। अनेकधर्मके वस्तुनि अन्यतरधर्मनिश्चयात् तदन्यनिश्चयाय प्रमाणान्तरसाफल्यमिति चेत्' इत्याशङ्क्य 'न, एकधर्मविशिष्टस्यापि निश्चये सर्वधर्मवत्तया निश्चयात्, प्रमाणान्तरस्य निश्चितमेव विषयी-कुर्वतः स्मृतिरूपानतिक्रमात्, एकधर्मद्वारेणापि तद्गतो निश्चया-त्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकारकशक्त्यभिन्नात्मनो
१५ निश्चयात्' इत्यादि, तदप्ययुक्तम्। छद्मस्थज्ञानस्येत्थमप्रवृत्तेः, ज्ञेय-

( स्वो० व्या० )

पराभिप्रायमाह—**मलसामर्थ्याद्** हेतोः **तदग्रहणं**—अपरावसायाख्यावध्य-ग्रहणम्। एतदाशङ्क्याह—**तदग्रहणमेव** तस्य—अधिकृतस्वभावस्याग्रहणमेव। कुत इत्याह—**सर्वथैकत्वात्**, एक एव ह्यसौ तदपरावसायजननस्वभाव इति, तदग्रहणेऽ-
२० ग्रहणमिति गर्भः। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे तदवधि-ग्रहणानभ्युपगमे**ऽस्य**—स्वभावस्य **ग्रहणाग्रहणप्रसङ्गः**, सामान्येन ग्रहणादवधि-मत्तयाऽग्रहणात्। यदि नामैवं ततः किमित्याह—**तथा च सति**—एवं च सति **अस्म-न्मतानुवाद एव** तच्चित्रताविधानेन, अत एवाह—**गृह्यमाणागृह्यमाणयोः** धर्मयो**रेकत्वविरोधात्**। **इति**—एवं **तच्चित्रतयैव**—स्वभावचित्रतयैव **कथ-**
२५ **ञ्चित्**—केनचित् प्रकारेण **तद्ग्रहणात्**—अधिकृतस्वभावग्रहणात् **एकस्यापि** वस्तुनः सामान्येन **अनेकप्रमातृभिरवसायः**, **नान्यथा**। कुत इत्याह—**उक्तदोषानतिवृत्तेः**—'ततस्तयोरैक्य'मित्याद्युक्त[3]दोषानतिवृत्ते**रित्यलं प्रसङ्गे**नेति ॥

**यच्चोक्तं** पूर्वपक्षे[4]—'**किञ्च विकल्पात्मकत्वेऽस्ये**त्यादि यावदे**कधर्मद्वारे-णापि तद्गतो निश्चयात्मना प्रत्यक्षेण विषयीकरणे सकलधर्मोपकार-**
३० **कशक्त्यभिन्नात्मनो निश्चयात्' इत्यादि, तदप्ययुक्तम्**। कुत इत्याह—

१ 'नान्यथा, इत्युक्तदोषा०' इति घ—पाठः। २ १४२ तमे पृष्ठे १४३ तमे च। ३ द्रष्टव्यं १९४ तमे पृष्ठे। ४ १४२ तमे पृष्ठे १४३ तमे च।

(मूलम्)

**तज्ज्ञान-क्षयोपशमानां तथास्वभावत्वादित्युक्तप्रायम्, केवलिनां तु तथानिश्चयः प्रमाणान्तराभावश्चेति न कश्चिद् दोषः। आह–एवमपि अनेकस्वभावतया ततस्तथानियतात् कथमनन्तानां केवलिनां तद-** ५ **विकलात्मग्राहकज्ञानभावः, एकत्र कार्त्स्न्योपयोगित्वेन तत्तज्जनन-स्वभावत्वात्, अपरस्यापि तद्भावापत्तेर्हेत्वविशेषादिति, न, हेत्व-**

(स्वो० व्या०)

**छद्मस्थज्ञानस्येत्थमप्रवृत्तेः** कारणात्। अप्रवृत्तिश्च **ज्ञेय-तज्ज्ञान-क्षयोपशमानां** त्रयाणामपि **तथास्वभावत्वात्**–चित्रतया असर्वधर्मवत्तया निश्चय- १० निबन्धनस्वभावत्वादित्युक्तप्रायं–प्रायेणोक्तम्। **केवलिनां तु**–क्षीणसकलावरणानां **तथानिश्चयः**–सकलधर्मवत्तया निश्चयः। **प्रमाणान्तराभावश्च**–केवलिनामनुमानाद्यभावश्च **इति न कश्चिद् दोषः। आह–एवमपि**–केवलिनां तु तथानिश्चयेऽपि सति **अनेकस्वभावतया ततः**–वस्तुनः **तथानियतात्**–समग्रानेकस्वभावतया नियतात्, एकस्वभावत्वविकल्पादित्यर्थः, **कथमनन्तानां** प्रमा- १५ तृणां **केवलिनां**–वृषभादीनां **तदविकलात्मग्राहकज्ञानभावः**, तस्य–अनेकस्वभावतया तथानियतस्य वस्तुनः अविकलो य आत्मा तद्ग्राहकज्ञानोत्पादः ततः कथम्? नैवेत्यर्थः। कथं नेत्याह–एकत्रेत्यादि। **एकत्र**–ऋषभादिज्ञाने **कार्त्स्न्योपयोगित्वेन** हेतुना **तत्तज्जननस्वभावत्वात्**–अधिकृतवस्तुन **ऋषभादिज्ञान**जननस्वभावत्वात्, नान्यथा ततस्तथा तदुत्पाद इति भावनीयम्। २० यदि नामैवं ततः किमित्याह–**अपरस्यापि**–**वर्द्धमाना**दिज्ञानस्य **तद्भावापत्तेः**–**ऋषभा**दिज्ञानापत्तेः। कथमित्याह–**हेत्वविशेषादिति। ऋषभादि-ज्ञान**जननस्वभावं ह्यधिकृतं वस्तु तद्धेतुस्ततस्तस्यापि तद्वत् तद्भावापत्तिः, अतो न ततोऽनन्तानां तदविकलात्मग्राहकज्ञानभाव इति। उक्तं च–"**यतः स्वभावतो**

(विवरणम्) २५

(२३) **ततस्तस्यापि तद्वत् तद्भावापत्तिरि**ति। ततः–कृत्स्नैकवस्तुजन्यत्वात् हेतोस्तस्यापि–**वर्द्धमाना**दिज्ञानस्य तद्वत्–**वृषभा**दिज्ञानवत्। किमित्याह–तद्भावापत्तिः–**ऋषभा**दिज्ञानत्वापत्तिः॥

१ 'त्वादित्युक्तं, केवलिनां' इति क–पाठः। २ 'कार्त्स्न्येऽपि योगित्वेऽपि तत्तज्जनन०' इति क–पाठः। ३ 'निश्चयं' इत्यधिकः क–पाठः। ४ 'केवलिनामृषभादीनां' इति क–पाठः। ५ 'तदविकलात्मकग्राहक०' इति घ–पाठः। ६ ४९ तमे पृष्ठे। ७ कृत्स्नैक०' इति क–पाठः। ८ 'तद्वदृषभादि०' इति च–पाठः।

(मूलम्)

**विशेषासिद्धेः, ज्ञानिनोऽन्यत्वात् अधिकृतवस्तुनश्च विचित्रत्वात्, तत्तज्ज्ञान्यपेक्षया तत्र तत्र तदा तदाऽविकलात्मग्राहकज्ञाना-**
५ **भिव्यञ्जकत्वेनैकत्र कात्स्न्योंपयोगित्वादिति । न चैवमपरस्यापि तद्भावापत्तिः, अधिकृतवस्तुनस्तथात्वविरोधादिति सूक्ष्मधिया भावनीयम् । एकान्तैकस्वभाववस्तुवादिनस्त्वेष दोषोऽनिवारत-**

(स्वो० व्या०)

जातम्" इत्यादि, असर्वज्ञता वा सर्वेषामन्योन्यमधिकृतवस्तुनोऽनुत्पत्तितस्तदन-
१० धिगमादिति पराभिप्रायः । एतदाशङ्क्याह–**नेत्यादि**, न–नैतदेवं यदभ्यध्यायि परेण । कुत इत्याह–**हेत्वविशेषासिद्धेः** । कथमसिद्धिरित्याह–**ज्ञानिनोऽन्यत्वात्–वर्द्धमानादेः** । द्वयमिह ज्ञानहेतुः–जीवोऽधिकृतवस्तु च । न चैतदप्येकरूपमेव इत्याह–**अधिकृतवस्तुनश्च** अनेकस्वभावतया तथानियतस्य **विचित्रत्वात्** । ततः किमित्याह–**तत्तज्ज्ञान्यपेक्षया–ऋषभ-वर्द्धमानादिज्ञान्यपेक्षया तत्र**
१५ **तत्र**–'सिद्धार्थ'वन-'ऋजुपालिका'तीरादौ क्षेत्रे **तदा तदा**–सुषमदुःषमादुःषम-सुषमान्तादौ काले **अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मकत्वेन** एवम्भूते-नात्मना **एकत्र–ऋषभादिज्ञाने कात्स्न्योंपयोगित्वात्**–सामस्त्येनोपयोगि-त्वादिति । **न** चेत्यादि । न च **एवम्**–उक्तेन प्रकारेण–**अपरस्यापि–वर्द्धमानादिज्ञानस्य तद्भावापत्तिः–ऋषभादिज्ञानत्वापत्तिः** । कुत इत्याह–
२० **अधिकृतवस्तुनो**ऽनेकस्वभावतया तथानियतस्योक्तवद् विचित्रस्य **तथात्ववि-रोधात्**–तत्तज्ज्ञान्यपेक्षयेत्यादित्वविरोधात् । तथाहि–'ऋजुपालिका'तीरादौ दुःषम-सुषमान्ते च **वर्द्धमानादिज्ञान्यपेक्षया** अविकलात्मग्राहकज्ञानाभिव्यञ्जकात्मक-त्वेनैव एकत्र **ऋषभादिज्ञाने**ऽस्य कात्स्न्योंपयोग इति **वर्द्धमानादिज्ञानाभावे** तथात्वविरोधः । एवमन्यापेक्षयाऽप्यतिसूक्ष्म**धिया भावनीयम्** एतत्, अतिगहन-

२५ (विवरणम्)

(९) **असर्वज्ञता वा सर्वेषामन्योन्यमिति** । अन्योन्यं–परस्परं सर्वेषां–**वर्द्ध-मानादीनामसर्वज्ञता वा स्यात्** । कुत इत्याह–(९-१०) **अधिकृतवस्तुनोऽनुत्पत्ति-तस्तदनधिगमादिति** । अधिकृतवस्तुन एकत्र सर्वज्ञज्ञाने लब्धव्यापारात् सकाशाद-नुत्पत्तितः कारणात् सर्वज्ञज्ञानानां तदनधिगमात्–सर्वैरधिकृतवस्तुनोऽपरिच्छेदात् ॥

३० (२१-२४) **'ऋजुपालिक'तीरादौ दुःषमसुषमान्ते च वर्द्धमानादिज्ञान्य-**

१ 'मानादीनांमसर्वज्ञता वा स्यात्' इति ख–पाठः । २ 'सर्वज्ञत्वात्' कुत इति क–पाठः । ३ 'ज्ञानापेक्षया' इति च–पाठः ।

( मूलम् )

प्रसर एव, तद्भेदनिबन्धनाऽधिकृतवस्तुवैचित्र्यानुपपत्तेरिति ॥

किञ्च निर्विकल्पकेनापि प्रत्यक्षेणैकस्वभावे वस्तुनि परिच्छिन्ने कथं नानेकप्रमाणवादहानिरिति चिन्त्यम् । प्रत्यक्षस्यानिश्चयरूपत्वात् ५ चिन्तितमेवैतत् ॥

( स्वो० व्या० )

त्वादिति । एकान्तेत्यादि । एकान्तैकस्वभाववस्तुवादिनस्तु–बौद्धादेः एष दोषः–अनन्तानां तदविकलात्मग्राहकज्ञानाभावलक्षणः अनिवारितप्रसर एव । कथमित्याह–तद्भेदनिबन्धना–अनन्तज्ञानभेदनिबन्धना, अधिकृतवस्तुवैचि- १० त्र्यानुपपत्तेः । उक्तवदधिकृतवस्तुवैचित्र्यमेवात्र कारणमिति ॥

दूषणान्तरमाह किञ्चेत्यादिना । किञ्च निर्विकल्पकेनापि प्रत्यक्षेण भवद- भिमतेन एकस्वभावे–एकान्तैकस्वभावे वस्तुनि भवदभिमते परिच्छिन्ने सति कथं नानेकप्रमाणवादहानिरिति चिन्त्यम् । प्रमेयान्तराभावेन प्रमाणान्तरा- भावात् हानिरेवेत्यर्थः ॥ १५

( विवरणम् )

पेक्षयेत्यादेस्तथात्वविरोध इतिपर्यन्तस्यैवमक्षरयोजना–'ऋजुपालिका'तीरादौ क्षेत्रे दुःषमसुषमान्ते च काले वर्द्धमानादिज्ञान्यपेक्षया अविकलात्मग्राहकज्ञानाभिव्य- ञ्जकात्मकत्वेनैवोपलक्षितस्य सतोऽस्य[1] वस्तुन एकत्र–ऋषभादिज्ञाने उपयोगो वर्तत इति कृत्वा वर्द्धमानादिज्ञानस्य ऋषभादिज्ञानरूपतया भावे तथात्वविरोधस्तत्त्व- २० ज्ञान्यपेक्षया तत्र तत्र तदा तदाऽविकलात्मग्राहकज्ञानेत्यादिवाक्योक्तार्थविरोधः । अयमत्र भावः–यदि यदेतद् युगादिदेवज्ञानं तदेव वर्द्धमानज्ञानं स्यात् तदा ऋषभज्ञाने एष्यत्काले क्षेत्रे भेदे च वस्तु महावीरज्ञानजनकतया न प्रतिभासेत, महावीरज्ञानस्य ऋषभज्ञानभिन्नस्वभावस्या भावात्, प्रतिभासते च तत् तथा । अतः कथञ्चिद् भेद एव नाभिसिद्धार्थपार्थिवनन्दनज्ञानयोः । न चैवमन्यो- २५ न्यमसर्वज्ञता[2] सर्वस्योभाभ्यामपि ज्ञानात्, परमन्यजीवद्रव्यरूपेण सता ऋषभेण ज्ञातं वस्तु अन्यजीवद्रव्यस्वभावेन च महावीरेण, एवमन्यक्षेत्रगतेन नाभिसूनुना अन्यक्षेत्राश्रितेन चरमतीर्थपतिना, एवं कालेऽपि, एवं नाभिसूनुत्वादिपर्यायपर्या- पन्नेन सता ऋषभेण वस्तु व्यज्ञायि सिद्धार्थसूनुत्वादिपर्यायोपगतेन च महावीरेणेति ॥ ३०

(१४-१५) प्रमेयान्तराभावेन प्रमाणान्तराभावात् हानिरेवेत्यर्थ इति ।

१ 'स्वतोऽस्य' इति क–पाठः । २ 'अन्यो न सर्वज्ञता' इति क–पाठः ।

( मूलम् )

आह च न्यायवादी-"न प्रत्यक्षं कस्यचिन्निश्चायकं तद् यमपि गृह्णाति तं न निश्चयेन", किं तर्हि? तत्प्रतिभासेन । तच्च यत्रांशे ५ पाश्चात्यं निश्चयं जनयितुं शक्नोति तत्रैव प्रामाण्यमात्मसात्कुरुते, यत्र तु भ्रान्तिकारणसद्भावादशक्तं तत्र प्रमाणान्तरं व्याप्रियते, समारोपव्यवच्छेदार्थमिति भ्रान्तिव्युदासाय प्रमाणान्तरप्रवृत्तिः इति ॥

अत्रोच्यते यदुक्तम्-"न प्रत्यक्षं कस्यचिन्निश्चायकम्" इत्यत्र १० कोऽयं निश्चयो नाम?। स्वालम्बनाध्यवसाय एवेति चेत्, नायं तदा-

( स्वो० व्या० )

पराभिप्रायमाह-प्रत्यक्षस्य-निर्विकल्पकस्य अनिश्चयरूपत्वात् कारणात् चिन्तितमेवैतत् ॥

यदुक्तं भवता न चैतदपूर्वमित्युपदर्शयन्नाह-आह च न्यायवादी-धर्म- १५ कीर्तिर्वार्तिके । [1]किमाह इत्याह-न प्रत्यक्षं कस्यचित्-पदार्थस्य [2]निश्चायकं [3]तद् यमपि पदार्थं गृह्णाति, तं न निश्चयेन-एवमेतदित्येवंरूपेण, किं तर्हि? तत्प्रतिभासेन आदर्शवत् गृह्यमाणाकारेण [4]तच्च-एवम्भूतं प्रत्यक्षं यत्रांशे-वस्तु-गते पाश्चात्यं निश्चयं जनयितुं शक्नोति नीलादौ तत्रैव अंशे प्रामाण्यमा-त्मसात्कुरुते नीलादौ । यत्र तु अंशेऽनित्यादौ भ्रान्तिकारणसद्भावात् २० कारणात् अशक्तं पाश्चात्यं निश्चयं जनयितुम्, तत्रांशे प्रमाणान्तरं व्याप्रि-यते अनुमानम् । किमर्थमित्याह-समारोपव्यवच्छेदार्थं-परिकल्पितसमारोप-व्यवच्छेदार्थम् इति-एवं भ्रान्तिव्युदासाय-समारोपव्युदासाय प्रमाणान्तर-प्रवृत्तिः-अनुमानप्रवृत्तिः ॥

इति-एवं पूर्वपक्षमाशङ्क्याह-अत्रोच्यते-यदुक्तमित्यादि । यदु[5]क्तमादौ "न २५ प्रत्यक्षं कस्यचिन्निश्चायकम्" इत्यत्र व्यतिकरे कोऽयं निश्चयो नाम?। स्वालम्बनाध्यवसायः-स्वविषयपरिच्छेद एव । इति चेत्, एतदाशङ्क्याह-

( विवरणम् )

निर्विकल्पकेन हि प्रत्यक्षेण निरंशैकस्वभावं वस्तु व्यवच्छिन्नम् । अतो नास्त्येवाधिकं प्रमेयं यत्रानुमानं प्रवर्तिष्यते ॥

१ 'किमित्याह' इति क-पाठः । २ 'निश्चायकं तथमपि' इति ङ-पाठः । ३ प्रत्यक्षमिति । ४ 'तत्त्वैवम्भूतं' इति क-पाठः । ५ अस्मिन्नेव पृष्ठे ।

( मूलम् )

**कारोत्पत्तिव्यतिरेकेण । अस्त्वेवं ततः को दोष इति चेत्, नासौ न प्रत्यक्षेऽपि कथमनिश्चायकं तत्? वस्तुमात्रप्रतिभासनादिति चेत्, अवस्तुप्रतिभासी तर्हि निश्चयः । न, तत्रैव दृढः प्रत्यय इति चेत्, ५ कथं तदाकारशून्यस्तत्रेति? । किञ्च किं पुनरस्य दार्ढ्यं किं निर्विकल्पकसमनन्तरत्वं किं वा वासनाजन्म उताध्यवसिततद्भावता, आहोस्विद् ध्वनियोगः? । न तावन्निर्विकल्पकसमनन्तरत्वम्, तदपरनिर्विकल्पकेन व्यभिचारात्, निर्विकल्पकसमनन्तरान्निर्विकल्पकोत्पत्तेः । नापि वासनाजन्म, निर्विकल्पकस्यापि तत उत्पत्तेः, तत्तत्सम- १०**

---

( स्वो० व्या० )

**नायं**—यथोदिताध्यवसायः **तदाकारोत्पत्तिव्यतिरेकेण**—स्वालम्बनाकारोत्पत्तिव्यतिरेकेण । **अस्त्वेवं**—भवतु स्वालम्बनाकारोत्पत्तिरेव निश्चयः **ततः को दोषः**? । **इति चेत्**, एतदाशङ्क्याह—**नासौ**—स्वालम्बनाकारोत्पत्तिः **न प्रत्यक्षेऽपि** । किं तर्हि? अस्त्येव । अतः **कथमनिश्चायकं तत्**—प्रत्यक्षम्? भवदभिप्रेतनिश्चयलक्षणो- १५ पपत्तेर्निश्चायकमेवेत्यर्थः । **वस्तुमात्रप्रतिभासनात्** अनिश्चायकं तत् । **इति चेत्**, एतदाशङ्क्याह—**अवस्तुप्रतिभासी तर्हि निश्चयः** ततोऽनिश्चय इति गर्भः । **न** अवस्तुप्रतिभासी, किन्तु **तत्रैव**—वस्तुनि **दृढः प्रत्ययः**—निश्चयः । **इति चेत्**, एतदाशङ्क्याह—**कथं तदाकारशून्यः**—वस्त्वाकारशून्यस्तन्मात्रप्रतिभासनेन **तत्रेति**—वस्तुनीति? । अभ्युच्चयमाह **किञ्चे**त्यादिना । [1]**किं पुनरस्य**—प्रत्ययस्य २० **दार्ढ्यं किं निर्विकल्पकसमनन्तरत्वम्**? । निर्विकल्पकं समनन्तरो यस्येति विग्रहस्तद्भावो निर्विकल्पकसमनन्तरत्वं तत् । **किं वा वासनाजन्म**? वासनातो जन्म तत्, **उताध्यवसिततद्भावता**? अध्यवसितः परिच्छिन्नः तद्भावः—वस्तुभावो येनेति विग्रहः, तद्भावोऽध्यवसिततद्भावता । **आहोस्विद्[2] ध्वनियोगः**—शब्दसम्बन्धः प्रत्ययदार्ढ्यमिति? । एवं विकल्पचतुष्टयमुपन्यस्याह—**न तावन्नि- २५ र्विकल्पकसमनन्तरत्वं** प्रत्ययदार्ढ्यम् । कुत इत्याह—**तदपरनिर्विकल्पकेन व्यभिचारात्**, तस्मात्—अधिकृतप्रत्ययादपरं च तन्निर्विकल्पकं च तेनानैकान्तिकत्वात् । एतत्प्रकटनायैवाह—**निर्विकल्पकसमनन्तरात्** सकाशात् प्रबन्धेन **निर्विकल्पकोत्पत्तेः** ।

**नापि वासनाजन्म** प्रत्ययदार्ढ्यम् । कुत इत्याह—**निर्विकल्पकस्यापि** ३०

---

१ 'किञ्च पुनरस्य' इति क-पाठः । २ 'आहोश्वित् ध्वनि०' इति ङ-पाठः ।

( मूलम् )

**नन्तराव्यतिरेकात्। नाप्यध्यवसिततद्भावता, अतदाभेन तत्परिच्छेदायोगात्, तत्त्वतस्तदनुपपत्तेः। नापि ध्वनियोगः, तत्तादात्म्याद्ययोगतस्तदसिद्धेः, तद्युक्तस्यापि तदाकारोत्पत्तिप्रधानत्वादिति। न च सैव केवलाऽनिश्चयः, स्वालम्बनपरिच्छेदात्। न च न सोऽपि, तत्त्वतः तत्स्वभावतया ततस्तद्बोधोपपत्तेः। न च मूककल्पत्वात्**

( स्वो० व्या० )

**ततः**–वासनात उत्पत्तेः कारणात्। उत्पत्तिश्च **तत्तत्समनन्तराव्यतिरेकात्** तस्याः–वासनायास्तत्समनन्तराव्यतिरेकात्–निर्विकल्पकसमनन्तराव्यतिरेकात्। समनन्तराच्चाविकल्पकजन्मेति भावना।

**नाप्यध्यवसिततद्भावता** प्रत्ययदार्ढ्यम्। कुत इत्याह–**अतदाभेन**–अवस्त्वाकारेण ज्ञानेन **तत्परिच्छेदायोगात्**–वस्तुपरिच्छेदायोगात्। अयोगश्च **तत्त्वतः**–परमार्थतः **तदनुपपत्तेः**–अध्यवसिततद्भावतानुपपत्तेः। नातदाभं तत्परिच्छेदकम्, न [1]चातो नाध्यवसिततद्भावतेति भावनीयम्।

**नापि ध्वनियोगः** प्रत्ययदार्ढ्यम्। कुत इत्याह–**तत्तादात्म्याद्ययोगतः** तस्य–प्रत्ययस्य तेन ध्वनिना तादात्माद्ययोगतः तादात्म्यम्–एकत्वम्, 'आदि'–शब्दात् तदुत्पत्तिग्रहः, **तदसिद्धेः**–ध्वनियोगासिद्धेः। तथा **तद्युक्तस्यापि**–ध्वनियुक्तस्यापि, प्रत्ययस्येति प्रक्रमः, **तदाकारोत्पत्तिप्रधानत्वात्**–विषयाकारोत्पत्तिप्रधानत्वादिति। **न चेत्यादि**। न च **सैव**–तदाकारोत्पत्तिः **केवला**–ध्वनियोगरहिता **अनिश्चयः**–अपरिच्छेदः। कुत इत्याह–**स्वालम्बनपरिच्छेदात्**–स्वविषयपरिच्छेदात्, केवलयाऽपि। **न च न सोऽपि**–[2]स्वालम्बनपरिच्छेदस्तत्त्वतः–परमार्थेन। कुत इत्याह–**तत्स्वभावतया**–स्वालम्बनपरिच्छेदस्वभावतया, **ततः**–स्वालम्बनात् **तद्बोधोपपत्तेः**–विवक्षितालम्बनबोधोपपत्तेः, अन्यथा तदुत्तरक्षणवत् ततो भावेऽप्यबोधरूपतैवेति हृदयम्। **न चेत्यादि**। न च **मूककल्पत्वात्**,

( विवरणम् )

(१०) **निर्विकल्पकसमनन्तराव्यतिरेकादिति**। न हि बौद्धमते ज्ञानक्षणभिन्ना काचिद् वासनाऽस्ति॥

(१९-२०) **विषयाकारोत्पत्तिप्रधानत्वादिति**। अनुभूयते हि [3]ध्वनियुक्तो बोधः सविकल्पकज्ञानलक्षणो घटाद्याकारः। न चाबाधितेऽनुभवे कश्चिद् विरोधः॥

(२४-२५) **अन्यथा तदुत्तरक्षणवत् ततो भावेऽप्यबोधरूपतैवेति हृदय-**

१ 'चाऽतोऽन्याध्यवसित०' इति क–पाठः। २ 'स्वावलम्बन०' इति क–पाठः। ३ 'ध्वनितो बोधः' इति ख–पाठः।

( मूलम् )

नेति, बोधस्यानिश्चयत्वविरोधात् । न चास्पष्टतया नेति, तस्याः[1] स्पष्टताऽभ्युपगमादिति ॥

यच्चोक्तम्[2]—'तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति, ५ तत्रैव प्रामाण्यमात्मसात्कुरुते' एतदप्ययुक्तम्, तस्य निरंशत्वाभ्युपगमात्; अन्यथा परसिद्धान्तापत्तिः। व्यावृत्तयोऽंशा इति चेत्, न, तासां परमार्थतस्तदव्यतिरिक्तत्वेन तन्मात्ररूपत्वात्, तस्यैव[3] त्रैलोक्यव्यावृत्त्यैकस्वभावत्वादिति। कथं च निश्चयस्य विकल्पात्मकत्वात् तत्त्वतो निर्विषयत्वात् तद्विषयता युक्ता येनोच्यते-[4] १० 'यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति' इति। स ततो भवतीति

( स्वो० व्या० )

केवलायास्तदाकारोत्पत्तेरिति प्रक्रमः, **नेति** न निश्चयरूपता। कुत इत्याह—**बोधस्यानिश्चयत्वविरोधात्**। बोधो निश्चयोऽवगम इति तुल्यार्थाः। **न चे**त्यादि। न च **अस्पष्टतया** कारणेन **नेति**—न निश्चयरूपता, केवलायास्तदाकारोत्पत्ते- १५ रिति प्रक्रमः। कुत इत्याह—**तस्याः**—तदाकारोत्पत्तेः **स्पष्टताऽभ्युपगमादिति**॥

**यच्चोक्तं** पूर्वपक्षग्रन्थ[5] एव—'**तच्च यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति, तत्रैव प्रामाण्यमात्मसात्कुरुते', एतदप्ययुक्तम्**। कुत इत्याह—**तस्य**, प्रक्रमात् प्रमेयवस्तुनः, **निरंशत्वाभ्युपगमात्, अन्यथा**—एवमनभ्युपगमे **परसिद्धान्तापत्तिः** तत्सांशतापत्त्या इत्यर्थः। **व्यावृत्तयः** २० **अंशा इति चेत्**, तथाहि—त्रैलोक्यव्यावृत्तं तदिति, एतदाशङ्क्याह—**न, तासां**—व्यावृत्तीनां **परमार्थतस्तदव्यतिरिक्तत्वेन**—वस्त्वव्यतिरिक्तत्वेन हेतुना **तन्मात्ररूपत्वात्**—वस्तुमात्ररूपत्वात्। एतदेव स्पष्टयन्नाह—**तस्यैव**—वस्तुनस्त्रैलोक्यव्यावृत्तिरेवैकः स्वभावो** यस्य तत् तथेति विग्रहः, तद्भावस्तस्मादिति। दोषान्तरमाह **कथं चे**त्यादिना। कथं च **निश्चयस्य विकल्पात्मकत्वात्** २५ कारणात् **तत्त्वतः**—परमार्थेन **निर्विषयत्वात् तद्विषयता**—वस्तुविषयता **युक्ता येनोच्यते**[6]—'**यत्रांशे पाश्चात्यं निश्चयं जनयितुं शक्नोति**' इति नह्येतदतद्विषयत्वे चारु। **स तत** इत्यादि। सः—निश्चयस्ततः—वस्तुनो **भवतीति** कृत्वा

( विवरणम् )

मिति। अन्यथा—यदि ततस्तद्बोधोपपत्तिर्नाभ्युपगम्यते ततस्तदुत्तरक्षणवद्—बाह्या- ३० लम्बनपदार्थाभिमतनक्षणवत् ततः—आलम्बनाद् भावे विज्ञानस्याबोधरूपतैव स्यात्॥

१ 'तत्स्पष्ट०' इति क-पाठः। २ २०० तमे पृष्ठे। ३ 'च' इत्यधिको ग-पाठः। ४-६ २०० तमे पृष्ठे।

( मूलम् )

**तन्निश्चय इति चेत्, न, अतिप्रसङ्गात्, नीलादि पश्यतः क्वचिद् भिन्नजातीयविकल्पाभ्युपगमात्, तस्य च ततो भावात्, अन्यथा ५ अहेतुकत्वापत्तेः। संवादको निश्चय इति [1]चेत्, न, अप्राप्यदेशगत-जलादिनिश्चयेन व्यभिचारात्। न च संवादनशक्तिरेव संवादनमि-त्यदुष्टम्, शक्तेरप्रत्यक्षत्वात्, कार्यमन्तरेण तद्भावानवगतेः। न च ततोऽनन्या शक्तिरिति तदवगतावेव तदवगतिः, तदाभासतोऽप्रवृ-त्तिप्रसङ्गात्, तच्छक्त्यवगमापत्तेः। न च तदाभासत्वतो न तच्छक्त्य-१० वगमः, तेनाप्यात्मवेदनात् तस्याश्च तदनन्यत्वात्। न च सम्यग् निश्चयशक्तेरेवावगतिरिति युक्तम्, तत्त्वतो वचनमात्रत्वात्। तथा-**

( स्वो० व्या० )

**तन्निश्चयः**—वस्तुनिश्चयः। **इति चेत्**, एतदाशङ्क्याह—**न, अतिप्रसङ्गात्**। एनमेवाह—**नीलादि पश्यतः** प्रबन्धेन **क्वचित्**—अर्थान्तरावगमे **भिन्नजातीय-१५ विकल्पाभ्युपगमात्**—स्मार्त्तपीतादिविकल्पाभ्युपगमात्, **तस्य च**—विकल्पस्य **ततः**—नीलादिदर्शनाद् **भावात्, अन्यथा**—एवमनभ्युपगमेऽ**हेतुकत्वापत्तेः** तस्यातिप्रसङ्ग इति ॥

निश्चयमेवाधिकृत्य प्रकारान्तरमाह—**संवादको निश्चयः। इति चेत्**, एत-दाशङ्क्याह—**न, अप्राप्यदेशगतजलादिनिश्चयेन व्यभिचारात्**। स हि २० निश्चयो[2]ऽसंवादकश्च। **न च संवादनशक्तिरेव संवादनमित्यदुष्टम्**, किन्तु दुष्टमेव। कुत इत्याह—**शक्तेरप्रत्यक्षत्वात्**। यदि नामैवं ततः किमित्याह—**कार्यमन्तरेण** संवादनादिरूपं[3] **तद्भावानवगतेः**—शक्तिभावानवगतेः। **न चे**-त्यादि। न च **ततः**—निश्चयात् **अनन्या शक्तिरिति** कृत्वा **तदवगतावेव**—निश्चयावगतावेव **तदवगतिः**—शक्त्यवगतिः। कुत इत्याह—**तदाभासतः**—२५ निश्चयाभासतः। किमित्याह—**अप्रवृत्तिप्रसङ्गात्**। प्रसङ्गश्च **तच्छक्त्यवगमा-पत्तेः**—तदाभासशक्त्यवगमापत्तेः। **न चे**त्यादि। न च **तदाभासत्वतः** कारणात्, **न तच्छक्त्यवगमः**—न तदाभासशक्त्यवगमः, किन्त्ववगम एव। कुत इत्याह—**तेनापि**—तदाभासेन **आत्मवेदनात्** कारणात्। यदि नामैवं ततः किमित्याह—**तस्याश्च**—तदाभासशक्तेः **तदनन्यत्वात्**—तदाभासानन्यत्वात्। **न चे**त्यादि। ३० **न च सम्यग् निश्चयशक्तेरेवावगतिरिति युक्तम्**। कुत इत्याह—

१ 'चेत्, आप्य०' इति ग-पाठः। २ 'ऽसंवादश्च' इति ङ-पाठः। ३ 'अन्तरेणेति शेषः' इति घ-पुस्तके टिप्पणकम्।

( मूलम् )

प्रतीत्यभावादिति। एवं च 'तत्रैव प्रामाण्यमात्मसात्कुरुते'[१] इति वचनमात्रम् ॥

इतश्च वचनमात्रम्[२]–'यत्र तु भ्रान्तिकारणसद्भावादशक्तं तत्र प्रमाणान्तरं व्याप्रियते' इत्याद्युपन्यासात्। तथाहि–यदि तत् क्वचिदशक्तं पाश्चात्यं निश्चयं जनयितुमेवं तर्ह्यशक्तमेव, सर्वथैकत्वात् एकस्य चैकस्वभावत्वेन शक्तत्वाशक्तत्वविरोधात्, कथञ्चिदविरोधेऽप्यभ्युपगमविरोधात्, भिन्नांशविषयनिश्चयभावाभावयोस्तु न तस्य किञ्चिदिति कथं क्वचित् प्रामाण्यमात्मसात्कुरुत इति?। नैवं

( स्वो० व्या० )

तत्त्वतो वचनमात्रत्वात्। वचनमात्रत्वं च तथा–सम्यग् निश्चयशक्त्यवगमरूपेण प्रतीत्यभावादिति। एवं च–यथोक्तनीत्या 'तत्रैव प्रामाण्यमात्मसात्कुरुते'[३] इति वचनमात्रम्, निरर्थकमित्यर्थः ॥

इतश्च वचनमात्रम्–'यत्र तु भ्रान्तिकारणसद्भावादशक्तं तत्र प्रमाणान्तरं व्याप्रियते' इत्याद्युपन्यासात् पूर्वपक्षग्रन्थे एव। इहैव भावार्थमाह[५] तथाहीत्यादिना। तथाहि–यदि तत्, प्रक्रमाद् अविकल्पम्, क्वचिदशक्तं पाश्चात्यं निश्चयं जनयितुम्, एवं तर्ह्यशक्तमेव–एकान्तेन। कुत इत्याह–सर्वथैकत्वात् कारणात्। एकस्य च वस्तुन एकस्वभावत्वेन हेतुना शक्तत्वाशक्तत्वविरोधात्। तथाहि–एकमेकस्वभावं यदि शक्तं शक्तमेव, अथाशक्तमशक्तमेवेति भावनीयम्। कथञ्चिदविरोधेऽपि निमित्तभेदेन शक्तत्वाशक्तत्वस्य अभ्युपगमविरोधादनेकान्तवादापत्त्या। अथ भिन्ना अस्यांशा इति। एतद्व्यपोहायाह–भिन्नांशेत्यादि। भिन्नौ च तौ, प्रत्यक्षादिति प्रक्रमः, अंशौ च भिन्नांशौ, तौ विषयौ ययोस्तौ भिन्नांशविषयौ, भिन्नांशविषयौ च तौ निश्चयौ चेति विग्रहः, तयोर्भावाभावौ तयोः पुनर्न तस्य–प्रत्यक्षस्य किञ्चिदिति–एवं कथं क्वचित् प्रामाण्यमात्मसात्कुरुत इति?। नैवमित्यादि।

( विवरणम् )

(२१) कथञ्चिदविरोधेऽपि निमित्तभेदेनेति। अनेकान्तवादिनो हि जैनस्य मते ज्ञानं ज्ञातुं[६]शक्याशक्यज्ञेयापेक्षया शक्तत्वाशक्तत्वलक्षणधर्मद्वयोपेतं प्रवर्तत इति निमित्तभेदः स्फुट एव ॥

१-४ द्रष्टव्यं २०० तमं पृष्ठम्। ५ 'भावनार्थमाह' इति घ-पाठः। ६ 'शक्त्या शक्यज्ञेयापेक्षया' इति क-पाठः।

( मूलम् )

**समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः, न्यायतः समारोपस्यैवायोगात्, सजातीयेतरविविक्तैकस्वभावस्य वस्तुन इन्द्रियज्ञाने प्रतिभासनात् रूपादिनिश्चयज्ञानवत् तन्निबन्धननिश्चयज्ञानानां [1]तमन्तरेणैव प्रवृत्तिसम्भवात् । तथाहि–यद् रूपादिदर्शनानन्तरमलिङ्गं निश्चयज्ञानं भवति, तत् कथमसति समारोपे [2]भवत् तद्व्यवच्छेदविषयम् ? ॥**

**स्यादेतत्, असमारोपविषये भावात् तद्व्यवच्छेदविषयम्, यत्र ह्यस्य समारोपो भवति यथा स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति, तद्विवेक एव च अन्यापोह इति, तदपि तन्मात्रा-**

---

( स्वो० व्या० )

नैवम्–उक्तेन प्रकारेण **समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः ।** कुत इत्याह–**न्यायतः**–न्यायेन **समारोपस्यैवायोगात् ।** अयोगश्च **सजातीयेतरविविक्तैकस्वभावस्य वस्तुन इन्द्रियज्ञाने प्रतिभासनात्** कारणात् । **रूपादिनिश्चयज्ञानवदिति** निदर्शनम् । **तन्निबन्धननिश्चयज्ञानानाम्**–अधिकृतवस्तुनिबन्धननिश्चयज्ञानानां **तमन्तरेण**–समारोपमन्तरेण एव **प्रवृत्तिसम्भवात्** कारणात् । न समारोपव्यवच्छेदार्थमपि प्रमाणान्तरप्रवृत्तिः, अनित्यत्वादिनिश्चयानामपि समारोपव्यवच्छेदमन्तरेणैव भावप्रसङ्गादित्यर्थः । अधिकृतार्थभावनाय एवाह–**तथाहीत्यादि** । तथाहीत्युपप्रदर्शने । **यद् रूपादिदर्शनानन्तरम्**–अव्यवधानेन **अलिङ्गं**–लिङ्गरहितं **निश्चयज्ञानं भवति,** प्रक्रमाद् रूपादिविषयमेव **तत् कथमसति समारोपे**–अरूपादिविषये **भवत्**–उत्पद्यमानं **तद्व्यवच्छेदविषयं**–समारोपव्यवच्छेदविषयम् ? [3]नैव समारोपाभावेन तद्व्यवच्छेदायोगादिति ॥

**स्यादेतत्, असमारोपविषये भावात् तद्व्यवच्छेदविषयमिति** समारोपस्य विषयः समारोपविषयः, न समारोपविषयः असमारोपविषयः, तस्मिन्, समारोपशून्य इत्यर्थः, भावात्–उत्पत्तेः कारणादधिकृतनिश्चयज्ञानस्य तद्व्यवच्छेदविषयमिति । एतद्भावनायैवाह–**यत्र**–पदार्थे 'हि'शब्दोऽवधारणेऽस्य–पुरुषस्य **समारोपो भवति, यथा स्थिरः सात्मक इति** [4]वाऽयं पदार्थः, **न तत्र निश्चयो भवति** अनित्यत्वादिनिश्चयः, [5]तद्याथात्म्यविषयः **तद्विवेक एव च**–

---

[1] 'समन्तरेणैव' इति क–पाठः । [2] शत्रन्तं पदमिदम् । [3] 'नैवासमारोपा०' इति क–पाठः । [4] 'चायं पदार्थः' इति क–पाठः । [5] 'विषयस्तद्याथात्म्यविषयस्तद्विवेक' इति क–पाठः ।

(मूलम्)

**पोहगोचरमेव, न वस्तुस्वभावनिश्चयात्मकमिति । एतदपि यत्-किञ्चित्, वाङ्मात्रत्वात् ॥**

**यत् तावदुक्तम्[1]–'असमारोपविषये भावात्' इत्यत्र समारोपा-भावेऽस्य[2] वृत्तिरुक्ता, अयं च समारोपाभावो यदि प्रसज्यप्रतिषेध-[3]रूपः[4], न क्वचिदस्य वृत्तिस्तस्य तुच्छत्वात्, तत्त्वत इत्थमेवेदमिति चेत्, कथमतुच्छप्रतिभासं रूपादिनिश्चयज्ञानम्? । तुच्छप्रतिभास-मेव तदिति चेत्, अनुभवविरोधः[5], रूपादिप्रतिभासस्य वेद्यमान-त्वात्, अन्यथा तदनाकारत्वेन वेदनाऽयोगादिति ॥** १०

(स्वो० व्या०)

समारोपविवेक एव च **अन्यापोहः** तद्व्यवच्छेदः । **इति**–एवं **तदपि** अधिकृत-निश्चयज्ञानं **तन्मात्रापोहगोचरमेव** समारोपापोहमात्रगोचरमित्यर्थः । **न वस्तु-स्वभावनिश्चयात्मकं[6]**–न स्वलक्षणनिश्चायक**मिति** योऽर्थः । एवं पूर्वपक्षमा-शङ्क्याह–**एतदपि यत्किञ्चित्**–असारम् । कुत इत्याह–**वाङ्मात्रत्वात्**– १५ वाच्यार्थशून्यत्वात् ॥

एतदेव दर्शयति **यत् तावदुक्तमि**त्यादिना । तत्र यत् तावदुक्तं पूर्वपक्षग्रन्थे[7]–**'असमारोपविषये भावात्'** इत्यत्र–ग्रन्थे **समारोपाभावेऽस्य**–निश्चयस्य **वृत्तिरुक्ता,** एतदैदम्पर्यम् । यदि नामैवं ततः किमित्याह–**अयं च समारोपा-भावो यदि [8]प्रसज्यप्रतिषेधरूपः**-समारोपाभवनमात्रलक्षणः, ततः किमित्याह– २० **न क्वचिदस्य**–निश्चयस्य **वृत्तिः** । कुत इत्याह–**तस्य**–प्रसज्यप्रतिषेधरूपस्य समारोपाभावस्य **तुच्छत्वात्**–असत्त्वादित्यर्थः । **तत्त्वत** इत्यादि । तत्त्वतः–परमार्थेन **इत्थमेवेदं** न क्वचिदस्य वृत्तिः । **इति चेत्,** एतदाशङ्क्याह–**कथम-तुच्छप्रतिभासं** रूपादि वस्त्वाकारं **रूपादिनिश्चयज्ञानम्?** । **तुच्छे**त्यादि । तुच्छ**प्रतिभासमेव तत्**–रूपादिनिश्चयज्ञानम् । **इति चेत्,** एतदाशङ्क्याह– २५ **अनुभवविरोधः** । एवं कथमित्याह–**रूपादिप्रतिभासस्य** रूपादिनिश्चय-ज्ञाने **वेद्यमानत्वात्, अन्यथा**–एवमनभ्युपगमे **तस्य**–रूपादिनिश्चयज्ञानस्य **अनाकारत्वेन** हेतुना । किमित्याह–**वेदनाऽयोगात्** । तत् हि अनाकारं कस्य वेदनमिति भावनीयम् ॥

१ २०६ तमे पृष्ठे । २ 'भावस्य' इति ग–पाठः । ३ 'प्रसज्यप्रति०' इति घ–पाठः । ४ 'रूपस्ततो न' इति ग–पाठः । ५ 'विरोधाद् रूपादि०' इति क–पाठः । ६ 'निश्चायकं' इति ङ–पाठः । ७ २०६ तमे पृष्ठे । ८ 'प्रसज्यप्रति०' इति घ–पाठः ।

( मूलम् )

**अथ पर्युदासरूपः कथं न वस्तुस्वभावनिश्चयात्मकं तत् ? तत्रैव प्रवृत्तेः न तत् तदेति चेत्, कथमसमारोपविषयेऽस्य भावः ? । ५ अयमस्यैवात्मा न त्वन्य इति चेत्, स्वात्मन एव, तदितरविकलस्य तत्त्वकल्पनायामतिप्रसङ्गः, स्वलक्षणज्ञानस्यापि तत्त्वेन तद्भावापत्तेरिति ॥**

**यच्चोक्तम्–'यत्र ह्यस्य समारोपो भवति यथा स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति' एतदप्ययुक्तम्, परमार्थेन तस्यास्थिरा- १० नात्मकस्यैव ग्रहणात्, तत्र रूपादाविव समारोपप्रवृत्त्ययोगात् । स्यादेतत् नहि तथा गृहीतोऽपि भावस्तथैव प्रत्यभिज्ञायते, क्वचिद्**

---

( स्वो० व्या० )

एवं प्रसज्यपक्षे[2] दोषमभिधाय पक्षान्तरे दोषमभिधातुमाह–**अथ पर्युदासरूपः** प्रस्तुतः समारोपाभावः । एतदाशङ्क्याह–**कथं न वस्तुस्वभावनिश्चयात्मकं** १५ **तत्**–रूपादिनिश्चयज्ञानम् ? **तत्रैव**–रूपादावेव **प्रवृत्तेः न तत्**–रूपादि तदा[3]– रूपादिनिश्चयज्ञानकाले । **इति चेत्**, एतदाशङ्क्याह–**कथमसमारोपविषये**– समारोपाभावे पर्युदासात्मके **अस्य**–रूपादिनिश्चयज्ञानस्य **भावः ?** । **अयमि**- त्यादि । अयम्–असमारोपविषयः **अस्यैव**–अधिकृतनिश्चयज्ञानस्य **आत्मा, न त्वन्यः**–व्यतिरिक्तः । **इति चेत्**, एतदाशङ्क्याह–**स्वात्मन एव**–ज्ञानसम्बन्धिनः २० **तदितरविकलस्य**–विषयविकलस्य **तत्त्वकल्पनायां**–विषयत्वकल्पनायामुक्त- नीत्या । किमित्याह–**अतिप्रसङ्गः** । कथमित्याह–**स्वलक्षणज्ञानस्यापि तत्त्वेन**– तदितरविकलत्वेन हेतुना **तद्भावापत्तेः**–असमारोपविषयाभावापत्तेः, निश्चय- ज्ञानत्वापत्तेः इति अर्थः ॥

**यच्चोक्तम**धिकृतपूर्वपक्षग्रन्थे[4]–**'यत्र ह्यस्य समारोपो भवति यथा** २५ **स्थिरः सात्मक इति वा, न तत्र निश्चयो भवति' एतदप्ययुक्तम्** । कथमित्याह–**परमार्थेन**–वस्तुस्थित्या **तस्य**–पदार्थस्य **अस्थिरानात्मकस्यैव ग्रहणात्**, नान्यत् तस्य रूपमिति कृत्वा । ततः किमित्याह–**तत्र**–अस्थिरत्वादौ **रूपादाविव समारोपप्रवृत्त्ययोगात्** । नहि रूपे रूपतया गृहीते समा- रोपः । **स्यादेतदि**त्यादि । स्यादेतत् **नहि** [5]**तथा**–स्वरूपेण **गृहीतोऽपि भावः**– ३० पदार्थः **तथैव प्रत्यभिज्ञायते**–निश्चयज्ञानेन गम्यते । कथमित्याह–**क्वचिद्**

---

१ २०६ तमे पृष्ठे । २ 'प्रसज्ज्यपक्षे' इति घ–पाठः । ३ 'तदा निश्चयज्ञान०' इति घ–पाठः । ४ २०६ तमे पृष्ठे । ५ 'यथा स्वरूपेण' इति क–पाठः ।

(मूलम्)

**भेदे व्यवधानसम्भवात्, यथा शुक्तेः शुक्तित्वे, यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रैव अस्य दर्शनाविशेषेऽपि स्मार्त्तो निश्चयो भवति, समारोपनिश्चययोर्बाध्यबाधकभावादिति। एतदप्यसत्, निरंशे तथागृहीते क्वचिद् व्यवधानं क्वचिन्नेत्यपन्यायत्वात्, भेदाभावेन तत्त्वत एकनिश्चयज्ञानप्रसङ्गात् । न खलु रूपे एव तदेकस्वभावनिबन्धनानि भूयांसि निश्चयज्ञानानि ॥**

(स्वो० व्या०)

**भेदे**–भावविशेषे **व्यवधानसम्भवात्**, प्रत्यभिज्ञानस्य समारोपेणेति भावः । निदर्शनमाह–**यथा शुक्तेः**–शीप्रकद्रव्यस्य **शुक्तित्वे** व्यवधानसम्भवः प्रत्यभिज्ञानं प्रति रजतसमारोपेण **यत्र तु** भावभेदे पदार्थे **प्रतिपत्तुः**–पुरुषस्य **भ्रान्तिनिमित्तं** सादृश्यं **नास्ति, तत्रैव** भावभेदेऽस्य–पुरुषस्य **दर्शनाविशेषेऽपि**–उभयत्र यत् तत्त्वं तद् दृश्यत इति दर्शनाविशेषस्तस्मिन्नपि सति **स्मार्त्तो निश्चयो भवतीति** गृहीतग्राही । किमेतदेवमित्याह–**समारोप-निश्चययोर्बाध्यबाधकभावात्** । समारोपो बाध्यः, निश्चयो बाधक **इति** । [1]एवं पूर्वपक्षमाशङ्क्याह–**एतदपि**–अनन्तरोदितम्, **असत्**–अशोभनम् । कुत इत्याह–**निरंश** इत्यादि । निरंशे वस्तुनि **तथा**–निरंशतया **गृहीते क्वचिद् व्यवधानं क्वचिन्नेत्यपन्यायत्वात्** एतदप्यसत्, अपन्यायत्वं च **भेदाभावेन** हेतुना निरंशत्वेन **तत्त्वतः**–परमार्थेन **एकनिश्चयज्ञानप्रसङ्गात्** [2]निबन्धनैकत्वेन । एतद्भावनायैवाह–**न खल्वि**त्यादि। न खलु–नैव **रूपे** एवालम्बने **तदेकस्वभावनिबन्धनानि** तद्रूपमेवैकः स्वभावो निबन्धनं येषां तानि तथा **भूयांसि**–प्रभूतानि, प्रक्रमाज्जातिभेदमधिकृत्य **निश्चयज्ञानानि**–रूपरसादिलक्षणानि, किं तर्हि प्रभूतान्यपि व्यक्तिभेदापेक्षया रूपज्ञानान्येव ? एवं भेदाभावेन तत्त्वत एकनिश्चयज्ञानप्रसङ्गः ॥

(विवरणम्)

(२०) **निबन्धनैकत्वेनेति** । रूपादिनिश्चयज्ञानस्य हि निरंशैकस्वभावं वस्तु-परम्परया निबन्धनमभ्युपगम्यते भवद्भिः, ततो निबन्धनस्यैकत्वात् प्रतिनियतैकाकारो विकल्पः प्राप्नोति, न तु बहव इति ॥

(२३-२४) **किं तर्हि प्रभूतान्यपि व्यक्तिभेदापेक्षया रूपज्ञानान्येवेति** । रूपं हि समकमनेकप्रमातृव्यक्तिभिरुपलभ्यमानं सर्वेषां रूपज्ञानमेव जनयति, न तु रसादिभिन्नजातीयज्ञानमिति ॥

१ 'एवं' इति पाठो घ-पुस्तके नास्ति ।　२ 'निमित्तनैक०' इति ख-घ-पाठः ।

( मूलम् )

**किञ्चासौ भावः स्वप्रत्यभिज्ञानजनने व्यवधानसम्भवस्वभावो वा स्यान्न वा, उभयथाऽपि क्वचिद् भेदे व्यवधानसम्भवादित्ययुक्तम्, ५ यथाक्रमं सर्वत्रैव तत्सम्भवासम्भवापत्तेः, अन्यथैकस्वभावत्वविरोधात्। अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्तत्त्वव्यवस्थेत्यफला तत्कल्पना। एवं च 'यथा शुक्तेः शुक्तित्वे' इत्यनुदाहरणमेव भवन्नीत्या तदयोगात् शुक्तिकाया अप्यक्षज्ञानेन नीलादिवत् तत्त्वेनैव ग्रहणात् ॥**

(स्वो० व्या०)

१० दूषणान्तरमाह—**किञ्चासौ भावः**—पदार्थः **स्वप्रत्यभिज्ञानजनने**—स्वनिश्चयज्ञानजनने **व्यवधानसम्भवस्वभावो वा स्यान्न** वेति द्वयी गतिः। **उभयथाऽपि**—पक्षद्वयेऽपि **क्वचिद् भेदे व्यवधानसम्भवादित्ययुक्तम्**। कुत इत्याह—**यथाक्रमं**—यथासङ्ख्यं **सर्वत्रैव**—क्वचिदित्येतद्व्युदासेन सर्वत्रैव वस्तुनि १५ **तत्सम्भवासम्भवापत्तेः**, तस्य—व्यवधानस्य सम्भवश्चासम्भवश्च तत्सम्भवासम्भवौ, तयोरापत्तिः ततः। एतदुक्तं भवति—यद्यसौ भावः स्वप्रत्यभिज्ञानजनने व्यवधानसम्भवस्वभावस्ततस्तत् सम्भवत्येव सर्वत्र व्यवधानम्, न चेन्न सम्भवत्येवेति हृदयम्। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथैकस्वभावत्वविरोधात्**। एकस्वभावो हि स्वप्रत्यभिज्ञानजनने व्यवधानसम्भवैकस्वभावस्तदसम्भवैकस्वभावो वा, २० अन्यथा तच्चित्रस्वभावतैवेति भावनीयम्। **अतन्निबन्धनत्वे च**—विवक्षितभावानिबन्धनत्वे च **निश्चयानाम्**। किमित्याह—**न तेभ्यः**—निश्चयेभ्यः **तत्तत्त्वव्यवस्था**—विवक्षितभावतद्भावव्यवस्था **इति**—एवं **अफला**—निष्प्रयोजना **तत्कल्पना**, प्रक्रमाद् व्यवधानसम्भवकल्पना। **एवं च** सति **'यथा शुक्तेः शुक्तित्वे' इत्यनुदाहरणमेव**। कथमित्याह—**भवन्नीत्या**—त्वद्दर्शनानुसारेण **तदयोगात्**, २५ प्रक्रमाद् व्यवधानसम्भवायोगात्। अयोगश्च **शुक्तिकाया अप्यक्षज्ञानेन**—इन्द्रियज्ञानेन, **नीलादिवदिति** निदर्शनम्, **तत्त्वेनैव**—शुक्तिकात्वेनैव **ग्रहणात्** ॥

(विवरणम्)

(२२) **विवक्षितभावतद्भावव्यवस्थेति**। विवक्षितभावस्य तद्भावेन—प्रतिनियतैकस्वरूपलक्षणेन व्यवस्था—मर्यादा न स्यात् ॥

१ 'दित्यप्ययुक्तम्' इति ग-घ-पाठः। २ 'शुक्तित्वं इत्यनु०' इति क-घ-पाठः। ३ द्रष्टव्यं २०९ तमं पृष्ठम्। ४ 'यदसौ भावः' इति ङ-पाठः। ५ 'ज्ञानं जनने' इति क-पाठः। ६ 'शुक्तित्वं इत्यनु०' इति क-पाठः। ७ 'द्रष्टव्यं २०९ तमं पृष्ठम्। ८ 'अध्यक्षज्ञानेन' इति ङ-पाठः। ९ 'स्वरूपलभ्यमानं सर्वेषां रूपज्ञानमेव जनयति' इति ख-च-पाठः।

(मूलम्)

इत्थमेवेदमिति चेत्, कथं व्यवधानसम्भवः?। ततस्तन्निश्चयानुत्पत्तेरिति चेत्, सैव तावत् किमिति चिन्त्यम्। निश्चयान्तरोत्पादादिति चेत्, कथमनुभवान्तरान्निश्चयान्तरोत्पादः?। तत्तत्स्वभावत्वादिति चेत्, अनुभवान्तरवन्न तस्य तत्त्वम्, तत्त्वे वा ततस्तदुत्पादे व्यवहारनियमोच्छेदः। एवं हि नीलानुभवजन्योऽपि तन्निश्चयः [1]पीताद्यनुभवस्य तत्स्वभावतया[2] तज्जन्योऽपि [3]सम्भाव्यत एव, एवमन्यत्रापीति न न्यायविदस्ततो व्यवहारे नियमतः प्रवृत्तिर्युक्ता, सर्वत्राशङ्काऽनिवृत्तेरिति। [4]न अनिवृत्तिः सर्वत्र बीजाभावाद् वैध-

(स्वो० व्या०)

इत्थमेवेदमिति चेत् तत्त्वेनैव ग्रहणमित्यर्थः। एतदाशङ्क्याह–कथं व्यवधानसम्भवः?। नहि तस्य व्यवधानजनकत्वमित्यर्थः। ततः–शुक्तिकाज्ञानात् [5]इन्द्रियजात् तन्निश्चयानुत्पत्तेः–शुक्तिकानिश्चयानुत्पत्तेः व्यवधानसम्भवः। इति चेत्, एतदाशङ्क्याह–सैव तावत् निश्चयानुत्पत्तिः किं–केन कारणेन इति चिन्त्यम्। निश्चयान्तरोत्पादात्–रजतनिश्चयोत्पादात् इति चेत्, तन्निश्चयानुत्पत्तिः। एतदाशङ्क्याह–कथमनुभवान्तरात्–शुक्तिकाऽनुभवरूपात् निश्चयान्तरोत्पादः–रजतनिश्चयोत्पादः? तस्य–शुक्तिकाऽनुभवस्य तत्स्वभावत्वात्–रजतनिश्चयोत्पादनस्वभावत्वात्। इति चेत्, एतदाशङ्क्याह–अनुभवान्तरवत् रजतानुभववदित्यर्थः। न तस्य–शुक्तिकाऽनुभवस्य तत्त्वं–शुक्तिकाऽनुभवतत्त्वं तत्त्वे वा–शुक्तिकाऽनुभवतत्त्वे वा ततः–शुक्तिकाऽनुभवात् तदुत्पादे–निश्चयान्तरोत्पादे। किमित्याह–व्यवहारनियमोच्छेदः। एनमेव भावयन्नाह–एवं हीत्यादि। एवं यस्मान्नीलानुभवजन्योऽपि तन्निश्चयः–नीलनिश्चयः पीताद्यनुभवस्य तत्स्वभावतया–नीलनिश्चयजननस्वभावतया तज्जन्योऽपि–पीताद्यनुभवजन्यः-अपि सम्भाव्यत एव, विजातीयशुक्तिकाऽनुभवाद् विजातीयरजतनिश्चयोपपत्तेः, एवमन्यत्रापि–रक्तादिनिश्चये इति–एवं न न्यायविदः–पुरुषस्य ततः–निश्चयाद् व्यवहारे प्रस्तुते नियमतः–नियमेन प्रवृत्तिर्युक्ता। कुतो न युक्तेत्याह–सर्वत्र विकल्पे उत्थापकं प्रति आशङ्काऽनिवृत्तेः कारणात्, न अनिवृत्तिः, आशङ्काया इति प्रक्रमः। कुत इत्याह–सर्वत्र बीजाभावात्–

१ 'पीतानुभवस्य' इति ग–पाठः। २ 'तया जन्योऽपि' इति ग–पाठः। ३ 'सम्भाव्येतैव एव०' इति ग–पाठः। ४ 'न, अनिवृत्तेः' इति ग–पाठः। ५ 'इन्द्रियज्ञानात् तन्निश्चया०' इति क–पाठः।

( मूलम् )

**र्म्येण साधर्म्यासिद्धेः साधर्म्याच्च समारोप इति ॥**

**यद्येवं स्थिरेतरादीनां किं साधर्म्यं क्व वा तेषां ग्रहणं येन**
५ **अस्थिरादिषु तत्समारोपः? सदृशापरापरोत्पत्तिविप्रलम्भादयमिति चेत्, किमिदं सजातीयेतरविविक्तैकस्वभावानां भावानां सादृश्यम्? कथं वा सदप्येतत् तदेकग्राहिणा ज्ञानेन गम्यते?। तेषामेव तत्स्वभावतया तथाग्रहणेनेति चेत्, आकालं तदेकग्रहणे कुतोऽयं नभस आप्तवादः? अनेकभिन्नकालभावग्रहणे चैकेनापैति क्षणिकता।**
१० **तथाविधभावानुभवसामर्थ्यजनिश्चयात् तदवगम्यत इति चेत्,**

---

( स्वो० व्या० )

आशङ्काबीजाभावात्, किन्तु निवृत्तिरेव। प्रस्तुतमेवाह—**वैधर्म्येण** हेतुना **साधर्म्यासिद्धेः** सर्वत्र। यदि नामैवं ततः किमित्याह—**साधर्म्याच्च समारोप इति।** अस्ति च शुक्तिका-रजतयोस्तदित्यभिप्रायः ॥

१५ एतदाशङ्क्याह—**यद्येवं स्थिरेतरादीनां**—नित्यानित्यादीनां **किं साधर्म्यम्?**[1] लक्षणभेदान्न किञ्चिदित्यर्थः। **क्व वा तेषां ग्रहणम्?** नित्यानामभावेन तदयोगात् **येनास्थिरादिषु** भावेषु, 'आदि'शब्दादनात्मादिग्रहः **तत्समारोपः**—[2] नित्यात्मादिसमारोपः? **सदृशापरापरोत्पत्तिविप्रलम्भात्** कारणात् **अयम्**—[3]नित्यात्मादिसमारोपः। **इति चेत्**, एतदाशङ्क्याह—**किमिदं सजातीयेतरविविक्तै-**
२० **कस्वभावानां भावानाम**त्यन्तविलक्षणानामित्यर्थः, **सादृश्यम्?**। न किञ्चित्। **कथं वा सदप्येतत्**—सादृश्यं **तदेकग्राहिणा** तेषां—भावानामेकग्रहणशीलं तदेकग्राहि तेन **ज्ञानेन गम्यते,** तदनेकग्रहणनान्तरीयकत्वात् तदवगमस्य?। [4]न गम्यत इत्यर्थः। **तेषामेवे**त्यादि। तेषामेव भावानां **तत्स्वभावतया**—सदृशस्वभावतया **तथाग्रहणेन**—सदृशग्रहणेन **इति चेद्** गम्यते। एतदाशङ्क्याह—
२५ **आकालं**—यावदपि कालस्तावदपि, सर्वकालमित्यर्थः, **एकग्रहणे** सति **कुतोऽयं** 'तेषामेव तत्स्वभावतये'त्यादिलक्षणः **नभसः**—आकाशात् **आप्तवादः? अनेकभिन्नकालभावग्रहणे चैकेन,** प्रक्रमात् ज्ञानेन। किमित्याह—**अपैति क्षणिकता** भावानामिति। **तथाविधे**त्यादि। तथाविध**भावानुभवसामर्थ्यजनिश्चयात्,**[5]

---

१ 'सामर्थ्यम्' इति क-पाठः। २ 'तर्ह्यसमारोपः' इति क-पाठः। ३ 'इत्यात्मादि०' इति घ-पाठः। ४ 'नावगम्यत' इति ङ-पाठः। ५ 'सामर्थ्यजनितनिश्चयात्' इति क-पाठः।

(मूलम्)

**न युक्तमस्येमामक्रमागतामवगमश्रियं प्रतिपत्तुं तत्पूर्वक्षणानां च न्यायतस्तद्बीजाभाव उक्तः। तथाऽनुभवसिद्धत्वात् सर्वं भद्रकमिति चेत्, न खल्वनुभव इत्येव तत्त्वव्यवस्थाहेतुः, न्यायबाधितस्य तदनुपपत्तेः, अस्य चोक्तवन्न्यायबाधितत्वात्, क्षणिकत्वेन**

(स्वो० व्या०)

सन्तानप्रवृत्त्या अन्त्यक्षणभावानुभववीर्योत्पन्ननिश्चयादिति[1] भावः, **तत्**—सादृश्यम**वगम्यते। इति चेत्**, एतदाशङ्क्याह—**न युक्तमस्य**—निश्चयस्य **इमामक्रमागतामन्वयाभावेन अवगमश्रियं** प्रदीघार्थतया[2] विसदृशबोधरूपां **प्रतिपत्तुं** यदाह[3] कश्चित्—

"असत्सङ्गाद् दैन्यात् प्रखलचरितैर्वा बहुविधै-
रसद्भूतैर्भूतिर्यदि भवति भूतेरभवनिः[4]
सहिष्णोः सद्बुद्धेः परहितरतस्योन्नतिमतः[5]
परा भूषा पुंसः स्वविधिविहितं वल्कलमपि ॥"[6]

स्वविधिश्च क्षणिकस्य परतो निरपेक्षितेति भावनीयम्। **तत्पूर्वक्षणानां च**—विवक्षितक्षणभावानुभवपूर्वक्षणानां च **न्यायतः**—न्यायेन निरन्वयनश्वरतया **तद्बीजाभावः**—विवक्षितक्षणबीजाभाव **उक्तः** प्राग्[7] 'नित्यानित्यवस्तुनिरूपणा'ऽधिकारे 'एकान्त' इत्यादिना ग्रन्थेन। **तथेत्यादि**। तथा**ऽनुभवसिद्धत्वात्**—सदृशत्वेन अनुभवसिद्धत्वात् कारणात् **सर्वम्**—अस्मदुक्तं **भद्रकम्**। **इति चेत्**, एतदाशङ्क्याह—**न खलु**—नैव **अनुभव इत्येव** एतावताऽंशेन **तत्त्वव्यवस्थाहेतुः**। कथं नेत्याह—**न्यायबाधितस्य** अनुभवस्य **तदनुपपत्तेः**—तत्त्वव्यवस्थाहेतुत्वानुपपत्तेः नीत्या[8] द्विचन्द्रानुभवादौ तथाऽभ्युपगमादिति। यदि नामैवं ततः किमित्याह—

(विवरणम्)

(७) **सन्तानप्रवृत्त्या अन्त्यक्षणभावानुभववीर्योत्पन्ननिश्चयादिति भाव** इति। सन्ताने प्रवृत्तो योऽसावन्त्यक्षणस्तस्य योऽसौ भावः—स्वरूपं तस्य योऽसावनुभवस्तद्वीर्येणोत्पन्नो योऽसौ निश्चयस्तस्मात्। अयमत्र भावः—यदा घटादेर्मुद्गरादिसहकारिसम्पर्कात् कपालादिविलक्षणकार्योत्पत्तिर्भवति तदा प्रमाता तदवलोक्य पाश्चात्यक्षणानां सादृश्यं निश्चिनोतीति ॥

१ 'वीर्योद्भुत्पन्न०' इति ङ-पाठः। २ 'पदार्थतया विसदृश०' इति घ-पाठः ङ-पाठस्तु 'प्रदीर्घतया विसदृश०' इति। ३ 'यथाऽऽह कश्चित्' इति क-पाठः। ४ 'अभवनं भूयात्' इत्यर्थः। ५ 'रतस्याप्नतिमतः' इति ङ-पाठः। ६ शिखरिणी। ७ ९७ तमे पृष्ठे। ८ 'नित्यादिचन्द्रा०' इति क-पाठः।

(मूलम्)

तथाऽसम्भवाच्च। एतेन 'यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति तत्रै- वास्य दर्शनाविशेषेऽपि पाश्चात्यो निश्चयो भवति समारोप-निश्चय- ५ योर्बाध्यबाधकभावात्' इति यदुक्तं[1] तदपि प्रत्युक्तमेव, सर्वथैकस्व- भावत्वे वस्तुनो दर्शने चेत्थमभिधानायोगात्, एकत्र भ्रान्ति- निमित्तसम्भवे[2] सर्वत्र तदापत्तेः, तत्तदेकस्वभावत्वतत्त्वात्, अन्यथा यत्र भ्रान्तिनिमित्तं न, यत्र चास्त्यनयोः कथञ्चिद् भेद इति बलात् तदनेकस्वभावता, शुक्तिकादावपि तन्नियमाभावाच्च, १० 'अतन्निबन्धनत्वे च निश्चयानां न तेभ्यस्तत्त्वव्यवस्था' इत्युक्तम्[6] ॥

(स्वो० व्या०)

अस्य च—प्रक्रान्तसदृशानुभवस्य उक्तवत्—यथोक्तं तथा न्यायबाधितत्वात् क्षणिकत्वेन हेतुना तथा—[3]प्रदीर्घबोधानुभवरूपेण असम्भवाच्च। तथाहि— निश्चयानुभवोऽपि क्षणिक एवेति भावना। एतेनेत्यादि। एतेन—अनन्तरोदितेन १५ वस्तुजातेन 'यत्र तु प्रतिपत्तुर्भ्रान्तिनिमित्तं नास्ति, तत्रैवास्य दर्शना- विशेषेऽपि पाश्चात्यो निश्चयो भवति, समारोप-निश्चययोर्बाध्यबाधक- भावात्' इति यदुक्तं[4] तत् किमित्याह—तदपि प्रत्युक्तमेव। कथमित्याह— सर्वथैकस्वभावत्वे वस्तुनो बाह्यस्य दर्शने च तस्य इत्थं—यथोक्तं तथाऽभि- धानायोगात्। अयोगश्च एकत्र—वस्तुनि भ्रान्तिनिमित्तसम्भवे सति सर्वत्र २० तदापत्तेः—भ्रान्तिनिमित्तसम्भवापत्तेः। आपत्तिश्च तत्तदेकस्वभावत्वतत्त्वात् तस्य—वस्तुनो भ्रान्तिनिमित्तसम्भवैकस्वभावत्वरूपत्वात्। अन्यथेत्यादि। अन्यथा— एवमनभ्युपगमे यत्र—वस्तुनि भ्रान्तिनिमित्तं न घटपटादौ, यत्र चास्ति शुक्तिका-रजतादौ अनयोः—वस्तुनोः कथञ्चित् स्वभावभेदः, वस्त्वभेदेऽपि स्वसत्ताभेद इति—एवं बलात् तदनेकस्वभावता तस्य—वस्तुनः सामान्येन २५ अनेकस्वभावता। तदेकान्तैकस्वभावत्वे तु नैतदुपपद्यत इति।

उपपत्त्यन्तरमाह—शुक्तिकादावपि—शुक्तिका-रजतादौ अपि तन्नियमा- भावाच्च, प्रक्रमाद् भ्रान्तिनिमित्तसम्भवस्वभावत्वनियमाभावाच्च, बलात् तदनेकस्व- भावतेति वर्तते। तथाहि—न शुक्तिकादावपि सर्वस्य समारोप एव कस्यचिद् दर्शना- नन्तरं शुक्तिकानिश्चयः, अपरस्य तदा तत्रैव समारोप इति नैतदेकान्तैकस्वभावत्वे ३० वस्तुन इति भावनीयम्। अतदित्यादि। तत्—वस्तु निबन्धनं—कारणं येषां ते तन्नि-

१ २०९ तमे पृष्ठे। २ 'सम्भवेऽपि सर्वत्र' इति क-पाठः। ३ 'पदार्थबोधा०' इति घ-पाठः। ४ २०९ तमे पृष्ठे। ५ 'भावत्वे नैत०' इति ङ-पाठः। ६ २१० तमे पृष्ठे।

( मूलम् )

**एवं च यत्र स्वत एव निश्चयः स प्रत्यक्षः, यत्र तु न सोऽनुमेय इति सन्न्यायप्राप्तिः, अन्यथाऽसमञ्जसत्वात्। न चैवं सविकल्पक-प्रत्यक्षवादिनोऽप्यनेकस्वभावत्वाद् वस्तुनः क्षयोपशमवैचित्र्येण** ५ **तथानिश्चयप्रवृत्तौ कश्चिद् दोषः, निरुपचरिततन्निबन्धनभावात्। दृश्यते च कथञ्चिदेकत्रैवैकानेकप्रमात्रपेक्षः शब्द-लिङ्गा-ऽध्यक्षैः प्रतीतिभेदः। तथाहि—अत्र निकुञ्जे वह्निरस्तीति शब्दतस्तथाविधदेशमात्रावच्छिन्नमग्निसामान्यं प्रतीयते, धूमदर्शनात् तु विशिष्टदेशावच्छिन्नस्तद्विशेषः, अध्यक्षतस्तु विशिष्टतरो ज्वालादिरित्यागोपाला-** १० **ङ्गनाप्रसिद्धत्वादत्याज्य एष इति। एवं च सन्न्यायसिद्धे प्रमाणानां**

---

( स्वो० व्या० )

बन्धनाः, न तन्निबन्धना अतन्निबन्धनास्तद्भावस्तस्मिन्नतन्निबन्धनत्वे चावस्तु-निबन्धनत्व इत्यर्थः। केषामित्याह—**निश्चयानां न तेभ्यः**—निश्चयेभ्यस्तत्तत्त्व-**व्यवस्था**—वस्तुतत्त्वव्यवस्था इत्युक्तं प्राक्[2] ॥ १५

**एवं च यत्र**—अंशे वस्तुज्ञानसम्बन्धिनि नीलादौ **स्वत एव निश्चयः** समारोपव्यवच्छेदमन्तरेण **स प्रत्यक्षो**ऽंशः, **यत्र तु** नानित्यत्वादौ **सोऽनुमेय इति सन्न्यायप्राप्तिः**। कुत इत्याह—**अन्यथाऽसमञ्जसत्वादि**त्येतच्च निदर्शितमसकृत्। यदि नामैवं ततः किमित्याह—**न चैवं सविकल्पकप्रत्यक्षवादिनो**ऽपि वादिनोऽ**नेकस्वभावत्वाद् वस्तुनः क्षयोपशमवैचित्र्येण** हेतुना **तथा-** २० **निश्चयप्रवृत्तौ** अनन्तरोदितक्रमेण **कश्चिद् दोषः**। कथं न दोष इत्याह—**निरुपचरिततन्निबन्धनभावात्**, वास्तवप्रवृत्तिनिबन्धनभावादित्यर्थः। अमुमेवार्थमुपदर्शयति **दृश्यते चे**त्यादिना। दृश्यते च **कथञ्चिदेकत्रैव**—वस्तुनि **एकानेक-प्रमात्रपेक्षः शब्द-लिङ्गा-ऽध्यक्षैः**—आगमा-ऽनुमान-प्रत्यक्षैः **प्रतीतिभेदः**। **तथाहि—अत्र निकुञ्जे वह्निरस्तीति शब्दतः**—शब्दात् **तथाविधदेश-** २५ **मात्रावच्छिन्नं** सत् **अग्निसामान्यं प्रतीयते, धूमदर्शनात् तु विशिष्ट-देशावच्छिन्नस्तद्विशेषः**—अग्निविशेषः पूर्वसामान्यापेक्षया **अध्यक्षतस्तु**—प्रत्यक्षेण पुन**र्विशिष्टतरो ज्वालादिः** प्रतीयत **इत्यागोपालाङ्गनाप्रसिद्धत्वात्** कारणा**दत्याज्य एषः**—प्रतीतिभेद **इति**। **एवं च सन्न्यायसिद्धे** सति **प्रमाणानां**

---

१ 'वाऽवस्तु०' इति क-पाठः। २ २१०तमे पृष्ठे। ३ 'च तदेकत्रैव' इति क-पाठः।

( मूलम् )

**वस्तुविषयत्वे यदुक्तं** [1]**पुरस्तात् 'नह्यन्य एवान्योपकारको नाम' इत्यादि, तदयुक्तमेव, परमार्थतो निर्विषयत्वात्। न च वस्त्वपि तदे-**
५ **कमनेकधर्मोपकारकशक्तिमदिष्यते जैनैः, एकानेकस्वभावत्वाभ्युप-गमात् पृथग्भूतधर्म्यसिद्धेरिति कृतमत्र प्रसङ्गेन ॥**

**यच्चोक्तम्**[2]**-'समारोप-निश्चययोर्बाध्यबाधकभावात्' इति एत-दप्ययुक्तम्, परनीत्या समारोप-निश्चययोर्भेदासिद्धेः समारोपस्यापि निश्चयत्वात्, तदभावभावित्वस्य चोभयत्राविशेषात्। पौर्वापर्यस्य**
१० [3]**चानियामकत्वात् क्वचित् तस्यापि तुल्यत्वात्, अनित्यादिप्रति-**

( स्वो० व्या० )

प्रत्यक्षादीनां **वस्तुविषयत्वे यदुक्तं पुरस्तात्**-पूर्वपक्षग्रन्थे **'नह्यन्य एवा-न्योपकारको नाम'** इत्यादि तत् किमित्याह-**तदयुक्तमेव। परमार्थतो निर्विषयत्वात्** तस्योक्तस्य। **न चे**त्यादि। न च **वस्त्वपि तदेकं** सत् **अनेक-**
१५ **धर्मोपकारकशक्तिमदिष्यते,** वैशेषिकैरिव **जैनैः**। कुत इत्याह-**एकानेक-स्वभावत्वाभ्युपगमात्** कारणात् **पृथग्भूतधर्म्यसिद्धे**र्धर्मधर्मिस्वभावत्वाद् वस्तुन **इति कृतमत्र प्रसङ्गेन** ॥

**यच्चोक्त**मधिकृतपूर्वपक्षे[4]-**'समारोप-निश्चययोर्बाध्यबाधकभावात्'** इत्ये**तदप्ययुक्तम्**। कथमित्याह-**परनीत्या समारोप-निश्चययोर्भेदा-**
२० **सिद्धेः**। असिद्धिश्च **समारोपस्यापि** शुक्तिकादौ रजतादिरूपस्य **निश्चयत्वात्**। तथाहि-शुक्तिकायां रजतनिश्चय एव समारोपः **तदभावभावित्वस्य च**-शुक्तिकाद्यभावभावित्वस्य 'च'शब्दात् तदनुभवोपादानत्वस्य च **उभयत्र**-समारोपे निश्चये च **अविशेषात्**। नह्यत्रान्यत् समारोपस्याप्युपादानम्, अपि त्वधिकृतानुभव एव **पौर्वापर्यस्य च**-पूर्वं समारोपः पश्चान्निश्चय इत्येवम्भावस्य च[6] **अनियामक-**
२५ **त्वाद्** भेदं प्रति तथा **क्वचित् तस्यापि**-पौर्वापर्यस्य **तुल्यत्वात्**। एतदेवाह-

( विवरणम् )

(२२) **शुक्तिकाद्यभावभावित्वस्य चे**ति। विनष्टे हि शुक्तिकाक्षणे[7] न तद्गोचरः समारोपो निश्चयो भवतीति ॥

(२२) **तदनुभवोपादानत्वस्य चे**ति। शुक्तिकागोचरनिर्विकल्पकानुभवानन्तरं
३० निश्चयः समारोपो वा जायत इति ॥

१ १४३तमे पृष्ठे। २ २०९तमे पृष्ठे। ३ 'वा नियामक०' इति ग-पाठः। ४ १४३तमे पृष्ठे। ५ २०९तमे पृष्ठे। ६ 'वाऽनियामक०' इति ङ-पाठः। ७ 'क्षणे नागोचरः' इति क-पाठः।

(मूलम्)

पत्तावपि पुनर्नित्यादिनिश्चयोपलब्धेः, वस्तुन एव पारम्पर्येण तद्भावात्, तदन्यतरापरनिमित्तत्वे तदितरत्र तन्निमित्तत्वानाश्वासात्, विशेषहेत्वभावात्, अनित्यस्यापि अर्थक्रियाऽयोगादिति निर्लोठयिष्यामः ॥ ५

किञ्च समारोपव्यवच्छेदभावाविशेषादनुमानविकल्पवत् कथं रूपादिविकल्पो न प्रमाणम् ?। समुद्भूतसमारोपव्यवच्छेदेनाभावात् इति चेत्, न, क्वचित् तथापि भावदर्शनेनाविरोधात्, शुक्तिका-

(स्वो० व्या०) १०

अनित्यादिप्रतिपत्तावपि सत्यां तथागतवचनादेः पुनर्नित्यादिनिश्चयोपलब्धेः कपिलादिवचनादेर्वस्तुन एव सकाशात् तस्याः—नित्यादिनिश्चयोपलब्धेः पारम्पर्येण भावात्—तदाश्रयत्वाद् वचनप्रवृत्तेः। यद्वा वचनमन्तरेणापि स्वत एव क्वचिदेवम्भावात् । तथाहि—वस्तुन्यनित्यत्वविकल्पोऽपि भवति, नित्यत्वविकल्पोऽपि भवतीति लौकिकमेतत् । एवं च सति तदन्यतरापर- १५ निमित्तत्वे तयोः—समारोप-निश्चययोरन्यतरस्य—समारोपस्य अपरनिमित्तत्वेऽभ्युपगम्यमाने तदितरत्र अपि निश्चये तन्निमित्तत्वानाश्वासात्—अधिकृतवस्तुनिमित्तत्वानाश्वासात् । इह तावदनित्यादिप्रतिपत्तिर्वस्तुनिमित्तेति भवतो मतम्, इहापि अनाश्वासः, तत्तुल्ययोगक्षेमाया नित्यादिनिश्चयोपलब्धेः अतन्निमित्तत्वाभ्युपगमादिति भावः । अनाश्वासश्च विशेषहेत्वभावाद् द्वयोरपि तथा तद्दर्शना- २० नन्तरभावित्वेन नित्यस्य सत्ता एव असम्भविनी, क्रम-यौगपद्याभ्यामर्थक्रियायोगादिति । विशेषहेतुनिराचिकीर्षयाऽऽह—अनित्यस्यापि निरन्वयक्षणस्थितिधर्मिणः अर्थक्रियाऽयोगादिति—एतत् निर्लोठयिष्यामः पुरस्तात्, अत एतदपि अयुक्तमिति स्थितम् ॥

अभ्युच्चयमाह किञ्चेत्यादिना । किञ्च समारोपव्यवच्छेदभावाविशेषात् २५ कारणात् अनुमानविकल्पवदिति दृष्टान्तः। कथं रूपादिविकल्पो न प्रमाणं प्रमाणलक्षणयोगेऽपि ? । एतदाशङ्क्याह—समुद्भूतसमारोपव्यवच्छेदेनाभावात्

(विवरणम्)

(१६) अपरनिमित्तत्वे इति । वासनाप्रबोधनिमित्तत्वे अवस्तुनिमित्तत्वे इत्यर्थः ॥

१ 'तद्भावत्वात्' इति ग-पाठः ।

( मूलम् )

शकलादौ रजतादिसमारोपव्यवच्छेदेन तद्भावात् । न च न सोऽपि रूपादिविकल्पः, तन्मात्रहेतुत्वात् । न च तत्त्वत एकस्यापि तदितर-
५ नाशनेन प्रवृत्तिः, नाशस्य निर्हेतुकत्वाभ्युपगमात्, तदभाव एव तद्भावोपपत्तेः । लिङ्गलिङ्गिसम्बन्धस्मरणादिनाऽप्रवृत्तेरिति चेत्, कोऽयं गुणे भवतो दोषाभिनिवेशः वस्तुसमारोपाभावेऽस्योपयोगात्? । न च नासौ रूपादिविकल्पस्यापि, तदभावे तत्प्रवृत्त्यनुपपत्तेरिति नानयोर्विशेषः । स खलु गृहीतग्राह्येव, प्रत्यक्षप्रतिभासिनः

( स्वो० व्या० )

१० **इति चेत्**, नह्ययमनुमानविकल्पवत् समुद्भूतसमारोपव्यवच्छेदेन भवति । एतदाशङ्क्याह–नेत्यादि । न, **क्वचिद्** वस्तुनि **तथापि**–समुद्भूतसमारोपव्यवच्छेदेनापि **भावदर्शनेन**–उत्पाददर्शनेन हेतुना रूपादिविकल्पस्य **अविरोधात्** प्रमाणत्वस्य[1] । एतदेवाह–**शुक्तिकाशकलादौ** वस्तुनि **रजतादिसमारोपव्यवच्छेदेन**
१५ **तद्भावात्**–शुक्तिकादिविकल्पभावात् । **न** चेत्यादि । **न च न सोऽपि**–शुक्तिकाविकल्पो[2] **रूपादिविकल्पः**, किन्तु रूपादिविकल्प एव । कुत इत्याह–**तन्मात्रहेतुत्वात्**–रूपादिमात्रहेतुत्वात् । **न च तत्त्वतः**–परमार्थेन **एकस्यापि** अनुमानविकल्पस्य रूपादिविकल्पस्य वा **तदितरनाशनेन**–समुद्भूतसमारोपनाशनेन अञ्जसा **प्रवृत्तिः** । कुतो न इत्याह–**नाशस्य निर्हेतुकत्वाभ्युपगमात्** तथा
२० **तदभाव एव**–समारोपाभावे एव **तद्भावोपपत्तेः**–अनुमानादिविकल्पभावोपपत्तेः । इहैव परिहारान्तरमुपन्यसन्नाह–**लिङ्गलिङ्गिसम्बन्धस्मरणादिना** प्रकारेण **अप्रवृत्तेः** कारणात् **इति चेत्**, रूपादिविकल्पो न प्रमाणमिति प्रक्रमः । एतदाशङ्क्याह–**कोऽयं गुणे भवतो दोषाभिनिवेशः?** । ननु लिङ्गलिङ्गिसम्बन्धस्मरणादिप्रवृत्तिमन्तरेण तद्भवनं गुणः । प्रस्तुतसमर्थनायाह–**वस्तुसमारोपाभावे**
२५ **अस्य**–अनुमानविकल्पस्य **उपयोगात्** । **न च नासौ रूपादिविकल्पस्यापि** वस्तुसमारोपाभावे उपयोगः, किन्तु अस्त्येव । कुत इत्याह–**तदभावे**–वस्तुसमारोपाभावोपयोगाभावे समारोपभावेन **तत्प्रवृत्त्यनुपपत्तेः**–रूपादिविकल्पप्रवृत्त्यनुपपत्तेः । अस्ति च प्रवृत्ति**रिति नानयोः**–अनुमानविकल्प-रूपादिविकल्पयो**र्विशेषः** । अतः कथमनुमानविकल्पवद् रूपादिविकल्पो न प्रमाणमित्या-
३० ख्येयमेतत् । प्रस्तुतमाचिख्यासुराह–**स खल्वि**त्यादि । स खलु, प्रक्रमाद् रूपादि-

१ 'प्रमाणं त्वस्य एतदेवाह' इति क–पाठः । २ 'शुक्तिकारूपो विकल्पो' इति क–पाठः ।

(मूलम्)

**अर्थस्य परामर्शात्, न हि अनुमानविकल्पोऽपि नैवमिति परिभाव्यतामेतत् ॥**

**न हि प्रत्यक्षं भागशः उत्पद्यते, निरंशत्वात् । सत्यं नोत्पद्यत इति । अनुमानविकल्पपरामर्शालम्बनमपि तत्र गृहीतमेव केवलं गृहीतेऽपि येष्वाकारेषु न तदनन्तरमेव निश्चयोत्पत्तिर्भूयसा व्याप्तिदर्शनात् तु भवति, तद्विषय एवानधिगतार्थाधिगन्तृत्वात् । प्रमाणमनुमानविकल्पो नेतर इति यत्किञ्चिदेतत्, अनालोचिताभिधान-**

(स्वो० व्या०)

विकल्पः । किमित्याह–**गृहीतग्राह्येव** । कुत इत्याह–**प्रत्यक्षप्रतिभासिनः अर्थस्य**–रूपादेः **परामर्शात्** कारणात् । स हि तमेव स्पृशति नाधिकं परिच्छिनत्ति, अतो न प्रमाणमिति । एतदाशङ्क्याह–**न हीत्यादि** । न हि **अनुमानविकल्पोऽपि नैवम्**, किं तर्हि ? एवमेव गृहीतग्राह्येव इत्यादीनि **परिभाव्यतामेतत्** । स्वभावहेतौ सुज्ञानमेव कृतकस्यैवानित्यत्वात् कार्यहेतावपि वह्निजन्यस्वभावो धूमः तत्त्वेन प्रत्यक्षेण प्रतिभासते, अन्यथा तत्प्रतिभासाभाव इति भावनीयम् ॥

तथा चाह–**न हि प्रत्यक्षं भागशः**–भागेन **उत्पद्यते** । कुत इत्याह–तस्य **निरंशत्वात्** । स्वलक्षणमेतदिति निरंशं **सत्यं नोत्पद्यते** भागशः प्रत्यक्षमिति–अस्माद्**अनुमानविकल्पपरामर्शालम्बनमपि तत्र**–वस्तुनि **गृहीतमेव**, अक्रमात् प्रत्यक्षेण **केवलं गृहीतेऽपि** सति **येष्वाकारेषु**–अनित्यत्वादिषु **न तदनन्तरमेव**–न दर्शनानन्तरमेव **निश्चयोत्पत्तिर्भूयसा**–बाहुल्येन **व्याप्तिदर्शनात् तु**–अविनाभावदर्शनेन पुन**र्भवति तद्विषय एव**–अनित्यत्वादिविषय एव **अनधिगतार्थाधिगन्तृत्वात्** कारणात् **प्रमाणमनुमानविकल्पो नेतरः**–रूपादिविकल्प इति । एतदाशङ्क्याह–**यत्किञ्चिदेतत्**–अनन्तरोदितम्,

(विवरणम्)

(१६) **अन्यथा तत्प्रतिभासाभाव** इति । धूमस्य ह्यग्निजन्यत्वं स्वरूपं तच्च न प्रतिभासते धूमज्ञाने, एवं तर्हि तद्धूमज्ञानमेव न स्यात्, तत्स्वरूपाप्रतिभासनात् । अतोऽवश्यमेवाभ्युपगन्तव्यमिदं यदुत वह्निजन्यस्वभावो धूमः प्रतिभासते । अतः परमार्थतो वह्निरपि तत्र प्रतिभासत इत्यायातम् । एवं च धूमग्राहिणैव प्रत्यक्षेण गृहीते धूमध्वजे तत्साधनाय प्रवर्तमानमनुमानं गृहीतग्राह्येव स्यादिति ॥

१ 'न तु तद०' इति ग-घ-पाठः । २ 'नाधिकं परिच्छिन्नं परिच्छिनत्ति' इति क-पाठः । ३ 'इत्यादि परि०' इति घ-पाठः, ङ-पाठस्तु 'इत्यादीति परि०' इति । ४ 'सुलक्षण०' इति घ-पाठः ।

( मूलम् )

त्वात्। अनालोचिताभिधानत्वं च ग्राह्ये आकाराभावात् सर्वथैक-
स्वभावत्वाभ्युपगमात्, परिकल्पितानामसत्त्वात् तत्त्वेन[1], तत्सत्त्वे
५ नियमतोऽतिप्रसङ्गात्, तथा युक्तितो व्याप्त्यसिद्धेः[2], तद्भावस्य
कथञ्चिद् भेदनिमित्तत्वात्, अन्यथा तदयोगात्। न ह्यभेदवत एवा-
नित्यत्वस्य स्वात्मना व्याप्तिः, न च भिन्नयोरेव 'हिमवद्'-'विन्ध्य'योः
तथाऽनधिगतार्थाधिगन्तृत्वाभावात्, वस्तुरूपस्याध्यक्षत एवाधि-
गमात्, स्वाधिगमस्य चेतरत्रापि भावात्, तदन्यस्य चेतरत्राप्य-
१० भावादिति। एवं प्रवर्तकत्वाद्यप्यस्य समानमितरेण, तत्रापि रूपा-

( स्वो० व्या० )

असारमित्यर्थः। कुत इत्याह—अनालोचिताभिधानत्वात् कारणात्। अनालो-
चिताभिधानत्वं च ग्राह्ये—वस्तुनि आकाराभावात्। अभावश्च सर्वथा—
एकान्तेन एकस्वभावत्वाभ्युपगमाद् वस्तुन इति परिकल्पितास्ते इति।
१५ एतदपोहायाह—परिकल्पितानाम्—आकाराणामसत्त्वात् तत्त्वेन तत्सत्त्वे—
परिकल्पिताकारसत्त्वे नियमतः—नियमेन अतिप्रसङ्गात् परिकल्पनया विरोध्या-
कारभावेन तथा युक्तितः—न्यायतः व्याप्त्यसिद्धेः कारणात्। असिद्धिश्च
तद्भावस्य—व्याप्तिभावस्य कथञ्चिद् भेदनिमित्तत्वात्, व्याप्य-व्यापकयोरिति
प्रक्रमः। किमित्येतदेवमित्याह—अन्यथा—एवमनभ्युपगमे व्याप्य-व्यापकयोरेका-
२० न्ताभेदादावित्यर्थः, तदयोगात्—व्याप्तिभावायोगात्। एतदेव भावयति न हीत्या-
दिना। न यस्मादभेदवत एव, एकान्तैकस्यैवेत्यर्थः, अनित्यत्वस्य स्वात्मना—
अनित्यत्वेनैव व्याप्तिः, अनित्यत्वस्यानित्यत्वेन व्याप्तिरिति व्यवहारायोगात्। न
च भिन्नयोरेव-एकान्तेन 'हिमवद्'-'विन्ध्य'योः स्वात्मना[3] व्याप्तिरिति भावनी-
यम्। तथाऽनधिगतार्थाधिगन्तृत्वाभावादनुमानविकल्पस्य, अभावश्च वस्तु-
२५ रूपस्याध्यक्षत एव—प्रत्यक्षेणैवेत्यर्थः, अधिगमात् ततश्चात्मानमेवाधिगच्छत्य-
नुमानविकल्प इति पराभ्युपगमः। एनमेवाधिकृत्याह—स्वाधिगमस्य चेतरत्रापि—
रूपादिविकल्पे भावात्, तदन्यस्य च—अनधिगतस्य इतरत्रापि—अनुमानवि-
कल्पेऽपि अभावादिति अनालोचिताभिधानत्वमिति। एवं प्रवर्तकत्वाद्यप्यस्य,
प्रक्रमादनुमानविकल्पस्य समानमितरेण—रूपादिविकल्पेन। कुत इत्याह—तत्र

१ 'तत्त्वेन' इत्यधिकः क-पाठः। २ 'सिद्धेः अतद्भावस्य' इति घ-पाठः। ३ 'स्वात्मना व्याप्तिः' इति पाठो घ-पुस्तके न विद्यते।

(मूलम्)

**दिनिश्चयादेव प्रवृत्तेः। व्यवहारे प्रमाणमेवायमिति चेत्, क्व तर्हि अप्रमाणमिति?। रूपादावेवेति चेत्, कुतोऽयं तत्राकारणो द्वेषः?। प्रागेव तदधिगमादिति चेत्, समानोऽयं त्वन्नीत्याऽनित्यत्वादौ, ५ तथापि न तद्वत् तद्दर्शनमिति चेत्, न तर्हि प्राक् तद्वत् तदधिगमोऽन्यथा रूपादिनिश्चयवत् स्यात् तदैवायं, निमित्ताविशेषात्, तदधिगमस्यैव तत्त्वतस्तन्निमित्तत्वाद् बाधकानुपपत्तेरविशेषेण[१] भावात् एकान्तैकत्वात्, अन्यथा तदनुपपत्तेः ॥**

**किञ्चायमधिकृताधिगमः, किं स्वगृहीतनिश्चयजननस्वभावः, उत १० समारोपजननस्वभावः, आहोस्विदुभयजननस्वभावः, उताहो अनुभयजननस्वभाव इति?। यदि स्वगृहीतनिश्चयजननस्वभावः, निरव-**

(स्वो० व्या०)

**अपि**—रूपादिविकल्पे सति **रूपादिनिश्चयादेव प्रवृत्तेः** इति **व्यवहारे**-प्रवृत्त्यादिरूपे **प्रमाणमेवायं**—रूपादिविकल्पः। **इति चेत्**, एतदाशङ्क्याह—**क्व तर्ह्य- १५ प्रमाणमिति?। रूपादावेवेति चेद**प्रमाणं **कुतोऽयं तत्र** रूपादौ—**अकारणो द्वेषः?। प्रागेव** अविकल्पेन **तदधिगमात्**—रूपाद्यधिगमात्। **इति चेत्**, एतदाशङ्क्याह—**समानोऽयम्**—अधिगमस्त्व**न्नीत्याऽनित्यत्वादौ** अनुमेये **तथापि**—एवमपि **न तद्वत्**—रूपादिवत् **तद्दर्शनं**—नित्यत्वादिदर्शनम्। **इति चेत्**, एतदाशङ्क्याह—**न तर्हि प्राग**विकल्पेन **तद्वत्**—रूपादिवत् **तदधिगमः**—अनित्यत्वाद्य- २० धिगमः, **अन्यथा**—यदि स्यात् ततो **रूपादिनिश्चयवत् स्यात् तदैवायम्**—नित्यत्वादिनिश्चयः। कुत इत्याह—**निमित्ताविशेषात्**। अविशेषश्च **तदधिगमस्यैव**—अविकल्पेन रूपाद्यधिगमस्यैव **तत्त्वतः**—परमार्थेन **तन्निमित्तत्वात्**—अनित्यत्वादिनिश्चयनिमित्तत्वात् **बाधकानुपपत्तेः** रूपादिनिश्चयानुमानेन। तथा चाह—**अविशेषेण भावात्**—रूपाद्यधिगमवदनित्यत्वाद्यधिगमत्वेन भावात्। २५ भावश्च **एकान्तैकत्वात्** अधिकृताधिगमस्य। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा तदनुपपत्तेः**—एकान्तैकत्वानुपपत्तेरधिकृतानुभवस्य रूपादिनिश्चयवत् स्यात् तदैवायमिति स्थितम् ॥

दूषणान्तरमभिधातुमाह—**किञ्चेत्यादि**। किञ्च **अयमधिकृताधिगमः** अविकल्परूपः **किं स्वगृहीतनिश्चयजननस्वभावः, उत समारोपजननस्व- ३०**

१ 'पत्तेः विशेषेण' इति ग-घ-पाठः।

( मूलम् )

काशः समारोपः, न चासावन्यनिमित्तोऽनिमित्तो वा। अथ समारोपजननस्वभावः कुतोऽस्मान्निश्चयजन्म, अतत्स्वभावेऽतिप्रसङ्गात्? ५ उभयजननस्वभावत्वे विरोधः, न्यायाविरोधेऽप्यभ्युपगमबाधा। अनुभयजननस्वभावत्वे तदुभयाभावः, तथा च प्रतीतिविरोधः। इति एकान्तेन च निर्विकल्पकप्रत्यक्षवादिनो न न्यायतो रूपादिनिश्चया-ऽनुमाननिश्चययोर्भेद इति सूक्ष्मधिया भावनीयम्॥

कथं तर्ह्यनुमानविकल्पो नानन्तरम्? सन्न्यायतोऽक्षज्ञानेन तद्- १० विषयानधिगतेः। वस्तुनः अनेकधर्मत्वात् क्षयोपशमवैचित्र्यात्

( स्वो० व्या० )

भावः, आहोस्विदुभयजननस्वभावः, उताहो अनुभयजननस्वभाव इति?। किञ्चातः? सर्वथाऽपि दोष इति। आह च-**यदि स्वगृहीतनिश्चयजननस्वभावः**, ततः किमित्याह-**निरवकाशः समारोपः**, तन्निमित्ताधि- १५ गमस्य स्वगृहीतनिश्चयजननस्वभावत्वात्। **न चासौ**-समारोपोऽ**न्यनिमित्तोऽनिमित्तो वा**। किं तर्हि?। अधिकृताधिगमनिमित्त एव, तदाऽन्यस्याभावात्।

**अथ समारोपजननस्वभावो**ऽधिकृताधिगमः, **कुतोऽस्मान्निश्चयजन्म?**। कथं च न स्यादित्याह-**अतत्स्वभावाद**धिकृताधिगमात् समारोपजननस्वभावत्वेन भावे निश्चयजन्मनोऽ**तिप्रसङ्गात्** तद्वन्निश्चयान्तरभावेन।

२० **उभयजननस्वभावत्वे**-स्वगृहीतनिश्चयसमारोपोभयजननस्वभावत्वे **विरोधः**। **न्यायाविरोधेऽपि** तत्तथाचित्रस्वभावतया **अभ्युपगमबाधा**, अनेकान्तवादापत्तेः।

**अनुभयजननस्वभावत्वे**ऽधिकृताधिगमस्य किमित्याह-**तदुभयाभावः**-निश्चयसमारोपोभयाभावोऽस्त्वित्यारेकाऽपोहायाह-**तथा च**-एवं च सति **प्रतीति- २५ विरोधः**, तदुभयस्य तथावेदनात्।

**इति**-एवमुक्तनीत्या **एकान्तेन निर्विकल्पकप्रत्यक्षवादिनः**-वादिनो **न न्यायतः**-उक्तनीत्या **रूपादिनिश्चया-ऽनुमाननिश्चययोर्भेद इति**-एतत् **सूक्ष्मधिया भावनीयम्**॥

आह-यद्येवं **कथं तर्ह्यनुमानविकल्पो नानन्तरम्?**, दर्शनस्येति प्रक्रमः।

१ 'भावनिश्चय०' इति घ-पाठः।

(मूलम्)

इत्युक्तप्रायम्, अतो न निर्विकल्पकमेव प्रत्यक्षम् ॥

लक्षणायोगाच्च "प्रत्यक्षं कल्पनाऽपोढमभ्रान्तम्" इति लक्षणम्, न चैतन्न्याय्यम्, परनीत्याऽनेकदोषापत्तेः, कल्पनाऽपोढत्वस्याव्यापकत्वात्, कल्पनायामपि स्वसंविदः प्रत्यक्षत्वाभ्युपगमात्, तस्याश्च तदव्यतिरिक्तत्वात् व्यतिरिक्तत्वेऽधिकृतविशेषणायोगात् तत्त्वतो व्यवच्छेद्यानुपपत्तेः। अवस्तुत्वात् कल्पनायाः स्वसंविदा[1] तत्त्वेतरविकल्पाभ्यां दोषापादानमयुक्तमिति चेत्, न, तदवस्तुत्वेन[2] विकल्पधियोऽभावप्रसङ्गात् स्वसंविन्मात्रस्यैव भावात् असत्या उप- १०

(स्वो० व्या०)

एतदाशङ्क्याह–सन्न्यायतः–तत्त्वनीत्या अक्षज्ञानेन अविकल्पेन तद्विषयानधिगतेः–अनुमानविकल्पविषयानधिगतेः, कथं कस्यचिदधिगतिः कस्यचिन्नेत्येतदपि युक्तिमदिति ? । एतदाशङ्क्याह–वस्तुनोऽनेकधर्मत्वात् । एतदपि युगपदेव प्रायश इत्याह–क्षयोपशमवैचित्र्यादिति–एतदुक्तप्रायं–प्रायेणोक्तम्, अतो १५ न निर्विकल्पकमेव प्रत्यक्षमिति निगमनम् ॥

तथा लक्षणायोगाच्च न निर्विकल्पकमेव प्रत्यक्षमिति । लक्षणायोगमाह–"प्रत्यक्षं कल्पनाऽपोढमभ्रान्तम्" इति लक्षणं परकीयम् । न चैतन्न्याय्यम् । कुत इत्याह–परनीत्या अनेकदोषापत्तेः अस्य लक्षणस्य । आपत्तिश्च कल्पनाऽपोढत्वस्य लक्षणत्वेनोपन्यस्तस्य अव्यापकत्वात् । अव्यापकत्वं च कल्पना- २० यामपि स्वसंविदः परेण प्रत्यक्षत्वाभ्युपगमात् । कल्पनाऽपि स्वसंवित्ता-[3] धिष्ठानार्थं विकल्पनादिति । तस्याश्च[4]–कल्पनायास्तदव्यतिरिक्तत्वात्–स्वसंविदव्यतिरिक्तत्वात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–व्यतिरिक्तत्वे कल्पनायाः स्वसंविदोऽभ्युपगम्यमाने । किमित्याह–अधिकृतविशेषणायोगात् । अयोगश्च तत्त्वतः–परमार्थेन व्यवच्छेद्यानुपपत्तेः सर्वस्या एव स्वसंविदः कल्पनाऽपोढ- २५ त्वात् । अत्राह–अवस्तुत्वात् कल्पनायाः स्वसंविदा सह तत्त्वेतरविकल्पाभ्याम्, तत्त्वान्यत्वविकल्पाभ्यामित्यर्थः, दोषापादनमनन्तरोदितमयुक्तम् । इति चेत्, एतदाशङ्क्याह–न–नैतदेवं तदवस्तुत्वेन तस्याः–कल्पनाया अवस्तु-

१ 'स्वसंविद्यातत्त्वेतर०' इति ग–पाठः । २ 'वस्तुतत्त्वेन' इति ग–घ–पाठः । ३ 'स्वसंवित्ता-विष्ठानार्थं' इति क–ङ–पाठः । ४ 'तस्याच्च कल्पनायाः' इति क–पाठः ।

(मूलम्)

**रागायोगात् क्लिष्टताऽसिद्धेरिति ॥**

**किञ्च एकान्तवादिनः सर्वथा कल्पनाऽपोढत्वे कल्पनाऽपोढ-**
**५ कल्पनातोऽप्यपोढत्वात्, कल्पनाऽपोढत्वलक्षणायोगः। प्रत्यक्ष-**
**सामान्यं लक्षणविषय इति चेत्, न, तस्य ततो व्यतिरिक्तेतरवि-**
**कल्पायोगात्, व्यतिरिक्तत्वे न तदध्यक्षलक्षणम्, अव्यतिरिक्तत्वे**
**तूक्तवल्लक्षणायोगः। निरूपणानुस्मरणविकल्पाभ्यामविकल्पकं स्व-**
**भावविकल्पेन तु सविकल्पकमिति चेत्, न, विरोधात्, अन्यथा**

१० (स्वो० व्या०)

त्वेन हेतुना । किमित्याह—**विकल्पधियः**—कल्पनाबुद्धेः **अभावप्रसङ्गात्** ।
प्रसङ्गश्च **स्वसंविन्मात्रस्यैव भावात्**। सर्वत्र "इयमेव कल्पनोपरक्ता विकल्प-
धीः" इत्यप्यसदित्यावेदयन्नाह—**असत्याः** कल्पनाया अवस्तुत्वेन । किमित्याह—
**उपरागायोगात्** स्वसंविदेव क्लिष्टा विकल्पधीरित्यप्ययुक्तिमत्। इत्याह—**क्लिष्ट-**
१५ **ताऽसिद्धेरिति** स्वसंविद्मात्रत्वेन, अतः स्थितमेतन्न चैतन्न्याय्यमिति ॥

दूषणान्तरमाह **किञ्चेत्यादिना** । किञ्च **एकान्तवादिनः**—वादिन एकान्तेन
कल्पनाऽपोढमेतत्, ततश्च **सर्वथा कल्पानाऽपोढत्वे** सति। किमित्याह—**कल्प-**
**नाऽपोढकल्पनातोऽप्यपोढत्वात्** कारणात् **कल्पनाऽपोढत्वलक्षणायोगः**
तत्र तद्योग्यताऽभावादिति । **प्रत्यक्षसामान्यम्**—अप्रत्यक्षव्यावृत्तिरूपं **लक्षण-**
२० **विषय इति चेत्**, तत्र तद्योग्यतेति भावः। एतदाशङ्क्याह—**न, तस्य**—प्रत्यक्षसा-
मान्यस्य **ततः**—प्रत्यक्षात्। किमित्याह—**व्यतिरिक्तेतरविकल्पाभ्यामयोगात्।**
आह च—**व्यतिरिक्तत्वे** प्रत्यक्षात् तत्सामान्यस्य **न तदध्यक्षलक्षणम्**, तद्-
व्यतिरिक्ततत्सामान्यलक्षणत्वात्, **अव्यतिरिक्तत्वे तु** प्रत्यक्षात् तत्सामान्यस्य
**उक्तवत्**—यथोक्तं तथा। किमित्याह—**लक्षणायोगः**, तत्र तद्योग्यताऽभावादिति।
२५ अत्राह—**निरूपणानुस्मरणविकल्पाभ्याम्**एवम्भूतमेतदिति तदात्वे आयत्यां
चैतद्गोचराभ्याम**विकल्पकम्**एतत्, **स्वभावविकल्पेन तु**—कल्पनाऽपोढस्वभाव-

(विवरणम्)

(१७-१८) **कल्पनाऽपोढकल्पनातोऽप्यपोढत्वादिति**। प्रत्यक्षं कल्पनाऽपोढ-
मेवंविधा अपि शब्दोल्लेखवती तत्र कल्पना न प्रवर्तत इत्यर्थः ॥

३० (२५-२६) **तदात्वे आयत्यां चैतद्गोचराभ्यामिति** । निरूपणं तदात्वे,
अनुसरणं त्वागामिनि काले ॥

(मूलम्)

अनेकान्तापत्तेः स्वाभ्युपगमपरित्यागादिति ॥

एवमभ्रान्तत्वविशेषणमप्यसङ्गतमेव, परनीतितो व्यवच्छेद्यायोगात् । इन्दुद्वयादिज्ञानं व्यवच्छेद्यमिति चेत्, न, तस्याभ्रान्तत्वात्, ५ एतच्च लक्षणोपपत्तेः तस्यापि तत्प्र[1]काशकस्वभावत्वतस्तादृक्फल-जननस्वभावहेतुजत्वतश्च भ्रान्तताऽसिद्धेः, अन्यथा तदयोगात्, तस्य चानुभवसिद्धत्वात्, न च बहिस्तद्विषयानुपलब्ध्या तत्सिद्धिः, तद्ग्रहणस्वभावधिया तद्विषयानुपलब्ध्यसिद्धेः, अन्यथाऽनुपलब्धौ

(स्वो० व्या०)　१०

लक्षणेन **सविकल्पकमेव** । इति चेत्, एतदाशङ्क्याह–**न विरोधात्**। अविकल्पकं सविकल्पं चेति विरोधः । **अन्यथा**–निमित्तभेदतो विरोधमन्तरेण । किमित्याह–**अनेकान्तवादापत्तेः** । ततः किमित्याह–**स्वाभ्युपगमपरित्यागात्** न इति योगः ॥

**एवं**–यथा कल्पनाऽपोढत्वविशेषणं तथा **अभ्रान्तत्वविशेषणमप्यसङ्गत-** १५ **मेव** । कुत इत्याह–**परनीतितो व्यवच्छेद्यायोगात्** । **इन्दुद्वयादिज्ञानम्** 'आदि'शब्दाद् [2]वियत्केशज्ञानादिग्रहः, **व्यवच्छेद्यम्** । **इति चेत्**, एतदाशङ्क्याह– **न, तस्य**–इन्दुद्वयादिज्ञानस्य **अभ्रान्तत्वात्** । **एतच्च**–अभ्रान्तत्वं **तल्लक्षणो-पपत्तेः**–अभ्रान्तलक्षणोपपत्तेः । उपपत्तिश्च **तस्यापि**–इन्दुद्वयादिज्ञानस्य **तत्-प्रकाशकस्व[3]भावत्वतः**–इन्दुद्वयादिप्रकाशकस्वभावत्वेन **तादृक्फलजनन-** २० **स्वभावहेतुजत्वतश्च**–इन्दुद्वयादिज्ञानजननस्वभावहेतूत्पन्नत्वेन चास्य **भ्रान्त-ताऽसिद्धेः, अन्यथा**–एवमनभ्युपगमे **तदयोगात्**–इन्दुद्वयादिज्ञानायोगात् **तस्य च**–इन्दुद्वयादिज्ञानस्य **अनुभवसिद्धत्वात्** । **न च बहिः**–वियदादौ **तद्विषयानुपलब्ध्या**–इन्दुद्वयादिज्ञानविषयानुपलब्ध्या कारणेन **तत्सिद्धिः**– भ्रान्ततासिद्धिः । कुत इत्याह–**तद्ग्रहणस्वभावधिया**–बहिस्तद्विषयग्रहणस्वभाव- २५ धिया, इन्दुद्वयादिग्रहणस्वभावबुद्ध्येत्यर्थः, **तद्विषयानुपलब्ध्यसिद्धेः**–इन्दुद्वया-दिज्ञानविषयानुपलब्ध्यसिद्धेः । तद्ग्रहणस्वभावा हि तद् गृह्णात्येव, अन्यथा त[4]त्-स्वभावताऽयोगः । **अन्यै**त्यादि । अन्यथा–अतद्ग्रहणस्वभावया, धियेति प्रक्रमः, **अनुपलब्धिः** बहिस्तद्विषयस्येति प्रक्रम एवेत्यन्यथाऽनुपलब्धिस्तस्याम् । किमि-

१ 'प्रकाशकस्वभावहेतुजत्वजश्च' इति ग–घ–पाठः । २ 'विपक्षसज्ञानादि०' इति क–पाठः ।
३ 'भावत्वेन इन्दु०' इति घ–पाठः । ४ 'तत्तत्स्व०' इति क–पाठः ।

(मूलम्)

तदभावासिद्धेरतिप्रसङ्गात्। न चातैमिरिकस्यापि तत्प्रत्ययप्रसङ्गः, तस्य तिमिरतदन्यहेतुजन्यस्वभावत्वात्, अतैमिरिकाणां च तद-
५ भावात् तथा लोकप्रसिद्धेः। न च बाधातोऽस्य भ्रान्तता, बाधाऽसिद्धेर्भिन्नकालविषयप्रत्ययेन तदभ्युपगमेऽतिप्रसङ्गात्, क्वचिदभ्रान्तस्यापि असर्पादौ तदन्यतो बाधोपलब्धेश्च। न चानर्थक्रियाकरणतः अप्राप्यदेशगतजलादिज्ञानेन व्यभिचारात्, संविन्मात्रार्थक्रिया-

(स्वो० व्या०)

१० त्याह–तदभावासिद्धेः–बहिस्तद्विषयाभावासिद्धेः, इन्दुद्वयाद्यभावासिद्धेरित्यर्थः। कुत इत्याह–अतिप्रसङ्गात् पटादिग्रहणस्वभावया धिया घटो न गृह्यत इति तस्याप्यभावप्रसङ्गादित्यर्थः। न चेत्यादि। न च अतैमिरिकस्यापि, प्रक्रमात् प्रमातुः, तत्प्रत्ययप्रसङ्गः–इन्दुद्वयादिप्रत्ययप्रसङ्गः, तदस्तीति कृत्वा। कुत इत्याह–तस्येत्यादि। तस्य–इन्दुद्वयादिप्रत्ययस्य तिमिरसहायतदन्यहेतुजन्य-
१५ स्वभावत्वात्। तिमिरसहायचक्षुरादिजन्यस्वभावो हि इन्दुद्वयादिप्रत्ययः। यदि नामैवं ततः किमित्याह–अतैमिरिकाणां च प्रमातॄणां तदभावात्–तिमिराभावात्। ततश्च कारणवैकल्यात्[1] कार्याभाव इति स्थितम्। इत्थं चैतदङ्गीकर्तव्यमित्याह–तथा लोकप्रसिद्धेः, अतैमिरिकाणां तिमिराभावेन नेन्दुद्वयादिप्रत्यय इति लोकप्रसिद्धेः। न चेत्यादि। न च बाधातः कारणात् अस्य
२० इन्दुद्वयादिज्ञानस्येति प्रक्रमः[2] भ्रान्तता। कुत इत्याह–बाधासिद्धेः तस्यैव तिमिरापगमे एकेन्द्वादिज्ञानभावतो बाधा इत्याशंकानिरासायाह–भिन्नेत्यादि। भिन्नौ काल-विषयौ यस्य स भिन्नकालविषयः, एवम्भूतश्चासौ प्रत्ययश्चेति विग्रहः, तेन, तदभ्युपगमे–बाधाऽभ्युपगमे। किमित्याह–अतिप्रसङ्गात्, सर्व एवम्भूतः तदन्यस्य बाधक इत्यतिप्रसङ्गः।
२५ दोषान्तरमाह क्वचिदित्यादिना। क्वचित्-मन्दमन्दप्रकाशादौ अभ्रान्तस्यापि, प्रक्रमात्[3] ज्ञानस्य, असर्पादौ असर्पादिविषयस्य तदन्यतः, भ्रान्ताज्ज्ञानादिति प्रक्रम एव। किमित्याह–बाधोपलब्धेश्च तथा रज्जुचलनादेः सर्पज्ञाने न तदसर्पज्ञानस्येति नालौकिकमेतदतो भावनीयमिति।
दोषान्तरमभिधातुमाह–न चेत्यादि। न च अनर्थक्रियाकरणतोऽस्य
३० भ्रान्ततेति वर्तते। कुत इत्याह–अप्राप्यदेशगतजलादिज्ञानेन व्यभिचारात्

१ 'वैकल्यात् तत्कार्या०' इति क–पाठः। २ 'प्रक्रमः। ततः कुत' इति क–पाठः। ३ 'प्रक्रमात् सर्वज्ञस्य असर्पादौ' इति क–पाठः।

( मूलम् )

**विधाने चास्येतरत्रापि तद्भावात् तथाप्रतीतेः, न च लोकप्रतीतितः, अभ्युपगमविचारात् तेन च तदप्राप्तेः तस्य चेहाधिकृतत्वादित्यलमनया लोकागमानुभवविरुद्धया अतिसूक्ष्मेक्षिकया उक्तवत् सर्वत्रासमञ्जसतापत्तेः । यस्तु लोकादिसापेक्षः तस्यैतद्भेदस्याविद्धदङ्गनादिलोकप्रतिष्ठितत्वात् अविगानतस्तथाप्रतीतेस्तद्व्यवस्थाकारिसदागमभावात् उक्तदोषाभाव इति ॥**

**किञ्च निर्विकल्पकं प्रत्यक्षमित्यत्र न प्रमाणम्, तेनैव तदनधिगतेः, अर्थविषयत्वात्, तस्य च ततोऽन्यत्वात् । तथाहि—न तन्नि-**

( स्वो० व्या० )

इति भावितार्थमेतत् । **संविन्मात्रार्थक्रियाविधाने चास्य**—अनन्तरोदितज्ञानस्य । किमित्याह—**इतरत्रापि,** प्रक्रमादिन्दुद्वयादिज्ञानेऽपि, **तद्भावात्**—संविन्मात्रार्थक्रियाविधानभावात् । भावश्च **तथाप्रतीतेः । न** चेत्यादि । न च **लोकप्रतीतितोऽ**स्य, भ्रान्ततेति प्रक्रमः । कुत इत्याह—**अभ्युपगमविचारात् ।** यदि नामैवं ततः किमित्याह—**तेन च**—अभ्युपगमेन **तदप्राप्तेः**—उक्तवद् भ्रान्तताऽप्राप्तेः **तस्य च** अभ्युपगमस्य **इह**—प्रक्रमेऽ**धिकृतत्वात्**, ततश्च ततो यत् सिद्ध्यति तत् तत्त्वम्, अतोऽन्यदतत्त्व**मित्यलमनया**—एवम्भूतया **लोकागमानुभवविरुद्धयाऽतिसूक्ष्मेक्षिकया** । किमित्यत आह—**उक्तवत्**—यथोक्तं तथा **सर्वत्रासमञ्जसतापत्तेः**, अतो जातिरियमिति प्रतिपत्तव्या सर्वत्र तत्त्वेन । **यस्तु लोकादिसापेक्षः**—लोकागमानुभवसापेक्षो वादीति गम्यते **तस्य** उक्तदोषाभाव इति सम्बन्धः । कथमित्याह—**एतद्भेदस्य,** प्रक्रमाद् भ्रान्तेतरज्ञानभेदस्य, **आविद्धदङ्गनादिलोकप्रतिष्ठितत्वात्** कारणात् । एतत् प्रतिष्ठितत्वं च **अविगानतः तथा**—भ्रान्तेतरत्वेन **प्रतीतेः** तथा **तद्व्यवस्थाकारिसदागमभावात्,** अधिकृतैतद्भेदव्यवस्थाकारिसर्वज्ञप्रणीतागमभावादित्यर्थः । **उक्तदोषाभावः** जातियुक्तिभिर्भ्रान्तेतरज्ञानयोः समत्वापादनमुक्तो दोषः तदभावः, उपन्यस्तहेत्वन्यथाऽनुपपत्ते[2]**रिति** ॥

दूषणान्तराभिधित्सयाऽऽह—**किञ्चे**त्यादि । किञ्च **निर्विकल्पकं प्रत्यक्षमित्यत्र** अर्थे **न प्रमाणम् ।** कुत इत्याह—**तेनैव**—प्रत्यक्षेण **तदनधिगतेः** तस्य—निर्विकल्पकस्यानधिगतेः । अनधिगतिश्च **अर्थविषयत्वात्** प्रत्यक्षस्य **तस्य च**—अर्थस्य **ततः**—प्रत्यक्षादन्य**त्वात्** । प्रस्तुतैदम्पर्यमाह **तथाही**त्यादिना । तथाहि—**न**

१ 'तस्यैव तद्भेदस्य' इति घ–पाठः । २ 'पत्तिरिति' इति घ–पाठः ।

( मूलम् )

**विकल्पकत्वमेव तदर्थः, न चानर्थो विषयः, न चाविषयेऽधिगति-
रिति न तत्रास्य प्रमाणता, अतिप्रसङ्गात्। उभयं विषय इति चेत्,
५ न, उभयोस्तल्लक्षणायोगात् स्वनिर्विकल्पकत्वस्य तदकारणत्वात्
अकारणस्य चाविषयत्वात्, अन्यथाऽभ्युपगमविरोधात्। एतेन
स्वसंविदितत्वं प्रत्याख्यातम् ॥**

**अनेन विषयावेदनप्रसङ्गात् सर्वथैकस्वभावत्वाद् निर्विषयता-
पत्तेः, न च स्वसंवेदनमेव विषयवेदनम्, तयोः कालादिभेदात् तद्-
१० वेदनस्यैकत्वाभावात्, तच्चित्रताप्रसङ्गादिति एकस्वभावत्ववस्तु-**

( स्वो० व्या० )

**तन्निर्विकल्पकत्वमेव**—अधिकृतप्रत्यक्षनिर्विकल्पकत्वमेव **तदर्थः**—प्रत्यक्षार्थः, **न
चानर्थो विषयः,**

"रूपालोकमनस्कारचक्षुर्भ्यः सम्प्रवर्तते ।
१५ विज्ञानं मणिसूर्यांशुगोशकृद्भ्य इवानलः ॥"[3]

इति वचनात् । **न चाविषयेऽधिगतिरपन्यायादिति**—एवं **न तत्र**—निर्वि-
कल्पकत्वे**ऽस्य**—प्रत्यक्षस्य **प्रमाणता**। कुत इत्याह—**अतिप्रसङ्गात्** विषयलक्षणा-
योगेन प्रमाणताऽभ्युपगमे सर्वत्र प्रमाणतापत्तिरित्यतिप्रसङ्गः । **उभयं**—स्वनिर्विकल्प-
कत्वार्थोभयं **विषयः** प्रत्यक्षस्य । **इति चेत्**, एतदाशङ्क्याह—**न, उभयोः**—स्वनि-
२० विकल्पकत्वार्थयोः **तल्लक्षणायोगात्**—विषयलक्षणायोगात् । अयोगश्च **स्वनि-
र्विकल्पकत्वस्य तदकारणत्वात्**—प्रत्यक्षाकारणत्वात्, **अकारणस्य च
अविषयत्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथाऽभ्युपगमविरोधात्**।
विरोधश्च "नाकरणं विषयः" इति वचनप्रामाण्यात्, तदेवं नोभयं विषय इति ।
**एतेने**त्यादि। एतेन—अनन्तरोदितेन **स्वसंविदितत्वं प्रत्याख्यातम्**, प्रत्यक्षस्येति
२५ प्रक्रमः ॥

इहैवोपचयमाह—**अनेन**—स्वसंविदितेन प्रत्यक्षेण । किमित्याह—**विषयावेदन-
प्रसङ्गात्**। प्रसङ्गश्च **सर्वथैकस्वभावत्वात्** अस्य । एवमपि को दोष इत्याह—
**निर्विषयतापत्तेः** स्वसंविदितत्वेन । **न चे**त्यादि । न च **स्वसंवेदनमेव
विषयवेदनम्**। कुत इत्याह—**तयोः**—स्व-विषययोः **कालादिभेदात्**। 'आदि'-
३० शब्दात् स्वरूपग्रहः। यदि नामैवं ततः किमित्याह—**तद्वेदनस्य** तयोः—स्व-विषययोः
वेदनं तद्वेदनं तस्य । किमित्याह—**एकत्वाभावात्** उभयवेदनेन, अत एव

१ 'दित्येवमेकस्व०' इति क–पाठः । २ 'गोसकृद्भ्य' इति क–पाठः । ३ अनुष्टुप् ।

( मूलम् )

**वादिनोऽन्यावेदनप्रसङ्ग एव। एवं च सति स्वनिर्विकल्पकत्ववेदनात् तत्सामर्थ्यतः तत्पृष्ठभावी विकल्पः स्वतस्तद्विषय एव स्याद् रूपादिविकल्पवत्, न च भवति, तथाऽप्रतीतेः, न च तमन्तरेण तत्- ५ तथाताव्यवस्थितिः, अतिप्रसङ्गादिति। एतेन यदाह न्यायवादी—**

**"प्रत्यक्षं कल्पनाऽपोढं प्रत्यक्षेणैव सिध्यति।**
**[1]प्रत्यात्मवेद्यः सर्वेषां विकल्पो नाम [2]संश्रयः॥"[3]**

( स्वो० व्या० )

**तच्चित्रताप्रसङ्गात् इति एवमेकस्वभाववस्तुवादिनः**—वादिनः। किमिति १० आह—**अन्यावेदनप्रसङ्ग एव**, स्वव्यतिरिक्तविषयावेदनप्रसङ्ग एवेत्यर्थः। **एवं च सति स्वनिर्विकल्पकत्ववेदनात्** कारणात् **तत्सामर्थ्यतः**—स्वनिर्विकल्पकत्ववेदनसामर्थ्येन हेतुना **तत्पृष्ठभावी विकल्पः**, प्रक्रमात् सामान्येन प्रत्यक्षपृष्ठभावी विकल्पः, **स्वतः**—आत्मनैव समारोपव्यवच्छेदमन्तरेण **तद्विषय एव स्यात्**—स्वनिर्विकल्पकत्ववेदनविषय एव भवेत्। **रूपादिविकल्पवदिति** १५ निदर्शनम्। **न च भवति** स्वत एव, **तथाऽप्रतीतेः** कारणात्। **न च तमन्तरेण** [4]विकल्पं **तत्तथाताव्यवस्थितिः** तस्य—प्रत्यक्षस्य तथाताव्यवस्थितिः—स्वनिर्विकल्पकत्ववेदनभावव्यवस्थितिः, स्वसंविदितत्वव्यवस्थितिरित्यर्थः। कथं नेत्याह—**अतिप्रसङ्गात्**, विषयान्तरविषयवेदनाभावप्रसङ्गादिति। **एतेन**—अनन्तरोदितेन **यदाह—न्यायवादी—**धर्मकीर्तिर्वार्तिके **प्रत्यक्षमित्यादि**। तदपाकृतमवसेय- २० मिति योगः। **प्रत्यक्षं** प्रस्तुतं **कल्पनाऽपोढमित्येतत् प्रत्यक्षेणैव सिध्यति**। कथमित्याह—**प्रत्यात्मवेद्यो** यस्मात् **सर्वेषां** प्रमातॄणां **विकल्पो नाम** [5]**संश्रयः**

( विवरणम् )

(१५) **रूपादिविकल्पवदिति**। यथा हि रूपगोचरनिर्विकल्पज्ञानानन्तरं समारोपव्यवच्छेदमन्तरेणैव विकल्पो रूपगोचरो भवति, एवं निर्विकल्पज्ञानात् २५ स्वनिर्विकल्पकत्ववेदनागोचरादनन्तरं जायमानो विकल्पस्तद्गतामेव निर्विकल्पकत्वे वेदनां गोचरयेदिति॥

(१९) **विषयान्तरविषयवेदनाभावप्रसङ्गादिति**। विषयान्तरविषयवेदनाया भावस्य प्रसङ्गात्। यदि हि विकल्पमन्तरेणापि स्वसंविदितत्वं ज्ञायते, एवं तर्हि घटे परिच्छिन्ने पटविकल्पाभावेऽपि पटः किमिति न ज्ञायते?॥ ३०

(२२) **विकल्पो नाम संश्रय** इति। विकल्प एव सर्वप्रमातृभिर्नामानुविद्धो वेद्यते, न तु प्रत्यक्षमित्यर्थः॥

१ 'प्रत्यात्मेवद्यः' इति ग–पाठोऽशुद्धः। २ 'संशयः' इति क–पाठः। ३ अनुष्टुप्। ४ 'अन्तरेणेति शेषः' इति टिप्पणकं घ–पुस्तके। ५ 'संशयः' इति क–पाठः।

(मूलम्)

संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना ।
स्थितोऽपि चक्षुषा रूपमीक्षते साऽक्षजा मतिः ॥
५ पुनर्विकल्पयन् किञ्चिदासीन्मे कल्पनेदृशी ।
इति वेत्ति न पूर्वोक्तावस्थायामिन्द्रियाद् गतौ ॥"[१]

इत्यादि तदपाकृतमवसेयम्, उक्तवत् प्रत्यक्षेणैवासिद्धेः, तदेकस्वभावत्वविरोधादिति ॥

न चानुमानमत्र प्रमाणम्, अस्य स्वलक्षणत्वात् अनुमानस्य च
१० सामान्यलक्षणालम्बनत्वात् । न चेदं परपक्षे[२] चारु, गमकलिङ्गासम्भवात् स्वभावकार्यासिद्धेः स्वभावस्य तादात्म्येन तत्त्वात् तद्वत्

(स्वो० व्या०)

शब्दानुविद्ध इत्यर्थः ॥ तथा संहृत्य सर्वतश्चिन्तां विकल्परूपां स्तिमितेन अन्तरात्मना प्रसन्ननिर्व्यापारेण स्थितोऽपि सन् चक्षुषा रूपमीक्षते-पश्यति
१५ यया बुद्ध्या साऽक्षजा मतिः ॥ ईक्षित्वा पुनर्विकल्पयन् किञ्चित् पश्चात् आसीन्मे कल्पना ईदृशी-एवम्भूता इति वेत्ति, न पूर्वोक्तावस्थायां चक्षुषा रूपेक्षणलक्षणायामिन्द्रियाद् गतौ ॥ इत्यादि यदाह न्यायवादी तदपाकृतम्-अपास्तमवसेयम् । कथमित्याह-उक्तवत्-यथोक्तं तथा प्रत्यक्षेणैव असिद्धेः प्रत्यक्षेणैव सिध्यतीति अस्यासिद्धेः । असिद्धिश्च तदेकस्वभावत्व-
२० विरोधात् तस्य-प्रत्यक्षस्य एकस्वभावत्वविरोधात् स्वविषयपरिच्छेदकत्वेनेति भावितार्थमेतदिति ॥

न चेत्यादि । न च अनुमानमत्र, प्रक्रमात् निर्विकल्पकत्वे, प्रत्यक्षस्य प्रमाणम् । कुत इत्याह-अस्य-प्रत्यक्षस्य स्वलक्षणत्वात् । यदि नामैवं ततः किमित्याह-अनुमानस्य च सामान्यलक्षणालम्बनत्वात् तत् कथमन्या-
२५ लम्बनमन्यत्र प्रमाणं भवति ? ।

दूषणान्तरमाह-न चेदमित्यादि । न चेदम्-अनुमानं परपक्षे-एकान्तैकस्वभाववादिपक्षे चारु-शोभनं गमकलिङ्गासम्भवात् । असम्भवश्च स्वभावकार्यासिद्धेः स्वभावश्च कार्यं च स्वभावकार्ये, लिङ्गे इति प्रक्रमः, तयोरसिद्धेः ।

(विवरणम्)

३० (१४) स्थितोऽपि सन्निति । सर्वतश्चिन्तासंहरणेन कृतावस्थानोऽपि किं पुनः सर्वतः प्रवृत्तिचिन्ता कः प्रमाता इत्यपि शब्दार्थः ॥

१ अनुष्टुप् । २ 'परे पक्षे' इति ग-घ-पाठः ।

( मूलम् )

**तदग्रहणात्, तद्ग्रहे साध्यप्रतिपत्तेः, तदप्रतिपत्तौ तद्ग्रहणायोगात् एकान्तैकत्वात्, तथाग्रहे मोहाभावात्, भावे वा निवृत्त्यनुपपत्तेः उपायाभावादिति। अनेन शिंशपादिप्रतिपत्तौ वृक्षाप्रतिपत्तिः प्रत्यु- ५ क्ता, तुल्ययोगक्षेमत्वात्; अन्यथा कथञ्चित् तद्भेदापत्तेः। व्यावृत्ति- भेदोऽभ्युपगम्यत एवेति चेत्, न तर्हि तदेकस्वभावता। सोऽपार- मार्थिक इति चेत्, किमर्थमस्योपन्यासः?। व्यवहारार्थमिति चेत्, कीदृशोऽसता व्यवहारः?। परमार्थतो भ्रान्त इति चेत्, न तत्त्वतः साध्यसाधनभाव इति । एतेन "सर्व एवायमनुमानानुमेयव्यव- १० हारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन" इत्येतदपि प्रत्युक्तम्, अस्य**

( स्वो० व्या० )

असिद्धिश्च **स्वभावस्य** सत्त्वादेः **तादात्म्येन**—साध्यात्म्येन हेतुना **तत्त्वात्**— साध्यत्वात्। यदि नामैवं ततः किमित्याह—**तद्वत्**—साध्यवत् **तदग्रहणात्**—स्व- भावाग्रहणात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—**तद्ग्रहे**—स्वभावग्रहे **साध्यप्रतिपत्तेः,** १५ नान्यथेदमित्याह—**तदप्रतिपत्तौ**—साध्याप्रतिपत्तौ **तद्ग्रहणायोगात्**—स्वभावग्रह- णायोगात्। अयोगश्च—**एकान्तैकत्वात्**, प्रक्रमात् साध्य हेत्वोः। मोहव्यावृत्त्यर्थ- मप्यस्य प्रवृत्तिरयुक्तेत्याह—**तथाग्रहे**—एकत्वेन ग्रहे **मोहाभावात्, भावे वा**— तथाग्रहेऽपि मोहस्य। किमित्याह—**निवृत्त्यनुपपत्तेः**। अनुपपत्तिश्च **उपाया- भावात्**। तत्स्वरूपग्रहेऽपि तन्मोहस्य निवृत्तौ क उपाय इति? **अनेन**—अनन्तरोदितेन २० **शिंशपादिप्रतिपत्तौ** सत्यां **वृक्षाप्रतिपत्तिः प्रत्युक्ता**। कुत इत्याह—**तुल्य- योगक्षेमत्वात्**, शिंशपात्वस्यैव वृक्षत्वादित्यर्थः। **अन्यथे**त्यादि। अन्यथा—एव- मनभ्युपगमे **कथञ्चित् तद्भेदापत्तेः** शिंशपात्व-वृक्षत्वयोर्भेदापत्तेर्व्यावृत्ति**भेदः अभ्युपगम्यत एव,** शिंशपात्व-वृक्षत्वयोः शास्त्राधिकृतानित्यत्वकृतकत्वयोर्वा। **इति चेत्**, एतदाशङ्क्याह—**न तर्हि तदेकस्वभावता**—शिंशपादेरेकस्वभावता। २५ **सः**—व्यावृत्तिभेदः **अपारमार्थिकः**। **इति चेत्**, एतदाशङ्क्याह—**किमर्थमस्य**— अपारमार्थिकस्य **उपन्यासः?**। **व्यवहारार्थम्**। **इति चेत्**, एतदाशङ्क्याह— **कीदृशोऽसता व्यवहारः?**। **परमार्थतो भ्रान्त इति चेद्** व्यवहारः। एतदा- शङ्क्याह-**न तत्त्वतः**-परमार्थेन **साध्यसाधनभावो** भ्रान्तव्यवहारविषयत्वादिति **एतेने**त्यादि। एतेन—अनन्तरोदितेन **"सर्व एवायमनुमानानुमेयव्यवहारो** ३० **बुद्ध्यारूढेन धर्मधर्मिन्यायेन" इत्येतदपि** भवतोक्तं **प्रत्युक्तम्**। कुत

१ 'सतां' इति ग-पाठः।

(मूलम्)

**तावदर्थाप्रतिबद्धत्वात् तस्य एकत्वेनातथाभूतत्वान्नीलान्नीलपीतबुद्ध्याकारतुल्यत्वात् परप्रतिपादनोपायत्वानुपपत्तेरतिप्रसङ्गादिति ५न स्वभावहेतोस्तदवगतिः ॥**

**[1]एवं न कार्यहेतोरपि, तन्निर्विकल्पकत्वकार्यत्वेन कस्यचिदसिद्धेः, सदैकेनैकवेदनात्, तत्कार्यत्वस्य च तदवधिकत्वात् तदग्रहणे तथाऽग्रहणात्, अन्यथा न्यायायोगात् तत्तत्स्वभावत्वतः, तथाग्रहणेऽतिप्रसङ्गात्, अन्यतरदर्शनादन्यतरावगमापत्तेः, तथा**

---

१० (स्वो० व्या०)

इत्याह–**अस्य तावद्**–बुद्ध्याऽऽरूढस्य धर्मधर्मिभावस्य **अर्थाप्रतिबद्धत्वात्**–वस्त्वप्रतिबद्धत्वात् । अप्रतिबद्धत्वं च **तस्य**–अर्थस्य **एकत्वेन**–एकस्वभावत्वेन हेतुना **अतथाभूतत्वात्**–धर्मधर्मितया अभूतत्वात् । यदि नामैवं ततः किमित्याह–**नीलात्** सकाशात् **नीलपीतबुद्ध्याकारतुल्यत्वात्** बुद्ध्यारूढधर्मधर्मि-१५भावस्य ततोऽभावादित्यर्थः । ततश्च **परप्रतिपादनोपायत्वानुपपत्तेः** तदसद्रूपतया नासत उपायत्वम् । इत्याह–**अतिप्रसङ्गात्** असत उपायत्वे सर्वसिद्ध्यापत्त्याऽतिप्रसङ्गः; **इति**–एवमुक्तनीतेरसिद्धेर्न **स्वभावहेतोः** सकाशात् **तदवगतिः**, प्रक्रमात् प्रत्यक्षनिर्विकल्पकत्वावगतिः ॥

**एवमित्यादि** । एवं **न कार्यहेतोरपि** सकाशात्, तदवगतिरिति प्रक्रमः । २०कुतो नेत्याह–**तन्निर्विकल्पकत्वकार्यत्वेन**–प्रत्यक्षनिर्विकल्पकत्वकार्यत्वेन **कस्यचित्**–पदार्थस्य **असिद्धेः** कारणात् । असिद्धिश्च **सदा**–सर्वकालं **एकेन**–ज्ञानेनेति [2]सर्वसामर्थ्यम् **एकवेदनात्**–एकानुभवात् । यद्येवं ततः किमित्याह–**तत्कार्यत्वस्य च**, प्रक्रमात् प्रत्यक्षनिर्विकल्पकत्वकार्यत्वस्य च । किमित्याह–**तदवधिकत्वात्**–अधिकृतप्रत्यक्षावधिकत्वात् । एवमपि किमित्याह–**तदग्रहणे**–२५विवक्षितावध्यग्रहणे सति । किमित्याह–**तथा**–तदवधिकत्वेन **अग्रहणात्** । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–एवमनभ्युपगमे **न्यायायोगात्** । अयोगश्च **तत्तत्स्वभावत्वतः** तस्य–[3]विवक्षितकारणकार्यत्वस्य तत्स्वभावत्वतः–तदवधिकस्वभावत्वतः तज्जन्यत्वेन । **तथा**–तदवधिकत्वेन **ग्रहणे** सति किमित्याह–**अतिप्रसङ्गात्** । ततः किमित्याह–**अन्यतरदर्शनाद्** हेतु-फलयोः । किमित्याह–३०**अन्यतरावगमापत्तेः** हेतु-फलयोरेव । आपत्तिश्च **तथा**–इतरेतरावधिकत्वेन

---

१ 'एवं कार्यहेतोरपि' इति ग–पाठः । २ 'सर्व' इति पाठो न विद्यते घ–पुस्तके । ३ 'विवक्षितस्य कारण०' इति क–पाठः ।

( मूलम् )

**विशिष्टस्य ग्रहणात्, अभ्युपगमेऽनुभवविरोधात् अविनाभावग्रहणमन्तरेण तदयोगात्, लोके तथोपलब्धेः तस्य च परपक्षेऽभावात्, ज्ञानानां प्रतिनियतार्थत्वात् तत्तथाऽभावतोऽनुसन्धानायोगात्, ५ तथाविधविकल्पस्याप्यसिद्धेः, तस्यापि क्षणिकत्वात्, तथा तत्तन्निश्चयानुपपत्तेरित्यत्रापि बुद्ध्यारूढधर्मधर्मिन्यायतोऽप्यधिकृतव्यव-**

( स्वो० व्या० )

**विशिष्टस्य** तत्स्वभावतया **ग्रहणात्**। अस्त्वेवमित्यधिकृत्याह—**अभ्युपगमे**ऽधिकृतग्रहणस्य **अनुभवविरोधात्**। विरोधश्च **अविनाभावग्रहण**मुभयगत**मन्तरेण तदयोगात्**—तथाविशिष्टस्य ग्रहणायोगात्। अयोगश्च **लोके तथोपलब्धेः**- १० अविनाभावग्रहणमन्तरेण सम्बन्धिनः सम्बन्ध्यन्तरविशिष्टतया ग्रहणोपलब्धेः। अविनाभावग्रहणादेतदेवं भविष्यतीत्याह—**तस्य च**—अविनाभावग्रहणस्य **परपक्षेऽभावात्**। अभावश्च **ज्ञानानां प्रतिनियतार्थत्वात्** क्षणिकत्वेन, यथोक्तम्—

"एकमर्थं विजानाति न विज्ञानद्वयं यथा।
विजानाति न विज्ञानमेकमर्थद्वयं तथा॥"[1] १५

इत्यादि। **तत्तथे**त्यादि। तस्य—हेतुज्ञानस्य तथा—फलज्ञानत्वेन **अभावतः** कारणात्। किमित्याह—**अनुसन्धानायोगात्** 'अत इदम्' इत्यनुसन्धानं **तथाविधविकल्पस्यापि** तत्पृष्ठभाविनोऽ**सिद्धेः**। असिद्धिश्च **तस्यापि**—विकल्पस्यापि **क्षणिकत्वात्** स्वसंविन्निष्ठितत्वेन, [2]ततश्च तथेतरेतरावध्यनुसन्धानत्वेन **तत्तन्निश्चयानुपपत्तेः**, प्रक्रमात् तस्य कस्यचित् तन्निश्चयः—तन्निर्विकल्पकत्वकार्यत्वनिश्चयः २० तत्तन्निश्चयः तस्यानुपपत्तिस्ततः न कार्यहेतोरपि तदवगतिरिति क्रियायोगः। **अत्रापि**—कार्यहेतावपि **बुद्ध्यारूढधर्मधर्मिन्यायतोऽपि अधिकृतव्यवहाराभावः**—

( विवरणम् )

**(१५-१६) एकमर्थं [3]विजानाति न विज्ञानद्वयं यथा।**
**विजानाति न विज्ञानमेकमर्थद्वयं यथा॥**[4] २५

**इति। अयमत्र भावः**—क्षणिकत्वाभ्युपगमे बौद्धस्य न कदाचित् क्वचित् कश्चिदप्यर्थ एकसन्तानवर्तिभ्यां द्वाभ्यां ज्ञानाभ्यां ज्ञातुं शक्यः, क्रमभा[5]वित्वात् उभयोः। तथा द्वौ[6]वर्त्त(र्थ)लक्षणौ क्रमभावितावेकेन ज्ञानक्षणेन न बोद्धुं पार्येते, क्षणिकत्वादेवेति॥

**(२१) तस्य कस्यचिदि**ति। प्रमातुः॥ ३०

१ अनुष्टुप्। २ 'ततश्चेतरे०' इति क–पाठः। ३ 'द्विजानाति' इति ख–पाठः। ४ अनुष्टुप्। ५ 'भावित्वोभयोः' इति क–पाठः। ६ 'द्वावपक्षणौ' इति ख–पाठः, 'द्वावस(?)क्षणौ' इति तु च–पाठः।

( मूलम् )

**हाराभावः, उक्तवन्न्यायतस्तदयोगात् योगेऽप्यभिलषितार्थासि-द्धिरेव, अर्थस्यार्थगमकत्वाभ्युपगमात् तत्तथातायां च निश्चयाभा-**
५ **वात्, तस्य तद्विषयत्वानभ्युपगमात्, पारम्पर्यतस्तत्तद्भावे प्रमाणा-भावात् परनीतितस्तदसिद्धेरिति।** [1]**एतेन धूमादग्न्यनुमानं निषिद्धम्, समानयुक्तित्वादिति । यस्य पुनरन्वयव्यतिरेकवदेकानेकस्वभावं निश्चयात्मकमेव प्रत्यक्षं तस्योक्तदोषाभावः, सर्वत्रानुपचरित-**

---

( स्वो० व्या० )

१० अनुमानानुमेयव्यवहाराभावः । कुत इत्याह–**उक्तवत्**–यथोक्तं तथा **न्यायतः**–न्यायेन **तदयोगात्**–अधिकृतव्यवहारायोगात् । **योगेऽपि** बुद्ध्यारूढधर्मधर्मिन्यायेन अधिकृतव्यवहारस्य **अभिलषितार्थासिद्धिरेव** । कुत इत्याह–**अर्थस्यार्थगमकत्वाभ्युपगमात्** । यदि नामैवं ततः किमित्याह–**तत्तथातायां च** अर्थादर्थगमकतायां च **निश्चयाभावात्** । अभावश्च **तस्य**–अर्थस्य
१५ **तद्विषयत्वानभ्युपगमात्**–विकल्पविषयत्वानभ्युपगमात् **पारम्पर्यतः**–पारम्पर्येण **तत्तद्भावे** तस्य–विकल्पस्य तस्मात्–अर्थाद् भावे । किमित्याह–**प्रमाणाभावात्** । अभावश्च **परनीतितः**–परनीत्या **तदसिद्धेः**–प्रमाणासिद्धेः स्वलक्षणात् स्वलक्षणज्ञानं ततो विकल्प इति, न ह्येवं स्वलक्षणसामान्यलक्षणालम्बनं परनीत्या प्रमाणमस्तीति भावनीयम् । एवमभिलषितार्थासिद्धिरेव **इति** । **एतेनेत्यादि** । एतेन–
२० अनन्तरोदितेन **धूमादग्न्यनुमानं निषिद्धम्** । कुत इत्याह–**समानयुक्तित्वाद्** धूमादग्न्यनुमानस्य । न चायं सर्वस्यैव वादिनो दोष इत्याह–**यस्य पुनरित्यादि** । यस्य पुनर्वादिनः **अन्वयव्यतिरेकवत्** नित्यानित्यमित्यर्थः, अत एव **एकानेकस्वभावं निश्चयात्मकमेव प्रत्यक्षमिदमित्थमिति तस्योक्तदोषाभावः** निर्विकल्पकं

---

( विवरणम् )

२५ (१३) **अर्थस्यार्थगमकत्वाभ्युपगमादिति** । अर्थस्य–धूमादेरग्न्याद्यर्थगमकत्वाभ्युपगमात् ॥

(१८-१९) **न ह्येवं स्वलक्षणसामान्यलक्षणालम्बनं परनीत्या प्रमाणमस्ति इति भावनीयमिति** । स्वलक्षणं–स्वलक्षणज्ञानं ततोऽपि सामान्योल्लेखी विकल्प इति, एवं स्वलक्षणसामान्यगोचरमेकं प्रमाणं क्षणिकत्वेन बौद्धमते नास्तीत्यर्थः ।
३० द्रागदर्शनात्–शीघ्रदर्शनात् प्रथमाक्षसन्निपात[3]भाविनो निर्विकल्पादित्यर्थः ॥

---

१ 'दसिद्धिरिति' इति ग–पाठः । २ 'अनेन' इति ग–पाठः । ३ 'पाततोऽपि सामान्योल्लेखी विकल्प इत्यं(? त्ये)वं स्वलक्षणसामान्यमेकं ने (?) इति ख–च–पाठः ।

( मूलम् )

**निबन्धनभावात्, प्रतीतिसचिवतच्चित्रस्वभावतया तदविरोधादित्यलं प्रसङ्गेन ॥**

**अस्तु वा निर्विकल्पकमपि प्रत्यक्षम्[1], तत्रासाधारणमेव वस्तु प्रतिभासत इत्येतदयुक्तम्, न्यायानुभवविरोधात्। तत्प्रतिभासो हि निश्चयबलेन व्यवस्थाप्यते, अन्यथा तदयोगात्, भावतस्तेनैव तदनधिगतेः तथाऽनुभवाभावात्, एवमपि तत्कल्पनेऽतिप्रसङ्गापत्तेः नियामकाभावादिति। न च द्राग्दर्शनात् तन्निश्चयः, अपि तु** ५

( स्वो० व्या० ) १०

प्रत्यक्षमित्यत्र न प्रमाणं, तेनैव तदनधिगतेः अर्थविषयत्वादित्येवमादय उक्ता दोषा-स्तदभावः[2]। कथमित्याह—**सर्वत्र**—सविकल्पत्वादौ निरूप्ये । किमित्याह—**अनुपचरितनिबन्धनभावात्**[3], तात्त्विकनिबन्धनभावादित्यर्थः । अत एवाह—**प्रतीती**-त्यादि । तस्य—प्रत्यक्षस्य चित्रस्वभावता—स्वविषयग्रहणरूपा विच्छिन्नार्थग्रहणस्व-भावसंवेदनवेदनेन[4] तच्चित्रस्वभावता प्रतीतिसचिवा चासौ तथाप्रतीतेः तच्चित्र-स्वभावता चेति विग्रहः तया **प्रतीतिसचिवतच्चित्रस्वभावतया** कारणेन **तद-विरोधात्**, प्रक्रमादुक्तदूषणविपक्षतः, सविकल्पकत्वादौ तेनैव तदनधिगत्याद्य[5]-विरोधात्। अविरोधश्च पूर्वपक्षग्रन्थानुसारतः प्रतिपक्षोपन्यासेन स्वतन्त्रनीत्या स्वयमेव भावनीय **इत्यलं प्रसङ्गेन** ॥ १५

इहैवोपचयमाह **अस्तु वा** इत्यादिना। अस्तु वा—भवतु वा **निर्विकल्पकमपि प्रत्यक्षं तत्र**—निर्विकल्पके प्रत्यक्षे **असाधारणमेव**—सजातीयेतरविविक्तमेव **वस्तु**—रूपादि घटादि **प्रतिभासत इत्येतदयुक्तम्**[6]—अघटमानकम् । कुत इत्याह—**न्यायानुभवविरोधात्** न्यायप्रधानोऽनुभवो न्यायानुभवस्तेन विरोधात्, अथवा न्यायः—युक्तिः, अनुभवः—प्रत्यक्षं ताभ्यां विरोधात्। एनमेवाह **तत्प्रतिभासो हीत्यादिना**। तत्प्रतिभासो हि प्रत्यक्षाकारो यस्मात् **निश्चयबलेन व्यवस्थाप्यते, अन्यथा**—निश्चयबलमन्तरेण **तदयोगाद्**—व्यवस्थाऽयोगात्। अयोगश्च **भावतः**—परमार्थेन **तेनैव**—निर्विकल्पकप्रत्यक्षेण **तदनधिगतेः**—प्रत्यक्षाकारस्यानधिगतेः। अनधिगतिश्च **तथा**—स्वाकारग्रहणतया **अनुभवाभावात्**। **एवमपि**—अनुभवा-भावेऽपि **तत्कल्पने**—तेनैव तदधिगतिकल्पने**ऽतिप्रसङ्गापत्तेः**, प्रतिभासान्तर- २० २५

१ 'प्रत्यक्षमस्तु तत्र' इति क-पाठः । २ 'उक्तदोषाः तदभावः ।' इति क-पाठः । ३ 'निरु-पचितनिबन्धन०' इति क-ङ-पाठः । ४ 'संवेदनेनावेदनेन' इति क-पाठः । ५ 'तदधिगत्या०' इति ङ-पाठः । ६ 'दयुक्तं—न घटमानकम्' इति क-पाठः ।

( मूलम् )

**सदादिमात्रस्य, अतः प्रथमाक्षसन्निपाते तदेव प्रतिभासत इत्येतद् युक्तम्, सितेतरादिष्वपि क्षिप्रादिदर्शने तावन्मात्रनिश्चयात्। न च ५ तत्र तदग्रहणमेव, तथाऽनुभवविरोधात् । न चान्यथाग्रहणेऽन्यथा-निश्चयोत्पादः, प्रमाणाभावात्। न च सन्नप्ययं न्याय्यः, असम-ञ्जसत्वापत्तेः। न च वैभ्रमिक एवायम्, तद्भावभावित्वोपलब्धेः। अवग्रहादप्ययमयुक्त इति चेत्, सत्यम्, अदोषस्तु तन्मात्रानभ्यु-**

( स्वो० व्या० )

१० कल्पनयेति भावः। इत्थं चैतदङ्गीकर्तव्यमित्याह—**नियामकाभावादिति,** अतः स्थितमेतदयुक्तमिति। **न चे**त्यादि। न च **द्राग्दर्शनात्**—शीघ्रदर्शनात् **तन्निश्चयः,** प्रक्रमादसाधारणवस्तुनिश्चयः, **अपि तु सदादिमात्रस्य** निश्चयः, **अतः**—अस्मात् कारणात् **प्रथमाक्षसन्निपाते**ऽवग्रहणकाले **तदेव** सामान्यं **प्रतिभासत इत्ये-तद् युक्तम्।** उपपत्त्यन्तरमाह—**सितेतरादिष्वपि क्षिप्रादिदर्शने,** 'आदि'-
१५ शब्दान्मन्ददर्शनग्रहः, **तावन्मात्रनिश्चयात्**—सदादिमात्रनिश्चयात्। **न च तत्र**—क्षिप्रादिदर्शने **तदग्रहणमेव**—सदादिमात्राग्रहणमेव। कुत इत्याह—**तथा**—सदादि-मात्रनिश्चयत्वेन **अनुभवविरोधात्। न चान्यथाग्रहणे,** सितेतरादित्वेन ग्रहण इत्यर्थः, **अन्यथा**—सदादिमात्रत्वेन **निश्चयोत्पादः।** कुत इत्याह—**प्रमाणा-भावात्। न च सन्नप्ययम**न्यथाग्रहणेऽन्यथानिश्चयोत्पादः **न्याय्यः।** कुत
२० इत्याह—**असमञ्जसत्वापत्तेः** सितेतरादिव्यवस्थाऽभावेन। **न च वैभ्रमिक एवायम्,** प्रक्रमाद् द्राग्दर्शनेन निश्चयः सदादिमात्रस्य। कुत इत्याह—**तद्भाव-भावित्वोपलब्धेः**—सदादिमात्रभावभावित्वोपलब्धेः। **अवग्रहादपि**—अनिर्देश्य-सदादिमात्रगोचराद**यं**—सदादिनिश्चयः, न शब्दारूषितत्वेन **अयुक्तः। इति चेत्,**

( विवरणम् )

२५ (१३-१४) **सितेतरादिष्वपि क्षिप्रादिदर्शने आदिशब्दान्मन्ददर्शनग्रह** इति। [1]ये हि सितपीतादयो भावा अतिपरिचितास्तेष्वतिशीघ्रदर्शने सत्त्वमात्रं प्रतीयते, मन्ददर्शनेऽपि ध्यामलादिलोचनप्रमातृसत्के सत्त्वमात्रमेव चकास्ति, तथैवानुभूयमानत्वात् ॥

(१६-१७) **सदादिमात्रनिश्चयत्वेनानुभवविरोधादिति।** यदि हि क्षिप्रा-
३० दिदर्शने सत्त्वमात्रप्रतीतिर्न स्यात् तदा पश्चात् सत्त्वमात्रोल्लेखी विकल्पो न स्यात्। अनुभूयते च निश्चयो मया किमपि दृष्टमासीदित्युल्लेखेन, तस्मात् क्षिप्रादिदर्शनेऽपि सत्त्वमात्रमवबुद्ध्यते, प्रथमत इति स्थितम् ॥

१ 'इति युक्तम्' इति ग-पाठः। २ 'यदि' इति ङ-पाठः।

(मूलम्)

**पगमात्। एवमपि दृष्टबाधेति चेत्, न, अन्तरालावायत एव तद्भावात्। कथमेतदवगम्यत इति चेत्, अवग्रहबोधस्याल्पत्वात्। यदि नामैवं ततः किमिति चेत्, नासौ विशिष्टाध्यवसायबीजम्, यस्तु भवति सोऽवान्तरावायरूपः, अवायबहुत्वात्। एवं सद्द्रव्याद्यनेकस्वभावं वस्तुनि तदितरधर्मालोचनेन समानधर्मव्यवच्छेदतः तद्बोधपूर्वकत्वात्, तदितरबोधस्य तथाऽनुभवतस्तत्तथास्वभावत्वा-**

(स्वो० व्या०)

एतदाशङ्क्याह—**सत्यमेवमेतत्, अदोषस्त्वत्र तन्मात्रात्**—अवग्रहमात्रादनिर्देश्य- १० सदादिमात्रगोचरात् **अनभ्युपगमात्** सदादिमात्रनिश्चयस्य। **एवमपि दृष्टबाधेति चेत्** तदनन्तरमेव भावादधिकृतनिश्चयस्येत्यभिप्रायः। एतदाशङ्क्याह—**न, अन्तरालावायत एव** ज्ञेयत्वाद्यपेक्षया सदसदीहोत्तरकालभाविनः सकाशात् **तद्भावात्**—सदादिमात्रनिश्चयभावात्, शब्दारूषितबोधानन्तरभावी एवायं निश्चय इत्यर्थः। **कथमेतत्**—अनन्तरोदितमवगम्यते? **इति चेत्**, एतदाशङ्क्याह—**अवग्रहबोधस्य,** प्रक्रमान्नैश्चयिकावग्रहसम्बन्धिनः। किमित्याह—**अल्पत्वाद्**नवबोध- १५ व्यावृत्तिमात्ररूपत्वेन। **यदि नामैवं ततः किम्?। इति चेत्**, एतदाशङ्क्याह—**नासौ**—अल्पबोधरूपः सन् **विशिष्टाध्यवसायबीजम्**, न ह्यणुमात्राद् द्व्यणुकादिभावः, **यस्तु भवति** विशिष्टाध्यवसायबीजं **सोऽवान्तरावायरूपः**—शब्दारूषितबोधस्वलक्षणः। कुत एतदेवमित्याह—**अवायबहुत्वात्** कालक्षयोपशमादि- २० भेदेन, अतः प्रथमाक्षसन्निपाते तदेव प्रतिभासत इति युक्तमिति स्थितम्। **एवम्**—उक्तनीत्या सद्द्रव्याद्यनेकस्वभावे वस्तुनि इन्द्रियद्वारेणैव तथाऽर्थविशेषप्रतिपत्तिरिति योगः। कथमित्याह—**सद्द्रव्याद्यनेकस्वभावं वस्तु** प्रायशो निदर्शितमेव, तथा निदर्शयिष्यामः, ततश्च सद्द्रव्याद्यनेकस्वभावे वस्तुनि सति। किमित्याह—**तदितरधर्मालोचनेन** तेऽन्वयिनः, इतरे व्यतिरेकिणः, ते च इतरे च तदितरे, २५ तदितरे च ते धर्माश्च तेषामालोचनं—स्वरूपनिरीक्षणमिति विग्रहः, तेन **समानधर्मव्यवच्छेदतः**—ज्ञेयत्वादिव्यवच्छेदेन। व्यवच्छेदश्च **तद्बोधपूर्वकत्वात्**—समानधर्मबोधपूर्वकत्वात्। **तदितरबोधस्य**—सत्त्वादिविशेषधर्मबोधस्य। एतच्चास्य **तथाऽनुभवतः**—इत्थं क्रमानुभवेन **तथास्वभावत्वावगमाद्** वस्तुनः। इत्थं

१ 'स्वभावे वस्तुनि तदितर०' इति क-पाठः। २ 'एव गेयत्वाद्य०' इति घ-पाठः। ३ 'मात्राद्यणुका०' इति क-पाठः। ४ 'बोधलक्षणः' इति ङ-पाठः। ५ 'एतदित्याह' इति क-पाठः। ६ 'गेयत्वादि०' इति घ-पाठः। ७ 'सत्त्वादिधर्मबोधस्य' इति क-पाठः।

( मूलम् )

**वगमात्, प्रथममेव विशेषाग्रहणात् इन्द्रियद्वारेणैव तथाऽर्थविशेष-प्रतिपत्तिः, सकललोकसिद्धत्वात्, अन्यथा तदनुपपत्तेः द्राग्-दर्शने क्वचिदभावात्, शीघ्रावगमस्यापि दीर्घत्वात् कालसौक्ष्म्या-दिति । वस्तुनोऽनेकस्वभाव[1]त्वात् सर्वेषां सदा भावात्, अन्यथा तदनुपपत्तेः चित्रास्तरणवदेकदैव किं नार्थविशेषप्रतिपत्ति[2]र्येनैतदेव-मिति ग्रहीतुः क्षयोपशमाभावादित्युक्तप्रायम् ॥**

**एवमीहादेः कथञ्चिदनधिगतार्थाधिगन्तृत्वात्, एकाधिकरण-**

( स्वो० व्या० )

चैतदङ्गीकर्तव्यमित्याह—**प्रथममेव**—आदावेव **विशेषाग्रहणात्** सर्वत्र । किमि-त्याह—**इन्द्रियद्वारेणैव तथा**—समानधर्मग्रहणपुरस्सरा **अर्थविशेषप्रतिपत्तिः**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**सकललोकसिद्धत्वात्** कारणात्, **अन्यथा**—उक्त-प्रकारव्यतिरेकेण **तदनुपपत्तेः**—अर्थविशेषप्रतिपत्त्यनुपपत्तेः । अनुपपत्तिश्च **द्राग्-दर्शने क्वचित्**—विद्युत्सम्पातादौ **अभावादर्थ**विशेषप्रतिपत्तेः । अन्यत्र भविष्यती-त्यारेकानिरासायाह—**शीघ्रावगमस्यापि** लोकदृष्ट्या, **दीर्घत्वात्** तत्त्वदर्शनेन[3], दीर्घत्वं च[4] **कालसौक्ष्म्यादितीन्द्रियद्वारेणैव** तथाऽर्थविशेषप्रतिपत्तिरिति[5] क्रिया । आह—**वस्तुनोऽनेकस्वभावत्वाद्** भवन्नीत्या **सर्वेषां**—स्वभावानां **सदा भावात्** त्वन्नीत्यैव, **अन्यथा** तस्य वस्तुनः **तदनुपपत्तेः**—अनेकस्वभावत्वानुपपत्तेः । किमित्याह—**चित्रास्तरणवदिति** निदर्शनम्, **एकदैव**—एकस्मिन्नेव काले **किं नार्थविशेषप्रतिपत्तिः** सन्निधानाविशेषेऽपीति गर्भः, **येनैतत्**—अनन्तरोदितं **एवं** तदितरधर्मालोचनादित्वेन **इति** । एतदाशङ्क्याह—**ग्रहीतुः क्षयोपशमा-भावादेतदेवमित्युक्तप्रायं**—प्रायेणोक्तं प्राक् ॥

**एवमित्यादि** । **एवम्**—उक्तनीत्या **ईहादेः**—मतिविशेषजातस्य, न्यायत एव व्यवस्थितं प्रामाण्यमिति योगः । हेतूनाह—**कथञ्चिदनधिगतार्थाधिगन्तृत्वात्** अवग्रहबोधापेक्षया, तथा **एकाधिकरणत्वात्** तद्वस्तुतत्त्वापेक्षया, तथा **बोध-**

( विवरणम् )

(१६) शीघ्रावगमस्यापि लोकदृष्ट्येति । लोकव्यवहारेण हि चक्षुर्निमीलना-नन्तरं घट इत्यादि यज्ज्ञानमुत्पद्यते, तच्छीघ्रावगम इत्युच्यते । निश्चयतस्तु तत्रापि प्रथमं सत्त्वमात्रमेवावच्छिद्यत इत्यर्थः ॥

१ 'त्वात् प्रथममेव विशेषाग्रहणात् सर्वेषां' इति क-पाठः । २ 'र्येन तदेव०' इति ग-घ-पाठः । ३ 'तदस्त्वदर्शनेन' इति क-पाठः । ४ 'च' इति पाठो नास्ति ङ-प्रतौ । ५ 'तदर्थ-विशेष०' इति ङ-पाठः ।

( मूलम् )

त्वात्, बोधवृद्ध्युपपत्तेः, आलोचिताधिगमात्, तत्स्थैर्यसिद्धेः, तथाऽनुभवभावात्, प्रतिक्षेपायोगात्, बाधकानुपपत्तेः न्यायत एव व्यवस्थितं प्रामाण्यम् ॥ ५

[1]तथा सद्द्रव्याद्यनेकस्वभावता च वस्तुनस्तथाऽनुभवसिद्धत्वादिति । किं हि सत्त्वादन्यद् द्रव्यत्वादीति चेत्, प्रतीतमेतद् यत् तस्मिन् गृहीतेऽपि कथञ्चिन्न गृह्यत इति । नैवंविधं किञ्चिदवगच्छाम इति चेत्, किं न भवति भवतः क्वचिद् घटादौ सन्मात्रग्रहेऽन्याग्रहः ? । किं तद् यद् भूयो गृह्यते इति चेत्, ननु बालादिसिद्धं तदनुविद्ध- १० मेव विशिष्टं मृद्रूपादि । न तत् तत्सत्त्वतोऽन्यदेवेति चेत्, सत्यमेतत्, किन्तु तन्मात्र[2]मपि न भवतीति तथाऽप्रतीतेः निश्चयानुभवेन

---

( स्वो० व्या० )

वृद्ध्युपपत्तेः अर्थानुभवभावेन, [3]तथाऽऽलोचिताधिगमाद् दृष्टपरिच्छेदेन, तथा तत्स्थैर्यसिद्धेः बोधावस्थानेन, तथाऽनुभवभावादविच्युतिरूपधारणया, १५ तथा प्रतिक्षेपायोगादधिकृतानुभवस्य [4]अयोगश्च बाधकानुपपत्तेः कथञ्चिद् ग्रहणमपि यथायोगं योजनीयम् । एवं न्यायत एव व्यवस्थितं प्रामाण्यम्, ईहादेरिति प्रक्रमः ॥

तथा सद्द्रव्याद्यनेकस्वभावता च वस्तुनो न्यायत एव व्यवस्थिता । कथमित्याह—तथाऽनुभवसिद्धत्वात्—अवग्रहादिप्रकारेणानुभवसिद्धत्वादिति । २० किं हि सत्त्वादन्यत्—अर्थान्तरभूतं द्रव्यत्वादि । इति चेत्, एतदाशङ्क्याह—प्रतीतमेतद् यत् तस्मिन्—सत्त्वे गृहीतेऽपि सति कथञ्चिन्न गृह्यत इति नैवंविधं किञ्चिद् यत् तस्मिन् गृहीतेऽपि कथञ्चिन्न गृह्यत इति तदवगच्छामः । इति चेत्, एतदाशङ्क्याह—किं न भवति भवतः क्वचिद् घटादौ वस्तुनि सन्मात्रग्रहे सति अन्याग्रहः—वस्त्वन्तराग्रहः ? किं तत्—वस्तु यद् भूयः— २५ पुनः सन्मात्रग्रहोत्तरकालं गृह्यते ? । इति चेत्, एतदाशङ्क्याह—नन्वित्यक्षमायां बालादिसिद्धं तदनुविद्धमेव—सन्मात्रानुविद्धमेव विशिष्टं मृद्रूपादि । न तत्—मृद्रूपादि तत्सत्त्वतः—सन्मात्रसत्त्वादन्यदेव । इति चेत्, एतदाशङ्क्याह—सत्यमेतत्—अन्यदेव न, किन्तु तन्मात्रमपि—सन्मात्रमपि न भवति । कुत इत्याह—तथा—सन्मात्रत्वेन अप्रतीतेः । अप्रतीतिश्च निश्चयानुभवेन अव- ३०

---

१ 'तथा' इति पाठो ग-प्रतौ न विद्यते । २ 'मेव न' इति क-पाठः । ३ 'तथा तथाऽऽलोचिता०' इति क-पाठः । ४ 'अयोगस्त्वबाधका०' इति क-पाठः ।

(मूलम्)

**अविगानत एवैकत्र सन्मृद्रूपाकारवेदनात्, सन्मात्रादेवैतदनुपपत्तेरतिप्रसङ्गात्, रूपमात्राद् रूपरसादिनिश्चयापत्तेः। न च ५ सत्त्वाकारयोरप्यभेद एव, अनेकदोषप्रसङ्गात्। तथाहि—घटसत्त्वं तावदेकं तस्य मृद्रूपाद्यात्मकत्वे एकत्वहानिः तदनभ्युपगमे प्रतीतिबाधा। तथैकत्वेऽपि कस्यासावाकार इति वाच्यम्। न रूपसत्त्वस्य, त्वगिन्द्रियेणापि ग्रहणात्, तस्य च रूपाविषयत्वात् तथाऽप्रतीतेः,**

(स्वो० व्या०)

१० ग्रहोत्तरकालं **अविगानतः**—अविगानेनैव **एकत्र** वस्तुनि। किमित्याह—**सन्मृद्रूपाकारवेदनात्।** यदि नामैवं ततः किमित्याह—**सन्मात्रादेव** एकस्वभावात् **एतदनुपपत्तेः**—सन्मृद्रूपाकारवेदनानुपपत्तेः। अनुपपत्तिश्चातिप्रसङ्गात्। अतिप्रसङ्गश्च **रूपमात्रात्** सकाशाद् **रूपरसादिनिश्चयापत्तेः,** सन्मात्रादिव विजातीयनिश्चयन्यायेन ॥

१५ इहैव दोषान्तरमधिकृत्याह—**न चे**त्यादि। न च **सत्त्वाकारयोरपी**हाधिकृतयो**रभेद एव**—एकान्तेन। कुत इत्याह—**अनेकदोषप्रसङ्गात्।** एनमेवाह **तथाही**त्यादिना। तथाहि—"**घटसत्त्वं तावदेकं** निरंशं स्वलक्षणम्" इत्यविचारितरमणीयेन भवदभ्युपगमेन **तस्य मृद्रूपाद्यात्मकत्वे** सकललोकानुभवसिद्धेऽभ्युपगम्यमाने **एकत्वहानिः** मृदादिशाबल्येन, **तदनभ्युपगमे**—मृद्रूपाद्यात्मकत्वानभ्यु-
२० पगमे **प्रतीतिबाधा**—मृद्रूपादिप्रतीतेः। **तथैकत्वेऽपि,** सत्त्वाकारयोरिति प्रक्रमः, **कस्यासावाकारो** रूपादिसत्त्वापेक्षया **इति वाच्यम्।** किञ्चातः? सर्वथाऽपि दोष इत्याह—**न रूपसत्त्वस्य** असावाकारः। कुत इत्याह—**त्वगिन्द्रियेणापि ग्रहणात्** कारणात्। यद्येवं ततः किमित्याह—**तस्य च**—त्वगिन्द्रियस्य **रूपाविषयत्वात्।** अविषयत्वं च **तथा**—त्वगिन्द्रियस्य रूपविषयत्वेन **अप्रतीतेः** तत्-

२५ (विवरणम्)

(१०-११) **सन्मृद्रूपाकारवेदनादि**ति। सत्त्वं—सत्त्वमात्रं मृद्रूपाकारश्च विशेषरूपस्तयोर्वेदनात् ॥

(२०) **सत्त्वाकारयोरितीति**। सत्त्वं चाकारश्च—मृद्रूपादिरूपस्तयोः ॥

(२१) **रूपादिसत्त्वापेक्षयेति**। किं रूपसत्त्वस्य स्पर्शसत्त्वस्योभयसत्त्वस्य वा
३० सम्बन्धी घटलक्षण आकार इत्यर्थः ॥

१ 'बाधात् तथैक०' इति ग-पाठः। २ 'तस्य तु रूपा०' इति क-पाठः।

( मूलम् )

**तत्सत्त्वस्य च तत्त्वात् न स्पर्शसत्त्वस्य, चक्षुषाऽप्युपलब्धेः स्पर्शात् तत्सत्त्वभेदप्रसङ्गात् रूपेऽप्यनुगमोपपत्तेः, अन्यथाऽनुभवविरोधात्। न चोभयसत्त्वस्य, तदेकत्वायोगात् इन्द्रियसङ्करप्रसङ्गात्, लोकविरोधापत्तेरसमञ्जसत्वादिति। न च तयोराकारयोर्भेद एव, तथाप्रतीत्यभावात् तत्त्वत उभयायोगात् तत्सत्त्वैकत्वक्षतेस्तथा चाभ्युपगमविरोधादिति ॥**

**न चैतेभ्योऽन्य एव घटः, अग्रहणप्रसङ्गात् अरूपाद्यात्मकत्वात्,**

( स्वो० व्या० )

**सत्त्वस्य च**—रूपसत्त्वस्य च **तत्त्वात्**—रूपत्वात्। एवं **न स्पर्शसत्त्वस्य** असावाकार इति गम्यते। कुत इत्याह—**चक्षुषाऽप्युपलब्धेः** कारणात्। ततः किमित्याह—**स्पर्शात्** सकाशात् **तत्सत्त्वभेदप्रसङ्गात्**—स्पर्शसत्त्वभेदप्रसङ्गात्। प्रसङ्गश्च **रूपेऽप्यनुगमोपपत्तेः**। इत्थं चैतदित्याह—**अन्यथा**—एवमनभ्युपगमे **अनुभवविरोधात्**। चक्षुषा तदुपलब्धिरित्यनुभवः। **न चोभयसत्त्वस्य**—रूप-स्पर्शसत्त्वस्य, असावाकार इति प्रक्रमः। कुत इत्याह—**तदेकत्वायोगात्** तस्य—आकारस्यैकत्वायोगात्, उभयाव्यतिरेकेण योगेऽपि **इन्द्रियसङ्करप्रसङ्गाद्** विषयसाङ्कर्येण, सङ्करे च **लोकविरोधापत्तेः** एवम**समञ्जसत्वादिति**। **न चे**त्यादि। **न च तयोराकारयोः**—चक्षुस्त्वग्ग्राह्ययो**र्भेद एव**—एकान्तेन। कुत इत्याह—**तथा**—भेदगर्भतया **प्रतीत्यभावात्** स्पर्शनादपि 'सोऽयं यो दृष्टः' इत्यवगमात्। तथा **तत्त्वत उभयायोगात्** [1]त्वदभ्युपगमेन। तथा चाह—**तत्सत्त्वैकत्वक्षतेः**, घटसत्त्वैकत्वक्षतेरित्यर्थः। **तथा** [2]**च**—एवं च **अभ्युपगमविरोधाद्** वस्तुनोऽनेकस्वभावत्वापत्त्या 'न च तयोराकारयोर्भेद एव' **इति** स्थितम्। एवं बौद्धमतवक्तव्यताममधिकृत्यैतदुक्तम् ॥

अधुना वैशेषिकमतमुररीकृत्याह—**न चैतेभ्य** इत्यादि। न चैतेभ्यः—सन्मृद्रूपाकारेभ्यः **अन्य एव घट** एकान्तेन। कुत इत्याह—**अग्रहणप्रसङ्गाद्** घटस्य।

( विवरणम् )

(१४) **रूपेऽप्यनुगमोपपत्तेरिति**। यदि हि स दृश्यमान आकारः स्पर्शसम्बन्धितयाऽभ्युपगतश्चक्षुरिन्द्रियग्राह्यः स्यात्, तदा तस्य रूपेऽपि अनुगमस्य तद्रूपतापत्तिः—लक्षणस्योपपत्तिः—घटना स्यात्। ततः स्पर्शात् सकाशात् सत्त्वस्य भेदः स्यात्, रूपस्वभावत्वात् स्पर्शसत्त्वस्येत्यर्थः। न चैतद् दृष्टमिष्टं वा ॥

१ 'तदभ्युप०' इति घ–पाठः। २ 'चैवमेवाभ्युप०' इति क–पाठः।

( मूलम् )

**तत्तद्वृत्तावपि तत्तद्रूपताऽनापत्तेः, इत्थमपि तद्ग्रहणे इन्द्रियाणां स्वधर्मातिक्रमात्। कथमतिक्रम इति चेत्, चक्षुरादेररूपादिग्रह-**
५ **णात्। एवमपि को दोष इति चेत्, ननु रसादिग्रहणापत्तिः, प्रतीति-**

( स्वो० व्या० )

प्रसङ्गश्च **अरूपाद्यात्मकत्वात्**। एतच्च सन्मृद्रूपाकारेभ्योऽन्यत्वाभ्युपगमेन; उपन्यासश्चैवम्–चक्षुर्ग्रहणानुगुण्येन। **तत्तद्वृत्तावपीत्यादि**। तेषां–सन्मृद्रूपाकाराणां तस्मिन्–घटे वृत्तावपि सामान्य-द्रव्य-गुणानां यथासम्भवं तद्वृत्त्यभ्युपगमेन द्रव्यवृत्तौ
१० कारणद्रव्येषु स एव वर्तते इति कृत्वा। किमित्याह–**तत्तद्रूपताऽनापत्तेः** तस्य–घटस्य तद्रूपताऽनापत्तेः–सन्मृद्रूपाकाररूपताऽनुपपत्तेः। **इत्थमपीत्यादि**। इत्थमपि–एवमपि तत्तद्रूपताऽनापत्तावपि **तद्ग्रहणे**–घटग्रहणेऽभ्युपगम्यमाने। किमित्याह–**इन्द्रियाणां स्वधर्मातिक्रमः**–स्वमर्यादापरित्यागः। **कथमतिक्रमः?। इति चेत्**, एतदाशङ्क्याह–**चक्षुरादेः** 'आदि'शब्दात् त्वगिन्द्रियग्रहः, **अरूपादिग्रहणात्**,
१५ घटादिग्रहणादित्यर्थः। **एवमपि को दोष इति चेत्**, द्विविधं हि द्रव्यं दार्शनं स्पार्शनं च, रूपादिप्रतीतेस्तद्गामित्वेन तदवसानत्वादित्यभिप्रायः। एतदाशङ्क्याह–

( विवरणम् )

**(७-८) उपन्यासश्चैवम्–चक्षुर्ग्रहणानुगुण्येनेति**। अरूपाद्यात्मकत्वादित्यत्र अस्पर्शाद्यात्मकत्वादित्याद्युपन्यासं परिहृत्य यदित्थमुपन्यासं करोति, तच्चक्षुर्ग्रहणानु-
२० गुण्येनेत्यर्थः॥

**( ९ ) सामान्य-द्रव्य-गुणानां यथासम्भवं तद्वृत्त्यभ्युपगमेनेति**। सत्त्वं सामान्यं, घटरूपा मृद् द्रव्यम्, रूपाकारस्तु गुणः। तत एतेषां त्रयाणां यथासम्भवं–यथायोगं तस्मिन्–घटे वृत्तेः–वर्तनस्याभ्युपगमेन–अभ्युपगमाद् वैशेषिकेण यथासम्भवमिति। अस्यायमभिप्रायः–यदा घटे सत्ता-गुणयोर्वृत्तिश्चिन्त्यते, तदा सत्ता-गुणौ
२५ तत्र वर्तेते; यदा तु द्रव्यस्य वृत्तिस्तत्र चिन्त्यते, तदा घटलक्षणमवयविद्रव्यं स्वारम्भकेषु अवयवेषु वर्तते। अत एवाह–**(९-१०) द्रव्यवृत्तौ कारणद्रव्येषु स एव वर्तत इति कृत्वेति**। द्रव्यस्य वृत्तौ चिन्त्यमानायां कारणद्रव्येषु–परमाणुलक्षणेषु स एव–घट एव वर्तत इति कृत्वा यथासम्भवं तद्वृत्त्यभ्युपगमः॥

**(१५-१६) दार्शनं स्पार्शनं चेति**। दर्शनाभ्यां–लोचनाभ्यां गृह्यते यत् तद् दार्शनं,
३० स्पर्शनेन गृह्यत इति स्पार्शनम्। उपलक्षणत्वादितरेन्द्रियग्राह्यमपि। ततः किमित्याह–**(१६) रूपादिप्रतीतेस्तद्गामित्वेन तदवसानत्वादिति**। रूपादिप्रतीतेः–रूपरसाद्यवबोधलक्षणायास्तद्गामित्वेन–घटगामित्वेन, घटप्रतिबद्धत्वेनेत्यर्थः। तदवसानत्वात्–

( मूलम् )

**बाधितेयमिति चेत्, तदतिरिक्ततद्ग्रहे का प्रतीतिः ? । न तेभ्य एकत्वबुद्धिरिति चेत्, ततः किमिति वाच्यम् । अस्ति चेयमिति चेत्, न खल्वस्यां विगानम्, य एतन्निमित्तः स स तेभ्योऽन्य इति चेत्, ५ सङ्ख्यायास्तद्भावप्रसङ्गः । न सा तदनाश्रितेति चेत्, एवमपि तत्त्वतोऽन्यैव । यदि नामैवं ततः किमिति चेत्, तन्निमित्तैकबुद्धिः । सा तद्विशेषणभूतेति चेत्, कथमेतद् विनिश्चीयत इति ? । एकोऽयमिति व्यवसायादिति चेत्, नासौ सदादिभिन्नप्रतिभासीति, तथाऽननु-**

( स्वो० व्या० ) १०

**ननु रसादिग्रहणापत्तिः** रसादेरपि घटवद्रूपादित्वात्, सर्वेन्द्रियं चैवं द्रव्यं प्राप्नोति, रसादिप्रतीतेरपि तद्गामित्वेन तदवसानत्वादिति भावनीयम् । **प्रतीतिबाधितेयं**–रसादिग्रहणापत्तिः । **इति चेत्**, एतदाशङ्क्याह–**तदतिरिक्ततद्ग्रहे**, अक्रमाद् रूपादिव्यतिरिक्तघटग्रहे **का प्रतीतिः ?** ननु किमनया ? **न तेभ्यः**–रूपादिभ्यः **एकत्वबुद्धिः**, अनेकत्वादमीषाम् । **इति चेत्**, एतदाशङ्क्याह– १५ **ततः किमिति वाच्यम्** । किमपि अत्र **अस्ति च इयम्**-एकत्वबुद्धिः । **इति चेत्**, एतदाशङ्क्याह–**न खलु अस्याम्**–एकत्वबुद्धौ **विगानं यः** कश्चिदेत**न्निमित्तम्**, एतस्याः–एकत्वबुद्धेरालम्बनं **स स** इति स घटः **तेभ्यः**–रूपादिभ्योऽ**न्यः** । **इति चेत्**, एतदाशङ्क्याह–**सङ्ख्यायाः**–एकसङ्ख्याया एकत्वबुद्धिनिमित्तत्वेन **तद्भावप्रसङ्गः**–घटभावप्रसङ्गः । **न सा**–सङ्ख्या **तदनाश्रिता**–घटानाश्रिता । **इति** २० **चेत्**, एतदाशङ्क्याह–**एवमपि**–तदाश्रितत्वेऽपि **तत्त्वतः**–परमार्थेन **अन्यैव** सन्मृद्रूपाकारेभ्य इति । **यदि नामैवं ततः किम् ?** । **इति चेत्**, एतदाशङ्क्याह–**तन्निमित्ता**–सदादिभिन्नसङ्ख्यानिमित्ता **एकत्वबुद्धिः** । **सा**–सङ्ख्या **तद्विशेषणभूता**–प्रस्तुतैकावयविविशेषणभूता । **इति चेत्**, एतदाशङ्क्याह–**कथमेतद् विनिश्चीयते** यदुत सा तद्विशेषणभूतेति ? । **एकोऽयमिति व्यवसायादिति** २५ **चेद्** विनिश्चीयत इति । एतदाशङ्क्याह–**नासौ**–व्यवसायः **सदादिभिन्नप्रतिभासीति** । कुत इत्याह–**तथा**–सदादिभिन्नप्रतिभासित्वेन **अननुभवात्** ।

( विवरणम् )

घटग्रहणावसानत्वात् । अयमभिप्रायः–रूपं चक्षुषा गृह्यते स्पर्शश्च स्पर्शनेन । एतौ च द्वावपि घटप्रतिबद्धौ । अतस्तयोर्ज्ञानमानयोर्घटो ज्ञायते एव, घटज्ञानावसानत्वाद् ३० रूपादिबोधस्य ॥

१ 'अस्ति इयमिति' इति घ–पाठः । २ 'सार्वेन्द्रियं' इति घ–पाठः ।

(मूलम्)

**भवात्; एवमपि तत्कल्पनेऽतिप्रसङ्गात् तदन्तरापत्तेर्निराकरणायोगात् अननुभवाविशेषादिति तदेकत्वपरिणामनिबन्धन एवायम्।**
५ **तेषामेवैकानेकात्मकत्वाद् भेदाभेदभावात् तथास्वभावत्वात् विरोधानुपपत्तेः, प्रतीतिसिद्धत्वात् बाधाभावादिति। सद्द्रव्याद्यनेकस्वभावे वस्तुनि वस्तुमात्रग्राह्येवावग्रहकल्पमविकल्पकमङ्गीकर्तव्यम्[1], अन्यथोक्तदोषानतिवृत्तिः। एवम्भूते चास्मिन्नावयोरविवाद एव, एवंविधावग्रहस्यास्माभिरप्यभ्युपगतत्वात्। न चात्र कश्चिद् दोषः,**
१० **अपि तु शुक्तिकादावपि क्वचिद् रजतादिनिश्चयस्य न्यायत एवापत्त्या गुणः, तस्य ह्यवग्रहोत्तरकालमीहाप्रवृत्तस्य तथाविधसमान-**

---

(स्वो० व्या०)

**एवमपि**—तथाऽननुभवेऽपि **तत्कल्पने**—सदादिभिन्नावयविकल्पने**ऽतिप्रसङ्गात्।** अतिप्रसङ्गश्च **तदन्तरापत्तेः**—तत्रैवावयव्यन्तरापत्तेः। आपत्तिश्च **निराकरणा-**
१५ **योगात्** तदन्तरस्य। अयोगश्च **अननुभवाविशेषाद्** द्वयोरपीति, **इति**—एवं **तदेकत्वपरिणामनिबन्धन एवायम्**, प्रक्रमात् सन्मृद्द्रव्याकारैकत्वपरिणामनिबन्धन एवायम्, एकोऽयमिति व्यवसायः। **तेषामेव**—सदादीनामे**कानेकात्मकत्वात्**। एतच्च **भेदाभेदभावात्**। अयं च **तथास्वभावत्वात्**। तथास्वभावत्वे च **विरोधानुपपत्तेः**। अनुपपत्तिश्च **प्रतीतिसिद्धत्वात्**। नहि
२० प्रतीतिरेव सिद्धौ निमित्तमित्याशङ्काऽपोहायाह—**बाधाभावादिति** 'तदेकत्वपरिणामनिबन्धन एवायं' इत्येवं **सद्द्रव्याद्यनेकस्वभावे वस्तुनि**। किमित्याह—**वस्तुमात्रग्राह्येव अवग्रहकल्पमविकल्पकमङ्गीकर्तव्यम्**। किमित्याह—**अन्यथोक्तदोषानतिवृत्तिः**, उक्तदोषाः [2]"न्यायानुभवविरोधात्' इत्येवमादयस्तदनिवृत्तिः। **एवम्भूते चास्मिन्**—अविकल्पके किमित्याह—**आवयोः**—तव मम च
२५ **अविवाद एव**। कुत इत्याह—**एवंविधावग्रहस्य** अविकल्पकस्य **अस्माभिरभ्युपगतत्वात्**। **न चात्र**—अभ्युपगमे **कश्चिद् दोषः, अपि तु शुक्तिकादावपि** 'आदि'शब्दान्मरीचिकाग्रहः, **क्वचिद् रजतादिनिश्चयस्य** 'आदि'शब्दात् जलनिश्चयग्रहः **न्यायत एवापत्त्या गुणः**। न्यायत एवापत्तिमाह **तस्येत्यादिना**। **तस्य हि**—शुक्तिकादौ रजतादिनिश्चयस्य **अवग्रहोत्तरकालमीहाप्रवृत्तस्य**
३० सतः। कस्येत्याह—**तथाविधसमानधर्मोपलब्धुरेव**—शुक्तिकादि-रजतादिसमान-

---

१ 'कर्तव्यमित्यन्यथोक्त' इति ग-पाठः। २ प्रेक्ष्यतां २३५ तमं पृष्ठम्।

( मूलम् )

**धर्मोपलब्धुरेवासत्क्षयोपशमभावतो भावात्, अन्यथोक्तवत् तद-योगादिति ॥**

**यच्चोच्यते–"गृहीतग्राहित्वाद् विकल्पोऽप्रमाणम्" इत्येतदप्ययु-क्तम्, स्वमतविरोधात्, निर्विकल्पकज्ञानेन स्वलक्षणस्य गृहीतत्वाद् विकल्पस्य तद्ग्राहितत्वानुपपत्तेः तत्प्रतिभासशून्यत्वात्। एवमपि तत्तथाताऽभ्युपगमेऽतिप्रसङ्गात्, नीलविकल्पस्य पीतग्राहित्वापत्तेः पारम्पर्येण तत्तज्जनकत्वाविशेषात् उपलब्धपीत-नीलद्रष्टुरपि तद्-भावादिति ॥** ५ १०

**न च गृहीतग्राहि ज्ञानमप्रमाणमेव, एकत्र नीलादावनेकप्रमातृ-ज्ञानानां प्रमाणत्वाभ्युपगमात् तेषां चान्योन्यं गृहीतग्राहित्वात्, अन्यथा तद्ग्रहणानुपपत्तेः, तथाऽगृहीतग्राहिज्ञानासम्भवात् सर्व-**

---

( स्वो० व्या० )

धर्मोपलब्धुरेव प्रमातुर्नान्यस्य **असत्क्षयोपशमभावतः**–असत्क्षयोपशमभावेन **भावात्, अन्यथा**–एवमनभ्युपगमे **उक्तवत्**–यथोक्तम्[2]–'शुक्तिकाया अप्यक्ष-ज्ञानेन नीलादिवत् तत्त्वेनैव ग्रहणात्' इत्यादि, तथा**ऽयोगादिति** ॥ १५

**यच्चोच्यते** परैः–**"गृहीतग्राहित्वाद् विकल्पोऽप्रमाणम्" इत्येतद-प्ययुक्तम्** । कथमित्याह–**स्वमतविरोधात्**। विरोधश्च **निर्विकल्पकज्ञानेन स्वलक्षणस्य गृहीतत्वाद् विकल्पस्य तद्ग्राहित्वानुपपत्तेः**–स्वलक्षणग्राहि-त्वानुपपत्तेः । अनुपपत्तिश्च **तत्प्रतिभासशून्यत्वात्**, स्वलक्षणाकारशून्यत्वादि-त्यर्थः । **एवमपि**–तत्प्रतिभासशून्यत्वेऽपि सति **तत्तथाताऽभ्युपगमे**–विकल्पस्य तद्ग्राहित्वाभ्युपगमे **अतिप्रसङ्गात्** । अतिप्रसङ्गश्च **नीलविकल्पस्य पीत-ग्राहित्वापत्तेः** । नासौ पारम्पर्येणापि तज्जन्य इत्याशङ्काऽपोहायाह–**पारम्पर्येण तत्तज्जनकत्वाविशेषात्** तस्य–पीतस्य नीलविकल्पजनकत्वाविशेषात् । एतद्भाव-नायैवाह–**उपलब्धपीत-नीलद्रष्टुरपि**–प्रमातुः **तद्भावात्**–नीलविकल्पभावात् तदप्ययुक्त**मिति** स्थितम् ॥ २० २५

दूषणान्तरमाह **न चे**त्यादिना । न च **गृहीतग्राहि ज्ञानमप्रमाणमेव**–एकान्तेन भवतः । कुत इत्याह–**एकत्र नीलादावनेकप्रमातृज्ञानानां प्रमाण-त्वाभ्युपगमात्** परेणापि **तेषां च**–अधिकृतज्ञानानां **अन्योन्यं**–परस्परं **गृहीत-ग्राहित्वात्** । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा तद्ग्रहणानुपपत्तेः**–अधि-कृतनीलादिग्रहणानुपपत्तेः । **तथे**त्यादि । तथा**ऽगृहीतग्राहिज्ञानासम्भवात्** । ३०

---

१ 'लब्धेरेवा०' इति क–पाठः । २ २१०तमे पृष्ठे ।

( मूलम् )

**वस्तूनां सर्वबुद्धैः सदा ग्रहणात्, तेषां सर्वज्ञत्वात्, अन्यथा तत्-तत्त्वायोगात्, एकसन्तानापेक्षया च गृहीतग्राहिज्ञानासम्भव एव, ५ सर्वेषां सर्वदाऽगृहीतग्रहणादिति ॥**

**स्यादेतन्न तत्त्वतो गृहीतग्राहित्वेनास्याप्रामाण्यम्, अपि त्वविषयत्वेनेति। कथमयमविषय इति वाच्यम्। यदनेन वेद्यते न तदस्तीति चेत्, क्व तन्नास्तीति ?। किं तत्रैवोच्यते उताहो बहिरिति ?। यदि तत्रैव कथं वेद्यते, वेद्यमानं वा कथं न तत्रेति चिन्त्यम्। अथ १० बहिः, अविकल्पकेऽपि समानः प्रसङ्गः, तेनापि वेद्यमानस्य बहिर-**

(स्वो० व्या०)

असम्भवश्च **सर्ववस्तुनां**–नीलादीनां **सर्वबुद्धैः सदा ग्रहणात्**। ग्रहणं च **तेषां**–बुद्धानां **सर्वज्ञत्वादिति, अन्यथा तत्तत्त्वायोगात्**–तेषां सर्वज्ञत्वायोगात्। एकसन्तानेत्यादि। **एकसन्तानापेक्षया च गृहीतग्राहिज्ञानासम्भव १५ एव** तस्यार्थस्य[1] च क्षणिकत्वात् **सर्वेषां**–ज्ञानानां **सर्वदा**–सर्वकालम् **अगृहीतग्रहणाद्** द्वयोरपि क्षणिकत्वेनेति, यद्वा तदभावे भावादभिधानमात्रं ग्रहणमित्यगृहीतग्रहणमिति ॥

**स्यादेतन्न तत्त्वतो गृहीतग्राहित्वेन** हेतुना **अस्य**–विकल्पस्य **अप्रामाण्यम्, अपि त्वविषयत्वेनेति।** एतदाशङ्क्याह–**कथमयं**–विकल्पोऽ**विषय २० इति वाच्यम्। यदनेन वेद्यते** विकल्पेन **न तदस्ती**त्यविषयः। **इति चेत्,** एतदाशङ्क्याह–**क्व तन्नास्ति** यदनेन वेद्यते ? **किं तत्रैव** विकल्पे **उत बहिरिति ?। यदि तत्रैव**–विकल्पे एव नास्ति, **कथं** तेन **वेद्यते, वेद्यमानं वा कथं न तत्र** विकल्प **इति चिन्त्यम्।**

द्वितीयं विकल्पमधिकृत्याह–**अथ बहि**र्यदनेन वेद्यते न तदस्तीति। एतदा-२५ शङ्क्याह–**अविकल्पकेऽपि समानः प्रसङ्गः** अविषयत्वप्रसङ्गः। कथमित्याह–

( विवरणम् )

**(१६-१७) तदभावे भावादभिधानमात्रं ग्रहणमित्यगृहीतग्रहणमितीति।** तस्य विषयस्याभावे–विनाशे भावात्–उत्पादात् ज्ञानस्य किमित्याह–अभिधानमात्रम्–अभिधानमेव। केवलं किमित्याह–ग्रहणमिति। एतत् स्वयमेव वृत्तिकृद् व्याचष्टे–अगृही-३० तग्रहणमिति। अयमभिप्रायः–यदा ज्ञेयवस्तुनो विनाशे ज्ञानमुत्पद्यते, तदा ज्ञानकाले वस्त्वभावादेव गृहीतग्राहित्वासम्भवेन वचनमात्रमेवैतद् यदुतागृहीतग्रहणमिति ॥

[1] 'क्षयाऽवगृहीत०' इति क–पाठः।

(मूलम्)

भावात् स्वरूपस्यैव[1] वेदनात्। तद्बहिःस्थतुल्यरूपमित्यदोष इति चेत्, केयं तत्तुल्यरूपतेति वाच्यम्। किं तत्साधारणरूपभावः उताहो तत्तद्ग्रहणस्वभावतेति?। न तावत् साधारणरूपभावः, चेतनाचेतन- ५ त्वेन तद्वैलक्षण्यसिद्धेः, सामान्यवेदनेन तदप्रामाण्यप्रसङ्गाच्च। तत्तद्ग्रहणस्वभावतातदङ्गीकरणे च विकल्पज्ञानेऽपि तुल्यः परिहारः, तस्यापि तद्ग्रहणस्वभावताऽभ्युपगमात्। तथाविधग्राह्याभावादस्य कुतस्तद्ग्रहणस्वभावतेति चेत्, न, तथाविधग्राह्याभावे

(स्वो० व्या०) १०

**तेनापि**—अविकल्पकेन **वेद्यमानस्य बहिरभावात्। अभावश्च स्वरूपस्यैव वेदनात्।** तदित्यादि। तत्—अविकल्पकं वेद्यमानबहिःस्थतुल्यरूपं, विषयतुल्यरूपमित्यस्माददोषः। **इति चेत्**, एतदाशङ्क्याह—**केयं तत्तुल्यरूपता**—बहिःस्थतुल्यरूपतेति **वाच्यम्। किं तत्साधारणरूपभावः**—बहिःस्थसामान्यरूपभावोऽविकल्पकस्य **उत तद्ग्रहणस्वभावता**—बहिःस्थग्रहणस्वभावता १५ इति। किञ्चातः? उभयथाऽपि दोषः। तथा चाह—**न तावत्[2] साधारणरूपभावः** तत्तुल्यरूपता। कुत इत्याह—**चेतनाचेतनत्वेन** हेतुना। **तद्वैलक्षण्यसिद्धेः** तयोः—अविकल्पक-बहिःस्थयोर्वैलक्षण्यसिद्धेः।

दोषान्तरमाह—**सामान्यवेदनेन** हेतुना साधारणरूपभावतः **तदप्रामाण्यप्रसङ्गाच्च**—अविकल्पकस्याप्रामाण्यप्रसङ्गाच्च[3] न तत्साधारणरूपभावस्तत्तुल्यरूपतेति। २० **तत्तद्ग्रहणस्वभावतातदङ्गीकरणे च** तस्य—अविकल्पकस्य तद्ग्रहणस्वभावता—बहिःस्थग्रहणस्वभावता तस्यास्तदङ्गीकरणं—तत्तुल्यरूपताऽङ्गीकरणमिति विग्रहः, तस्मिन्। किमित्याह—**विकल्पज्ञानेऽपि तुल्यः परिहारः** तत्तद्बहिःस्थतुल्यरूपमित्ययम्। कुत इत्याह—**तस्यापि**—विकल्पज्ञानस्य **तद्ग्रहणस्वभावताऽभ्युपगमात्**—बहिःस्थग्रहणस्वभावताऽभ्युपगमात्। **तथाविधेत्यादि**। तथाविध- २५ **ग्राह्याभावात्**—विकल्पज्ञानग्राह्याभावात् **अस्य**—विकल्पज्ञानस्य **कुतस्तद्ग्रहणस्वभावता**—बहिःस्थग्रहणस्वभावता?। **इति चेत्**, एतदाशङ्क्याह—**न, तथाविधग्राह्याभावे**—विकल्पज्ञानग्राह्याभावे **प्रमाणाभावात्**। अभावश्च **प्रत्यक्षस्य**

(विवरणम्)

(२३-२४) **तत्तद्बहिःस्थतुल्यरूपमिति**। तत्—विकल्पज्ञानं तेन—बहिःस्थेन ३० पदार्थेन तुल्यरूपं—तदाकारमिति ॥

१ 'स्वरूपस्य वेदनात्' इति क—पाठः। २ 'तावत् तत्साधारण०' इति क—पाठः। ३ 'प्रसङ्गत्वेन तत्०' इति क—पाठः।

(मूलम्)

**प्रमाणाभावात्, प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्तेः, अनुमानस्याप्यनुपलब्धिलक्षणप्राप्तार्थविषयत्वात्, तस्य च तदभावाभ्यु-**
**५ पगमात्। न हि साधारणं रूपमुपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः, तदवस्तुत्वप्रतिज्ञानात् अनीदृशानुपलब्धेश्चाभावनिश्चायकत्वानुपपत्तेः। एतेन तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता, उक्तवत् प्रत्यक्षादेः तद्बाधकत्वायोगात्। युक्त्या तदयोगो बाधक इति चेत्, न, विकल्पानुपपत्तेः। युक्तिर्हि प्रमाणमप्रमाणं वा स्यात्। प्रमाणं चेत्, न,**
**१० प्रत्यक्षादेरन्यदित्यत्र [1]चोक्तो दोषः। अप्रमाणत्वे तु तद्बाधकत्वानुपपत्तिः, अतिप्रसङ्गात्॥**

---

(स्वो० व्या०)

तावत् **स्वलक्षणविषयत्वेन** हेतुना **तत्र**–तथाविधग्राह्याभावे **अप्रवृत्तेः अनुमानस्यापि**–अनुपलब्धिरूपस्य **उपलब्धिलक्षणप्राप्तार्थविषयत्वात्।**
१५ ततः किमित्याह–**तस्य**–तथाविधग्राह्यस्य **तदभावाभ्युपगमात्**–उपलब्धिलक्षणप्राप्तार्थविषयत्वाभावाभ्युपगमात्। एतद्भावनायैवाह–**न हि साधारणं रूपं** विकल्पग्राह्यम् **उपलब्धिलक्षणप्राप्तमिष्यते भवद्भिः**। कुत इत्याह–**तदवस्तुत्वप्रतिज्ञानात्** तस्य–साधारणरूपस्यावस्तुत्वप्रतिज्ञानात् **अनीदृशानुपलब्धेश्च**–अनुपलब्धिलक्षणप्राप्तानुपलब्धेश्च। किमित्याह–**अभावनिश्चायक-**
२० **त्वानुपपत्तेस्**तथाऽभ्युपगमात्। **एतेने**त्यादि। एतेन–अनन्तरोदितेन तथाविधग्राह्याभावे प्रमाणाभावेन। किमित्याह–**तद्बाधकप्रमाणप्रवृत्तिः प्रत्युक्ता**–तस्मिन्–तथाविधग्राह्ये बाधकप्रमाणवृत्तिर्निराकृता। कुत इत्याह–**उक्तवत्**–यथोक्तं तथा **प्रत्यक्षादेः**–प्रत्यक्षानुमानद्वयस्य **तद्बाधकत्वायोगात्**–तथाविधग्राह्यबाधकत्वायोगात्, **युक्त्या तदयोगः**–तथाविधग्राह्यायोगः, साधारणरूपायोग
२५ इत्यर्थः **बाधकः। इति चेत्**, एतदाशङ्क्याह–**न, विकल्पानुपपत्तेः**। अनुपपत्तिश्च–**युक्तिर्हि प्रमाणमप्रमाणं वा स्यात्**। [2]किञ्चात इत्युभयथाऽपि दोष इत्याह–**प्रमाणं चेत्, न प्रत्यक्षादेरन्यदित्यत्र चोक्तो दोषः**–'प्रत्यक्षस्य स्वलक्षणविषयत्वेन तत्राप्रवृत्ते'रित्यादिः। **अप्रमाणत्वे तु** युक्तेः किमित्याह–**तद्बाधकत्वानुपपत्तिः**–तथाविधग्राह्यबाधकत्वानुपपत्तिः। कुत इति आह–
३० **अतिप्रसङ्गात्** स्वलक्षणस्यापि युक्तिबाधितत्वोपपत्तेः अविषयेऽपीयं प्रवर्तत इति भावना। एवं विकल्पज्ञानस्यापि कस्यचित् प्रामाण्यमङ्गीकर्तव्यमित्यैदम्पर्यम्॥

---

१ 'चोक्तदोषः' इति क–पाठः। २ 'किञ्चातः? उभय०' इति घ–पाठः।

(मूलम्)

**अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि तादृगेवेति सुस्थिता तत्तत्त्वनीतिः । न हि भ्रान्तमात्मनो भ्रान्तता-मवैति, द्विचन्द्रज्ञानादावात्मनि भ्रान्तताऽधिगमव्यपोहेन चन्द्रद्वया-द्यधिगतिदर्शनात्, तत्स्थामोपजातवचसोऽपि स्वभ्रान्तताऽभिधान-परित्यागेन चन्द्रद्वयाद्यभिधानादिति सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रमिति कथं ततस्तत्त्वनिश्चय इति चिन्त्यम् । तथाहि—अस्य नित्यात्मादिविकल्पवत् कृतकत्वादिलिङ्गद्वारायाता अनित्याऽनात्मा-दिविकल्पा अपि भ्रान्ता एवेति कथं तेभ्यस्तन्निश्चितिः ? । निश्चितौ वा कथं न नित्यादावपि, तद्विकल्पानामपि ततो भावात् ? ॥**

**स्यादेतत् स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव**

(स्वो० व्या०)

इत्थमनभ्युपगमे दोषमाह—**अखिलेत्यादि** । **अखिलविकल्पज्ञानभ्रान्तता-वादिनश्च**—वादिनः । किमित्याह—**तत्सामर्थ्योत्थं**—निःशेषविकल्पज्ञानभ्रान्तता-सामर्थ्योत्थं **वचनमपि तादृगेव**—भ्रान्तमेव **इति**—एवं **सुस्थिता तत्तत्त्वनीतिः** ताभ्यां—भ्रान्तविकल्पज्ञान-वचनाभ्यां तत्त्वनीतिरित्युपहसति, न सुस्थितेत्यर्थः । कथमि-त्याह—**न हीत्यादि** । न यस्माद् **भ्रान्तं**, ज्ञानमिति प्रक्रमः, **आत्मनो भ्रान्ततामवैति** । कुत इत्याह—**द्विचन्द्रज्ञानादौ** 'आदि'शब्दान्मायाजलज्ञानग्रहः **आत्मनि**—स्वरूपे **भ्रान्तताऽधिगमव्यपोहेन चन्द्रद्वयाद्यधिगतिदर्शनात्** 'आदि'-शब्दान्मायाजलग्रहः, **तत्स्थामोपजातवचसोऽपि**—भ्रान्तज्ञानसामर्थ्योपजात-वचनस्यापि **स्वभ्रान्तताऽभिधानपरित्यागेन चन्द्रद्वयाद्यभिधानादिति**—एवं **सकलमेव शास्त्रज्ञानाभिधानं भ्रान्तिमात्रमिति** कृत्वा **कथं ततः**—शास्त्रज्ञानाभिधानात् **तत्त्वनिश्चय इति चिन्त्यम्** । नैव तत्त्वनिश्चय इति । एतद्भावनायैवाह—**तथाहीत्यादि** । तथाहि—**अस्य**—अखिलविकल्पज्ञानभ्रान्ततावा-दिनः **नित्यात्मादिविकल्पवदि**ति निदर्शनम्, **कृतकत्वादिलिङ्गद्वारायाता अनित्या-ऽनात्मादिविकल्पा अपि भ्रान्ता एव**—नाभ्रान्ता इति—एवं **कथं तेभ्यः**—भ्रान्तविकल्पेभ्यस्**तन्निश्चितिः**—अनित्या-ऽनात्मादिनिश्चितिः ? । **निश्चितौ वा** तेभ्यः—अनित्या-ऽनात्मादेः **कथं न नित्यादावपि** निश्चितिः ? । कुत इत्याह—**तद्विकल्पानामपि**—नित्यात्मादिविकल्पानामपि **ततः**—वस्तुनो **भावात्** ॥

**स्यादेतदित्यादि** । स्यादेतत्—अथैवं मन्यसे **स्वलक्षणदर्शनेन आहिता**

१ 'वादिनश्च किमित्याह' इति घ–पाठः ।

( मूलम् )

विकल्पाः, तथापि केषाञ्चिदेव तत्प्रतिबद्धजन्मनां विकल्पानामतत्प्रतिभासित्वेऽपि वस्तुन्यविसंवादः, मणिप्रभायामिव मणिभ्रान्तेः, ५ नान्येषाम्, तद्भेदप्रसवे सत्यपि यथादृष्टविशेषानुस्मरणं परित्यज्य किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपाद् दीपप्रभायामिव मणिबुद्धेरिति संवादिभ्य एव तन्निश्चितिः, नासंवादिभ्यः ॥

एतदप्यसत्, अविचारितरमणीयत्वात् । तत्र यत् तावदुक्तम्[1]—

( स्वो० व्या० )

१० या वासना तया कृतं विप्लवरूपं येषां ते तथाविधाः सर्व एव विकल्पाः सामान्येन, तथापि—एवमपि व्यवस्थिते सति केषाञ्चिदेव—अनित्या-ऽनात्मादिरूपाणां तत्प्रतिबद्धजन्मनां—वस्तुप्रतिबद्धजन्मनां विकल्पानामतत्प्रतिभासित्वेऽपि, वस्त्वप्रतिभासित्वेऽपीत्यर्थः । किमित्याह—वस्तुन्यविसंवादः । निदर्शनमाह—मणिप्रभायामिव विषयभूतायां मणिभ्रान्तेः कुञ्चिकादिविवरोप- १५ लम्भेन, नान्येषां—नित्यात्मादिविकल्पानाम्, तद्भेदप्रसवे सत्यपि, वस्तुभेदादुत्पादे सत्यपीत्यर्थः, यथादृष्टविशेषानुसरणं परित्यज्य कथमित्याह—किञ्चित्सामान्यग्रहणेन सदृशापरहेतुना[2] विशेषान्तरसमारोपात् हेतोः, नान्येषामिति वर्तते । निदर्शनमाह—दीपप्रभायामिव विषयभूतायां[3] मणिबुद्धेः कुञ्चिकादिविवरोपलम्भेनेव[4] इति—एवं संवादिभ्य एव विकल्पेभ्यस्तन्निश्चितिः— २० अभिप्रेततत्त्वनिश्चितिः, नासंवादिभ्यः ॥

एवं पूर्वपक्षमाशङ्क्याह—एतदप्यसत्—अशोभनम् । कुत इत्याह—अविचारितरमणीयत्वात् कारणात् । एतदेवाह तत्रेत्यादिना[5] । तत्र यत् तावदुक्तमादौ[6]—

( विवरणम् )

(१७) किञ्चित्सामान्यग्रहणेन सदृशापरहेतुना विशेषान्तरसमारोपात् २५ हेतोरिति । किञ्चित्सामान्यस्य—किञ्चित्सादृश्यस्य ग्रहणम्—अध्यवसायस्तेन । कीदृशेन सामान्यग्रहणेनेत्याह—सदृशापरहेतुना, सदृशः—पाश्चात्यकारणक्षणसमानाकारो योऽपरः कार्यक्षणः स हेतुर्यस्य किञ्चित्सामान्यग्रहणस्य तत् तथा तेन । किमित्याह—विशेषान्तरसमारोपात् विशेषान्तरस्य—स्वलक्षणेष्वविद्यमानस्य समानाकाररूपस्य समारोपः—अध्यारोपस्तस्माद्धेतोः—कारणात् ॥

१ २४९तमे पृष्ठे २५०तमे च । २ 'सदृशापरापरहेतुना' इति घ-पाठः । ३ 'रूपायां' इति ङ-पाठः । ४ 'लम्भेनैव' इति क-ङ-पाठः । ५ 'त्यादि । तत्र' इति क-पाठः । ६ २४९तमे पृष्ठे २५०तमे च ।

( मूलम् )

'स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः' इति, अत्र किमिदं स्वलक्षणदर्शनं नाम? का वा तदाहिता वासना यत्कृतविप्लवरूपाः सर्व एव विकल्पा इति?। वस्त्वनुभवः स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्तिः। यदि एवं कथं निरंशवस्तुविषयान्निरंशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां सम्भवः?, [1]कथं वैकस्या एवानेकविकल्पजन्म?। समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्यानित्यादिविकल्पाः, क्रमेणैकस्य, अक्रमेण चानेकप्रमातृणाम्। न चैते शक्तिभेदैकानेकजनकत्वे विना। न च भूयसामपि निरंशवस्तुविषयनिरंशानुभवानां तत्त्वतस्तत्त्वे विशेषः, रूपादिस्वलक्षणानामिव। तन्न तेषामिवैकस्य

( स्वो० व्या० )

'स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्व एव विकल्पाः' इत्येतत्, अत्र किमिदं स्वलक्षणदर्शनं नाम? का वा तदाहिता—स्वलक्षणदर्शनाहिता वासना यत्कृतविप्लवरूपाः सर्व एव विकल्पा इति?। अत्राह—वस्त्वनुभवः शुद्धः स्वलक्षणदर्शनम्, तदाहितवासना तु तथाविधविकल्पजननशक्तिः, [2]तथाविधस्य संवादिनोऽसंवादिनश्च। एतदाशङ्क्याह—यद्येवं कथं निरंशवस्तुविषयान्निरंशानुभवात् तथाविधविकल्पजननशक्तीनां प्रभूतानां सम्भवः सामान्येन? कथं [3]वैकस्या एव शक्तेः अनेकविकल्पजन्म?। को वा किमाह?। न चैतदेवम्, इत्याशङ्कानिरासायाह—समुत्पद्यन्ते च स्वलक्षणदर्शनानन्तरं नित्यानित्यादिविकल्पाः क्रमेणैकस्य प्रमातुः साङ्ख्यादेर्बौद्धादिमतप्रतिपत्त्या, अक्रमेण चानेकप्रमातृणां—साङ्ख्यबौद्धादीनाम्। न चैते—नित्यानित्यादिविकल्पाः। शक्तिभेदश्च एकानेकजनकत्वं चेति विग्रहः, ते चैते, एते विना क्रमाक्रमपक्षद्वयेऽपीति। एतदेवाह—न चेत्यादि। न च भूयसामपि क्रमपक्षे। केषामित्याह—निरंशवस्तुविषयनिरंशानुभवानाम्, तुल्यस्वलक्षणानुभवानामित्यर्थः। किमित्याह—तत्त्वतः—परमार्थेन तत्त्वे—तद्भावे, रूपादिस्वलक्षणानुभवत्वे इत्यर्थः, विशेषः—भेदः। किं तर्हि? सर्व एवैते रूपादिस्वलक्षणानुभवा एवेति। इहैव निदर्शनमाह—रूपादिस्वलक्षणा-

---

१ 'कथं चैकस्या' इति क-पाठः। २ 'तथाविधाः संवादिनो०' इति क-पाठः। ३ 'चैकस्या एव' इति क-पाठः।

( मूलम् )

**बहूनां वा**[1]**ऽनन्तरं पारम्पर्येण वा तथाविधफलभेदोऽमीषां न्याय्य इति भाव्यमेतत्**[2]**। का चेयं तथाविधविकल्पजननशक्तिः? किं तदुत्तरं**
५ **मानसम्, उतान्यैव काचित्?। यदि मानसम्, कथं स्वलक्षणादस्वलक्षणजन्म?। अस्वलक्षणं च विकल्पः, असदाकाररूपत्वात्। न स्वसंवित्तिस्तत्रास्वलक्षणम्, अपि तु बहिर्मुखावभास एवेति चेत्, न खलु सा ततोऽन्येति कथं नास्वलक्षणम्?। असन्नसौ, सा तु सती, स्वसंविदितत्वादेवेति चेत्, कथमसौ तन्मात्रतत्त्वा विकल्प इति**

१० ( स्वो० व्या० )

**नामिव**, एकस्य प्रमातुः इति प्रक्रमः, तथाविधानुभवनिबन्धनानामिति। तथाहि— क्रमेणापि रूपादिस्वलक्षणानि स्वाकारमनुभवं कुर्वाणानि न रूपादिस्वलक्षणत्वेन विशेष्यन्त इति ॥

प्रकृतयोजनामाह—**तत्**—तस्मात् **न तेषामिव**—रूपादिस्वलक्षणानामिव, **एकस्य**
१५ प्रमातुरिति प्रक्रमः, **बहूनां वा**—प्रमातॄणाम् **अनन्तरं** बहूनां **पारम्पर्येण** [3]**वैकस्य तथाविधफलभेदः**—भिन्नजातीयविज्ञानादिकार्यभेदो**ऽमीषां**—निरंशवस्तुविषयनिरंशानुभवानां **न्याय्य इति भाव्यमेतत्**—भावनीयमेतत्। एतदुक्तं भवति—यथा तेषां रूपादिस्वलक्षणानां न रसादिफलभेदो न्याय्यः, एवमनित्यानात्मकवस्त्वनुभवानामपि न नित्यात्मादिविकल्पजननशक्त्याख्यः फलभेदो न्याय्यः।
२० इहैवाभ्युच्चयमाह **का चेयमि**त्यादिना। का चेयं **तथाविधविकल्पजननशक्ति**र्भवतोऽभिप्रेता? **किं तदुत्तरं**, प्रक्रमादविकल्पप्रत्यक्षोत्तरं, **मानसं** 'स्वविषयानन्तरे'त्यादिलक्षणं **उतान्यैव काचि**दालयगता?। उभयथाऽपि दोषमाह— **यदि मानसम्, कथं स्वलक्षणाद्** मानसात् **अस्वलक्षणजन्म**—विकल्पोत्पादः?। विकल्पास्वलक्षणत्वमाह—**अस्वलक्षणं च विकल्पो** भवन्नीत्या। कुत
२५ इत्याह—**असदाकाररूपत्वात्**। असदाकारः—विकल्पबुद्धिप्रतिभासोऽस्वलक्षणत्वाभ्युपगमात् स एव रूपं यस्य स तथा तद्भावस्तस्मात्। **न स्वसंवित्तिस्तत्र**—विकल्पे**ऽस्वलक्षणम्, अपि तु बहिर्मुखावभास एव** अस्वलक्षणम्। **इति चेत्**, एतदाशङ्क्याह—**न खलु सा**—स्वसंवित्तिः **ततः**—बहिर्मुखावभासा**दन्येति**—एवं **कथं नास्वलक्षणम्?** अस्वलक्षणमेव। **असन्नसौ**—बहिर्मुखावभासः, **सा तु**—
३० स्वसंवित्तिः **सती**—विद्यमाना, **स्वसंविदितत्वादेव** कारणात्। **इति चेत्**, एतदा-

१ 'चानन्तरं' इति क-पाठः। २ 'भाव्यतामेतत्' इति क-पाठः। ३ 'चैकस्य' इति क-पाठः।

(मूलम्)

चिन्त्यम्। असदाकारानुवेधादिति चेत्, कथमसताऽनुवेधो नाम?। स निर्विषयत्वादसन्, न तु तथाप्रतिभासनेनेति चेत्, न स्वसंवित्तिस्तथाप्रतिभासनादन्येत्यस्वलक्षणत्वमेव ॥ ५

तस्य विभ्रमरूपत्वात् तदन्या-ऽनन्यत्वकल्पनैवायुक्तेति चेत्, कोऽयं विभ्रम इति कथनीयम्। अनिरूप्यस्वरूपस्तत्त्वतोऽसद्रूप इति चेत्, कथमयं स्वसंवित्तिभेदक इति वाच्यम्। न तत्त्वत इति चेत्, उच्छिन्नो विकल्पः। अस्त्विति चेत्, प्रतीत्यादिबाधा। चेतना

(स्वो० व्या०) १०

शङ्क्याह–कथमसौ–स्वसंवित्तिस्तन्मात्रतत्त्वा–स्वसंवित्तिमात्रतद्भावा विकल्प इति चिन्त्यम्। न तत्र स्वलक्षणातिरिक्तोऽंश इति कृत्वा। असदाकारानुवेधादसौ विकल्पः। इति चेत्, एतदाशङ्क्याह–कथमसता आकारेण अनुवेधो नाम स्वसंविदः? नैवेत्यर्थः। सः–आकारः निर्विषयत्वात् कारणात् असन्–तुच्छः, न तु तथाप्रतिभासनेन–न पुनर्बहिर्मुखावभासप्रतिभासनेनासन्। इति १५ चेत्, एतदाशङ्क्याह–न स्वसंवित्तिरधिकृता तथाप्रतिभासनात्–बहिर्मुखावभासप्रतिभासनादन्या–अर्थान्तरभूता इति कृत्वा अस्वलक्षणत्वमेव स्वसंविदः॥

तस्य–बहिर्मुखावभासप्रतिभासस्य विभ्रमरूपत्वात् कारणात् तदन्यानन्यत्वकल्पनैव तया–स्वसंवित्त्याऽन्यानन्यत्वकल्पनैव अयुक्ता। इति चेत्, एतदाशङ्क्याह–कोऽयं विभ्रमो यद्रूपत्वादन्यानन्यत्वकल्पनाऽयोग इति कथनीयम्। २० अनिरूप्यं स्वरूपं यस्य वैतथ्येन स तथा तत्त्वतः–परमार्थतोऽसद्रूपः। इति चेत्, एतदाशङ्क्याह–कथमयं–विभ्रमोऽसद्रूपः सन् स्वसंवित्तिभेदक इति–एतद् वाच्यम्। न तत्त्वत इति चेत्, स्वसंवित्तिभेदकः। एतदाशङ्क्याह–उच्छिन्नो[1] विकल्पः अविशिष्टस्वसंवित्तिमात्रभावेन। अस्त्विति चेत् विकल्पाभावः। एतदाशङ्क्याह–प्रतीत्यादिबाधा, 'आदि'शब्दाद् भावेतरभेदबाधाग्रहः। २५

(विवरणम्)

(११) स्वसंवित्तिमात्रतद्भावा इति। स्वसंवित्तिमात्रमेव तद्भावः–तत्त्वभावः[3] स्वरूपं यस्या इति ॥

(२५) भावेतरभेदबाधाग्रह इति। इदमत्रास्तीदं तु नास्ति इत्येवंरूपो यो भावेतराभ्यां–भावाभावाभ्यां भेदाभेदव्यवहारो विकल्पात्मकस्तस्य बाधा–बाधनं ३० तस्या ग्रहः। इदमुक्तं भवति–प्रवृत्तेऽपि निर्विकल्पज्ञाने इदमत्रास्तीदं तु नास्तीति व्यवहारो विकल्पेनैव वर्तते, तदपलापे तु कथमयं स्यादिति ॥

१ 'उत्सन्नो विकल्पः' इति घ–पाठः। २ 'उत्सन्नो' इति घ–पाठः, ङ–पाठस्तु 'उच्छन्नो' इति। ३ 'तत्र भावः' इति च–पाठः।

(मूलम्)

एव तथाभूता विकल्प इति चेत्, किम्भूतेति चिन्त्यम्। असदाकारेति चेत्, अस्वलक्षणमेवेयम्, असदाकारत्वात्। [1]न स्वसंवित्ति-
५ स्तत्रास्वलक्षणम्, अपि तु बहिर्मुखावभास एवेति चेत्, न खलु सा ततोऽन्या' इति समानं पूर्वेणेति यदि मानसं कथं स्वलक्षणादस्वलक्षणजन्म साधीय इति ?। कथं वा निर्विकल्पकत्वेनाभिन्नाद् भिन्नविकल्पसम्भवः ?। न हि नीलादिमात्रात् क्वचिद् रसादिभावः, तथाऽदर्शनात्। न चात्र किञ्चिद् भेदकम्, अनभ्युपगमात्,
१० अभ्युपगमेऽपि ततोऽतिशयासिद्धेरिति निवेदयिष्यामः॥

अथान्यैव काचित्। कासाविति वाच्यम्। अनादिमदालयगतशक्तेः स्वलक्षणदर्शनसहकारिभावतो विशेषकरणम्। तथाहि—सा

---

(स्वो० व्या०)

चेतनैव तथाभूता विशिष्टा विकल्पः। इति चेत्, एतदाशङ्क्याह—किम्भूता
१५ तथाभूता इति चिन्त्यम्। असदाकारा असन्नाकारो यस्याः सा तथा। इति चेत्, एतदाशङ्क्याह—अस्वलक्षणमेवेयं—चेतना, असदाकारत्वात्। न स्वसंवित्तिस्तत्र—चेतनायां अस्वलक्षणम्, अपि तु बहिर्मुखावभास एव अस्वलक्षणम्। इति चेत्, एतदाशङ्क्याह—न खलु—नैव सा—चेतना स्वसंवित्तिः ततः—बहिर्मुखावभासादन्येति समानं पूर्वेण-'कथं नास्वलक्षण'मित्यादिनोक्तेन[3]।
२० इति—एवं यदि मानसं कथं स्वलक्षणादस्वलक्षणजन्म साधीयः—शोभनतरम् ? नैवेत्यर्थः। कथं वेत्यादि। कथं वा निर्विकल्पकत्वेनाभिन्नाद् मानसाद् भिन्नविकल्पसम्भवो विकल्पकत्वेन ?। कथं च न स्यादित्याह—न हि नीलादिमात्राद् वस्तुनोऽन्यरहितात् क्वचिद् रसादिभावः। 'आदि'शब्दाद् गन्धादिग्रहः। कथं न रसादिभाव इत्याह—तथाऽदर्शनात्। न चात्र—मानसाद्
२५ विकल्पजन्मनि किञ्चिद् भेदकमस्ति। कुत इत्याह—अनभ्युपगमात्। [4]अभ्युपगमेऽपि सति भेदकस्य वासनादेः ततः—भेदकात् अतिशयासिद्धेरिति निवेदयिष्याम ऊर्ध्वम्। गतो मानसपक्षः॥

द्वितीयं विकल्पमधिकृत्याह—अथान्यैव काचित् तथाविधविकल्पजननशक्तिः। एतदुरीकृत्याह—कासाविति वाच्यम्। अनादिमती चासौ आलयगत-

---

१ प्रेक्ष्यतां २५२तमं पृष्ठम्। २ 'भासादन्येऽभिसमानं' इति क-पाठः। ३ प्रेक्ष्यतां २५२तमं पृष्ठम्। ४ 'अनभ्युप०' इति क-पाठः।

( मूलम् )

**तदनुभवं प्राप्याक्षेपेण तथाविधविकल्पजननस्वभावोपजायते इति स्वलक्षणदर्शनाहितेत्युच्यते, अत एव न भिन्नविकल्पसम्भवाभावः, तथाविधशक्तिसहकारित्वेन तदनुभवस्य तदविरोधादिति ।** ५
**एतदपि यत्किञ्चित्, तस्य तत्सहकारित्वासिद्धेः ततस्तस्या उपकाराभावात्, अनुपकार्योपकारकयोश्च सहकारित्वायोगात् । द्विविधो हि वः सहकारार्थः परस्परातिशयाधानेन सन्ताने विशिष्टक्षणोत्पादनलक्षणः, पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रिया-**

( स्वो० व्या० ) १०

**शक्ति**श्चेति विग्रहः, तस्याः, **स्वलक्षणदर्शनसहकारिभावतः**, प्रवृत्तिविज्ञानसहकारिभावत इत्यर्थः, **विशेषकरणम्**—अतिशयकरणं सा । एतदेव भावयति **तथाही**त्यादिना । तथाहि—**सा**—अनादिमदालयगतशक्तिः **तदनुभवं प्राप्य**—स्वलक्षणदर्शनमासाद्य **अक्षेपेण**—अव्यवधानेन **तथाविधविकल्पजननस्वभावा**—अनित्यादिविकल्पजननस्वभावा **उपजायत इति** कृत्वा **स्वलक्षणदर्शनाहितेत्युच्यते, अत एव** कारणात् **न भिन्नविकल्पसम्भवाभावः** । १५ किं तर्हि ? सम्भव एव । कुत इत्याह—**तथाविधशक्तिसहकारित्वेन** हेतुना **तदनुभवस्य**—स्वलक्षणानुभवस्य, प्रवृत्तिविज्ञानस्येत्यर्थः, **तदविरोधादिति,** प्रक्रमाद् भिन्नविकल्पसम्भवाविरोधात्, शक्तिरस्योपादानमित्यभिप्राय इति । एतदाशङ्क्याह—**एतदपि यत्किञ्चित्** । कथमित्याह—**तस्य**—स्वलक्षणानुभवस्य **तत्-** २० **सहकारित्वासिद्धेः**—प्रस्तुतशक्तिसहकारित्वासिद्धेः । असिद्धिश्च **ततः**—अधिकृतानुभवात् **तस्याः**—शक्तेः, किमित्याह—**उपकाराभावात्** । यदि नामैवं ततः किमित्याह—**अनुपकार्योपकारकयोश्च** भावयोः **सहकारित्वायोगात्** । एनमेवाह—**द्विविधो हि वः**—युष्माकं **सहकारार्थः** । द्वैविध्यमाह—**परस्परातिशयाधानेन** क्षणपरम्परया **सन्ताने**—प्रबन्धे **विशिष्टक्षणोत्पादनलक्षणः**, विवक्षित- २५

( विवरणम् )

(११-१२) **प्रवृत्तिविज्ञानसहकारिभावत** इति । प्रवृत्तिविज्ञानस्य—घटादिपदार्थगोचरप्रवृत्तिकारकनिर्विकल्पज्ञानलक्षणस्य यः सहकारिभावोऽनादिमदालयगतशक्तिं प्रतीत्य तस्मात् ॥

(२४) **द्विविधो हि वः—युष्माकं सहकारार्थ** इति । प्रथमोऽङ्कुरोत्पादकक्षिति- ३० बीजादीनाम्, द्वितीयस्तु विज्ञानजनकरूपादीनाम् ॥

---

१ 'प्राप्योत्क्षेपेण' इति ग—पाठः । २ 'पूर्वपूर्वस्वहेतो०' इति क—पाठः ।

( मूलम् )

लक्षणश्च । न चानयोरेकोऽपि सम्भवति, क्षणिकत्वेन परस्परातिशयाधानायोगात् । अतिशय उपकार इत्यनर्थान्तरम् । न चासा-
५ वन्यतोऽन्यस्य, विकल्पायोगात् ॥

तदनुभवो हि तच्छक्तेरनुत्पन्नाया उत्पन्नाया निरुद्धाया एव वोपकुर्यात् । न तावदनुत्पन्नायाः, तस्या एवासत्त्वात्, असतश्चोपकाराकरणात् । नाप्युत्पन्नायाः, तस्या अनाधेयातिशयत्वात्, क्षणादूर्ध्वमनवस्थितेः । द्वाभ्यामप्येकीभूय तदन्यकरणमेवातिशयाधानं
१० तदेव चोपकार इति चेत्, न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः । न चैककालभाविनाऽन्यतो भवन्त्या अन्यत

---

( स्वो० व्या० )

कार्ययोग्यताकारीत्यर्थः, तथा पूर्वस्वहेतोरेव उपादानादेः समग्रोत्पन्नैककार्यक्रियालक्षणश्च समग्रोत्पन्नानामेककार्यक्रियाऽन्यानां विवक्षितकार्योत्पत्तिः सैव
१५ लक्षणं यस्य सहकारार्थस्य स तथेति समासः । न चेत्यादि । न च अनयोः—सहकारार्थयोरेकोऽपि सम्भवति । कुत इत्याह—क्षणिकत्वेन हेतुना परस्परातिशयाधानायोगात् । एतदेव भावयति अतिशय उपकार इत्यनर्थान्तरम् । न चासौ—अतिशयः अन्यतः सकाशादन्यस्य । कथं नेत्याह—विकल्पायोगात् ॥

एनमेवाह तदनुभवो हीत्यादिना । तदनुभवः—अधिकृतस्वलक्षणानुभवः
२० यस्मात् तच्छक्तेः—अनादिमदालयगतशक्तेः अनुत्पन्नाया उत्पन्नाया निरुद्धाया एव वोपकुर्यादिति सम्भविनो विकल्पाः । न तावदनुत्पन्नाया उपकरोति तदनुभवः । कुत इत्याह—तस्या एव शक्तेरसत्त्वात् । न चासावनुत्पन्ना अस्ति । यदि नामैवं ततः किमित्याह—असतश्च सामान्येन उपकाराकरणात् ॥

नाप्युत्पन्नाया उपकरोति तदनुभवः । कुत इत्याह—तस्याः—उत्पन्नाया
२५ निष्पन्नत्वेन अनाधेयातिशयत्वात् । एतच्च क्षणादूर्ध्वमनवस्थितेः कारणात् । द्वाभ्यामपि—शक्त्यनुभवाभ्यामेकीभूय तदन्यकरणमेव—विशिष्टशक्तिकरणमेव—अतिशयाधानं तदेव चान्यकरणं उपकारः । इति चेत्, एतदाशङ्क्याह—नेत्यादि । न—नैतदेवम् । कुत इति युक्तिमाह—उपादानकारणविशेषाधानमन्तरेण—इह तावदधिकृतशक्तिविशेषाधानं विना ततः—विवक्षितानुभवात्
३० कार्यविशेषासिद्धेः, प्रस्तुतविकल्पकार्यभेदासिद्धेरित्यर्थः । न च एककाल-

---

१ 'तत्तच्छक्ते०' इति क–पाठः । २ 'यस्माच्छक्तेरनादि०' इति घ–पाठः । ३ 'नासाव०' इति क–पाठः ।

(मूलम्)

एव भवता तस्या अतिशयाधानम्, तन्निबन्धनस्य तत्कृतविशेषासिद्धेः। तदभ्युपगमे च तत्राप्ययमेव वृत्तान्तः। एवं निबन्धनपरम्परायामपि वाच्यमित्यत्राणं निबन्धनपरम्परा ॥ ५

स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना याऽनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयति, अतो न दोष इति चेत्, न, अनुपकारिणोऽपेक्षाऽयोगात्, तदभ्युपगमेऽतिप्रसङ्गात्, तत्तथाविधस्वभावाधायकहेतोरप्यस्थानपक्षपातित्वापत्तेः, स्वभावापर्यनुयोगस्य च प्रमाणोपपन्नस्वभावविषयत्वात्। स्वपरि- १०

(स्वो० व्या०)

भाविना—शक्त्या सहानुभवेन अन्यतो भवन्त्याः शक्तेः अन्यत एव स्वहेतोः भवताऽनुभवेन तस्याः—शक्तेरतिशयाधानम्, न्याय्यमिति शेषः। कुत इत्याह—तन्निबन्धनस्य—अधिकृतशक्त्युपादानस्य तत्कृतविशेषासिद्धेः—विवक्षितानुभवकृतविशेषासिद्धेः। तदभ्युपगमे च—सामान्येन तन्निबन्धनस्य तत्कृतविशेषा- १५ भ्युपगमे च तत्रापि—तन्निबन्धनेऽयमेव—अनन्तरोदितो '[१]न, उपादानकारणविशेषाधानमन्तरेण ततः कार्यविशेषासिद्धेः' इत्यादिर्वृत्तान्तः। एवम्—उक्तनीत्या निबन्धनपरम्परायामपि वाच्यमिति—एवमत्राणं निबन्धनपरम्परा अनादावपि [२]संसारे एकस्यापि निबन्धनस्योक्तनीत्या विशेषाधानायोगादिति भावनीयम् ॥

स्वहेत्वित्यादि। स्वहेतुपरम्परात एव सा शक्तिः—अधिकृता तथा- २० स्वभावोत्पन्ना या अनुपकारिणमपि तदनुभवम्—अधिकृतस्वलक्षणानुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयति अधिकृतविकल्पाख्यम्, अतो न दोष इति चेदधिकृतः। एतदाशङ्क्याह—न, अनुपकारिणः तदनुभवस्य। किमित्याह—अपेक्षाऽयोगात्। तदभ्युपगमे—अनुपकारिणोऽपेक्षाऽभ्युपगमेऽतिप्रसङ्गात्, तद्वद् विश्वापेक्षापत्तेः। तत्तथाविधेत्यादि। तस्याः—शक्तेस्तथाविधस्व- २५ भावाधायकः अनुपकारिणमपि तदनुभवं सहकारिणमपेक्ष्य विशिष्टं कार्यं जनयति इत्येवंविधस्वभावाधायकश्चासौ हेतुश्चेति समासः, तस्य अपि। किमित्याह—अस्थानपक्षपातित्वापत्तेः नेति क्रियायोगः। उक्तं च—

"अस्थानपक्षपातश्च हेतोरनुपकारिणि।
[३]अपेक्षायां नियुङ्क्ते यत् कार्यमन्याविशेषतः ॥"[४] ३०

इत्यादि। स्वभावापर्यनुयोगस्य च 'न स्वभावः पर्यनुयोगमर्हति' इत्यस्य

१ प्रेक्ष्यतां २५६तमं पृष्ठम्। २ 'संसारे कस्यापि' इति घ-पाठः। ३ 'अपेक्षा यान्ति युक्ते' इति क-पाठः। ४ अनुष्टुप्।

(मूलम्)

**कल्पनागर्भवाङ्मात्रोदितस्वभावविषयत्वे तु तत्त्वव्यवस्थानुपपत्तिः, अतथाविधस्वभावानामपि तथाविधस्वभावत्वाभिधानाविरोधात्। ५एवं च सहेतुकनाशापत्तिः, 'स्वहेतुपरम्परातस्तथास्वभाव एवासावुत्पन्नो भावो योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यति' इत्यपि वक्तुं शक्यत्वात्, स्वभावपर्यनुयोगासिद्धेः, अचिन्त्यशक्तित्वात्, अन्यथा त्वत्पक्षेऽपि तुल्यत्वादिति॥**

**नापि निरुद्धायाः, तस्या एवासत्त्वात् असतश्चोपकाराकरणात्। १०न[1] च प्रकारान्तरेणोपकारकरणं सम्भवति। एवं तावदाद्यपक्षे सहकारार्थाभाव इति॥**

---

(स्वो० व्या०)

किमित्याह–**प्रमाणोपपन्नस्वभावविषयत्वात्**, प्रतीतिसचिवस्वभावविषयत्वादित्यर्थः। स्वपरिकल्पनागर्भश्चासौ वाङ्मात्रोदितस्वभावश्चेति समासः। स एव विषयो १५यस्य स्वभावापर्यनुयोगस्य स **स्वपरिकल्पनागर्भवाङ्मात्रोदितस्वभावविषयः** तस्य भावस्तस्मिन्। पुनरस्याभ्युपगम्यमाने किमित्याह–**तत्त्वव्यवस्थानुपपत्तिः**। कुत इत्याह–**अतथाविधस्वभावानामपि** भावानां **तथाविधस्वभावत्वाभिधानाविरोधात्**। ततः किमित्याह–**एवं च सहेतुकनाशापत्तिः**। कथमित्याह–**स्वहेतुपरम्परातः** सकाशात्। **तथास्वभाव एवासा-** २०**वुत्पन्नो भावः**–पदार्थो **योऽकिञ्चित्करमपि नाशहेतुमपेक्ष्य नश्यतीत्यपि वक्तुं शक्यत्वात्** तथा**स्वभावपर्यनुयोगासिद्धेः** उक्तनीत्या। असिद्धिश्च **अचिन्त्यशक्तित्वात्** स्वभावस्य। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा त्वत्पक्षेऽपि**–'स्वहेतुपरम्परात[2] एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यस्मिन्नपि **तुल्यत्वात्** पर्यनुयोगस्य। **इति** सर्वत्र 'न[3], अनुपकारिणोऽपेक्षायोगात्' इत्यतो यथायोगं २५'न' इति क्रिया योजनीया॥

**नापि निरुद्धायाः,** शक्तेरुपकरोति तदनुभवः इति प्रक्रमः। कुत इत्याह–**तस्या एव**–निरुद्धायाः शक्तेः **असत्त्वात्, असतश्च**–तुच्छस्य च **उपकाराकरणात्। न चे**त्यादि। **न च प्रकारान्तरेण**–उक्तप्रकारत्रयातिरिक्तेन **उपकारकरणं सम्भवति,** वस्तुतस्तस्यैवाभावात्। **एवं तावदाद्यपक्षे** उप- ३०न्यासक्रमप्राधान्यात् 'परस्परातिशयाधानेन[4] सन्ताने विशिष्टक्षणोत्पादनलक्षणः' इत्यस्मिन् **सहकारार्थाभाव इति॥**

---

१ 'न वः प्रकारा०' इति ग–पाठः। २–३ समीक्ष्यतां २५७तमं पृष्ठम्। ४ प्रेक्ष्यतां २५५तमं पृष्ठम्।

( मूलम् )

**एतेन '[1]पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणो'ऽपि सहकारार्थो निषिद्धः, तत्त्वतः प्रथमसहकारार्थाविशेषात्, '[2]स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना तु सुतरामभेदात्, प्रत्येकं तत्तथाविधकार्यजननसमर्थस्वभावेतरविकल्पदोषापत्तेश्च**

---

( स्वो० व्या० )

**एतेने**त्यादि । एतेन–अनन्तरोदितेन **पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणोऽपि सहकारार्थः** प्राग्निदर्शितस्वरूपो **निषिद्धः** । कुत इत्याह–**तत्त्वतः**–परमार्थेन **प्रथमसहकारार्थाविशेषात्** । अस्य सहकारार्थस्य '[3]परस्परातिशयाधानेन सन्ताने विशिष्टक्षणोत्पादनलक्षणः' प्रथमः, तदयमपि 'पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणः' [4]सदा सन्तानापेक्षया एवम्भूत एव, तस्य तस्य कार्यस्य विशिष्ट[5]क्षणोत्पादनलक्षणत्वादिति भावनीयम् । '[6]**स्वहेतुपरम्परात एव सा शक्तिस्तथास्वभावोत्पन्ना' इत्यादिना तु** अनन्तरोदितग्रन्थेन **सुतरामभेदात्**, द्वयोरपि सहकारार्थयोः फलाभेदादिति गर्भः ॥

दोषान्तरमाह **प्रत्येकमि**त्यादिना । प्रत्येकम्–एकमेकं प्रति **तेषां**–समग्रोत्पन्नानां **तथाविधं**–विशिष्टं यद् विवक्षितं विज्ञानादि **कार्यं तज्जननसमर्थस्वभावश्च इतरश्च**–अतज्जननसमर्थस्वभावश्चेति [7]**विकल्पौ** आभ्यां **दोषास्तदापत्तेश्च** कारणाद् 'द्वितीयोऽपि सहकारार्थो निषिद्धः' इति क्रिया । एतदुक्तं भवति–'पूर्वस्वहेतोरेव समग्रोत्पन्नैककार्यक्रियालक्षणो' द्वितीयः सहकारार्थः । [8]तत्र च ये समग्रा

---

( विवरणम् )

(१२) [9]**सदा सन्तानापेक्षया एवम्भूत एवे**ति । एवंविधा हि रूपादयः क्षणाः पाश्चात्यपाश्चात्यतमैरुपादान[10]सहकारार्थक्षणैर्जनिता येन ते विशिष्टज्ञानोत्पादकान् क्षणान् पर्यन्ते जनयन्तीति । एतदेवाह–(१२-१३) **तस्य तस्य कार्यस्य विशिष्टक्षणोत्पादनलक्षणत्वादि**ति । तस्य तस्य–पाश्चात्यपाश्चात्यतरादेः कार्यस्य रूपादिक्षणलक्षणस्य किमित्याह— विशिष्टक्षणोत्पादनलक्षणत्वात्–अग्रेतनाग्रेतनप्रतिनियतक्षणजननस्व[11]भावत्वात् अग्रेतनाग्रेतनप्रतिनियतक्षणैर्हि स्वजनकक्षणापेक्षया कार्यरूपैः सद्भिरग्रेतनाग्रेतनैः[12]क्षणा विशिष्टा एव जन्यन्ते वैशिष्ट्यं च सहकारिसव्यपेक्षमेव, अतो विशेषाभाव एव द्वयोरपि सहकारार्थयोः, [13]उभयत्रापि सहकारिकृतविशेषस्य विद्यमानत्वात् ॥

---

१ प्रेक्ष्यतां २५५तमं पृष्ठं २५६तमं च । २ ईक्ष्यतां २५७तमं पृष्ठम् । ३ दृश्यतां २५५तमं पृष्ठम् । ४ 'महासन्ताना०' इति ङ–पाठः । ५ 'क्षणोत्पादजलक्षण०' इति घ–पाठः । ६ अवलोक्यतां २५७ तमं पृष्ठम् । ७ 'विकल्पाभ्यां दोषा०' इति घ–पाठः । ८ 'तत्र ये' इति घ–पाठः । ९ 'महासन्ताना०' इति च–पाठः । १० 'सहकारिक्षणै०' इति ख–पाठः । ११ 'भावत्वात् पाश्चात्यपाश्चात्यक्षणैर्हि स्वजनक०' इति ख–पाठः । १२ 'क्षणारशिष्टा' इति क–पाठः । १३ 'उभयत्रापि सहकारार्थयोः उभयत्रापि सहकारि०' इति ख–पाठः ।

(मूलम्)

**प्रथमपक्षे किमन्योन्यापेक्षया, एकत एव तत्सिद्धेः । द्वितीयपक्षे चापेक्षायामपि तदसिद्धेः, प्रत्येकमतत्स्वभावत्वात् ॥**

५ **तेषामत एव प्रत्येकत्वाभावात् अप्रत्येकत्वत एव तत्स्वभावत्वाददोष इति चेत्, न, अनेकतः सर्वथैकभवनासिद्धेः, तद्भिन्नस्वभावत्वात्, अन्यथाऽनेकत्वायोगात् । एवं चेतरेतरस्वभाववैकल्येन तत्रानुपयोगात् । तत्स्वभावविकलस्तद्रूपो न स्यान्नातत्कार्य इति**

---

(स्वो० व्या०)

१० उत्पन्नास्ते प्रत्येकं तथाविधकार्यजननसमर्थस्वभावाः स्युः, न वा तथाविधकार्यजननसमर्थस्वभावा इति द्वयी गतिः । तत्र **प्रथमपक्षे**–प्रत्येकं ते तथाविधकार्यजननसमर्थस्वभावा इत्यस्मिन् **किमन्योन्यापेक्षया?** **एकत एव** तथाविधकार्यजननसमर्थस्वभावात् समग्रात् **तत्सिद्धेः**–तथाविधकार्यसंसिद्धेः; अन्यथा तत्तत्स्वभावत्वानुपपत्तिरिति हृदयम् । **द्वितीयपक्षे च**–प्रत्येकं ते न तथाविधकार्यजननसमर्थस्व-
१५ भावा इत्यस्मिन् । किमित्याह–**अपेक्षायामपि** सत्यां **तदसिद्धेः**–विवक्षितकार्यासिद्धेः । असिद्धिश्च **प्रत्येकमतत्स्वभावत्वात्** समग्राणाम् । नहि प्रत्येकं तैलाजननस्वभावाः सिकताऽणवः परस्परापेक्षयाऽपि तैलं जनयन्ति, तदतत्स्वभावत्वविरोधादिति ॥

**तेषामित्यादि** । **तेषां**–समग्रोत्पन्नानां समग्राणाम् । किमित्याह–**अत एव** हेतोः–**प्रत्येकत्वाभावात्** कारणात् **अप्रत्येकत्वत एव**, अप्रत्येकत्वेनैव समग्र-
२० तयेत्यर्थः, **तत्स्वभावत्वात्**–तथाविधकार्यजननसमर्थस्वभावत्वात् **अदोषः इति चेत्** अनन्तरविकल्पयुगलकोपनीतः । एतदाशङ्क्याह–**न, अनेके**त्यादिना । न–नैतदेवम् । कुत इत्याह–**अनेकतः**–अनेकेभ्यः समग्रेभ्यः **सर्वथैकभवनासिद्धेः**, निरंशभवनासिद्धेरित्यर्थः । असिद्धिश्च **तद्भिन्नस्वभावत्वात्** तेषाम्–अनेकेषां भिन्नस्वभावत्वात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–एवमन-
२५ भ्युपगमे अभिन्नस्वभावत्वाद**नेकत्वायोगात्** । **एवं चे**त्यादि । एवं च–अनेकत्वे सति **इतरेतरस्वभाववैकल्येन**–न य एवैकस्य स्वभावः स एवापरस्य, तद्भेदप्रसङ्गादिति इतरेतरस्वभाववैकल्यं तेन, **तत्र**–सर्वथैकभवनेऽ**नुपयोगात्** नानैकतः सर्वथैकभवनमिति । **तत्स्वभावविकलः** तस्य–विवक्षितस्य कस्यचित् तथाविधकार्यजननसमर्थस्य समग्रस्य स्वभावस्तत्स्वभावः तेन विकलः–रहितोऽपरः समग्र
३० एव तत्स्वभावविकलः सः, **तद्रूपः**–अधिकृतसमग्रान्तररूपो[1] **न स्यात्**–न भवेत् तद्वैकल्येन, **नातत्कार्यः**–न समग्रान्तराकार्यः, किन्तु तत्कार्य एव, समग्रान्तरवत्,

---

१ 'समग्रेतररूपो' इति क–पाठः ।

(मूलम्)

**चेत्, न, तत्स्वभावविकलस्य तत्कार्यत्वविरोधात्, तज्जननैकस्वभावादेव ततस्तदुत्पत्तेः, अन्यतस्तदभावात्, तस्यापि तत्त्वेऽन्यत्वाभाव इति निरूप्यतां सम्यक्; अन्यथा कार्यैकत्वानुपपत्तिः, समग्रस्यैव तस्योत्पत्तेः, अनेकजन्यत्वे च तदयोगात्, सर्वेषां तज्जनकत्वात्, एकभाविनोऽपरभावासिद्धेः, तद्वैयर्थ्यप्रसङ्गात्, समग्रजनकत्वेऽप्येकस्यापि जनकत्वात्, अन्यथा समग्रजनकत्वविरोधात्, भेदशस्तद्भावापत्तेः, अन्यतज्जनकत्वे च कुतस्तत्स्वभाववैकल्यमिति** ५

(स्वो० व्या०) १०

तस्यापि तज्जननस्वभावत्वात्। **इति चेत्**, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। कुत इत्याह—**तत्स्वभावविकलस्य**—विवक्षितसमग्रतथाविधकार्यजननसमर्थस्वभावविकलस्य, समग्रान्तरस्येति प्रक्रमः। किमित्याह—**तत्कार्यत्वविरोधात्**—समग्रान्तरकार्यत्वविरोधात्। विरोधश्च **तज्जननैकस्वभावादेव**—तथाविधकार्यजननैकस्वभावादेव **ततः**—प्रथमसमग्रात्। **तदुत्पत्तेः**—तथाविधकार्योत्पत्तेर**न्यतः**—समग्रान्तरात् १५ **तदभावात्**—अन्योत्पन्नकार्याभावात्, तत एवोत्पन्नं तदिति किमन्यस्मादुत्पादेन? सोऽपि तज्जननस्वभाव इत्येवं तज्जनयतीत्याशङ्कानिरासायाह—**तस्यापि**—[1]अन्यस्य समग्रान्तरस्य **तत्त्वे**—तज्जननैकस्वभावत्वे। किमित्याह—**अन्यत्वाभावः** तत्स्वभावस्य तत्त्वादिति **निरूप्यतां सम्यक्; अन्यथा**—एवमनभ्युपगमे किमित्याह—**कार्यैकत्वानुपपत्तिः**। कुत इत्याह—**समग्रस्यैव**—अखण्डस्यैव **तस्य**—कार्यस्य **उत्पत्तेः**। यदि नामैवं ततः किमित्याह—**अनेकजन्यत्वे च** सति कार्यस्य **तदयोगात्**— २० समग्रोत्पत्त्ययोगात्। अयोगश्च **सर्वेषां**—समग्राणां **तज्जनकत्वात्**—विवक्षितैककार्यजनकत्वात्। किमेवं न समग्रोत्पत्तिरित्याह—**एकभाविन** इति एकस्माद् भवितुं शीलमस्येत्येकभावि कार्यं गृह्यते तस्य, किमित्याह—अपरस्माद् भावो**ऽपरभावः**, भवनं भाव उत्पादस्त**दसिद्धेः**। असिद्धिश्च **तद्वैयर्थ्यप्रसङ्गात्**—अपरवैयर्थ्यप्रसङ्गात्। नैको २५ जनकः समग्रा एव जनका इत्यसद्ग्रहव्यपोहायाह—**समग्रजनकत्वेऽपि** सति। किमित्याह—**एकस्यापि जनकत्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **समग्रजनकत्वविरोधात्** नैकाद्यभावे सामग्र्यमिति भावनीयम्। यदि नामैवं ततः किमित्याह—**भेदशः**—भेदैः **तद्भावापत्तेः**—कार्यभावापत्तेः न तत्रैकोऽप्यजनको न चांशजनक इति कृत्वा। अथान्योऽपि तदेव जनयति यदेकेन ३०

[1] 'असमग्रा०' इति ङ-पाठः।

(मूलम्)

यत्किञ्चिदेतत् ॥

हेतुभेदात् फलभेद इति चापन्यायः। तथा च सत्ययमेव खलु भेदो ५ भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्चेत्युक्तिमात्रम्, भावार्थशून्यत्वात्, सामग्र्ययोगात् समग्रेभ्यस्तद्भेदाभेदासिद्धेः, तत्त्वतः समग्रमात्रत्वात्। तदुपादानादिभेदेन तद्भेद इति

(स्वो० व्या०)

जनितमित्यत्राह–अन्यतज्जनकत्वे च–अन्यस्यापि समग्रस्य तज्जनकत्वे–समग्रान्तर-[1] १० जन्यजनकत्वे चाभ्युपगम्यमाने। किमित्याह–कुतस्तत्स्वभाववैकल्यं–समग्रान्तरस्वभाववैकल्यम्? नैव, तज्जन्यजनकत्वान्यथानुपपत्तेः। उक्तं च–

"उत्पद्यते यदेकस्मादनंशं नान्यतोऽपि तत्।
समग्रभावे सामग्र्या नैकं कार्यं सुनीतितः ॥"[2]

इति यत्किञ्चिदेतत्–'[3]तत्स्वभावविकलस्तद्रूपो न स्यान्नातत्कार्यः' इति ॥

१५ दोषान्तरमाह–हेतुभेदात् सकाशात् फलभेद इति चापन्यायः, [4]तथा नैकैकभावेन। तथा च सति अयमेव खलु भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासो भेदः कारणभेदश्च–भेदहेतुरित्युक्तिमात्रम्। कुत इत्याह–भावार्थशून्यत्वात्। भावार्थशून्यत्वं च सामग्र्ययोगात्। अयोगश्च समग्रेभ्यः सकाशात् तद्भेदाभेदासिद्धेः तस्याः–सामग्र्या भेदा-२० भेदाभ्याम[5]सिद्धेः तत्त्वतः–परमार्थतः–समग्रमात्रत्वात् सामग्र्या इति। तदुपादानादिभेदेन तेषां–समग्राणामुपादाननिमित्तभेदेन [6]तद्भेदः–सामग्रीभेदः।

(विवरणम्)

(१२-१३) उत्पद्यते यदेकस्मादनंशं नान्यतोऽपि तत्।
समग्रभावे सामग्र्या, नैकं कार्यं सुनीतितः ॥

२५ इति। उत्पद्यते यत्–ज्ञानादि कार्यमेकस्मात्–समग्रात्। कीदृशमित्याह––अनंशं–निरंशं न–नैवान्यतोऽपि–द्वितीयात् समग्रात् तत्। ततः किं सिद्धमित्याह–समग्रस्य–परिपूर्णस्य कार्यस्यैकस्मादपि समग्राद् भावे सति सामग्र्याः सकाशान्न–नैवैकं कार्यं यावन्तः समग्रा जनकास्तावन्ति ज्ञानादिकार्याणि प्राप्नुवन्तीत्यर्थः। सुनीतितः, यतः स्वभावतो जातमेकं नान्यत् ततो भवेदित्यादि शोभनन्यायात् ॥

१ 'समग्रान्तरजनकत्वे' इति घ–पाठः। २ अनुष्टुप्। ३ प्रेक्ष्यतां २६०तमं पृष्ठम्। ४ 'तथानेकैक०' इति घ–पाठः। ५ 'मसिद्धिः तत्त्वतः' इति क–पाठः। ६ 'तद्भेदः तत्सामग्री०' इति क–पाठः।

(मूलम्)

**चेत्, न, तत्स्वभावभेदमन्तरेण[1] तदसिद्धेः, तद्भेदे चानेकस्वभावताऽपराधः, अन्यथोभयोस्तुल्यतापत्तेः, तत्कार्ययोरपि तुल्यता, सामस्त्येनोभयजननस्वभावादुभयादुभयप्रसूतेः, तत्तथात्वकल्पनायास्तद्वैचित्र्यापादनेनायोगादिति प्रपञ्चितमेतदन्यत्र, नेह प्रतन्यते। इति परमते सहकारार्थासिद्धेरशोभनस्तदुपन्यास इति परिचिन्त्यतामेतत् ॥** ५

(स्वो० व्या०)

तथाहि–रूपालोकादिसामग्र्यामेकत्र रूपमुपादानमालोकादयो निमित्तम्, अपरत्रालोकादय उपादानं रूपं निमित्तमिति सामग्रीभेदः। इति चेत्, एतदाशङ्क्याह–नेत्यादि। न–नैतदेवम्। कुत इत्याह–**तत्स्वभावभेदमन्तरेण** तेषां–समग्राणां स्वभावभेदमन्तरेण **तदसिद्धेः**–सामग्रीभेदासिद्धेः। उक्तं च— १०

"रूपं येन स्वभावेन रूपोपादानकारणम्।
निमित्तकारणं ज्ञाने तत् तेनान्येन वा भवेत् ॥[4] १५
यदि तेनैव विज्ञानं बोधरूपं न युज्यते।
अथान्येन बलाद् रूपं द्विस्वभावं प्रसज्यते ॥"[5]

इति। **तद्भेदे च**–स्वभावभेदे च समग्राणाम् **अनेकस्वभावताऽपराधः** महानयमेकान्तैकस्वभाववादिनः। **अन्यथेत्यादि**। अन्यथा–एवमनभ्युपगमे **उभयोः**–समग्रयोरिति सामग्र्युपलक्षणम्। किमित्याह–**तुल्यतापत्तेः** कारणात् **तत्कार्ययोरपि**–रूपालोकादिरूपयोस्तुल्यता। कुत इत्याह–**सामस्त्येनोभयजननस्वभावात् उभयात्**–एकस्वभावात् समग्रोभयाद् **उभयप्रसूतेः**–उभयभावात्। **तत्तथात्वेत्यादि**। तस्य–अधिकृतस्वभावद्वयस्य **तथात्वकल्पनायाः**–भिन्नजातीयोभयजननैकस्वभावत्वकल्पनायाः **तद्वैचित्र्यापादनेन**–अधिकृतस्वभावद्वयवैचित्र्यापादनेन हेतुना **अयोगात्**। तथाहि–"नाचित्रात् स्वभावद्वयाच्चित्रद्वयभावः[6], भवन्नपि द्वयभावोऽचित्रादेकस्वभावतया तुल्य एव स्यात्" **इति प्रपञ्चितमेतदन्यत्र**–अनेकान्तसिद्धौ, **नेह प्रतन्यते**। **इति**–एवं[7] च **परमते सहकारार्थासिद्धेः** कारणात् **अशोभनस्तदुपन्यासः**–सहकार्युपन्यास इति[8] **परिचिन्त्यतामेतत्** ॥ २० २५

१ 'नैतदसिद्धे०' इति ग–पाठः। २ 'वाऽनेक०' इति ग–पाठः। ३ 'तेन' इत्यधिकः क–पाठः। ४–५ अनुष्टुप्। ६ 'भावोऽभवन्नपि' इति क–पाठः। ७ 'एवं पर०' इति घ–पाठः। ८ 'इति–एवं चिन्त्य०' इति क–पाठः।

(मूलम्)

भिन्नविकल्पसम्भवाभावोऽपि न्यायतस्तदवस्थ एव, तदनुभव-
स्यानेकशक्तिसहकारित्वविरोधात्, एकस्वभावत्वात्[1] तस्य चानि-
५ त्याद्यन्यतमविकल्पशक्तिसहकारित्वतत्त्वात्, अन्यथा तदेकस्व-
भावत्वासिद्धेः, एकान्तैकस्वभावत्वे च कथमस्य नित्यादिविकल्प-
शक्तिसहकारिभाव इति चिन्त्यम्। न हि नीलविज्ञानजन्मसहकारि-
स्वभावं नीलं कदाचिद् रसादिविज्ञानजन्मसहकारितां प्रतिपद्यते,
तत्तत्त्वविरोधादिति ॥

१० अनेन अनेकशक्तिसहकार्येकस्वभावत्वकल्पना प्रत्युक्ता, अनेक-
गर्भस्य तस्यैकत्वायोगात्, अतिप्रसङ्गात्, निबन्धनव्यवस्थाऽभावात्,
विश्वस्यैकनिबन्धनतापत्तेः[2]। इति [3]'स्वलक्षणदर्शनाहितवासनाकृत-

(स्वो० व्या०)

भिन्नविकल्पसम्भवाभावोऽपि निमित्तान्तराभावेन पूर्वोक्तो[4] न्यायतः
१५ तदवस्थ एव। कुत इत्याह–तदनुभवस्य–प्रस्तुतस्वलक्षणानुभवस्य अनेक-
शक्तिसहकारित्वविरोधात्। विरोधश्च एकस्वभावत्वात्। तस्य च–एकस्य
स्वभावस्य अनित्याद्यन्यतमविकल्पशक्तिसहकारित्वतत्त्वात् सहकारित्व-
स्वभावत्वात्, अन्यथा–एवमनभ्युपगमे तदेकस्वभावत्वासिद्धेः, तस्य–
अनुभवस्यैकस्वभावत्वासिद्धेः, चित्रशक्तिसहकारिभावेन। एकान्तैकस्वभावत्वे
२० च कथमस्य–अनुभवस्य नित्यादिविकल्पशक्तिसहकारिभाव इति
चिन्त्यम्। नैव अनित्यादिविकल्पशक्तिं विहाय सहकारिभाव इत्यर्थः। अमुमेवार्थं
निदर्शनेनाह न हीत्यादिना। न यस्मान्नीलविज्ञानजन्मसहकारिस्वभावं
नीलं कदाचिद् रसादिविज्ञानजन्मसहकारितां प्रतिपद्यते। किं न
प्रतिपद्यत इत्याह–तत्तत्त्वविरोधात् तस्य–नीलस्य नीलविज्ञानजन्मसहकारिस्व-
२५ भावत्वं तत्त्वं तद्विरोधादिति ॥

अनेनानेकशक्तिसहकार्येकस्वभावत्वकल्पना प्रत्युक्ता। कथमित्याह-
अनेकगर्भस्य तस्य–अधिकृतस्वभावस्य एकत्वायोगात्। अनेकगर्भश्चानेक-
शक्तिसहकार्येकस्वभाव इति परिभावनीयम्, योगेऽप्यतिप्रसङ्गात् सर्वस्य सर्वसह-
कारिकल्पनया। ततश्च निबन्धनव्यवस्थाऽभावात् 'नेदमस्य कारणम्' इति। व्य-
३० वस्थाभावे च विश्वस्यैकनिबन्धनतापत्तेः 'अनेककार्यकरणैकस्वभावत्वादेकस्य'

१ 'भावत्वाद् वा तस्य' इति क–पाठः। २ 'निबन्धनापत्तेः' इति क–पाठः। ३ द्रष्टव्यं २४९तमं पृष्ठं २५०तमं च। ४ 'पूर्वोक्तन्यायत०' इति क–पाठः।

(मूलम्)

**विप्लवरूपा सर्वे एव विकल्पाः' इति वचनमात्रमेव ॥**

**तत्प्रतिबद्धजन्मत्वासिद्धेश्च। तथाहि–कस्तेषां वस्तुना प्रतिबन्ध इति वाच्यम्। न तादात्म्यम्, [1]तद्देशादिभेदात् अनभ्युपगमाच्च। न तदुत्पत्तिः, तदसरूपत्वात् तदनन्तराभावाच्च। पारम्पर्येण तत्तदुत्पत्तिरिति चेत्, न, विहितोत्तरत्वात्, तत्तद्भावेऽपि तन्निमित्तत्वाविशेषात्, नित्यादिविकल्पेभ्योऽपि तन्निश्चितिसिद्धेः, वस्तुनस्तथात्वप्रसङ्गात्, अनेकान्तापत्तेरिति। न च न नित्यादिविकल्पानामपि**  ५

(स्वो० व्या०)  १०

इत्यपि वक्तुं शक्यत्वात्। इत्यनन्तरोदिता कल्पना प्रत्युक्तेति क्रियायोगः। इति–एवं '[2]**स्वलक्षणदर्शनाहितवासनाकृतविप्लवरूपाः सर्वे एव विकल्पाः' इति वचनमात्रमेव,** अभिप्रेतार्थशून्यत्वादिति गर्भः ॥

इहैवोपपत्त्यन्तरमाह–**तत्प्रतिबद्धजन्मत्वासिद्धेश्च**–वस्तुप्रतिबद्धजन्मत्वासिद्धेश्च, विकल्पानामिति प्रक्रमः। **तथाही**त्युपप्रदर्शने। **कस्तेषाम्**–अधिकृतविकल्पानां **वस्तुना** सह **प्रतिबन्ध इति वाच्यम्। न तादात्म्यं** प्रतिबन्धः, **तद्देशादिभेदात्**–वस्तुदेशादिभेदात्। 'आदि'शब्दात् काल-स्वभावादिग्रहः। **अनभ्युपगमाच्च**। न हि परेणापि वस्तु-विकल्पयोस्तादात्म्यमभ्युपगम्यते। **न तदुत्पत्तिः** प्रतिबन्धः, विकल्पानां वस्तुना। कुत इत्याह–**तदसरूपत्वात्**–वस्त्वसरूपत्वाद् विकल्पानाम्। उपपत्त्यन्तरमाह–**तदनन्तराभावाच्च**–वस्त्वनन्तराभावाच्च कारणादिति। **पारम्पर्येण**–स्वलक्षणज्ञानव्यव[3]धानेन **तत्तदुत्पत्तिः** तस्मात्–वस्तुनो विकल्पोत्पत्तिः। **इति चेत्**, एतदाशङ्क्याह–**न, विहितोत्तरत्वात्** परदर्शने निमित्तान्तराभावेन विहितोत्तरमेतत् '[4]कथं वा निर्विकल्पकत्वेनाभिन्नाद् भिन्नविकल्पसम्भवः' [5]इत्यादिना ग्रन्थेन। इतश्चैतन्न–**तत्तद्भावेऽपि**–वस्तुनो विकल्पभावेऽपि **तन्निमित्तत्वाविशेषात्**–वस्तुनिमित्तत्वाविशेषात् **नित्यादिविकल्पेभ्योऽपि** सकाशात् **तन्निश्चितिसिद्धेः**–वस्तुनिश्चितिसिद्धेः कारणात्। किमित्याह–**वस्तुनस्तथात्वप्रसङ्गात्**–नित्यत्वादिप्रसङ्गात् **अनेकान्तापत्तेरिति,** न नैतदेवमिति क्रिया। **न चे**त्यादि। न च **न नित्यादिविकल्पानामपि**  १५ २० २५

१ 'तद्देशभेदात्' इति ग–पाठः। २ प्रेक्ष्यतां २४९तमं पृष्ठं २५०तमं च। ३ 'धानजेन' इति घ–पाठः। ४ द्रष्टव्यं २५४तमं पृष्ठम्। ५ 'इत्यादिमन्थेन' इति ङ–पाठः।

(मूलम्)

तत्प्रतिबन्धः, तेषामपि तद्भेदप्रसवाभ्युपगमात्, 'नान्येषाम्, तद्भेद-प्रसवे सत्यपि' इत्याद्युपन्यासात्। तद्भेदप्रसवश्चार्थभेदादुत्पादः। ५ सँ चानित्यादिविकल्पानामिवामीषां तत इति तत् कथं न तेभ्यस्त-न्निश्चितिः ?॥

ननूक्तमत्र[3]—'यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्सामान्य-ग्रहणेन विशेषान्तरसमारोपात्' इति उक्तमिदम्, अयुक्तं तूक्तम्, इतरत्राप्युक्तन्यायतुल्यत्वात्, 'अनित्यादिविकल्पानामपि नित्यादि-१० रूपयथादृष्टविशेषनिश्चयपरित्यागेनावस्थाभेदग्रहणतो विशेषान्तर-समारोपेण प्रवृत्तेः' इत्यपि वक्तुं शक्यत्वात्। नित्यस्य भेदाभेद-

(स्वो० व्या०)

तत्प्रतिबन्धः—वस्तुप्रतिबन्धः, किन्तु प्रतिबन्ध एव। कुत इत्याह—तेषामपि—नित्यादिविकल्पानां तद्भेदप्रसवाभ्युपगमात्—वस्तुभेदप्रसवाभ्युपगमात्। अभ्यु-१५ पगमश्च 'नान्येषां तद्भेदप्रसवे सत्यपि' इत्याद्युपन्यासात् प्राक्[4]। तद्भेद-प्रसवश्च कः ?। उच्यते—अर्थभेदादुत्पादः, स्वलक्षणादित्यर्थः। सँ चेत्यादि। स च अनित्यादिविकल्पानामिवामीषां—नित्यादिविकल्पानां तत इति—वस्तुनः तत्—तस्मात् कथं न तेभ्यः—नित्यादिविकल्पेभ्यः तन्निश्चितिः—वस्तु-निश्चितिरिति ?॥

२० आह—ननूक्तमत्र प्राक्[6]—'यथादृष्टविशेषानुसरणं परित्यज्य किञ्चित्-सामान्यग्रहणेन विशेषान्तरसमारोपात्' न तेभ्यस्तन्निश्चितिरिति। एत-दाशङ्क्याह—उक्तमिदम्, अयुक्तं तूक्तम्। कथमित्याह—इतरत्रापि, प्रक्रमाद् वस्त्वनित्यत्वादौ, उक्तन्यायतुल्यत्वात् यथादृष्टविशेषानुसरणं परित्यज्येत्यादिः उक्तो न्यायः, अस्य तुल्यत्वात्। तुल्यत्वमेवाह अनित्यादिविकल्पानामपी-२५ त्यादिना। तत्र 'यथादृष्टविशेषानुसरणं परित्यज्य' इत्यादि भङ्ग्यन्तरेण अधिकृतपक्ष-विपक्षे योजयति—अनित्यादिविकल्पानामपीति। न केवलं नित्यादिविकल्पानाम्, नित्यादिरूपयथादृष्टविशेषनिश्चयपरित्यागेन नित्यादिरूपस्य यथादृष्टवि-शेषो नित्यादिरूप एव तन्निश्चयपरित्यागेन। परित्यागश्च अवस्थाभेदग्रहणतः—अवस्थाभेदग्रहणात् कारणाद् विशेषान्तरसमारोपेण—अभेदसमारोपेण प्रवृत्तेः ३० अनित्यादिविकल्पानामपि। इत्यपि—एवमपि वक्तुं शक्यत्वात्, नात्र जिह्वा-

१ द्रष्टव्यं २५०तमं पृष्ठम्। २ 'स चेदनित्या०' इति ग—पाठः। ३ २५०तमे पृष्ठे। ४ २५०तमे पृष्ठे। ५ 'स चेदित्यादि विकल्पाना०' इति ङ—पाठः। ६ २५०तमे पृष्ठे।

( मूलम् )

**विकल्पद्वारेणावस्थाभेद एवायुक्त इति चेत्, न, ततस्तद्भेदाभेदविकल्पाप्रवृत्तेः, अवस्थानामुत्प्रेक्षितत्वात् तथातत्त्वानामपि समचित्रनिम्नोन्नतसमारोपवत् तथासमारोपहेतुत्वाविरोधः, आन्तरदोषसामर्थ्यात् तस्य चासद्दर्शनवासनारूपत्वात्, नित्यप्रमातुरपि तत्स्वभावत्वतोऽनित्यस्याभेदवासनावत् तथावासनोपपत्तेः। इति इतरत्राप्युक्तन्यायतुल्यत्वमिति ॥** ५

**किञ्च 'यथादृष्टविशेषानुसरणं परित्यज्य' इत्यत्र 'तथादृष्टो नान्यथा' इत्यत्र न प्रमाणम्। प्रत्यक्षमेवात्र प्रमाणमिति चेत्, न तत्** १०

---

( स्वो० व्या० )

न्तरे डोङ्गरः। **नित्यस्येत्यादि**। नित्यस्य वस्तुनो **भेदाभेदविकल्पद्वारेण,** एतन्मुखेनेत्यर्थः, **अवस्थाभेद एवायुक्तः**–अघटमानकः। तथाहि–तास्ततो भेदेन वा स्युरभेदेन वा। [1]भेदे अस्य ता इति कः सम्बन्धः ?। [2]अभेदेऽवस्थातैवासौ अवस्था वा इति नित्यस्यावस्थाभेदाभावः। **इति चेत्,** एतदाशङ्क्याह–**नेत्यादि**। १५ **न**–नैतदेवं **ततः**–नित्याद् वस्तुनः **तद्भेदाभेदविकल्पाप्रवृत्तेः** तासाम्–अवस्थानां भेदाभेदविकल्पाप्रवृत्तेः। अप्रवृत्तिश्च **अवस्थानामुत्प्रेक्षितत्वात्,** अवस्तुत्वादित्यर्थः, **तथातत्त्वानामपि**–उत्प्रेक्षिततद्भावानामपि, अवस्थानामिति प्रक्रमः। **समचित्रनिम्नोन्नतसमारोपवदि**ति निदर्शनम्। समचित्रे निम्नोन्नतसमारोप इति विग्रहः, तद्वत्। **तथासमारोपः**–भेदसमारोपस्तद्धेतुत्वा- २० **विरोधः** तथातत्त्वानामप्यवस्थानामिति। कुत इत्याह–**आन्तरदोषसामर्थ्यात्** कारणात् **तस्य च**–आन्तरदोषस्य **असद्दर्शनवासनारूपत्वात्** असद्दर्शनवासना–अनित्यादिदर्शनवासना तद्रूपत्वात्, **नित्यप्रमातुरपि तत्स्वभावत्वतः**–असद्दर्शनवासनास्वभावत्वेन **अनित्यस्य** प्रमातुर**भेदवासनावदि**ति निदर्शनम्, 'तत्स्वभावत्वतः' इति योज्यते, **तथावासनोपपत्तेः**–भेदप्रकारेण वासनोपपत्तेः २५ **इति**–एवम**ितरत्रापि**–[3]वस्त्वनित्यत्वादौ **उक्तन्यायतुल्यत्वमिति** निगमननिदर्शनमेतत् ॥

इहैव दूषणान्तरमाह **किञ्चेत्यादिना**। किञ्च **यथादृष्टविशेषानुसरणं परित्यज्येत्यत्र तथादृष्टो**ऽनित्यादिरूपत्वेन **नान्यथा**–[4]न नित्यादिरूपत्वेन इत्यत्र

---

१ 'भेदे भेदस्य ताः' इति क–पाठः; ङ–पाठस्तु 'भेदे तस्य ता' इति। २ 'अभेदेनावस्थानैवासौ' इति क–पाठः। ३ 'वस्तुनित्यत्वादौ' इति ङ–पाठः। ४ 'तन्नित्यादि' इति क–पाठः।

( मूलम् )

**कस्यचिन्निश्चायकम्, तथ्यमपि गृह्णाति न तन्निश्चयेन। किं तर्हि? तत्प्रतिभासेन। स चैवम्भूत एव, नान्यथेति ऋते अतीन्द्रियार्थ-**
**५ दर्शितामतिशयश्रद्धां वा न विनिश्चयोपायः। न तदेव, सम्प्रमुग्ध-मूककल्पत्वात्। नानुमानम्, तथाविधलिङ्गासिद्धेः, न चान्यत्, अनभ्युपगमात्, अनित्यतादिरूपस्यैव वस्तुनि विद्यमानत्वात्। स एवम्भूतो नान्यथेति चेत्, कुतस्तत्रास्यैव विद्यमानतासिद्धिरिति वाच्यम्। तत्तथाप्रत्यक्षप्रतिभासादेवेति चेत्, सोऽयमितरेतराश्रय-**
**१० दोषोऽनिवारितप्रसरः। कथं वा तत्तत्प्रतिभासत्वे तन्नीलत्वादिवत्**

( स्वो० व्या० )

**न प्रमाणं**—नास्मिन् विषये प्रत्यक्षं प्रवर्तते, नाप्यनुमानमित्यर्थः। **प्रत्यक्षमे-वात्र**—तथादृष्ट इति विषये **प्रमाणम्। इति चेत्**, एतदाशङ्क्याह—**न तदित्यादि**। न तत्—प्रत्यक्षं **कस्यचिद्** वस्तुनो **निश्चायकं तथ्यमपि** अर्थविशेषं **गृह्णाति न**[1]
१५ **तन्निश्चयेन**—एवमेतदित्येवंरूपेण। **किं तर्हि? तत्प्रतिभासेन**—तदाकारेण, ग्राह्याकारेणेत्यर्थः। **स चेत्यादि**। स च—प्रतिभास **एवम्भूत एव**—अनित्यादिरूप एव, **नान्यथेति** न नित्यादिरूप **इति**—एवं **ऋते**—विना **अतीन्द्रियार्थदर्शितां अतिशयश्रद्धां वा**[2] विचारनिरपेक्षां **न विनिश्चयोपायः। न तदेव**—प्रत्यक्षं विनिश्चयोपायः। कुत इत्याह—**सम्प्रमुग्धमूककल्पत्वात्** तस्य। सम्प्रमुग्धो हि
२० मूकः स्वप्रतिभासमपि न विनिश्चिनोतीति लौकिकमेतत्, अतोऽत्र न प्रत्यक्षमेव प्रमाणमिति। अनुमानं तर्हि भविष्यतीत्याशङ्कानिरासायाह—**नानुमानम्**, अत्र प्रमाणमिति प्रक्रमः। कुत इत्याह—**तथाविधलिङ्गासिद्धेः**—स एवम्भूत एवे-त्याद्यर्थाविनाभूतलिङ्गासिद्धेः। **न चान्यत्**, अत्र मानमिति प्रक्रमः। कुत इत्याह—**अनभ्युपगमात्** अन्यस्य मानस्य। **अनित्यत्वादिरूपस्यैव वस्तुनि** रूपादौ
२५ **विद्यमानत्वात्** कारणात्। **सः**[3]—तत्प्रतिभास **एवम्भूतः**—अनित्यादिरूप एव, **नान्यथेति** न नित्यादिरूपः। **इति चेत्**, एतदाशङ्क्याह—**कुतस्तत्र**—वस्तुनि **अस्यैव**—अनित्यत्वादिरूपस्यैव **विद्यमानतासिद्धिरिति**—एतद् **वाच्यम्। तत्तथेत्यादि**। तस्मिन्—वस्तुनि तथा—अनित्यादिरूपतया प्रत्यक्षप्रतिभासः—प्रत्यक्षाकारस्तत्तथाप्रत्यक्ष**प्रतिभासः** तस्मा**देवेति चेत्**, तत्रास्यैव विद्यमानता-
३० सिद्धिरिति। एतदाशङ्क्याह—**सोऽयमितरेतराश्रयदोषोऽनिवारितप्रसरः।** तथाहि—अनित्यत्वादिरूपता वस्तुनः प्रत्यक्षप्रतिभासबलेन सोऽपि तथा वस्तुनोऽ-

१ 'तन्न निश्चयेन' इति क–पाठः। २ 'वा न विनि०' इति घ–पाठः। ३ 'स प्रतिभास' इति घ–पाठः।

( मूलम् )

**तदनिश्चयः ?। किञ्चित्सामान्यग्रहणेन विशेषान्तरसमारोपादिति चेत्, किमत्यन्तभेदिनां सामान्यम् ?। सदृशापरापरोत्पत्तिरिति चेत्, प्रतिनियतैकग्राहिज्ञानतत्त्ववादे कुतोऽस्याः खल्ववगमः ?।** ५ **न हि [1]कथञ्चिदेकस्यानेकग्राहिणो विज्ञानस्याभावे केनचित् सदृशः अयमिति भवति, अतिप्रसङ्गात्, रूपग्रहणस्यापि रसग्रहणसदृशतापत्तेः। एवं च व्यवस्थानुपपत्तिः। न रूपज्ञानं रसज्ञानोपादानम्, अतोऽयमदोष इति चेत्, न न भवति, क्वचित् तथाभावोपपत्तेः,**

( स्वो० व्या० )　१०

नित्यत्वादिरूपतयेतीतरेतराश्रयदोषः। **कथं** **वे**त्यादि। कथं वा **तस्य**–प्रत्यक्षस्य **तत्प्रतिभासत्वे,** प्रक्रमादनित्यत्वाद्याकारत्वे, **तन्नीलत्वादिवत्** तस्य–वस्तुनो नीलत्वादिवदिति निदर्शनं व्यतिरेकेण, **तदनिश्चयः**–अनित्यत्वाद्यर्थानिश्चयः। **किञ्चित्सामान्यग्रहणेन,** अपरसदादिग्रहणेनेत्यर्थः, **विशेषान्तरसमारोपात्**–[2]सर्वसदादिसमारोपादिति **चेत्** तदनित्यत्वाद्यनिश्चयः। एतदाशङ्क्याह– १५ **किमत्यन्तभेदिनां सामान्यम्?।** वस्तूनामिति प्रक्रमः। **सदृशापरापरोत्पत्तिरिति चेत्,** प्रस्तुतसामान्यम्। एतदाशङ्क्याह–**प्रतिनियतैकग्राहिज्ञानतत्त्ववादे** क्षणिकत्वेन **कुतोऽस्याः**–सदृशापरापरोत्पत्तेः **खल्ववगमः?।** नैवेत्यर्थः। एतदेव भावयति **न ही**त्यादिना। न हि **कथञ्चिदेकस्यानेकग्राहिणो विज्ञानस्याभावे** अन्वयिन इत्यर्थः, **केनचित् सदृशोऽयं,** प्रक्रमाद् भाव २० **इति भवति।** किं न भवतीत्याह–**अतिप्रसङ्गात्।** एनमेवाह–[3]**रूपग्रहणस्यापि रसग्रहणसदृशतापत्तेः** तेन तद्ग्रहणाविशेषादिति भावः। **एवं च**–अतिप्रसङ्गे सति **व्यवस्थानुपपत्तिः। न रूपज्ञानं रसज्ञानोपादानं** यथा रूपज्ञानोपादानमेव, **अतोऽयम्**–अतिप्रसङ्गदोषो**ऽदोषः। इति चेत्,** एतदाशङ्क्याह–**न न भवति** रूपज्ञानं रसज्ञानोपादानम्, किन्तु भवत्यपि [4]**क्वचित्** सामा- २५ न्येन **तथाभावोपपत्तेः**–रूपज्ञानस्य रसज्ञानोपादानभावोपपत्तेः। एतदेवाह–

( विवरणम् )

(१४) **अपरसदादिग्रहणेने**ति। अपरस्य–स्वलक्षणव्यतिरिक्तस्य सदादेः–सत्त्वादेः सामान्यस्य ग्रहणं–विकल्पनं तेन॥

(१५) **सर्वसदादिसमारोपादि**ति। सर्वं सत् इत्यादिनोल्लेखेन समारोपोऽविद्य- ३० मानस्य सत्त्वादेः सामान्यस्य विकल्पेन योजना तस्मात्॥

१ 'कथं चैकस्या०' इति क–पाठः। २ 'सर्वत्र सदादि०' इति ङ–पाठः। ३ 'रूपादिग्रहण०' इति क–ङ–पाठः। ४ 'किञ्चित्' इति क–पाठः।

(मूलम्)

**रूपज्ञानसमनन्तरभाविनो रसज्ञानस्य तदनुपादानत्वे अनुपादानत्वप्रसङ्गात्। किं वा तत्तथाभावाभावेऽत्यन्तासत एव भवतः ५ अस्योपादानचिन्तया? तत्तथाभावे[1] चानिवारितोऽन्वयः। एतेन सदा सत्त्वोपलम्भः प्रत्युक्तः, तत्त्वतस्तस्यापि सादृश्यनिबन्धनत्वात् तस्य चोक्तवद् ग्रहणायोगात्, आन्तरतद्विकल्पबीजस्याप्रमाणत्वात्, तथापि तत्कल्पनायाश्चेतरत्रापि तुल्यत्वादित्युक्तप्रायम्॥**

**एवं प्रदीपप्रभोदाहरणं सर्वत्रगत्वादनुदाहरणमेव। न च दीप-**

१० (स्वो० व्या०)

**रूपज्ञानसमनन्तरभाविनो रसज्ञानस्य तदनुपादानत्वे**—रूपज्ञानानुपादानत्वे **अनुपादानत्वप्रसङ्गात्**। न तदपरं[2] ज्ञानमुपादानम्, न च न भवति रूपज्ञानानन्तरं रसज्ञानमिति भावनीयम्। **किं वा तत्तथाभावाभावे** तस्य—रूपज्ञानस्य तथा—रसज्ञानतया भावाभावे अन्वयानभ्युपगमेन **अत्यन्तासत एव** १५ **भवतोऽस्य**—रसज्ञानस्य—**उपादानचिन्तया** परमार्थतः सर्वत्रासत् सद् भवतीति कृत्वा? **तत्तथाभावे च** तस्य—रूपज्ञानस्य तथाभावे च—रसज्ञानभावे चाभ्युपगम्यमाने सति। किमित्याह—**अनिवारितोऽन्वयः**, बलादापद्यत इत्यर्थः। **एतेने**-त्यादि। एतेन—अनन्तरोदितेन **सदा सत्त्वोपलम्भः प्रत्युक्तः**। कथमित्याह—**तत्त्वतः**—परमार्थतः **तस्यापि**—सदासत्त्वोपलम्भस्य **सादृश्यनिबन्धनत्वात्**। २० यदि नामैवं ततः किमित्याह—**तस्य च**—सादृश्यस्य **उक्तवत्**—यथोक्तं—'[3]प्रतिनियतैकग्राहिज्ञानतत्त्ववादे' इत्यादि, तथा **ग्रहणायोगात्, आन्तरतद्विकल्पबीजस्य**—असद्दर्शनवासनाख्यनित्यत्वादिविकल्पबीजस्य **अप्रमाणत्वात्** नैतद्ग्राहकं प्रमाणमस्ति, **तथापि**—प्रमाणाभावेऽपि **तत्कल्पनायाश्च**—आन्तरतद्विकल्पबीजकल्पनायाश्च, **इतरत्रापि**, प्रक्रमादनित्यत्वादौ, **तुल्यत्वादित्युक्तप्रायं**— २५ प्रायेणोक्तम्[4] 'आन्तरदोषसामर्थ्यात्' इत्यादिना ग्रन्थेन॥

पूर्वपक्षान्तरमधिकृत्याह—**एवमित्यादि**। एवम्—उक्तनीत्या **प्रदीपप्रभोदाहरणं** परप्रणीतं[5] **सर्वत्रगत्वात्** कारणात् विपक्षेऽप्युपनयकरणेन किमित्याह—**अनु-**

(विवरणम्)

(२७) **विपक्षेऽप्युपनयकरणेने**ति। एतदपि वक्तुं शक्यत एव—यथा प्रदीपस्य ३० प्रभायां मणिज्ञानं भ्रान्तम्, एवं नित्यस्वभावे वस्तुनि ये अमी अनित्यादयो विकल्पास्ते भ्रान्ता एवेति॥

१ 'भावे वाऽनिवारितो' इति ग-पाठः। २ 'तदा परं' इति क-ङ-पाठः। ३ द्रष्टव्यं २६९तमं पृष्ठम्। ४ २६७तमे पृष्ठे। ५ 'परप्रतीतं' इति ङ-पाठः।

(मूलम्)

**प्रभाया मण्यर्थेन प्रतिबन्धः, अस्ति च मणिप्रभायाः, न चैवम-
नित्येतरादिविकल्पानां केषाञ्चिदेव वस्तुना प्रतिबन्धो नान्येषामिति
वैषम्यमपि दार्ष्टान्तिकेन। अयोनिशोमनस्कारपूर्वकत्वान्नित्यादि- ५
विकल्पानां न वैषम्यमिति चेत्, न, अस्यापि तुल्यत्वात्, अनि-
त्यादिविकल्पानामप्येवम्भूतभावस्य वक्तुं [१]शक्यत्वात्, उभयत्र
तन्नियामकत्वानुपपत्तेर्निबन्धाविशेषादिति, अतः स्थितमेतत्—
'[२]अखिलविकल्पज्ञानभ्रान्ततावादिनश्च तत्सामर्थ्योत्थं वचनमपि
तादृगेव' इति दुःस्थिता तत्त्वनीतिः ॥** १०

(स्वो० व्या०)

**दाहरणमेव**। अभ्युच्चयमाह **न चे**त्यादिना। न च **दीपप्रभाया मण्यर्थेन**
सह **प्रतिबन्धोऽस्ति, अस्ति च मणिप्रभाया** इत्युभयसिद्धमेतत्। **न चैव-
मनित्येतरादिविकल्पानाम्**—अनित्य-नित्यादिविकल्पानाम्, **केषाञ्चिदेव**—
अनित्यादिविकल्पानामेव **वस्तुना प्रतिबन्धो नान्येषां**—नित्यादिविकल्पानाम्। १५
किं तर्हि? अविशेषेण, '[३]नान्येषां तद्भेदप्रसवे सत्यपि' इत्यादिवचनात् **इति**—एवं **वैष-
म्यमपि दार्ष्टान्तिकेन । अयोनिशोमनस्कारपूर्वकत्वात् नित्यादि-
विकल्पानां** सर्वथा वस्तुशून्यत्वादित्यर्थः, **न वैषम्यमिति चेत्** दार्ष्टान्तिकेन।
एतदाशङ्क्याह—**न, अस्यापि तुल्यत्वात्**। एतदेवाह—**अनित्यादिविकल्पाना-
मपि** पराभिमतानां **एवम्भूतभावस्य**—अयोनिशोमनस्कारपूर्वकत्वभावस्य **वक्तुं** २०
**शक्यत्वात्** । तथाहि—अनित्यादिविकल्पा एवायोनिशोमनस्कारपूर्वका वस्त्वसं-
स्पर्शिनः सतोऽसत्त्वानापत्त्या असतश्च सद्भावविरोधेन वस्तुन एवैवम्भूतस्यासम्भवा-
दिति बाधकप्रमाणवृत्तिः, अतः स्थितमेतत्—'अनित्यादिविकल्पानामेवम्भूतभावस्य वक्तुं
शक्यत्वात्' इति। **[४]उभयत्रे**त्यादि। उभयत्र-नित्यादिविकल्पपक्षेऽनित्यादिविकल्पपक्षे
च **तन्नियामकत्वानुपपत्ते**स्तस्य—अयोनिशोमनस्कारपूर्वकत्वस्य नियामकत्वानुप- २५
पत्तेः। अनुपपत्तिश्च **निबन्धनाविशेषात्** निबन्धनाविशेषश्च सर्वेषां तद्भेदप्रसव-
त्वेन **इति**। **अतः स्थितमेतत्—अखिलविकल्पज्ञानभ्रान्ततावादिनश्च
तत्सामर्थ्योत्थं**—विकल्पसामर्थ्योत्थं **वचनमपि तादृगेव**—भ्रान्तमेव **इति**—
एवं **दुःस्थिता तत्त्वनीतिः** ॥

---

१ 'शक्यमानत्वात्' इति ग-पाठः। २ द्रष्टव्यं २४९तमं पृष्ठम्। ३ द्रष्टव्यं २५०तमं पृष्ठम्।
४ 'इति' इत्यधिको क-पाठः।

( मूलम् )

**भ्रान्तिज्ञानवन्तोऽपि कामलिप्रभृतयः शङ्खादौ संस्थानादितत्त्व-निश्चयनिबन्धनं दृश्यन्त एवेति चेत्, न, तेषां तत्राभ्रान्तत्वात्, ५ अन्यथा पीतवर्णादिवत् तत्तत्त्वनिश्चयनिबन्धनाभावः। विकल्प-ज्ञानमपि स्वसंवित्तावभ्रान्तमेवेति चेत्, क्व तर्हि भ्रान्तमिति वाच्यम्। कल्पनायामिति चेत्, न, तस्यास्तदव्यतिरेकात्; अन्यथा विकल्प-ज्ञानायोगात् स्वसंवित्तेर्भेदकासिद्धेर्बोधमात्राद् बोधमात्रभावात् तदतिरिक्तदोषानभ्युपगमात्, अभ्युपगमे च तद्वस्तुत्वेन तद्योगज-१० विकारकल्पनाया वस्तुत्वापत्तेरिति[1] ॥**

---

( स्वो० व्या० )

**भ्रान्ती**त्यादि। **भ्रान्तिज्ञानवन्तोऽपि कामलिप्रभृतयः**—प्रमातरः **शङ्खादौ**—प्रमेये **संस्थानादितत्त्वनिश्चयनिबन्धनं दृश्यन्त एवेति चेत्** ततश्च तद् भ्रान्तं च ज्ञानं तत्त्वनिश्चयनिबन्धनं चैवमनित्यादिविकल्पा अपि भविष्यन्ति १५ इत्याह—**ने**त्यादि। **न तेषां**—कामलिप्रभृतीनां **तत्र**—शङ्खादिसंस्थानादितत्त्वनिश्चय-निबन्धनाभावः, **अभ्रान्तत्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा पीत-वर्णादिवत्**—यथा पीतवर्णादौ तथा **तत्तत्त्वनिश्चयनिबन्धनाभावः**—शङ्खादि-संस्थानादितत्त्वनिश्चयनिबन्धनाभावः सर्वथा भ्रान्तत्वादिति भावना। **विकल्पज्ञान-मपि स्वसंवित्तौ** किमित्याह—**अभ्रान्तमेवेति चेत्** ततश्च किलोक्तदोषा-२० नुपपत्तिः इति[2]। एतदाशङ्क्याह—**क्व तर्हि भ्रान्तमिति वाच्यम्**। **कल्पनाया-मिति चेद्** भ्रान्तम् अत्राह—**न, तस्याः**—कल्पनायाः **तदव्यतिरेकात्**—स्वसं-वित्त्यव्यतिरेकात्। इत्थं चैतदित्याह—**अन्यथा** व्यतिरेके सति स्वसंवित्तेः कल्प-नाया **विकल्पज्ञानायोगात्**। अयोगश्च **स्वसंवित्तेः**—चिद्रूपाया **भेदका-सिद्धेः**—अञ्जकासिद्धेः। असिद्धिश्च **बोधमात्रात्** सकाशात् कारणगताद् **बोध-२५ मात्रभावात्**। तत्कार्यं तदेव दोषसम्पृक्तं विकल्पज्ञानमित्येतन्निरासायाह—**तद-तिरिक्तदोषानभ्युपगमात्**—बोधमात्रातिरिक्तदोषानभ्युपगमात्। **अभ्युपगमे च** तदतिरिक्तदोषाणां **तद्वस्तुत्वेन**—[3]दोषवस्तुत्वेन हेतुना **तद्योगजविकार-कल्पनायाः**—दोषयोगजविकारकल्पनाया **वस्तुत्वापत्तेः**, '[4]न तेषां तत्रा-भ्रान्तत्वात्' इत्यतो नेति क्रियायोग **इति** ॥

---

१ 'पत्तेः आह' इति क-पाठः। २ 'इत्याशङ्क्याह' इति घ-पाठः। ३ 'दोषावस्तु' इति घ-पाठः। ४ द्रष्टव्याऽस्यैव पृष्ठस्य चतुर्थी पङ्क्तिः।

( मूलम् )

**आह–अस्तु दोषजं वस्तुत्वमस्याः, शङ्खपीतादिप्रतिभासतुल्यं तु तत्, संस्थानादितत्त्वनिश्चयकल्पा तु स्वसंवित्तिरिति । यदि नामैवं ततः किमिति वाच्यम् । विकल्पज्ञानस्याप्यभ्रान्तता । एवमपि का** ५ **भवत इष्टसिद्धिः ? । ननु ततस्तत्त्वनीतिभावः । अनिश्चयात्मिकायाः कथमसौ ? हन्त कल्पनानुवेधात् । स खलु नित्यत्वादिकल्पनयाऽपि । इति विपक्षसाधारणत्वान्नेष्टसिद्ध्यर्थमेवेत्ययुक्त एव । न च निरंशवस्तुवादिनो यथोक्तकल्पनैव सम्भवति, तदेकस्वभावत्वेन कल्पनाबीजायोगात्, स्वभावभेदमन्तरेण हेत्वभेदतः फल-** १० **भेदासिद्धेः ॥**

**भवतोऽपि कथमेकं भ्रान्ताभ्रान्तमिति चेत् चित्रस्वभावत्वेन तथात्वाविरोधात्, तत्त्वत एकत्वासिद्धेः, दोषसामर्थ्योपयोगात्,**

---

( स्वो० व्या० )

**आह–अस्तु दोषजं वस्तुत्वमस्याः**–कल्पनायाः । **शङ्खपीतादिप्रति-** १५ **भासतुल्यं तु तत्**–वस्तुत्वम्, **संस्थानादितत्त्वनिश्चयकल्पा तु स्वसंवित्तिरिति** । एतदाशङ्क्याह–**यदि नामैवं ततः किमिति वाच्यम् । विकल्पज्ञानस्याप्यभ्रान्तता** । एतदाशङ्क्याह–**एवमपि का भवत इष्टसिद्धिः ? । ननु ततः**–अभ्रान्तायाः स्वसंवित्तेः **तत्त्वनीतिभाव** इतीष्टसिद्धिः । एतदाशङ्क्याह–**अनिश्चयात्मिकायाः** स्वसंवित्तेः **कथमसौ**–तत्त्वनीतिभावः ? । **हन्त** २० **कल्पनानुवेधात्** । एतदाशङ्क्याह–**स खलु**–कल्पनानुवेधो **नित्यत्वादिकल्पनयाऽपि** सह **इति विपक्षसाधारणत्वात्** कारणात् **नेष्टसिद्ध्यर्थमेवेति** कृत्वा **अयुक्त एव** इति न किञ्चिदनेन । अभ्युच्चयमाह–**न च निरंशवस्तुवादिनः** परस्य **यथोक्तकल्पनैव सम्भवति** । कुत इत्याह–**तदेकस्वभावत्वेन**–निरंशवस्तुन एकस्वभावत्वेन हेतुना **कल्पनाबीजायोगात्** । अयोगश्च २५ **स्वभावभेदमन्तरेण,** प्रक्रमादविकल्पज्ञानवस्तुनः, **हेत्वभेदतः** कारणात् **फलभेदासिद्धेः** । फलभेदश्चाविकल्पज्ञानात् कल्पनेति भावनीयम् ॥

**भवतोऽपि कथमेकं,** प्रक्रमात् कामलिशङ्खपीतज्ञानं, **भ्रान्ताभ्रान्तम् ? । इति चेत्**, एतदाशङ्क्याह–**चित्रस्वभावत्वेन** अधिकृतज्ञानस्य **तथात्वाविरो-**

---

१ 'तदैकस्व०' इति घ–पाठः । २ 'शङ्खे पीता०' इति ङ–पाठः ।

( मूलम् )

**अविगानतस्तथा तत्प्रतीतेरित्यतो निर्विकल्पकवद् विकल्पकमपि अक्षव्यापारानुसारि यथावस्थितवस्तुविषयमविगानतः स्पष्टतुल्य-**
५ **विनिश्चयं सत्क्षयोपशमजन्म बाधविज्ञानरहितमवगमादिफलम-भ्रान्तमेष्टव्यम्, अन्यथोक्तवत् तत्तत्त्वनिश्चयाभाव इति विकल्पक-त्वेऽपि न भ्रान्तमधिकृतविज्ञानमिति, अतः सामान्यविशेषरूपवस्तु-सिद्धिरिति ॥**

**यच्चोक्तम्–'एकं सामान्यमनेके विशेषाः' इत्यादि तदप्ययुक्तम्,**
१० **तथाऽनभ्युपगमात् । न हि यथोक्तस्वभावं सामान्यमभ्युपगम्यते अस्माभिः, युक्तिरहितत्वात् । तथाहि–तदेकादिस्वभावं सामान्यम-**

( स्वो० व्या० )

धात्–भ्रान्ताभ्रान्तत्वाविरोधात्, **तत्त्वतः**–परमार्थेन एकत्वासिद्धेः एकानेकत्वा-दित्यर्थः। हेतुभेदमाह–**दोषसामर्थ्योपयोगात्** कामलस्य सामर्थ्याद्धि तत् तथा,
१५ तदभावेऽभावात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–**अविगानतः**–अविगानेन लोके **तथा**–दोषजत्वेन **तत्प्रतीतेः**–शङ्खपीतज्ञानप्रतीतेरिति निर्लोठ्यानुषङ्गिकम्, प्रकृतमाह–**अतो निर्विकल्पकवदि**ति निदर्शनम् । **विकल्पकमप्यभ्रान्तमेष्टव्य-**मिति योगः । किंविशिष्टमित्याह–**अक्षव्यापारानुसारि**–अक्षव्यापारानुसरणशीलं **यथावस्थितवस्तुविषयं**–सामान्यविशेषरूपवस्तुगोचरं **अविगानतः**–अविगा-
२० नेन **स्पष्टतुल्यविनिश्चयं** प्रमात्रन्तरमधिकृत्य, **सत्क्षयोपशमजन्म**–विशिष्ट-क्षयोपशमोत्पादं **बाधविज्ञानरहितं** तथाऽनुभवदार्ढ्येन, **अवगमादिफलं** परि-च्छित्ति-प्रवृत्ति-प्राप्तिफलमर्थमधिकृत्य **अभ्रान्तमेष्टव्यम्**, **अन्यथा** तदनिष्टौ **उक्त-वत्**–यथोक्तं तथा **तत्तत्त्वनिश्चयाभावः**–यथाऽवस्थितवस्तुतत्त्वनिश्चयाभावः प्रत्यक्षस्यानिश्चायकत्वात्, विकल्पानां च मिथो विरुद्धानामपि प्रवृत्तेरिति । **इति**–
२५ एवं **विकल्पकत्वेऽपि** सति **न भ्रान्तमधिकृतविज्ञानं**–सामान्यविशेषावसाय-रूपमिति, **अतः**–अस्माद् विज्ञानात् **सामान्यविशेषरूपवस्तुसिद्धिरिति** ॥

**यच्चोक्तम्–'एकं सामान्यमनेके विशेषाः'** इत्यादि मूलपूर्वपक्षे **तद-प्ययुक्तम्** । कुत इत्याह–**तथाऽनभ्युपगमात्** । एनमेवाह **न ही**त्यादिना । **न हि यथोक्तस्वभाव**मेकादिधर्मकं **सामान्यमभ्युपगम्यतेऽस्माभिः** । कुत
३० इत्याह–**युक्तिरहितत्वात्** । एतदेवाह–**तथाहि–तदेकादिस्वभावं सामान्यं**

१ 'बाधाविज्ञान०' इति ग–पाठः । २ 'भेषजत्वेन' इति ङ–पाठः । ३ 'बाधाविज्ञान०' इति क–पाठः । ४ कुत्र इति विचारणीयम्, यतो न दृश्यतेऽयं पाठः पूर्वगतेषु पृष्ठेषु ।

( मूलम् )

नेकेषु दिग्देश-समय-स्वभावभिन्नेषु विशेषेषु सर्वात्मना वा वर्तते[1] देशेन वा। न तावत् सर्वात्मना, सामान्यानन्त्यप्रसङ्गात्, विशेषाणामनन्तत्वात्, एकविशेषव्यतिरेकेण वाऽन्येषां सामान्यशून्यतापत्तेः ५ आनन्त्ये चैकत्वविरोधात्। नापि देशेन, सदेशत्वप्रसङ्गात्। न च गगनवद् व्यापित्वाद् वर्तत इति ब्रूम इत्यकलङ्कन्यायानुसारि[2] चेतोहरं वचः, अविचारितरमणीयत्वात्, कार्त्स्न्य-देशव्यतिरेकेण वृत्त्यदर्शनात्। उभयव्यतिरेकेण नभसो वृत्तिरिति चेत्, न, असिद्धत्वात्, नभसः सप्रदेशत्वाभ्युपगमात्, निष्प्रदेशत्वे चानेकदोष- १० प्रसङ्गात्। तथाहि—येन देशेन 'विन्ध्ये'न सह संयुक्तं नभो 'हिमवन्'-'मन्दरा'दिभिरपि किं तेनैव आहोस्विदन्येनेति ?। यदि तेनैव

( स्वो० व्या० )

एकं नित्यं निरवयवं निष्क्रियं च अनेकेषु दिग्देश-समय-स्वभावभिन्नेषु विशेषेषु—घटादिषु सर्वात्मना वा वर्तते देशेन वा। न तावत् सर्वात्मना १५ वर्तते। कुत इत्याह—सामान्यानन्त्यप्रसङ्गात्। प्रसङ्गश्च विशेषाणामनन्तत्वात्। दोषान्तरमाह—एकविशेषव्यतिरेकेण वा अन्येषां—विशेषाणां किमित्याह—सामान्यशून्यतापत्तेः, एकत्रैव सामान्यवृत्तेरिति। आनन्त्ये च सामान्यानामेकत्वविरोधात् न तावत् सर्वात्मनेति। नापि देशेन वर्तते, सामान्यं विशेषेष्विति प्रक्रमः, सदेशत्वप्रसङ्गात् सामान्यस्य। न च गगनवत् इति २० दृष्टान्तः, व्यापित्वात् कारणाद् वर्तत इति ब्रूम इत्यकलङ्कन्यायानुसारि चेतोहरं वचः। कुत इत्याह—अविचारितरमणीयत्वात्। एतदेवाह—कार्त्स्न्य-देशव्यतिरेकेण वृत्त्यदर्शनात् लोके। उभयव्यतिरेकेण—कार्त्स्न्यदेशोभयव्यतिरेकेण नभसः—आकाशस्य वृत्तिरिति चेद् भावेष्वाधेयादित्वेन। एतदाशङ्क्याह—न, असिद्धत्वात्, अधिकृतनभोवृत्तेः। असिद्धिश्च नभसः २५ सप्रदेशत्वाभ्युपगमात् जैनैः। यदा च सप्रदेशं नभस्तदा देश-कार्त्स्न्याभ्यां नियोगतोऽस्य वृत्तिः, उभयनिमित्तभावात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—निष्प्रदेशत्वे च नभसोऽनेकदोषप्रसङ्गात्। एतदेव भावयति तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। येन देशेन 'विन्ध्ये'न सह—पर्वतेन संयुक्तं नभो 'हिमवन्'-'मन्दरा'दिभिरपि—पर्वतैः किं तेन एव—देशेन आहोस्विदन्येनेति? । ३०

---

१ 'वर्तेतांशेन वा' इति ग-पाठः। २ 'इत्यकल्पं कन्यायानुसारि०' इति ग-पाठः।

( मूलम् )

**'विन्ध्य'-'हिमवदा'दीनामेकत्रावस्थानप्रसङ्गः, निष्प्रदेशैकाकाशसं-योगान्यथानुपपत्तेः। अथान्येन, आयातं तर्हि सदेशत्वमाकाशस्य ॥**

५ **स्यादेतददेशत्वाद् वियतो यथोक्तविकल्पासम्भवः, तत्रैकस्मिन्नेव तेषामवस्थितत्वात्। इदमप्ययुक्तम्, वस्तुतः पूर्वोक्तदोषानतिवृत्तेः। न च सर्वव्यापिनो 'विन्ध्या'दय इति, येन 'तस्मिन्नेव तेषामवस्थित-त्वात्' इति सफलं भवेदित्यतो यत्र 'विन्ध्य'भावो यत्र चाभाव इत्य-नयोर्नभोभागयोरनन्यत्वमन्यत्वं वेति वाच्यम्। किञ्चातः ?। यद्यन-**
१० **न्यत्वं किमु सर्वथा आहोस्वित् कथञ्चित् ?। यदि सर्वथा हन्त तर्हि यत्र 'विन्ध्य'भावस्तत्राप्यभावः स्यात्, तदभाववन्नभोभागाव्यति-रिक्तत्वात् तद्भाववन्नभोभागस्य विपर्ययो वा। अथ कथञ्चिदने-**

---

( स्वो० व्या० )

किञ्चातः ? उभयथाऽपि दोष इत्याह—**यदि तेनैव** ततो **'विन्ध्य'-'हिमवदा'दीनां**
१५ पर्वतानाम**मेकत्र** देशे**ऽवस्थानप्रसङ्गः**। कुत इत्याह—**निष्प्रदेशं** च तदे**काकाशं** च तेन **संयोगस्तदन्यथाऽनुपपत्तेरिति**। **अथान्येन** एतदाशङ्क्याह—**आयातं तर्हि सदेशत्वमाकाशस्य,** तथाऽभ्युपगमात् ॥

**स्यादेतत् अदेशत्वाद् वियतः**—आकाशस्य **यथोक्तविकल्पासम्भवः, तत्र**—वियत्ये**कस्मिन्नेव** निष्प्रदेशे **तेषां**—'विन्ध्या'दीनाम**वस्थितत्वात्**। एतदा-
२० शङ्क्याह—**इदमप्ययुक्तम्, वस्तुतः**—परमार्थतः **पूर्वोक्तदोषानतिवृत्तेः**—'विन्ध्य'-'हिमवदा'दीनामेकत्रावस्थानादिप्रसङ्गः पूर्वोक्तो दोषस्तदनतिवृत्तेः। एनमेव प्रकारान्तरेण समर्थयन्नाह—**न च सर्वव्यापिनो 'विन्ध्या'दय इति येन 'त-स्मिन्**—एक**स्मिन्नेव तेषामवस्थितत्वात्' इति सफलं भवेत्, अतो यत्रे**ति देशे **'विन्ध्य'भावो यत्र चाभाव इत्यनयोर्नभोभागयोः**—आकाशदेशयोः
२५ किमित्याह—**अनन्यत्वमन्यत्वं वेति वाच्यम्। किञ्चातः ? यद्यनन्यत्वं किं सर्वथा आहोस्वित् कथञ्चित् ?। यदि सर्वथा** अनन्यत्वं **हन्त तर्हि यत्र 'विन्ध्य'भावस्तत्राप्यभावः स्यात्**। कुत इत्याह—**तदभाववन्नभो-भागाव्यतिरिक्तत्वात्**—'विन्ध्या'भाववन्नभोभागाव्यतिरिक्तत्वात्। **तद्भाव-वन्नभोभागस्य**—'विन्ध्य'भाववन्नभोभागस्य, **विपर्ययो वा,** यत्राभावस्तत्रापि
३० भावप्राप्तेः। **अथ कथञ्चिदनन्यत्वम्**। एतदाशङ्क्याह—**अनेकान्तवादाभ्युप-**

---

१ 'सप्रदेश०' इति क-घ-पाठः।

(मूलम्)

**कान्तवादाभ्युपगमात् स्वकृतान्तप्रकोपः। अथान्यत्वं किं सर्वथा उत कथञ्चित्?। यदि सर्वथा, अन्यतरस्यानभोभागत्वप्रसङ्गः, सर्वथा भेदान्यथाऽनुपपत्तेः। अथ कथञ्चित्, स्वदर्शनपरित्यागदोष इति। ५ स्यादेतद् भागानभ्युपगमाद् व्योम्नो यथोक्तदोषानुपपत्तिरिति। अभ्युपगममात्रभक्तो देवानांप्रियः सुखैधितो नोपपत्तिप्रासानपि भागानवगच्छतीति, ननु विशिष्टभावभावाभावगम्या एव भागा इत्यवगमे निवेश्यतां चित्तमित्यलं प्रसङ्गेन। एतेन नित्यव्यापि-निर्देशसामान्यवृत्तिरपि प्रत्युक्ता॥ १०**

---

(स्वो० व्या०)

**गमात् स्वकृतान्तप्रकोपः**, स्वसिद्धान्तविरोध इत्यर्थः। द्वितीयं विकल्पमधिकृत्याह— **अथान्यत्वम**धिकृतनभोभागयोः **किं सर्वथाऽन्यत्वमुत कथञ्चित्?। यदि सर्वथा**—एकान्तेनान्यत्वं ततः किमित्याह—**अन्यतरस्य** यत्र 'विन्ध्य'भावो यत्र चाभाव इत्यनयोरेकस्य किमित्याह—**अनभोभागत्वप्रसङ्गः**। कुत इत्याह— १५ **सर्वथा भेदान्यथाऽनुपपत्तेः** सर्वधर्मवैलक्षण्ये हि सर्वथा भेदस्तस्मिंश्च सत्येकस्य भावरूपता अपरस्य साऽपि नेत्येतदेव भवतीति भावना। **अथ कथञ्चिदन्यत्व**-मधिकृतनभोभागयोरित्यत्राह—**स्वदर्शनपरित्यागदोषः**, एकान्तदर्शनं हि परस्य स्वदर्शनं तत्परित्यागदोष **इति। स्यादेतद् भागानभ्युपगमाद् व्योम्नः**— आकाशस्य **यथोक्तदोषानुपपत्तिरिति**। एतदधिकृत्याह—**अभ्युपगममात्र**- २० **भक्तो देवानांप्रियः**, मूर्ख इत्यर्थः, **सुखैधितः**—शास्त्रग्रहणपरिश्रमत्यागेन[1] सुखवर्धितः **नोपपत्तिप्रासानपि** 'विन्ध्य'भावभावाभावाभ्यां **भागानव-गच्छतीति**। एतद्भावनायैवाह—**ननु विशिष्टभावभावाभावगम्या एव भागा** विशिष्टभावोऽन्यव्यावृत्ततया 'विन्ध्य'भाव एव, तद्भावाभावगम्या एव भागा व्योम्नः। न हि निर्भागे परमाणौ कार्यस्य द्व्यणुकादेः क्वचिद् भावः २५ क्वचिन्न **इति** स्वदर्शनस्थित्याऽपि **अवगमे निवेश्यतां चित्तमित्यलं प्रसङ्गेन**। **एतेनेत्यादि**। एतेन—एकसामान्यवृत्तिनिराकरणेन **नित्यव्यापिनिर्देशसामान्य-वृत्तिरपि प्रत्युक्ता** विशेषेषु, नित्यस्यैकस्वभावतया कालभिन्नासु व्यक्तिषु वृत्त्ययोगः, व्यापिनः सर्वगतत्वेन निर्देशस्य देशाभावेनेति भावनीयम्॥

---

१ 'ग्रहणपरिग्रहणपरिश्रम०' इति क-पाठः।

( मूलम् )

**आह–अनुभवसिद्धत्वात् सामान्यस्य न युज्यते सहृदयतार्किकस्य तत्प्रतिक्षेपेणात्मानमायासयितुम्, आयासस्य निष्फल-**
**५ त्वात्। तथाहि–यदि सनातनं[1] वस्तुसद् व्याप्येकमनवयवं सामान्य-[2] वस्तु न स्यात्, न तदा देशकालस्वभावभेदभिन्नेषु घट-शरावो-ष्ट्रिको-दञ्चनादिषु बहुषु विशेषेषु सर्वत्र मृन्मृदित्यभिन्नौ बुद्धिशब्दौ स्याताम्। न खलु हिम-तुषार-करको-दका-ऽङ्गार-मुर्मुर-ज्वाला-ऽनल-झञ्झा-मण्डलिको-त्कलिका-पवन-खदिरो-दुम्बर-बदरिकादिष्वत्य-**
**१० न्तभिन्नेषु बहुषु विशेषेष्वेकाकारा बुद्धिर्भवति, नाप्येकाकारः शब्दः प्रवर्तत इति, अतोऽस्य यथोक्ताभिन्नबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनस्य वस्तुसतः सामान्यस्य सत्त्वमाश्रयितव्यमिति ॥**

---

( स्वो० व्या० )

आह परः–**अनुभवसिद्धत्वात् सामान्यस्य** विशेषेषु तुल्यबुद्धिभावेन
१५ **न युज्यते सहृदयतार्किकस्य**–भावाशून्यस्य **तत्प्रतिक्षेपेण**–सामान्यप्रतिक्षेपेण **आत्मानमायासयितुम्** । कुतो न युज्यत इत्याह–**आयासस्य निष्फलत्वात्** । एतदेवाह **तथाही**त्यादिना । तथाहीति पूर्ववत् । **यदि सनातनं**–नित्यं **वस्तुसत्**–अपरिकल्पितं **व्यापि**–विशेषव्यापनशीलमेकं स्वरूपेण **अनवयवम्**–अवयवरहितं **सामान्यवस्तु न स्यात्** । ततः किं स्यादित्याह–
२० **न तदा देश-काल-स्वभावभेदभिन्नेषु** । केष्वित्याह–**घट-शरावो-ष्ट्रिको-दञ्चनादिषु** । उदञ्चनः–लोट्टकः । 'आदि'शब्दादलिञ्जरादिग्रहः । **बहुषु विशेषेषु सर्वत्र मृन्मृदिति**–एवं **अभिन्नौ**–तुल्यौ, एकरूपावित्यर्थः । काविन्याह–**बुद्धि-शब्दौ स्याताम्** । किमिति न स्यातामित्याह–**न खल्वि**त्यादि । नैव **हिम-तुषार-करको-दकानि** चेत्यनेन जलभेदानाह । **अङ्गार-मुर्मुर-**
२५ **ज्वाला-ऽनलाश्चे**त्यनेन त्वग्निभेदान्, **झञ्झा-मण्डलिको-त्कलिका-पवनाश्च** इत्यनेन वायुभेदान्, **खदिरो-दुम्बर-बदरिकादयश्चे**त्यनेन च वनस्पतिभेदानाह । 'आदि'शब्दः प्रत्येकं धारादिसङ्ग्रहार्थः । एतेषु **अत्यन्तभिन्नेषु** जातिभेदापेक्षया **बहुषु विशेषेषु**–भेदेषु **एकाकारा बुद्धिर्भवति**, तथाऽननुभवात् । **नाप्येकाकारः शब्दः प्रवर्तत इति** मृन्मृदित्यादि शब्दवत्, **अतोऽस्य** सामा-
३० न्यस्येति योगः, **यथोक्तं** च–तन्मृन्मृदित्यादिरूपतया **अभिन्नं** च तद् **बुद्धिशब्दद्वयं** चेति विग्रहस्तस्य **प्रवृत्तिनिबन्धनं**–प्रवृत्तिकारणं तस्य **वस्तुसतः**–

---

१ 'समानतं वस्तु' इति ग–पाठश्चिन्त्यः। २ 'सामान्यं वस्तु' इति क–पाठः।

( मूलम् )

अत्रोच्यते—न खल्वस्माभिर्यथोक्तबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनं निषिध्यते। किं तर्हि? एकादिधर्मयुक्तं परपरिकल्पितं सामान्यमिति। तच्च यथा विशेषवृत्त्ययोगेन न घटां [1]प्राञ्चति तथा लेशतो ५ निदर्शितमेव, प्रपञ्चतस्त्व[2]न्यत्र वृत्त्ययोगसङ्ख्यादिव्यभिचार-तद्वत्-प्रत्ययप्रसङ्गादिना युक्तिकलापेन निराकृतमिति नेह प्रयासः ॥

आह—किं पुनर्यथोक्तबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनमिति? उच्यते—अनेकधर्मात्मकानां वस्तूनां तथाविधः समानपरिणाम इति। न चात्र सामान्यवृत्तिपरीक्षोपन्यस्तविकल्पयुगलप्रभवदोषसम्भवः, १०

---

( स्वो० व्या० )

पारमार्थिकस्य सामान्यस्य सत्त्वमाश्रयितव्यमिति ॥

एतदाशङ्क्याह—अत्रोच्यते—न खल्वस्माभिः—जैनैर्यथोक्तबुद्धि-शब्द-द्वयप्रवृत्तिनिबन्धनं निषिध्यते। किं तर्हि? एकादिधर्मकं परपरिकल्पितं सामान्यमिति सामान्यं निषिध्यते। तच्च—एकादिधर्मकं सामान्यं यथा १५ विशेषवृत्त्ययोगेन हेतुना न घटां प्राञ्चति—न घटनं गच्छति, तथा लेशतो निदर्शितमेव, प्रपञ्चतस्त्वन्यत्र—स्याद्वादकुचोद्यपरिहारादौ वृत्त्ययोगश्च सङ्ख्यादिव्यभिचारश्च तद्वत्[3]प्रत्ययप्रसङ्गादिश्चेति समासः तेन। केनेत्याह—युक्तिकलापेन—उपपत्तिसङ्घातेन निराकृतमिति कृत्वा नेह प्रयासः—नेह प्रयत्नविशेषः। तत्र वृत्त्ययोगो दर्शित एव 'यदेकबुद्ध्येकशब्दप्रवृत्ति- २० निमित्तं तत् सामान्यम्' इत्यभ्युपगमे सङ्ख्यादिभिर्व्यभिचारः—एकसङ्ख्याऽपि भवत्येकबुद्ध्येकशब्दप्रवृत्तिनिमित्तम्। 'आदि'शब्दात् तत्समवायश्च, न चासौ सामान्यमिति व्यभिचारः। तथाभावेऽपि सामान्यस्य विशेषेषु तद्वत् प्रत्ययप्रसङ्गः 'एकसामान्यवन्तो विशेषाः' इति प्रत्ययः प्राप्नोति, न 'समानाः' इति। 'आदि'शब्दाद् विशेषविनाशे तत्र तत्केवलग्रहणप्रसङ्ग इति सङ्क्षेपगर्भार्थः। इत्यलं प्रसङ्गेन ॥ २५

आह—किं पुनर्यथोक्तबुद्धि-शब्दद्वयप्रवृत्तिनिबन्धनमिति? उच्यते-अनेकधर्मात्मकानां सत्त्व-ज्ञेयत्वाद्यपेक्षया वस्तूनां—घट-शरावो-ष्ट्रिको-दञ्चनादीनां तथाविधः—मृन्मृदित्यभिन्नबुद्धिशब्दद्वयप्रवर्तकः समानपरिणाम इति।

---

१ 'प्राप्नोतीति तथा' इति ग-पाठः। २ स्याद्वादकुचोद्यपरिहारादौ। ३ 'प्रायप्रसङ्गा०' इति क-पाठश्चिन्तनीयः।

( मूलम् )

**समानपरिणामस्य तद्विलक्षणत्वात्, तुल्यज्ञानपरिच्छेद्यवस्तुरूपस्य समानपरिणामत्वात्, अस्यैव च सामान्यभावोपपत्तेः । ५ समानानां भावः सामान्यमिति यत् तत्समानैस्तथा भूयत इत्यन्वर्थयोगात्, अर्थान्तरभूतभावस्य च तद्व्यतिरेकेणापि तत्समानत्वेऽनुपयोगात्, अन्यथा समानानामित्यभि[1]धानाभावादयुक्तैव तत्कल्पना । समानत्वं च भेदाविनाभाव्येव, तदभावे सर्वथैकत्वतः [2]समानत्वानुपपत्तेरिति तथाविधः समानपरिणाम एव समान- १० बुद्धि-शब्दद्वयप्रवृत्तिनिमित्तम् ॥**

( स्वो० व्या० )

**न चात्र**—समानपरिणामे **सामान्यवृत्तिपरीक्षायामुपन्यस्तं** च तद् **विकल्पयुगलकं** च, '[3]तथाहि—तदेकादिस्वभावं सामान्यमनेकेषु दिग्देशसमयस्वभावभिन्नेषु विशेषेषु सर्वात्मना वा वर्तेत देशेन वा' इत्येतत् **तत्प्रभवाश्च** ते **दोषाश्च** सामा- १५ न्यानन्त्यादयः तेषां **सम्भवो** न च । कुत इत्याह—**समानपरिणामस्य तद्विलक्षणत्वात्**—एकादिधर्मकसामान्यविलक्षणत्वात् । वैलक्षण्यमेवाह **तुल्ये**त्यादिना । **तुल्यज्ञानपरिच्छेद्यं** च तद् **वस्तुरूपं** चेति विग्रहस्तस्य **समानपरिणामत्वात्** । **अस्यैव**—समानपरिणामस्य **सामान्यभावोपपत्तेः** । उपपत्तिश्च **समानानां भावः सामान्यमिति यत् तत् समानैस्तथा भूयत** इति २० कर्तरि षष्ठी **इति**—एव**मन्वर्थयोगात्** । नायं परपक्ष इत्याह—**अर्थान्तरभूतभावस्य च** सम्बन्धपक्षे समानानां सम्बन्धिनः **तद्व्यतिरेकेणापि**—भावव्यतिरेकेण अपि तदर्थान्तरत्वेन **तत्समानत्वे** तेषां—समानानां समानत्वे, प्रकृत्यैवेति भावः । किमित्याह—**अनुपयोगात्** अधिकृतभावस्य, तमन्तरेणैव ते समाना इति कृत्वा । **अन्यथा**—एवमनभ्युपगमे तमन्तरेण तदसमानत्वे प्रकृत्या **समानानामित्यभि-** २५ [4]**धानाभावादयुक्तैव तत्कल्पना**—अधिकृतभावकल्पना समानानां भाव इति एतत्सम्बन्धिनामसमानानामिति कृत्वा । उपचयमाह—**समानत्वं च**—तुल्यत्वं च **भेदाविनाभाव्येव** अयमनेन समान इति नीतेः । **तदभावे**—भेदाभावे **सर्वथैकत्वतः** कारणात् । किमित्याह—**समानत्वानुपपत्तेः** । **इति**—एवं **तथाविधः**—मृन्मृदित्यभिन्नबुद्धि-शब्दद्वयप्रवर्तकः **समानपरिणाम एव समान-** ३० **बुद्धि-शब्दद्वयप्रवृत्तिनिमित्तमिति** स्थितम् ॥

---

१ 'ज्ञानाभावा०' इति क—पाठः । २ 'समानाकारानुप०' इति क—पाठः । ३ द्रष्टव्यं २७४तमं पृष्ठं २७५तमं च । ४ 'ज्ञानाभावात्' इति क—पाठः ।

( मूलम् )

आह-यथाऽसमाना अपीन्द्रियादयस्तथास्वभावत्वाद् रूपज्ञानाद्येककार्यकारिणस्तथैतेऽपि भावास्तथाविधसमानपरिणामविकला अपि तथाविधबुद्ध्यादिहेतवः किं नेष्यन्ते ?। उच्यते-असमानेभ्यः ५ समानबुद्ध्याद्यसिद्धेः, तन्निबन्धनस्वभाववैकल्यात् । तथाहि-न चक्षुरादिषु समानबुद्ध्यादिभावः, तथाऽप्रतीतेः, रूपज्ञानाद्येककार्यकारित्वं चात्रानर्थकमेव, सिद्धसाधनत्वात् । को हि नाम तथा असमानेभ्योऽपि तथैकं कार्यं नेच्छति? तथाविधसमानपरिणामविकलास्तु समानबुद्धि-शब्दद्वयप्रवृत्तिहेतवो न भवन्ति, न तथा- १० विधैककार्या इत्यभिदधति विद्वांसः। ततश्चानेन न किञ्चिदुपद्रूयते, असमानेभ्यः समानबुद्ध्याद्यसिद्धेः ॥

( स्वो० व्या० )

आह-यथा असमाना अपीन्द्रियादयः-इन्द्रिय-मनस्कारा-ऽऽलोक-रूपादयो जातिभेदेन तथास्वभावत्वात्-रूपादिज्ञानजननस्वभावत्वात् कारणात् १५ रूपज्ञानादि, 'आदि'शब्दात् स्वसन्तताविन्द्रियादिकार्यग्रहः । एतदेककार्यकारिणः तथैतेऽपि भावाः-घट-शरावो-ष्ट्रिको-दञ्चनादयः तथाविधसमानपरिणामविकला अपि, तात्त्विकसमानपरिणामरहिता अपीत्यर्थः, तथाविधबुद्ध्यादिहेतवः-समानबुद्धि-शब्दद्वयहेतवः किं नेष्यन्ते ? । एतदाशङ्क्याह-उच्यते-असमानेभ्यो जातिभेदेन समानबुद्ध्याद्यसिद्धेः- २० समानबुद्धि-शब्दद्वयानुपपत्तेः । असिद्धिश्च तन्निबन्धनस्वभाववैकल्यात्-समानबुद्ध्यादिनिबन्धनस्वभाववैकल्यात् । एतदेवाह-तथाहि-न चक्षुरादिषु विषयेषु समानबुद्ध्यादिभावो [1]विषयत्वेन । कुत इत्याह-तथाऽप्रतीतेः-चक्षुरादिषु विषयत्वेन समानबुद्ध्याद्यप्रतीतेः । नीलादिष्विव समानेष्विति व्यति- २५ रेकेण भावना । रूपज्ञानाद्येककार्यकारित्वं चात्र-व्यतिकरे अनर्थकमेव । कुत इत्याह-सिद्धसाधनत्वात् । एतदेवाह-को हि नाम-वादी तथा असमानेभ्योऽपि विशिष्टसमानपरिणामापेक्षया तथैकं कार्य-सामग्रीजनकत्वेनैकं कार्यं नेच्छति? तथाविधसमानपरिणामविकलाः पुनश्चक्षुरादयः समानबुद्धि-शब्दद्वयप्रवृत्तिहेतवो न भवन्ति, न [3]तथाविधैककार्याः, तथाविधैककार्या भवन्त्येवेत्यर्थः, इत्यभिदधति विद्वांसः- ३०

१ 'यसिद्धिरिति' इति ग-पाठः । २ 'विषयित्वेन' इति ङ-पाठः । ३ 'तथाविधैककार्या भवन्त्ये॰' इति घ-पाठः ।

(मूलम्)

**नासिद्धिः, प्रधानेश्वरादिकार्यत्वसमानपरिणामविकलेभ्योऽपि भावेभ्यः 'प्रधानादिकार्याः प्रधानादिकार्याः' इति केषाञ्चित् समान-**
५ **बुद्ध्यादिसिद्धेः, न, तस्याः सङ्केतसम्मोहहेतुत्वात्, आविद्धदङ्गनादीनामविशेषेण समानपरिणामवद्भावेष्विवाक्षदर्शनत एव तदप्रवृत्तेः। तथाऽक्षदर्शनमपि न तत्रार्थयाथात्म्यतः, अपि तु जन्मान्तरवासनात इति चेत्, तत्रापि किं निमित्तमिति वाच्यम्। जन्मान्तरवासनैवेति चेदनवस्था, अनादित्वात् तद्वासनाया अयमप्यदोष इति चेत्, न, अनादितथाऽक्षदर्शनादर्थयाथात्म्यसिद्धेः**
१० **अन्यथाऽतिप्रसङ्गात् रूपाद्यक्षदर्शनस्यापि तत्रार्थयाथात्म्यत एतत्'**

---

(स्वो० व्या०)

जैनाः। ततश्चानेन—अनन्तरोदितेन **न किञ्चिदुपद्रूयते**। कुत इत्याह—**असमानेभ्य**श्चक्षुरादिभ्यः **समानबुद्ध्याद्यसिद्धेः**, तत्सिद्धौ च नो बाधेति भावना॥

१५ आह—**नासिद्धिः**, असमानेभ्यः समानबुद्ध्यादेरिति प्रक्रमः। कुत इत्याह—**प्रधानेश्वरादिकार्यत्वसमानपरिणामविकलेभ्योऽपि** भवद्दर्शननीत्या, **भावेभ्यः**—महदादिभ्यः **'प्रधानादिकार्याः प्रधानादिकार्याः' इति**—एवं **केषाञ्चित्**—साङ्ख्यादीनां **समानबुद्ध्यादिसिद्धेः**। एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्, **तस्याः**—समानबुद्ध्यादिसिद्धेः **सङ्केतसम्मोहहेतुत्वात्**-असच्छास्त्रसङ्केतसम्मोह-
२० निबन्धनत्वात्। कथमेतदेवमित्याह—**आविद्धदङ्गनादीनां**—प्रमातॄणाम**विशेषेण**—सामान्येन **समानपरिणामवद्भावेष्विव**—घट-शरावो-ष्ट्रिको-दञ्चनादिषु **अक्षदर्शनत एव तदप्रवृत्तेः**—प्रधानादिकार्याः प्रधानादिकार्या इति समानबुद्ध्याद्यप्रवृत्तेः, अक्षदर्शनतश्चाविशेषेण घटादिषु समानबुद्ध्यादिसिद्धिः। आह—**तथाऽक्षदर्शनमपि** समानतया **न तत्र**—घटादौ **अर्थयाथात्म्यतः**—अर्थ-
२५ यथात्मभावेन, **अपि तु जन्मान्तरवासनातः**। **इति चेत्**, एतदाशङ्क्याह—**तत्रापि**—जन्मान्तरे **किं निमित्तमिति वाच्यम्**। **जन्मान्तरवासनैवेति चे**न्निमित्तमेतदाशङ्क्याह—**अनवस्था**, तत्राप्युक्तदोषानतिवृत्तेः। **अनादित्वात् तद्वासनायाः**—तथाऽक्षदर्शनवासनाया **अयमपि**—अनवस्थालक्षणोऽ**दोषः**। **इति चेत्**, एतदाशङ्क्याह—**ने**त्यादि। न—नैतदेवम्। अनादि च तत् तथाऽक्षदर्शनं च,
३० प्रक्रमात् समानतयाऽक्षदर्शनं चेति विग्रहस्तस्माद**नादितथाऽक्षदर्शनात्**। किमित्याह—**अर्थयाथात्म्यसिद्धेः** अनादितथाभावेन। इत्थं चैतदङ्गीकर्तव्यमि-

(मूलम्)

**इति निश्चयाभावात्, उक्तवद् वासनाकल्पनोपपत्तेरित्यलं प्रसङ्गेन ॥**

**बुद्ध्याकार एवायमिति चेत्, कोऽस्य हेतुरिति वाच्यम्। तदेककार्यकारिणामतत्कारिभेद इति चेत्, न, इन्द्रियादिभिर्व्यभिचारात्। न रूपज्ञानाद्येककार्यमिह गृह्यते, अपि तु समानजातीयक्षणोत्पादः, तेषामतत्कारिभेदोऽत्र विवक्षित इति चेत्, न, सर्वेषामेवासौ विद्यते रूपज्ञानादिभावेऽपीन्द्रियादिसमानजातीयक्षणोत्पत्तेरिति तैरेव व्यभिचारात् ॥**

---

(स्वो० व्या०)

त्याह—**अन्यथाऽतिप्रसङ्गात्**—एवमनभ्युपगमेऽतिप्रसङ्गात् । एनमेवाह—**रूपाद्यक्षदर्शनस्यापि** रूपादेरक्षैर्दर्शनं रूपाद्यक्षदर्शनं तस्यापि **अर्थयाथात्म्यतः**—अर्थयाथात्म्यादेतदिति **निश्चयाभावात्** । अभावश्च **उक्तवत्**—यथोक्तं तथा **वासनाकल्पनोपपत्तेः** 'रूपाद्यक्षदर्शनमपि न तत्रार्थयाथात्म्यतः, अपि तु जन्मान्तरवासनातः' इत्यादेरपि वक्तुं शक्यत्वात्, **इत्यलं प्रसङ्गेन** ॥

**बुद्ध्याकार एवायं**—समानाकारो घटादिगतः। **इति चेत्**, एतदाशङ्क्याह—**कोऽस्य हेतुरिति वाच्यम्। तदेककार्यकारिणाम्** इह प्रक्रमे मृद्बुद्ध्याख्यैककार्यकारिणां घट-शरावो-ष्ट्रिको-दञ्चनादीनाम् **अतत्कारिभेदः** अतत्कारिभ्यः—हिम-तुषार-करकादिभ्यो भेदोऽतत्कारिभेद **इति चेत्** अस्य हेतुः एतदाशङ्क्याह—नेत्यादि। न—नैतदेवम्, **इन्द्रियादिभिर्व्यभिचारात्**, इन्द्रिय-मनस्कारा-ऽऽलोकादयस्तदेककार्यकारिणोऽतत्कारिभिन्नाः, न च यथोक्तबुद्ध्याकारहेतवः। आह—**न रूपज्ञानादि**, 'आदि'शब्दाद् रसज्ञानादिग्रहः, **एककार्यमिह गृह्यते** येन तदेककार्यकारित्वमिन्द्रियादीनां भवति, **अपि तु समानजातीयक्षणोत्पादः** एकं कार्यमिह गृह्यते, **तेषां**—समानजातीयैककार्याणां **अतत्कारिभ्यः**—समानजातीयैककार्याकारिभ्यो **भेदोऽत्र**—प्रक्रमे **विवक्षितः। इति चेत्**, एतदाशङ्क्याह—नेत्यादि। न—नैतदेवम्। कुत इत्याह—**सर्वेषामेव** इन्द्रियादीनाम**सौ**—समानजातीयक्षणोत्पादो **विद्यते**। कथमित्याह—**रूपज्ञानादिभावेऽपि** सति **इन्द्रियादिसमानजातीयक्षणोत्पत्तेः** कारणात् **तैः**—इन्द्रियादिभि**र्व्यभिचारः**। न हीन्द्रियादीनामपि समानजातीयक्षणोत्पादोऽतत्कारिभेदश्च न विद्यते, तथापि न ते समानबुद्ध्याकारहेतव इति तैरेव व्यभिचारः ॥

(मूलम्)

**तुल्यसमानजातीयकार्योत्पादिनामतत्कारिभेद इह गृह्यत इति चेत्, न, तस्य तेभ्यो भेदाभेदविकल्पानुपपत्तेः, भेदे तेषामिति ५ सम्बन्धाभावः, तादात्म्याद्यसिद्धेः, भेदमात्रत्वात् वस्तुत्वापत्तेश्च, अभेदे त एव ते। इति कथमसमानास्तद्धेतवो नाम?। न हि रसादिभ्यः समानो रूपबुद्ध्याकारः, तथाऽननुभवाद् व्यवस्थानुपपत्तेश्च। नान्य एव तत्तद्भेदः, अपि तु त एव तत्स्वभावा इति, अतस्त एव तद्धेतवः, नान्ये, अतत्स्वभावत्वादिति चेत्, तेषामेवासौ स्वभाव**

(स्वो० व्या०)

१० **तुल्ये**त्यादि। तुल्यं च तत् समानजातीयकार्यं चेति विग्रहः, तदुत्पादयितुं शीलास्तुल्य**समानजातीयकार्योत्पादिनः** तेषां **अतत्कारिभेद इह**—अधिकारे **गृह्यते। इति चेत्**, एतदाशङ्क्याह—**न, तस्य**—अतत्कारिभेदस्य **तेभ्यः**—तुल्यसमानजातीयकार्योत्पादिभ्यो **भेदाभेदविकल्पानुपपत्तेः**। एनामेवाह **भेद** १५ इत्यादिना। भेदे तुल्यसमानजातीयकार्योत्पादिभ्यः अतत्कारिभेदस्याभ्युपगम्यमाने **तेषां**—तुल्यसमानजातीयकार्योत्पादिनां भेद **इति**—एवं **सम्बन्धाभावः**। कुत इत्याह—**तादात्म्याद्यसिद्धेः**—तुल्यसमानजातीयकार्योत्पादिनामतत्कारिभेदस्य च तादात्म्याद्यसिद्धेः। 'आदि'शब्दात् तदुत्पत्तिपरिग्रहः। असिद्धिश्च **भेदमात्रत्वात्** कारणात् तादात्म्यासिद्धिः **वस्तुत्वापत्तेश्च** भेदस्य तदुत्पत्त्यसिद्धिः॥

२० द्वितीयविकल्पमधिकृत्याह—**अभेदे** तुल्यसमानजातीयकार्योत्पादिभ्यः अतत्कारिभेदस्याभ्युपगम्यमाने। किमित्याह—**त एव ते**—तुल्यसमानजातीयकार्योत्पादिन एव ते केवलाः, न तदतिरिक्तं किञ्चित्। **इति**—एवं **कथमसमानाः** प्रकृत्या **तद्धेतवः**—समानबुद्ध्याकारहेतवो **नाम?**। एतदेव प्रकटयति **न** हीत्यादिना[1]। **न हि रसादिभ्यः**—प्रकृत्या असमानेभ्यः **समानो रूपबुद्ध्याकारः**। कुतो न हीत्याह— २५ **तथाऽननुभवात्**—समानरूपबुद्ध्याकारतयाऽननुभवाद् रसादीनाम्। एतत्कल्पाश्च तुल्यसमानजातीयकार्योत्पादिन इन्द्रियादय इष्यन्त इत्यर्थः। दोषान्तरमाह—**व्यवस्थानुपपत्तेश्च**। अननुभवेऽपि समानबुद्ध्याकारपरिकल्पने रसादिभेदाभावप्रसङ्गादिति भावः। आह—**नान्य एव तत्तद्भेदः**—तुल्यसमानजातीयकार्योत्पादिभ्योऽतत्कारिभेदः, **अपि तु त एव**—तुल्यसमानजातीयकार्योत्पादिनः **तत्स्वभावाः**, ३० प्रक्रमादधिकृतबुद्ध्याकारजननस्वभावा **इति। अतः** कारणात् **त एव**—विशिष्टास्तुल्य-

१ 'नेत्यादिना' इति घ-पाठः।

( मूलम् )

**इति कुतः ? । स्वहेतुभ्य उत्पत्तेः, न अन्येषामपि तत्प्रसङ्गात् तेषामपि स्वहेतुभ्य एवोत्पत्तेः । न तथाविधेभ्यस्तेषां यथाविधेभ्य एषामिति चेत्, किमिदं तथाविधत्वम् ? तुल्यकार्यकृज्जनकत्वम् । नेदं तत्- ५ तुल्यसामर्थ्यमन्तरेण । तदङ्गीकरणे चाङ्गीकृत एव मदीयोऽभ्युपगमः, अतुल्यसामर्थ्येभ्यस्तुल्यसमानजातीयकार्यानुत्पत्तेः, इन्द्रियादिषु**

( स्वो० व्या० )

समानजातीयकार्योत्पादिनो घट-शरावो-ष्ट्रिको-दञ्चनादय इत्यर्थः । **तद्धेतवः**, प्रक्रमादधिकृतबुद्ध्याकारहेतवः, **नान्ये**–इन्द्रियादयः । कुत इत्याह–**अतत्स्वभावत्वात्**, १० सः–अधिकृतबुद्ध्याकारहेतुः स्वभावो येषां ते तत्स्वभावाः, न तत्स्वभावा अतत्स्वभावाः, तद्भावस्तस्मादिति **चेत्**, इन्द्रियादीनामेतदाशङ्क्याह–**तेषामेव**–घटादीनाम**सौ स्वभावः**, प्रक्रमादधिकृतबुद्ध्याकारजननस्वभाव **इति**–एतत् **कुतः** ? । अत्राह–**स्वहेतुभ्यः** सकाशा**दुत्पत्तेः** विशिष्टेभ्य इति पराकूतम् । एतदनादृत्य सामान्यमेव गृहीत्वाऽऽह–**ने**त्यादि । न–नैतदेवम् **अन्येषामपि**–इन्द्रियादीनां १५ **तत्प्रसङ्गात्**–अधिकृतबुद्ध्याकारजननस्वभावत्वप्रसङ्गात् । प्रसङ्गश्च **तेषामपि**–अन्येषामिन्द्रियादीनाम् । किमित्याह–**स्वहेतुभ्य एवोत्पत्तेः** । न हि तेऽप्यन्यहेतुका अहेतुका वा इति भावनीयम् । **न तथाविधेभ्यस्तेषा**मित्यन्येषामिन्द्रियादीनां **यथाविधेभ्य एषाम्**–अधिकृतबुद्ध्याकारहेतूनां घटादीनाम् । **इति चेत्**, एतदाशङ्क्याह–**किमिदं तथाविधत्वं** तद्धेतूनामिति ? । अत्राह–**तुल्यकार्य**- २० **कृज्जनकत्वं** तुल्यकार्यकरणशीलास्तुल्यकार्यकृतः, इह प्रक्रमे तावद् घटादयस्तेषां जनकास्तद्धेतव इति प्रक्रमः, तद्भावस्तुल्यकार्यकृज्जनकत्वं तथाविधत्वमिति । एतदाशङ्क्याह–**नेदं**–तुल्यकार्यकृज्जनकत्वं **तत्तुल्यसामर्थ्यमन्तरेण** तेषां–तद्धेतूनां तुल्यसामर्थ्यं विना । यदि नामैवं ततः किमित्याह–**तदङ्गीकरणे च**–तत्तुल्यसामर्थ्याङ्गीकरणे च **अङ्गीकृत एव मदीयोऽभ्युपगमः**, तुल्यसामर्थ्यस्यैव २५ समानपरिणामत्वात् । एतदेव विपक्षबोधाभिधानेनाभिधातुमाह–कथमङ्गीकृत एव मदीयोऽभ्युपगमः, **अतुल्यसामर्थ्येभ्यः**–इन्द्रियादिभ्यः **तुल्यसमानजातीयकार्यानुत्पत्तेः** । न रूपादिज्ञानैककार्यकारिभ्योऽपि इन्द्रियादिभ्यः स्वसन्ततौ तुल्यानि समानजातीयकार्याण्युत्पद्यन्ते, यदुत सर्वाणीन्द्रियाण्येव मनस्कारावेलादीति भावना । आह च–**इन्द्रियादिषु** अतुल्यसामर्थ्येषु **तददर्शनात्**– ३०

१ 'जातीयानि कार्या०' इति क-पाठः ।

( मूलम् )

**तददर्शनात् । तदतुल्यसामर्थ्यनिबन्धनमेतत्, अतोऽन्यत् तत्तुल्य-सामर्थ्यकारणमिति सन्न्यायः । तुल्यसामर्थ्यमेव च नो भावानां ५ समानपरिणाम इति परिभाव्यतामेतत् ॥**

**अविषय एवायं बुद्ध्याकारोऽनादिवासनादोषादुपप्लव इति चेत्, केयं वासना नाम? । किं बोधमात्रं उतान्यदेव किञ्चित्? । यदि बोधमात्रमनुत्तरज्ञानेऽपि तथाविधाकारापत्तिः तस्यापि बोधमात्र-भावात् । अनिष्टं चैतत्, तत्र तदनभ्युपगमात् । अथान्यदेव**

---

१० ( स्वो० व्या० )

तुल्यसमानजातीयकार्यादर्शनादिति भावितमेतत् । यदि नामैवं ततः किमित्याह—**तद-तुल्यसामर्थ्यनिबन्धनं** तेषाम्—इन्द्रियादीनामतुल्यसामर्थ्यनिबन्धनम्, **एतत्**—तुल्यसमानजातीयकार्यादर्शनम् । **अतोऽन्यत्**, प्रक्रमात् तुल्यसमानजातीय-कार्यदर्शनं गृह्यते । एतच्चेह मृद्रूपमात्रतयाऽधिकृतघट-शरावो-ष्ट्रिको-दञ्चनादि-१५ विषयमेवावगन्तव्यम्, **तत्तुल्यसामर्थ्यकारणमिति** घटादीनां तुल्यसामर्थ्य-कारणमतुल्यसामर्थ्येभ्यो हिमादिभ्य एव मृद्रूपताऽयोगादिति **सन्न्यायः**, अन्वय-व्यतिरेकबलप्रतिष्ठितत्वात् तत्तुल्यसामर्थ्यस्य । एवमपि काऽत्रेष्टसिद्धिरित्याह—**तुल्यसामर्थ्यमेव च नः**—अस्माकं **भावानां**—घटादीनां **समानपरिणाम इति परिभाव्यतामेतत्** । एतदुक्तं भवति—येषामेव भावानां पिण्डादीनां तुल्यं २० सामर्थ्यं त एव घटादीन् मृद्रूपमात्रतया तुल्यान् समानजातीयान् कुर्वन्ति, नान्ये हिमादयः, घटादिष्वेव च मृन्मृदिति समानाकारा बुद्धिरुत्पद्यते, न हिमादिषु, अतस्तात्त्विकसमानपरिणामनिबन्धनेयमिति सूक्ष्मधियाऽऽलोचनीयम् ॥

आह—**अविषय एव**—अनालम्बन एव **अयं**—प्रक्रान्तो मृन्मृदिति समानो **बुद्ध्याकारः** । कुतः किमात्मको वाऽयमित्याह—**अनादिवासनादोषात्** अयं **उपप्लवः** २५ स्वरूपेण । **इति चेत्**, एतदाशङ्क्याह—**केयं वासना नाम?** । **किं बोधमात्रं**—निर्वि-शेषणमेव **उतान्यदेव किञ्चित्**—बोधाद् भिन्नं वस्तु? । उभयथाऽपि दोषमाह—**यदि बोधमात्रं**—निर्विशेषणमेव वासना, ततः किमित्याह—**अनुत्तरज्ञानेऽपि**—भगवतः सम्बन्धिनि **तथाविधाकारापत्तिः**, प्रक्रमान्मृन्मृदिति समानबुद्ध्या-कारापत्तिः । कुत इत्याह—**तस्यापि**—अनुत्तरज्ञानस्य **बोधमात्रभावात्**,

(मूलम्)

**किञ्चित् तदेवास्य विषय इति, कथमविषयो नाम? । अवस्त्वेव तदिति चेत्, कथं ततः स आकार इति वाच्यम् । अहेतुक एवायमिति चेत्, सदा तद्भावादिप्रसङ्गः । विशिष्टं बोधरूपं वासना ५ न बोधमात्रमिति चेत्, किंकृतमस्य वैशिष्ट्यमिति वाच्यम् । अनादिहेतुपरम्पराकृतमिति चेत्, न, तत्रापि तन्मात्राविशेषात् । स**

(स्वो० व्या०)

एतदेव वासनेति बोधादबोधवन्नान्याकारानुत्तरज्ञानजन्मेति । **अनिष्टं चैतत्** । कुत इत्याह—**तत्र**—अनुत्तरज्ञाने **तदनभ्युपगमात्**—तथाविधाकारानभ्युपगमात् ॥ १०

द्वितीयं विकल्पमधिकृत्याह—**अथान्यदेव किञ्चिद्** वस्तु वासनेति । एतदाशङ्क्याह—**तदेव**—अन्यत् किञ्चिद् वासनाख्यं **अस्य**—अधिकृतबुद्ध्याकारस्य **विषय इति**—एवं **कथमविषयो नाम** अयं बुद्ध्याकारः? । **अवस्त्वेव तदिति चेत्**, अन्यत् किञ्चिद् वासनाख्यम् । एतदाशङ्क्याह—**कथं ततः**[1]—वस्तुनः **स आकारः**—अधिकृतबुद्ध्याकार **इति वाच्यम्** । **अहेतुक एवायं**—बुद्ध्याकारः । **इति चेत्**, १५ एतदाशङ्क्याह—**सदा तद्भावादिप्रसङ्गः** नित्यं सत्त्वमसत्त्वं [2]वेति नीतेः । **विशिष्टं बोधरूपं वासना, न** च **बोधमात्रम**विशिष्ट**मिति चेत्**, ततश्च किल यथोक्तदोषाभाव इति । एतदाशङ्क्याह—**किंकृतमस्य**—बोधरूपस्य **वैशिष्ट्यमिति वाच्यम्** । **अनादिहेतुपरम्पराकृतम्** । **इति चेत्**, एतदाशङ्क्याह—**न तत्रापि**—अनादिहेतुपरम्परायां **तन्मात्राविशेषात्**—बोधरूपमात्राविशेषात् । **सः**—बुद्ध्याकारः २०

(विवरणम्)

(९) **एतदेव वासनेति बोधादबोधवन्नान्याकारानुत्तरज्ञानजन्मेति** । एतदेव—निर्विशेषणं बोधमात्रमेव वासना वर्तते, न त्वन्यत् किञ्चित् इति—अस्मात् कारणात् बोधात्—बोधक्षणात् सकाशात् अबोधवत्—अबोधस्येव न—नैवान्याकारस्य—समानाकारविलक्षणाकारस्यानुत्तरविज्ञानस्य जन्म युक्तम् । अयमभिप्रायः—बोधमात्र- २५ मेव वासना, न त्वन्यत् किञ्चिद् वस्तु सत्कर्मादि बौद्धैरङ्गीक्रियते । ततो बोधात् समानाकारं ज्ञानमुत्पद्यत इत्यायातम् । एवं च यथा बोधाद्बोधो न जायते, तथाऽन्याकारानुत्तरविज्ञानजन्मापि न स्यात् । सुगतज्ञानमपि तथाविधसमानाकारोल्लेखवशादित्यर्थः, तत्रापि बोधमात्रस्योपादानभूतस्याविशेषात् ॥

१ 'ततोऽवस्तुनः' इति ङ—पाठः । २ 'चेति' इति क—पाठः ।

(मूलम्)

**समुद्रोर्मिवद् यतस्तदेव तदिति चेत्, न, तस्यापि वाय्वादिना विना तत एवाभावात्। अनागमो वाय्वादिकल्प इति चेत्, न, तद-**
५ **भावेऽपि क्वचित् तद्भावोपपत्तेः। स्वविक्षोभोद्भवसमुद्रोर्मितुल्यः स इति चेत्, स एव तदा कुत इति वाच्यम्?। तस्यैव तत्स्व-भावत्वादिति चेत्, न, तदविशेषेण सदा समुद्रोर्मिप्रसङ्गात्। तस्य तत्क्षणविशेषत्वादप्रसङ्ग इति चेत्, न, तस्य तन्मात्रत्वेन विशेषत्वा-सिद्धेः। ऊर्मिजननस्वभावत्वं विशेष इति चेत्, न स्वभावः स्वभाव-**
१० **वतोऽन्य इति तन्मात्रत्वमेव। तन्मात्रत्वेऽपि तद्भेदवद् भेद एवेति**

---

(स्वो० व्या०)

**समुद्रोर्मिवदि**ति निदर्शनं **यतः**–बोधरूपात् **तदेव**–बोधरूपं **तदिति चेत्**–वैशिष्ट्यम्। इति चेत्, एतदाशङ्क्याह–**न, तस्यापि**–समुद्रोर्मे**र्वाय्वादिना** विक्षोभ-कारणेन **विना तत एव**–समुद्रमात्रा**दभावात्**, ततश्च दृष्टान्त-दार्ष्टान्तिकयोर्वैष-
१५ म्यमित्यर्थः। **अनागमः** तीर्थिकसम्बन्धी **वाय्वादिकल्प इति चेत्**, ततो न वैषम्यमित्यभिप्रायः। एतदाशङ्क्याह–**न, तदभावेऽपि**–अनागमाभावेऽपि **क्वचित्**–बालविकल्पादौ **तद्भावोपपत्तेः**, प्रक्रमादधिकृतबुद्ध्याकारोपपत्तेः। **स्वे**त्यादि। स्ववि-क्षोभादुद्भवो यस्य समुद्रोर्मेः स तथा **स्वविक्षोभोद्भव**श्चासौ **समुद्रोर्मि**श्चेति समासः तेन **तुल्यः स इति चेत्**–प्रस्तुतबुद्ध्याकारः, एतदाशङ्क्याह–**स एव**–स्ववि-
२० क्षोभोद्भवः समुद्रोर्मि**स्तदा**–तस्मिन्नेव काले **कुत इति वाच्यम्**। **तस्यैवे**त्यादि। तस्यैव–समुद्रस्य **तत्स्वभावत्वात्**–तदोर्मिजननस्वभावत्वात् **इति चेत्** स एव तदेति[3]। एतदाशङ्क्याह–**ने**त्यादि। न–नैतदेवम्, **तदविशेषेण**–समुद्राविशेषेण हेतुना **सदा समुद्रोर्मिप्रसङ्गात्**, तन्मात्रनिबन्धनो ह्यूं(ह्यू?)र्मिर्विशिष्टं च भेदका-भावेन परस्य तन्मात्रत्वमिति भावना। **तस्ये**त्यादि। तस्य–स्वविक्षोभोद्भवसमुद्रोर्मिहेतोः
२५ समुद्रस्य **तत्क्षणविशेषत्वात्**–समुद्रक्षणविशेषत्वात् **अप्रसङ्ग इति चेत्**। सदोर्मिप्रसङ्गोऽनन्तरोदितः, स एव क्षणस्तत्स्वभावः, नान्ये तत्क्षणा इत्यभि-प्रायः। एतदाशङ्क्याह–**न, तस्य**–समुद्रक्षणस्य **तन्मात्रत्वेन**–समुद्रक्षणमात्रत्वेन हेतुना **विशेषत्वासिद्धेः**। **ऊर्मिजननस्वभावत्वं विशेष इति चेत्**, तथाहि–न सर्वे तत्स्वभावाः सर्वेभ्य ऊर्मिभावापत्तेः, न चेयं तथाऽदर्शनादिति
३० भावेनेति। एतदाशङ्क्याह–**न स्वभाव** इत्यादि। न स्वभावः **स्वभाववतः**

---

१ 'नहि स्वभावः' इति ग–पाठः। २ 'तद् वैशिष्ट्य०' इति घ–पाठः। ३ 'तदेतदाशङ्क्याह' इति क–पाठः। ४ 'ह्युर्मिरविशिष्टं' इति क–ङ–पाठः।

( मूलम् )

**चेत्, न, तादृशस्यास्याप्रयोजकत्वात्, तत्तद्भावेऽतिप्रसङ्गात्, तत्[१]स्वभावानामपि केषाञ्चित् तथाभेदाद् नित्यतया फलभेदापत्तेः ॥**

**न नित्यता केषाञ्चिदपि । किं नेति वाच्यम् । न तद्धेतुः तथा-** ५

( स्वो० व्या० )

सकाशादन्य इति कृत्वा **तन्मात्रत्वमेव**—समुद्रक्षणमात्रत्वमेव, ततश्च 'ऊर्मिजननस्वभावत्वं विशेषः' इति वचनमात्रमेव । **तन्मात्रत्वेऽपि**—समुद्रक्षणमात्रत्वेऽपि **तद्भेदवत्**—समुद्रक्षणभेदवद् **भेद एव इति चेत्**, विशेष एवोर्मिजननस्वभावस्य क्षणस्येति । एतदाशङ्क्याह—**न, तादृशस्य**—तुल्यस्वरूपभेदमात्रहेतोः **अस्य**—क्षण- १० भेदस्य अप्रयोजकत्वात् स्वभावभेदेनोर्मिजननं प्रति । एतदेवाह—**तत्तद्भावे** त[२]स्य—भेदमात्रस्य तद्भावे—स्वभावभेदेनोर्मिजननं प्रति प्रयोजकत्वादित्यर्थः । किमित्याह—**अतिप्रसङ्गात्** । एनमेवाह—**त[३]त्स्वभावानामपि केषाञ्चित्**—पदार्थानां **तथाभेदात्**—तुल्यस्वरूपभेदमात्रहेतुतया भेदात् **नित्यतया**—नित्यस्वभावत्वेन **फलभेदापत्तेः**—समुद्रोर्मिवदनित्यभावविलक्षणफलभेदापत्तेरित्यतिसूक्ष्मधिया भावनीयम् ॥ १५

अत्राह—**न नित्यता केषाञ्चिदपि**—भावानाम् । एतदाशङ्क्याह—**किं न इति वाच्यम्** । **न तद्धेतुः**—नित्यभावहेतुः **तथाभूतात्**—नित्यभावजननस्वभावजननस्वभावादिति योऽर्थः **हेतोः**—कारणात् । **तस्यैव**, प्रक्रमादूर्मिजननस्वभावसमुद्रक्षणस्यैव

( विवरणम् )

(१४) **तुल्यस्वरूपभेदमात्रहेतुतया भेदादिति** । तुल्यं—परस्परसाधारणं तच्च २० तत्स्वरूपेण भेदमात्रं च तद्धेतुः—कारणं नित्यपदार्थजननं [४]प्रति प्रयोजनं येषां ते तथा तेषां भावस्तत्ता तया कृत्वा भेदात्—विशेषात्, यथाहि—अविशिष्टात् समुद्रक्षणात् स्वरूपमात्रेण पाश्चात्यसमुद्रक्षणेभ्यो भिन्नात् सकाशाद् विशिष्ट ऊर्मिक्षण उत्पद्यते । एवं स्वरूपमात्रेणान्येभ्यः पदार्थेभ्यो भिन्नात् कुतोऽपि वस्तुक्षणान्नित्यस्य कार्यस्योत्पत्तिः स्यात्, उभयत्रापि विशिष्टहेतोरभावात्, स्वरूपभेदमात्रस्य च समानत्वात् ॥ २५

(१७–१८) **नित्यभावजननभावजननस्वभावादिति योऽर्थ इति** । नित्यभावजननः—नित्यपदार्थनिष्पादको योऽसौ भावः—पदार्थस्तज्जननस्वभावो यस्य स तथा तस्मात् । ऊर्मिजननस्वभावस्य समुद्रक्षणस्य हेतुरस्ति । एवं न नित्यभावहेतुर्नित्यभावजननस्वभावाद्धेतोरुत्पन्नः समस्तीति भावार्थः ॥

१ 'सत्स्वभावा०' इति क-पाठः । २ 'तस्याभेद०' इति ङ-पाठः । ३ 'सत्स्वभावा०' इति क-ङ-पाठः । ४ 'प्रतियोजकं येषां' इति क-पाठः ।

( मूलम् )

**भूताद्धेतोस्तस्यैव यदिति चेत्, न, मोक्षहेतोः कैश्चित् तथाविधत्वाभ्युपगमात्, अहेतोरपि तथाभावकल्पनाऽविरोधात् अस्याप्यर्थ-**
५ **क्रियोपपत्तेः तत्करणस्वभावत्वात् अनित्यत्वादेः सर्वतः सर्वार्थक्रियाभावेनेहाप्रयोजकत्वात् । तत्करणस्वभावत्वस्य च प्रयोजक-**

( स्वो० व्या० )

**यदिति चेत्** ऊर्मिजननस्वभावो हि समुद्रक्षणः ऊर्मिजननस्वभावसमुद्रक्षणजननस्वभावात् समुद्रक्षणादुत्पन्न इति विद्यते, अस्य तथाभूतो हेतुः, नैवं नित्यभावजनन-
१० स्वभावजननस्वभावो हेतुरस्ति, तन्नित्यत्वविरोधादित्यभिप्रायः। एतदाशङ्क्याह-**नेत्यादि**। न-नैतदेवं **मोक्षहेतोः**-विशिष्टज्ञानादेः **कैश्चित्**-नैयायिकादिभिः **तथाविधत्वाभ्युपगमात्**-नित्यभावजननस्वभावत्वाभ्युपगमात्, तथाऽ**हेतोरपि**-अविद्यमानहेतोरप्यनाद्यण्वादेः, किमित्याह-**तथाभावकल्पनाऽविरोधात्** तथाभावः-नित्यभावस्तत्कल्पनाऽविरोधात् । तथाहि-अहेतुरेव कश्चित् सत्स्वभावः सन्नित्य
१५ इति किमत्र क्षुण्णम्? । नित्यस्य क्रम-यौगपद्याभ्यामर्थक्रियाविरोध इत्याशङ्काऽपोहाय आह-**अस्यापि**-अधिकृतनित्यस्य **अर्थक्रियोपपत्तेः** । उपपत्तिश्च **तत्करणस्वभावत्वात्**-अर्थक्रियाकरणस्वभावत्वात् । अयं चात्र प्रधान इति विपक्षे बाधामाह-**अनित्यत्वादेः** । **इह**-अर्थक्रियायाम**प्रयोजकत्वात्** इति योगः । अप्रयोजकत्वं च **सर्वतः सर्वार्थक्रियाभावेन** । न ह्यनित्य इत्येव सर्वो भावः
२० सर्वामर्थक्रियां करोति, नित्य इत्येव वा, तथा अदर्शनात्, अतो यो यदर्थक्रियाकरणस्वभावः स तां करोतीति तत्करणस्वभावत्वमेवात्र प्रयोजकमिति । अत एवाह-**तत्करणस्वभावत्वस्य च**-अर्थक्रियाकरणस्वभावत्वस्य च **प्रयोजक-**

( विवरणम् )

(८) **यदिति चेदिति** । अत्र यच्छब्दो यस्मादर्थे ॥

२५ (९-१०) **नैवं नित्यभावजननस्वभावजननस्वभावो हेतुरस्ति। तन्नित्यत्वविरोधादिति**। न-नैवं ऊर्मिजननस्वभावभाववत् नित्यभावजननभावजननस्वभावः नित्यपदार्थजनकपदार्थजननस्वरूपो हेतुः-जनकोऽस्ति । कुत इत्याह-तन्नित्यत्वविरोधात् । तस्य जन्यतयाऽभिमतस्य पदार्थस्य हि नित्यत्वविरोधात् । यो हि जन्यते स कथं नित्यो भवितुमर्हतीति ॥

१ 'यदिति तदूर्म्मि०' इति क-पाठः । २ 'तस्य' इति क-पाठः । ३ 'स स्वभावः' इति घ-पाठः । ४ 'क्षूणम्' इति घ-पाठः । ५ 'यदधिक्रिया०' इति घ-पाठः । ६ 'नित्यभावजननस्वभावो' इति च-पाठः, क-पाठस्तु 'नित्यभावगानभावजननभावजननस्वभावः' इति । ७ 'तन्नित्यत्व०' इति च-पाठः ।

( मूलम् )

त्वात् **तद्वैचित्र्येण परोदितदोषासिद्धेः क्रमयौगपद्यार्थक्रियाकरणस्वभावत्वात् तस्य च पर्यनुयोगायोगात्, अन्यथा समानत्वादिति समुद्रोर्मिकल्पश्चाधिकृतो बुद्ध्याकारः। स यदैवं न युज्यते स्वसंवेदनसिद्धश्च प्रतिप्रमातृ, अतो यथोक्तनिबन्धन एवेति युक्तमभ्युपगन्तुम्, अन्यथा तदुच्छेदापत्तेरिति तथाविधः समानपरिणाम एव, समानबुद्धि-शब्दद्वयप्रवृत्तिनिमित्तम् ॥**

**यद्येवं कथं क्वचित् तद्व्यतिरेकेणाप्यस्य प्रवृत्तिः ?। ननु चास्येत्ययुक्तम्, वस्तुनिबन्धनस्य तद्व्यतिरेकेण कदाचिदप्यप्रवृत्तेः, तथा-**

( स्वो० व्या० )

**त्वात्**, 'इह' इति वर्तते। तथाहि—यतोऽर्थक्रियाकरणस्वभावः अतोऽर्थक्रियां करोति, किमत्रानित्यत्वादिना ? सत्यप्यस्मिन् सर्वतः सर्वार्थक्रियाऽसिद्धेरिति। तथा **तद्वैचित्र्येण**—स्वभाववैचित्र्येण **परोदितदोषासिद्धेः**—क्रम-यौगपद्याभ्यामर्थक्रियाविरोध इति परोदितो दोषस्तदसिद्धेः। असिद्धिश्च **क्रम-यौगपद्यार्थक्रियाकरणस्वभावत्वात्**। ततश्च क्रमसाध्यां क्रमेण करोति यौगपद्यसाध्यां यौगपद्येन इति न कश्चिद् दोषः, तथास्वभावत्वात्। **तस्य च**—स्वभावस्य **पर्यनुयोगायोगात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा समानत्वात्** ऊर्मिजननस्वभावत्वपरिकल्पितस्वभावस्यापि[1] पर्यनुयोगप्राप्तेः, **इति**—एवं **समुद्रोर्मेः** अप्यभावापत्तेः[2]। **समुद्रोर्मिकल्पश्चाधिकृतो बुद्ध्याकारः**—समानबुद्ध्याकारः, **स यदैवम्**[3]—उक्तनीत्या **न युज्यते स्वसंवेदनसिद्धश्च प्रतिप्रमातृ**—प्रमातारं प्रमातारं प्रति, **अतः**—अस्मात् कारणाद् **यथोक्तनिबन्धन एव**—तथाविधसमानपरिणामनिबन्धन एव **इति युक्तमभ्युपगन्तुम्, अन्यथा**—एवमनभ्युपगमे **तदुच्छेदापत्तेः**—समानबुद्ध्याकारोच्छेदापत्तेः। **इति**—एवं **तथाविधः**—वास्तवः **समानपरिणाम एव समानबुद्धि-शब्दद्वयप्रवृत्तिनिमित्तमिति** निगमनम् ॥

**यद्येवमित्यादि**। यद्येवं **कथं क्वचित्**—प्रधानेश्वरादिकार्यत्वादौ **तद्व्यतिरेकेणापि**—प्रधानेश्वरादिकार्यत्वव्यतिरेकेणापि **अस्येति** प्रक्रमात् समानबुद्धि-शब्दद्वयस्य, **प्रवृत्ति**र्भवतीति यथोक्तं प्रागिति। एतदाशङ्क्याह—**नन्वित्यादि**। **ननु चास्येत्ययुक्तम्**। कथमित्याह—**वस्तुनिबन्धनस्य**—समानबुद्धि-शब्दद्वयस्य

१ 'भावस्य त्वपरिकल्पित०' इति क-पाठः। २ 'पत्तिः' इति ङ-पाठः। ३ 'यदेवमुक्त०' इति घ-ङ-पाठः।

( मूलम् )

**तद्दर्शनस्य च तदाभासविषयत्वेनाविरोधात्, अन्यथा प्रत्यक्षस्यापि अविषयत्वापत्तिः। इति समानपरिणाम एव सामान्यम् ॥**

५ **यतश्चैवमतो न य एवासावेकस्मिन् विशेषे स एव विशेषान्तरे। किं तर्हि? समानः। इति कुतः सामान्यवृत्तिविचारोदितभेदद्वय-समुत्थापराधावकाश इति?। न चैवं सति परस्परविलक्षणत्वाद् विशेषाणां समानबुद्धि-शब्दद्वयप्रवृत्त्यभावः, सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः, असमानपरिणामनिबन्धना च १० विशेषबुद्धिरिह। इति यथोदितबुद्धि-शब्दद्वयप्रवृत्तिः। तथा चोक्तम्—**

( स्वो० व्या० )

**तद्व्यतिरेकेण**—वस्तुव्यतिरेकेण **कदाचिदप्यप्रवृत्तेः** घट-शरावादिष्विव हिमा-ङ्गारादिष्वदर्शनादिति भावना । **तथातद्दर्शनस्य च**—सङ्केतविप्रलम्भद्वारेण समानबुद्धिशब्दद्वयदर्शनस्य च प्रधानेश्वरादिकार्यत्वादौ **तदाभासविषयत्वेन**— १५ समानबुद्धिशब्दद्वयाभासविषयत्वेन **अविरोधात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह— **अन्यथा**—एवमनभ्युपगमे **प्रत्यक्षस्यापि** निर्विकल्पकस्य किमित्याह—**अविषय-त्वापत्तिः** अविगानेन तथाऽनुभवादेरधिकृतबुद्ध्याकारेऽपि भावात् तस्य च निर्वि-षयत्वात्, न चैतदेवम्। **इति**—एवं **समानपरिणाम एव सामान्यमिति** महानिगमनम् ॥

२० **यतश्चेत्यादि**। यतश्च **एवमतो न य एवासौ**—समानपरिणामः **एकस्मिन् विशेषे**—घटादौ **स एव विशेषान्तरे**—शरावादौ। **किं तर्हि? समानः**। **इति**—एवं **कुतः सामान्यवृत्तिविचारोदितं** च तद् **भेदद्वयं** च—देश-कार्त्स्न्यरूपं विकल्पद्वयमिति विग्रहः, **तत्समुत्थाश्च** ते**ऽपराधाश्च**—सदेशत्वप्र-सङ्गादयः तेषा**मवकाशः** कुतः? नैव, समानपरिणामस्य तद्विलक्षणत्वादिति। २५ **न चैवमित्यादि**। न चैवं **सति परस्परविलक्षणत्वाद् विशेषाणां**—घट-शरावादीनां **समानबुद्धि-शब्दद्वयप्रवृत्त्यभावो** हिमा-ऽङ्गारादीनामिव। कुत इत्याह—**सत्यपि वैलक्षण्ये समानपरिणामसामर्थ्यतः प्रवृत्तेः** कारणात् समानबुद्धि-शब्दद्वयस्येति। व्यतिरेकमाह—**असमानपरिणामनिब-न्धना च विशेषबुद्धिरिह**, अक्रमे घट-शरावादिबुद्धिवत्। **इति**—एवं ३० **यथोदितबुद्धि-शब्दद्वयप्रवृत्तिः**[1], समानबुद्धि-शब्दद्वयप्रवृत्तिरित्यर्थः। **तथा**

---

१ 'प्रवृत्तिः तत्समान०' इति क—पाठः।

(मूलम्)

"वस्तुन एव समानः परिणामो यः स एव सामान्यम्।
असमानस्तु विशेषो वस्त्वेकमनेकरूपं तु ॥"[1]

ततश्च तद् यत एव सामान्यरूपम्, अत एव विशेषरूपम्, ५
समानपरिणामस्यासमानपरिणामाविनाभूतत्वात्, यत एव च
विशेषरूपमत एव सामान्यरूपम्, असमानपरिणामस्यापि समान-
परिणामाविनाभावादिति। न चानयोर्विरोधः, अन्योन्यव्याप्ति-
व्यतिरेकेणोभयोरसत्त्वापत्तेः, उभयोरपि स्वसंवेदनसिद्धत्वात्,
संवेदनस्योभयरूपत्वात्, उभयरूपतायाश्च व्यवस्थापितत्वात्॥ १०

यच्चोक्तम्—'सामान्यविशेषोभयरूपत्वे सति वस्तुनः सकल-
लोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्गः' इत्यादि तदपि जिनमता-

(स्वो० व्या०)

चोक्तमित्यधिकृतार्थप्रसाधकं ज्ञापकमाह—वस्तुन एव—घटादेः समानः परि-
णामो यः—मृदादिः स एव सामान्यम्, असमानस्तु विशेषः—ऊर्ध्व- १५
त्वादिः। वस्त्वेकमनेकरूपं तु—सामान्यविशेषोभयरूपमपि तदनेकत्वतोऽनेक-
रूपमित्यर्थः॥

ततश्चेत्यादिना मूलपूर्वपक्षग्रन्थं परिहरति—ततश्च तत्—वस्तु घटादि यत
एव सामान्यरूपं मृदाद्यात्मकतया अत एव कारणाद् विशेषरूपमूर्ध्वादि-
रूपापेक्षया। कुत इत्याह—समानपरिणामस्य प्रस्तुतस्य, असमानपरिणामा- २०
विनाभूतत्वात्, विशेषपरिणामाविनाभूतत्वादित्यर्थः। यत एव च कारणाद्
विशेषरूपमूर्ध्वाद्यपेक्षया अत एव सामान्यरूपं मृदाद्यात्मकतया।
भावनामाह—असमानपरिणामस्यापि—ऊर्ध्वादिरूपस्य समानपरिणामा-
विनाभावात्—मृदादिपरिणामाविनाभावादिति। न चानयोः—समानासमान-
परिणामयोर्विरोधः। कुत इत्याह—अन्योन्यव्याप्तिव्यतिरेकेण [3]विना २५
उभयोः—समानासमानपरिणामयोरसत्त्वापत्तेः, आपत्तिः प्राक् प्रदर्शितैव, तथा
उभयोरपि स्वसंवेदनसिद्धत्वात् तथाऽनुभवभावेन। अत एवाह—संवेदन-
स्योभयरूपत्वात् सामान्यविशेषोभयापेक्षया, उभयरूपतायाश्च संवेदनस्य
व्यवस्थापितत्वाद्[4]धः, 'न चानयोर्विरोधः' इति क्रियायोगः॥

यच्चोक्तं पूर्वपक्षग्रन्थे[5]—सामान्यविशेषोभयरूपत्वे सति वस्तुनः— ३०
घटादेः सकललोकप्रसिद्धसंव्यवहारनियमोच्छेदप्रसङ्ग इत्यादि, तदपि

१ आर्या। २ विंशतितमे पृष्ठे। ३ 'विना' इति पाठो नास्ति घ-पुस्तके। ४ 'देव' इति ङ-पाठः। ५ विंशतितमे पृष्ठे।

( मूलम् )

**नभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थप्रसाधकमिति । न हि 'मधुरक-लड्डुकादिविशेषानर्थान्तरं सर्वथैकस्वभावमेकमनवयवं ५ सामान्यम्' इत्यभिदधति जैनाः, अतः किमुच्यते-'न विषं विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्' इत्यादि । किं तर्हि ? समानपरिणामः । स च भेदाविनाभूतत्वात् न य एव विषादभिन्नः स एव मोदकादिभ्योऽपि, सर्वथा तदेकत्वे समानत्वायोगात् ॥**

**स्यादेतत् समानपरिणामस्यापि प्रतिविशेषमन्यत्वादसमानपरि- १० णामवत् तद्भावानुपपत्तिरिति । एतदप्ययुक्तम्, सत्यप्यन्यत्वे समानासमानपरिणामयोर्भिन्नस्वभावत्वात् । तथाहि-समानधिषणा-ध्वनिनिबन्धनस्वभावः समानपरिणामस्तथा विशिष्टबुद्ध्यभि-**

---

( स्वो० व्या० )

किमित्याह-**जिनमतानभिज्ञतासूचकमेव केवलम्, न पुनरिष्टार्थप्रसा- १५ धकं** वस्त्वनुपपत्तिरिष्टोऽर्थ इति न तत्प्रसाधकम् । कथमित्याह-**न हीत्यादि** । न यस्मान्मधुरक-लड्डुकादिविशेषानर्थान्तरमभिन्नं **सर्वथैकस्वभावमेकमनवयवं सामान्यमित्यभिदधति जैनाः**-भणन्त्यार्हताः । **अतः किमुच्यते**ऽनभ्युपगतोपालम्भप्रायं यदुत **'न विषं विषमेव, मोदकाद्यभिन्नसामान्याव्यतिरेकात्'** इत्यादि । **किं तर्हि ?** । **समानपरिणामः** सामान्यमि- २० त्यभिदधति जैना इति । **स च**-समानपरिणामः किमित्याह-**भेदाविनाभूतत्वात्** कारणान्न **य एव विषादभिन्नः स एव मोदकादिभ्योऽपि** । कथं नेत्याह-**सर्वथा तदेकत्वे**-समानपरिणामैकत्वे **समानत्वायोगात्** । न ह्येकं समानमिति भावना ॥

**स्यादेतदित्यादि** । स्यादेतत्-अथैवं मन्यसे **समानपरिणामस्यापि**- २५ मृदाद्यात्मकस्य **प्रतिविशेषं**-विशेषं विशेषं प्रति घट-शरावादिलक्षणम्, **अन्यत्वात्** कारणात्, **असमानपरिणामवदिति** निदर्शनं **तद्भावानुपपत्तिः**-समानपरिणामभावानुपपत्तिरिति । एतदाशङ्क्याह-**एतदप्ययुक्तम्** । कथमित्याह-**सत्यप्यन्यत्वे** समानपरिणामस्य प्रतिविशेषं **समानासमानपरिणामयोः** उक्तलक्षणयो**र्भिन्नस्वभावत्वात्** । भिन्नस्वभावत्वमेवाह **तथाहीत्यादिना** । तथा- ३० हीत्युपप्रदर्शने । **समानधिषणा-ध्वनिनिबन्धनस्वभावः**-तुल्यबुद्धि-शब्द-हेतुस्वभावः **समानपरिणामो** यतः खलु घट-शरावादिषु मृन्मृदित्यविशेषेण भवतो

( मूलम् )

**धानजननस्वभावस्त्वितरः । इति यथोक्तसंवेदनाभिधानसंवेद्याभिधेया एव च विषादय इति प्रतीतमेतत्, अन्यथा यथोक्तसंवेदनाद्यभावप्रसङ्गात् । अतो यद्यपि द्वयमप्युभयरूपं तथापि** ५ **विषार्थी विष एव प्रवर्तते, तद्विशेषपरिणामस्यैव तत्समानपरिणामाविनाभूतत्वात्, न तु मोदके, तत्समानपरिणामाविनाभावाभावात् तद्विशेषपरिणामस्येति, अतः प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदनेति ॥**

**एतेन 'विषे भक्षिते मोदकोऽपि भक्षितः स्यात्' इत्याद्यपि प्रति-** १० **क्षिप्तमवगन्तव्यम्, तुल्ययोगक्षेमत्वादिति । यच्चापरेणाप्युक्तम्[१]– "सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः" इत्यादि तदपि कूटनटनृत्त-**

---

( स्वो० व्या० )

धिषणा-ध्वनी **तथा विशिष्टबुद्ध्यभिधानजननस्वभावस्त्वितरो**ऽसमानपरिणामः, यतः खलु घटादिष्वेव घटः शरावमित्यादिविशेषेण भवतो बुद्ध्यभिधाने । १५ **इति**–एवमधिकृतोदाहरणापेक्षया भावार्थमभिधाय पूर्वपक्षोपन्यस्तभेदापेक्षया प्रक्रान्तनिगमनायाह–**यथोक्तसंवेदने**त्यादि । यथोक्ते च ते संवेदना-ऽ**भिधाने** च तयोः **संवेद्याभिधेया** इति विग्रहः, एवम्भूता **एव च विषादयः** । तथाहि–सत् सदिति विषादयः संवेद्यन्ते अभिधीयन्ते च, तथा विषमोदक **इति**–एवं चेति **प्रतीतमेतत्, अन्यथा**–यथोक्तसंवेदनाभिधानसंवेद्याभिधेयत्वाभावे **यथोक्त-** २० **संवेदनाद्यभावप्रसङ्गात्** । 'आदि'शब्दाद् यथोक्ताभिधानग्रहः । **अतो यद्यपि द्वयमपि**–विषं मोदकश्चेति **उभयरूपं**–सामान्यविशेषरूपं **तथापि विषार्थी**–प्रमाता **विष एव प्रवर्तते** । कुत इत्याह–**तद्विशेषपरिणामस्य एव**–विषविशेषपरिणामस्यैव **तत्समानपरिणामाविनाभूतत्वात्**–विषसमानपरिणामाविनाभूतत्वात्, **न तु मोदके**–न पुनर्मोदके । कुत इत्याह–**तत्-** २५ **समानपरिणामाविनाभावाभावात्**–मोदकसमानपरिणामाविनाभावाभावात्[२] **तद्विशेषपरिणामस्येति**–विषविशेषपरिणामस्येति । **अतः**–उक्तन्यायात्[३] **प्रयासमात्रफला प्रवृत्तिनियमोच्छेदचोदना** पूर्वपक्षसम्बन्धिनी **इति** ॥

**एतेने**त्यादि । एतेन–अनन्तरोदितेन ग्रन्थेन **'विषे भक्षिते मोदकोऽपि भक्षितः स्यात्' इत्याद्यपि** पूर्वपक्षोक्तं[४] **प्रतिक्षिप्तमवगन्तव्यम्, तुल्य-** ३० **योगक्षेमत्वादिति । यच्चापरेणाप्युक्तम्[५]–"सर्वस्योभयरूपत्वे तद्वि-**

---

१ २३तमे पृष्ठे । २ 'विना भावात्' इति ङ–पाठः । ३ 'अनुक्तन्यायात्' इति क–पाठः ।
४ द्रष्टव्यं २१ तमं पृष्ठम् । ५ २३तमे पृष्ठे ।

( मूलम् )

**मिव अविभावितानुष्ठानम्, न विदुषां मनोहरमित्यपकर्णयितव्यम्, वस्तुतः प्रदत्तोत्तरत्वात्, सामान्यविशेषरूपस्य वस्तुनः सम्यग्व्य- ५ वस्थापितत्वात्, अन्यत्र च प्रपञ्चेन निराकृतत्वात्। तथा चोक्तम्—**

**"समानेतरबुद्धिश्च प्रतिवस्तूपजायते।**
**सदुष्ट्रः सदधीत्यादिरूपा तन्निश्चयात्मिका ॥ १ ॥[2]**
**नौष्ट्र्यादि सत्त्वभिन्नं चेत् ननु तत् केन चेष्यते ?।**
**अभेदे न विगानं चेद् धियां तत् किंकृतं ननु ? ॥ २ ॥[3]**
१० **भेदे तु तदसत्त्वं चेत् कः किमाहात्र वस्तुनि ?।**
**कथं तद्भाव इष्टश्चेद् भेदाभेदविकल्पतः ॥ ३ ॥[4]**

( स्वो० व्या० )

**शेषनिराकृतेः"** इत्यादि, **तदपि कूटनटनृत्तमिवेति** निदर्शनम्, **अविभावितानुष्ठानं** दर्शनभावार्थपरिज्ञानशून्यत्वेन **न विदुषां मनोहरमिति** कृत्वाऽप- १५ **कर्णयितव्यम्**—न श्रोतव्यम्। कुत इत्याह—**वस्तुतः प्रदत्तोत्तरत्वात्**, तथा **सामान्यविशेषरूपस्य वस्तुनः सम्यग् व्यवस्थापितत्वात्, अन्यत्र**—**स्याद्वादकुचोद्यपरिहारादौ**[1] **प्रपञ्चेन निराकृतत्वात्** अपरस्योक्तस्य। **तथा चोक्तमिति** ज्ञापकमाह—**समानेतरबुद्धिश्च**—समानविशेषबुद्धिश्च[5] **प्रतिवस्तु**—वस्तु वस्तु प्रति प्रतिवस्तु **उपजायते**। किंविशिष्टेत्याह—**सदुष्ट्रः सदधीत्यादि- २० रूपा तन्निश्चयात्मिका**—उष्ट्रादिनिश्चयात्मिका। १। **नौष्ट्र्यादि सत्त्वभिन्नं चेत्** 'औष्ट्र्यमुष्ट्रत्वम्, 'आदि'शब्दाद् द्रव्यत्वादिग्रहः, सत्त्वं भिन्नं चेत्, ततश्च सन्मात्रमेवैतदित्यभिप्रायः।[7] एतदाशङ्क्याह—**ननु तत् केन चेष्यते** नौष्ट्र्यादि सत्त्वभिन्नमिति ?। **अभेदे न विगानं चे**दौष्ट्र्यादि-सत्त्वयोः सन्मात्रमेवैतदेवमिति भावः। एतदाशङ्क्याह—**धियां**—बुद्धीनां **तत्**—विगानं **किंकृतम् ? ननु** अस्ति २५ चैतदासामुष्ट्र-द्रव्य-सद्बुद्धीनां[6] मिथो वैलक्षण्येन। २। **भेद** इत्यादि। भेदे पुनरौष्ट्र्यादि-सत्त्वयोः **तदसत्त्वं चे**दौष्ट्र्याद्यसत्त्वं सत्त्वादन्यत्वेन। एतदाशङ्क्याह—**कः किमाह अत्र वस्तुनि ?।** भेदे सति तदसत्त्वमेव भवतीत्यर्थः। **कथं**

( विवरणम् )

(२०) **तन्निश्चयात्मिकेति**। सामान्यविशेषनिश्चयस्वभावा तन्नित्यादिका सामान्य- ३० निश्चयरूपा; उष्ट्र इत्यादिका तु विशेषनिश्चयस्वरूपा इत्यर्थः ॥

१ स्याद्वादकुचोद्यपरिहारादौ। २–४ अनुष्टुप्। ५ 'समानबुद्धिविशेषश्च' इति ङ–पाठः। ६ 'औष्ट्रासुष्ट्र०' इति क–पाठः। ७ 'दिति भावः। एतदा०' इति ङ–पाठः।

( मूलम् )

अन्योन्यव्याप्तितश्चायं सत्त्वोष्ट्रत्वादिधर्मयोः ।
सिद्ध एकान्तभेदादित्यागाज्जात्यन्तरात्मकः ॥ ४ ॥[1]
न सत्त्वं किञ्चिदौष्ट्र्यादिधर्मान्तरविवर्जितम् । ५
तद् वा सत्त्वविनिर्मुक्तं केवलं गम्यते क्वचित् ॥ ५ ॥[2]
ततोऽसत् तत् तथा न्यायादेकं चोभयसिद्धितः ।
अन्यत्रातो विरोधस्तदभावापत्तिलक्षणः ॥ ६ ॥[3]
एवं चोभयरूपत्वे तद्विशेषनिराकृतिः ।
असिद्धा नान्यतोऽभिन्नं यदन्यत्रापि वर्तते ॥ ७ ॥[4] १०
प्रवृत्तिनियमोऽप्येवं दधि खादेति युज्यते ।
चोदितस्येह दध्न्येव यद्विशेषेण चोदना ॥ ८ ॥[5]
अतोऽस्त्यतिशयस्तत्र येन भेदेन वर्तते ।
स दध्न्येवेत्यदो नेति सद्व्यत्वानुवेधतः ॥ ९ ॥[6]

( स्वो० व्या० ) १५

तद्भावः–औष्ट्र्यादिसत्तालक्षणः इष्टश्चेत् एतदाशङ्क्याह–भेदाभेदविकल्पतः भेदाभेदात्मको विकल्पः, विकल्पः–भेदस्ततः, सत्त्वात् कथञ्चिद् भेदेनेति योऽर्थः । ३ । अन्योन्यव्याप्तितश्च कारणादयं–भेदाभेदविकल्पः सत्त्वोष्ट्रत्वादिधर्मयोः सिद्धः–प्रतिष्ठित एकान्तभेदादित्यागात्–सर्वथा भेदाभेदत्यागात् जात्यन्तरात्मक इति । ४ । एतद्भावनायैवाह–न सत्त्वमित्यादि । न २० सत्त्वं किञ्चिदौष्ट्र्यादिधर्मान्तरविवर्जितं तत्–औष्ट्र्यादि वा सत्त्वविनिर्मुक्तं केवलं गम्यते क्वचित् । ५ । यदि नामैवं ततः किमित्याह–ततोऽसत् तत्–सत्त्वादि तथा–इतरेतरभेदेन न्यायात्–न्यायेन केवलानवगमनात्, एकं च असत् तत् उभयसिद्धितः–सत्त्वौष्ट्र्याद्युभयोपलब्धेः, अन्यत्र–एकान्तभेदादौ अतो विरोधस्तदभावापत्तिलक्षणः तयोः–सत्त्वोष्ट्रत्वाद्ययोरभावापत्तिः सैव २५ लक्षणं यस्य स तथा ।६। एवं चेत्यादि । एवं च–उक्तनीत्या उभयरूपत्वे सत्युष्ट्रादेः, किमित्याह–तद्विशेषनिराकृतिः–उष्ट्रत्वादिविशेषनिराकृतिः असिद्धा । कथमित्याह–नान्यतः–दध्नः अभिन्नं सत्त्वं यत्–यस्मादन्यत्रापि–उष्ट्रादौ वर्तते । किं तर्हि ? आत्मीयमेव । ७ । ततश्च प्रवृत्तिनियमोऽप्येवं दधि खाद इति-एवं युज्यते चोदितस्येह दध्न्येव । कुत इत्याशङ्क्याह–यद्विशेषेण चोदना ३० दधि खादेत्येवम्, न पुनरुष्ट्रं धावेति । ८ । अत इत्यादि । अतोऽस्त्यतिशयः–

१–६ अनुष्टुप् । ७ 'सत्त्वौष्ट्र्यादि०' इति घ–पाठः । ८ 'दिभेदान्तरविवर्जितं' इति क–पाठः । ९ 'एकं वाऽसत्' इति ङ–पाठः । १० 'सत्त्वौष्ट्र०' इति घ–पाठः ।

(मूलम्)

ततः सोऽस्ति न चान्यत्र न चाप्यनुभयं परम् ।
एवं तत्त्वव्यवस्थायामवद्यं नास्ति किञ्चन ॥ १० ॥[1]
५ सर्वथा क्षणिकत्वे च प्रतीत्योत्पादवादिनः ।
सर्वस्य सर्वकार्यत्वप्राप्त्याऽभेदो भवेदपि ॥ ११ ॥[2]
क्षीरोष्ट्रानन्तरं भूतेर्न्यायाद् दध्युष्ट्रयोर्यतः ।
द्वयकार्यत्वयोगेन नियमात् तुल्यरूपता ॥ १२ ॥[3]
न चेत् तत्तत्स्वभावत्वात् न तत् ताभ्यां पृथङ्मतम् ।
१० तच्चाविशिष्टं सर्वेषामसतामिति भाव्यताम् ॥ १३ ॥[4]

(स्वो० व्या०)

विशेषपरिणामः तत्र—दध्नि येन कारणेन भेदेन वर्तते[5], तथा चोदितः पुरुषः । न चैवमपि परेष्टसिद्धिरित्याह—स दध्येवेत्यदो न एतन्नैकान्तेन[6] । कुत इत्याह—सद्द्रव्यत्वानुवेधतः कारणात् केवलस्य दधिपर्यायस्याभावादित्यर्थः । ९ । तत
१५ इत्यादि । ततः सोऽस्त्यतिशयो दध्नि, न चान्यत्र—उष्ट्रेऽसौ, तन्नियतत्वात् । न चाप्यनुभयं परं तत्त्वम्, उक्तवत् समानासमानोभयपरिणामरूपत्वेन । एवं तत्त्वव्यवस्थायां सत्यां अवद्यं—पापं नास्ति किञ्चन । १० । परपक्षे त्वयं दोष एवेत्याह—सर्वथेत्यादि । सर्वथा क्षणिकत्वे च, निरन्वयक्षणिकत्व इत्यर्थः[7], प्रतीत्योत्पादवादिनः परस्य, सर्वस्य—दध्यादेर्वस्तुन इति प्रक्रमः, सर्वकार्य-
२० त्वप्राप्त्या—उष्ट्रादिकार्यत्वप्राप्त्या हेतुभूतया अभेदो दूषणमेतद् भवेदपि । ११ । एतदेवाह—क्षीरोष्ट्रानन्तरं भूतेः—उत्पत्तेर्न्यायाज्जगति सदा तद्भावेन दध्युष्ट्रयोः, यतो द्वयोरपीह प्रक्रमे, द्वयकार्यत्वयोगेन[8] हेतुना नियमात्, तुल्यरूपता, परनीत्या द्वयोरपि तद्द्वयादुत्पत्तेरित्यर्थः । १२ । न चेदित्यादि । न चेत् तुल्यरूपता तत्तत्स्वभावत्वात्—तयोर्दध्युष्ट्रजननस्वभावत्वात् । एतदाशङ्क्याह—न
२५ तत्-तत्स्वभावत्वं ताभ्यां—दध्युष्ट्राभ्यां पृथङ्मतं—अर्थान्तरभूतमिष्टम् । किं तर्हि ? दध्युष्ट्रावेव द्वावपि तत्स्वभावत्वम् । तच्च—तत्स्वभावत्वं च तत्तत्त्वरूपमेव[9] अविशिष्टं—तुल्यं सर्वेषामसतां—खर-विषाणादीनामिति[10] भाव्यतामेतत् । ततश्च तयोर्दध्युष्ट्रजननस्वभावत्वादित्येतदेवासत्, किन्तु तयोरसज्जननस्वभावत्वा-

(विवरणम्)

३० (१५) तन्नियतत्वादिति । तस्मिन्—दध्नि[11] नियतस्तस्य भावः—तत्त्वं तस्मात् ॥

१-४ अनुष्टुप् । ५ 'प्रवर्तते' इति घ–ङ–पाठः । ६ 'एतदेकान्तेन' इति घ–पाठः । ७ 'क्षणिक इत्यर्थः' इति घ–पाठः । ८ 'द्वये कार्य०' इति ङ–पाठः । ९ 'तत्स्वरूपमेव' इति घ–पाठः । १० 'नामपि भाव्यता०' इति क–पाठः । ११ 'दधनि यतस्तन्नियतस्तस्य' इति च–पाठः ।

(मूलम्)

**विशिष्टतत्स्वभावत्वकल्पना च न युज्यते ।**
**विशिष्टोपाध्यभावेन भावे चास्यान्वयो ध्रुवः ॥ १४ ॥**[1]
**अभिन्नदेशरूपादिभावेऽप्येषोऽनिवारितः ।** 5
**न चैकान्तिक एवायं धूमादावन्यथेक्षणात् ॥ १५ ॥**[3]
**एवं सन्न्यायतः सिद्ध उभयेऽप्युभयोद्भवे ।**
**चोदनेऽन्यतरस्येह प्रवृत्तौ नियमः कुतः ? ॥ १६ ॥**[4]
**उभयोस्तुल्यरूपत्वाद् निरंशत्वाच्च सर्वथा ।**
**विशेषासम्भवाद् ध्वान्तमवधूय विचिन्त्यताम् ॥ १७ ॥**[5] 10
**एवं सर्वत्र संयोज्यः प्रवृत्त्यनियमो बुधैः ।**
**प्रक्रान्तार्थानुसारेण लेशतस्तु निदर्शितः ॥ १८ ॥"**[6]

इत्यादि ॥

(स्वो० व्या०)

दिति न्याय्यमिति । १३ । तथा चाह—**विशिष्टे**त्यादि । **विशिष्टतत्स्वभाव-** 15
**त्वकल्पना च**—दध्युष्ट्रजननस्वभावत्वकल्पना च **न युज्यते** । केन हेतुने-
त्याह—**विशिष्टोपाध्यभावेन**, तदा सर्वथा दध्याद्यभावेनेत्यर्थः । **भावे चास्य**-
विशिष्टस्योपाधेः किमित्याह—**अन्वयो ध्रुवः** भाविकार्यार्थाशून्यतया, तस्यैव तथोपा-
धित्वयोगादिति । १४ । **अभिन्ने**त्यादि । **अभिन्नदेशरूपादिभावेऽपि**
दध्यादेः **एषः**—अन्वयो**ऽनिवारितः** परस्य । **न चैकान्तिक एवायम्**—अभिन्न- 20
देशरूपादिभावः । कुत इत्याह—**धूमादावन्यथेक्षणात्**—भिन्नदेशरूपादिभावे-
क्षणात् । १५ । **एव**मित्यादि । **एवं सन्न्यायतः सिद्धे** सति **उभयेऽपि**—दध्युष्ट्रो-
भये **उभयोद्भवे**—दध्युष्ट्रोभयोद्भवे, उभयमुभयजननस्वभावमिति तुल्यात् स्वभाव-
द्वयात् उपजायमानमुभयमप्येतत् तुल्यमेव भवतीति । एवं **चोदनेऽन्यतरस्येह**
दधि खादेत्येवं **प्रवृत्तौ नियमः कुतः ?** उभयोस्तदुभयस्वभावजन्यत्वेन तुल्यत्वा- 25
दिति । १६ । अत एवाह—**उभयो**रित्यादि । उभयोः—दध्युष्ट्रयोस्**तुल्यरूप-**
**त्वात्** तदुभयजनकत्वेन **निरंशत्वाच्च सर्वथा** एकस्वभावत्वेन, एवं **विशेषा-**
**सम्भवात्** कार्यदध्युष्ट्रयोरिति सामर्थ्यम्, **ध्वान्तमवधूय विचिन्त्यतां**
प्रवृत्तिनियमः कुत इत्येतत् । १७ । **एव**मित्यादि । एवम्—उक्तनीत्या **सर्वत्र**—
विष-मोदकादौ **संयोज्यः प्रवृत्त्यनियमो बुधैः**—पण्डितैः **प्रक्रान्तार्थानुसारेण** 30
दध्युष्ट्रयोः परेणोपन्यस्तत्वात् **लेशतस्तु निदर्शितः** प्रवृत्त्यनियम **इत्यादि** ॥

१–२ अनुष्टुप् । ३ 'द्वितये' इति ग–पाठः । ४–६ अनुष्टुप् । ७ 'खाद प्रवृत्तौ' इति घ–पाठः ।

( मूलम् )

यच्चोक्तम्[1]–'सर्ववस्तुशबलवादिनः क्वचिदन्यासंसृष्टाकारबुद्ध्यसिद्धेः तथावाचकाभावात् संहारवादानुपपत्तिः, तत्सिद्धौ वा तत
५एव तत्स्वभावभेदात् तदेकरूपतैव' इत्येतदप्ययुक्तम्, सर्ववस्तुशबलभावेऽपि तथाक्षयोपशमवत्प्रमातुर्[2]गुणप्रधानभावेन क्वचिदन्यासंसृष्टाकाराया बुद्धेः सिद्धेः, सन्निकृष्ट-विप्रकृष्टयोः प्रमात्रोरुष्ट्र एव, सदुष्ट्रादिबुद्धिभेददर्शनाद् विप्रकृष्टो हि तत्र प्रमाता तथाप्रतिपत्तिवीर्यतोऽप्रधानगुणभूतमपि भावेन गुणभूतोष्ट्रत्वादिवि-
१० शेषं पट्वप्रतीत्यपेक्षापादितप्रधानभावं सन्मात्रमवैति, यथा विशिष्टवस्त्रादौ रक्तादि, सन्निकृष्टस्त्वन्यथाप्रतिपत्तिबलेन उक्तरूपमपि तत्त्वतस्तथाग्रहणगुणोपनतमुख्यभावमुपसर्जनीकृतसत्ता-

( स्वो० व्या० )

यच्चोक्तं मूलपूर्वपक्षे[3]–'सर्ववस्तुशबलवादिनः' इत्यादि यावत् 'तत्सिद्धौ
१५ वा तत एव तत्स्वभावभेदात् तदेकरूपतैव' इति एतत् प्राग् व्याख्यातमेवेति न व्याख्यायते। अत्र तु दूषणमभिधातुमाह–एतदप्ययुक्तम्। कथमित्याह–सर्ववस्तुशबलभावेऽपि सति तथाक्षयोपशमवत्प्रमातुः[4], चित्रक्षयोपशमवत इत्यर्थः, गुणप्रधानभावेन–वक्ष्यमाणोदाहरणगतेन क्वचित्–वस्तुनि अन्यासंसृष्टाकाराया इव बुद्धेः सिद्धेः–उपलब्धेः। इहैव भावार्थमाह–सन्निकृष्टविप्रकृ-
२० ष्टयोः प्रमात्रोरुष्ट्र एव वस्तुनि, सदुष्ट्रादिबुद्धिभेददर्शनात्। कथमेतदेवमित्याह–विप्रकृष्टो हि तत्र–उष्ट्रे प्रमाता तथाप्रतिपत्तिवीर्यतः–सामान्यप्रतिपत्तिसामर्थ्येन अप्रधानगुणभूतमपि[5] भावेन–परमार्थेन 'सन्मात्रमवैति' इति योगः। किंविशिष्टमित्याह–गुणभूतोष्ट्रत्वादिविशेषं गुणभूतः–अप्रधानभूत उष्ट्रत्वादिविशेषो यस्मिंस्तत् तथा। एतदेव विशिष्यते[6] पट्वप्रतीत्यपेक्षया–
२५ निश्चयप्रतीत्यपेक्षया आपादितः प्रधानभावो यस्य तत् तथा। एवम्भूतं सन्मात्रमवैति। निदर्शनमाह–यथा विशिष्टवस्त्रादौ पटादिरूपे रक्तादि रक्तं किमपीति। सन्निकृष्टः पुनः प्रमाता अन्यथाप्रतिपत्तिबलेन–तथाप्रतिपत्तिवीर्यापेक्षया, विशेषप्रतिपत्तिसामर्थ्येनेत्यर्थः, उक्तरूपमपि तत्त्वतः–अप्रधानगुणभूतमपि परमार्थेन 'उष्ट्रत्वादि' इति योगः, 'अवैति' इति क्रियानुवृत्तिः।
३० एतदेव विशिष्यते–तथाग्रहणगुणेन–विशेषग्रहणोपकारेण उपनतो मुख्य-

१ २५तमे पृष्ठे। २ 'शमवतः प्रमातु०' इति क–पाठः। ३ २५ तमे पृष्ठे। ४ 'शमवतः प्रमातु०' इति क–पाठः। ५ अप्रधानमत एव गुणभूतमित्यर्थः। ६ 'विशिष्यते यदुत प्रतीत्य०' इति क–पाठः।

(मूलम्)

**समानरूपमुष्ट्रत्वादि रक्तादाविव विशिष्टं वस्त्रादीति । तथाक्षयोपशमवत्त्वं च प्रमातुः प्रभास्वरस्य प्रकृत्या बोधह्रासवृद्ध्युपलब्धेः, आगन्तुककर्ममलभावेन द्रव्याद्यवाप्तितोऽविरुद्धमेव । न चैतद् बुद्धि- ५ द्वयमपि न तन्निमित्तम्, तद्भावभावित्वाविशेषात् । एवमप्येकस्याः अन्यथाकल्पनेऽतिप्रसङ्गतेति[1] तथावाचकस्यापि भावात्, कथञ्चित् प्रवृत्तिनिमित्तभेदात् तथासंहारवादोपपत्तिः । [2]शेषं चान-**

(स्वो० व्या०)

**भावो** यस्य तत् तथा । एतदेव विशेष्यते—**उपसर्जनीकृतं सत्तासमान- १० रूपं** यस्मिंस्तत् तथा **उष्ट्रत्वाद्यवैति** । **रक्तादाविव विशिष्टं वस्त्रादीति** निदर्शनम्, 'पटोऽयम्' इति । **तथाक्षयोपशमवत्त्वं च**—चित्रक्षयोपशमवत्त्वं च **प्रमातुः**, 'अविरुद्धमेव' इति योगः । **प्रभास्वरस्य प्रकृत्या**—स्वभावेन **बोधह्रासवृद्ध्युपलब्धेः** कारणात्, किमित्याह—**आगन्तुककर्ममलभावेन** हेतुना **द्रव्याद्यवाप्तितः**—द्रव्य-क्षेत्र-काल-भव-भावावाप्तेः, **अविरुद्धमेव** 'तथा- १५ क्षयोपशमवत्त्वम्' इति क्रिया निदर्शितैव । **न चैतदि**त्यादि । न चैतद् **बुद्धिद्वयमपि** सदुष्ट्रादिप्रतिभासम्, **न तन्निमित्तं**—नोष्ट्रनिमित्तम् । किं तर्हि ? उष्ट्रनिमित्तमेव । कुत इत्याह—**तद्भावभावित्वाविशेषात्** । तथाहि—[3]यथा सद्बुद्धिः उष्ट्रभावभाविनी, एवमुष्ट्रबुद्धिरपि । **एवमप्येकस्याः**, [4]प्रक्रमात् सद्बुद्धेः, **अन्यथाकल्पने**—अतन्निमित्तत्वकल्पने**ऽतिप्रसङ्गः**, उष्ट्रबुद्धेरप्यतन्निमित्तत्वप्रसङ्गात् । नावि- २० कल्पबुद्धेरभेदे विकल्पभेदो न्याय्य **इति** । ततश्च स्थितमेतत्—एवं 'सर्ववस्तुशबलभावेऽपि तथाक्षयोपशमवत्प्रमातुर्गुणप्रधानभावेन क्वचिदन्यासंसृष्टाकाराया इव बुद्धेः [5]सिद्धेः'[6] इति । **तथावाचकस्यापि भावात्** तथा—तेन प्रकारेण क्वचिदन्यासंसृष्टाकारस्येव वाचकस्यापि—शब्दस्यापि भावात् । भावश्च **कथञ्चित् प्रवृत्तिनिमित्तभेदात्** गुणप्रधानभावेन, 'विप्रकृष्टो हि तत्र प्रमाता तथाप्रतिपत्तिवीर्य- २५ तोऽप्रधानगुणभूतमपि भावेन गुणभूतोष्ट्रत्वादिविशेषं पटुप्रतीत्यपेक्षापादितप्रधान-

(विवरणम्)

(२०-२१) **नाविकल्पबुद्धेरभेदे विकल्पभेदो न्याय्य** इति । न—नैवाविकल्पबुद्धेः अभेदे सति विकल्पभेदो न्याय्यः—घटमानकः सन्नुष्ट्र इति भेदेनोत्पन्नाद् विकल्पयुगलादनुमिमीमहे यदुत निर्विकल्पबुद्धावपि तद्वस्तु द्विस्वभावं प्रतिभासितमिति ॥ ३०

१ 'प्रसङ्ग इति' इति ग—पाठः । २ 'शेषं त्वनभ्युप०' इति ग—पाठः । ३ 'यदा' इति क—पाठः । ४ 'कस्य; प्रक्रमात्' इति घ—पाठः । ५ 'सिद्धिरिति' इति क—पाठः । ६ प्रेक्ष्यतां ३०० तमं पृष्ठम् ।

( मूलम् )

भ्युपगमादेव न नः क्षतिमावहति, केवलग्रहणपुरस्सरसंहारवादासिद्धेः, नरसिंह-मेचकवद् वस्तुनो जात्यन्तरात्मकत्वाभ्युप-
५ गमात्, एकस्वभावत्वे तु कार्यद्वयायोगेन धीध्वन्यभाव एव, हेत्वभेदे फलभेदासिद्धेः ॥

एतेन 'सर्वात्मकत्वे च भावानाम्' इत्याद्यपि प्रत्युक्तम्, तुल्ययोगक्षेमत्वात्, निरूपितवस्तुन एव तस्य ज्ञापकत्वेनाभिधानात् । एवं चाक्रमेणाप्यनेकधर्मके वस्तुनि पुरःस्थितेऽप्यसम्पूर्णज्ञानदोषः,

१० ( स्वो० व्या० )

भावं सन्मात्रमवैति' इत्युक्तमित्यादि । ततश्चास्ति कथञ्चित् प्रवृत्तिनिमित्तभेदो वाचकस्येति भावनीयम् । तथासंहारवादोपपत्तिः तथा-प्रधानगुणभावेन संहारवादोपपत्तिः 'सन्नुष्ट्रः सद् दधि' इति । शेषमित्यादि । शेषं तु पूर्वपक्षोक्तम्[1]-'तत्सिद्धौ वा तत एव च तत्स्वभावभेदात् तदेकरूपतैव' इत्यादि, अनभ्युपग-
१५ मादेव कारणात् न नः क्षतिमावहति-नास्माकं पीडां प्रापयति । एतदेवाह-केवलग्रहणपुरस्सरसंहारवादासिद्धेः । असिद्धिश्च नरसिंह-मेचकवत् इति निदर्शनम्, वस्तुनः-दध्यादेः जात्यन्तरत्वाभ्युपगमात् । परस्य त्वयं दोष एवेति निदर्शनायाह-एकस्वभावत्वे तु वस्तुनोऽभ्युपगम्यमाने कार्यद्वयायोगेन हेतुना, किमित्याह-धी-ध्वन्यभाव एव-द्वयोर्धी-ध्वन्योरभाव एव । कुत
२० इत्याह-हेत्वभेदे फलभेदासिद्धेः कारणात् । ततश्चाज्ञानानभिधानेन संहारवादादिचिन्ताऽनुपपत्तिरिति भावनीयमेतत् ॥

एतेन-अनन्तरोदितेन वस्तुना 'सर्वात्मकत्वे च भावानाम्' इत्याद्यपि पूर्वपक्षोक्तं[3] प्रत्युक्तम् । कुत इत्याह-तुल्ययोगक्षेमत्वात् अनन्तरोदितेन । अत एव आह-निरूपितवस्तुन एव तस्य-'सर्वात्मकत्वे च भावानाम्' इत्यादेः
२५ ज्ञापकत्वेनाभिधानात् पूर्वपक्षे । एवं चेत्यादि । एवं च कृत्वा अक्रमेणापि-युगपदपि अनेकधर्मके वस्तुनि पुरःस्थितेऽपि सति असम्पूर्णज्ञानदोषः,

( विवरणम् )

(२०-२१) ततश्चाज्ञानानभिधानेन संहारवादादिचिन्ताऽनुपपत्तिरिति । परेण हि मे [4]ज्ञातमेव सन्नुष्ट्र इत्यादिधीध्वनिनिमित्तमतः कथमजानानः सन्
३० संहारवादादिचिन्तां कुर्यात् ? ॥

१ ३०० तमे पृष्ठे । २ २५ तमे पृष्ठे । ३ द्रष्टव्यं २५तमं पृष्ठम् । ४ 'ज्ञानमेव' इति च-पाठः । ५ 'पत्तिरेवेति' इति च-पाठः ।

(मूलम्)

**क्रमज्ञानदोषश्च प्रत्युक्तः, [1]तथाविधावरणदोषतस्तदुपपत्तेः। न ह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगमः, तस्यानेकधर्मत्वात्, अवगमस्य च कारणान्तरापेक्षत्वात्। अर्थो हि यथाधर्माभ्यासमवगमं जनयति, यथाऽङ्गनार्थः सन्निधानाविशेषेऽपि परिव्राट्प्रभृतीनां कुणपाद्यवगमं प्रत्यासत्तितो वा, यथा जनकाध्यापकः सुतस्य जनकावगमं, प्रकरणापेक्षो वा यथा वैद्यादिः, तत्कथायां प्रस्तुतायां तद्दर्शिनां तत्रानेकधर्मसम्भवेऽपि वैद्याद्यवगममिति। न चैकस्यानेकत्वविरोधेन तत्रानेकधर्मत्वासम्भवः,[2] एकत्वानभ्युपगमात्,** १०

(स्वो० व्या०)

सम्पूर्णे तदयोगात्, **क्रमज्ञानदोषश्च** अक्रमे तदयोगादेव **प्रत्युक्तः**। कथमित्याह—**तथाविधेत्यादि**। तथाविधा**वरणदोषतः**—असम्पूर्णक्रमज्ञानहेतुचित्रक्षयोपशमनिबन्धनावरणदोषेण **तद्भावोपपत्तेः**—असम्पूर्णक्रमज्ञानभावोपपत्तेः। एतत्समर्थनायाह **न हीत्यादिना**। न हि **अर्थसन्निधिरिति**—एवं कृत्वा **अयोगिनां**—प्रमा- १५ तॄणां **सर्वाकारमेव**—धर्मकार्त्स्न्येन **तदवगमः**—अर्थावगमः। कुत इत्याह—**तस्य**—अर्थस्य **अनेकधर्मत्वात्**। **अवगमस्य च** प्रक्रमात् तत्सम्बन्धिनः **कारणान्तरापेक्षत्वात्** तत्तद्धर्माभ्यासादि कारणान्तरमिति। अत एवाह—**अर्थो** यस्माद् **यथाधर्माभ्यासमवगमं जनयति**, यस्य यथा धर्माभ्यासो यथाधर्माभ्यासम्। निदर्शनमाह—**यथाऽङ्गनार्थः**—स्त्र्यर्थः **सन्निधानाविशेषेऽपि** सति **परि**- २० **व्राट्प्रभृतीनां**, परिव्राट्-कामुक-शुनामित्यर्थः, **कुणपाद्यवगमं** कुणप-कामिनी-भक्ष्यावगमं **प्रत्यासत्तितो वा** अर्थो ह्यवगमं जनयति। निदर्शनमाह—**यथा जनकाध्यापकः सुतस्य जनकावगमं** नाध्याप्यान्तरस्येवोपाध्यायावगमम्, यतस्तमायान्तं दृष्ट्वा एक एवमाह—'तात आगच्छति', अपरः पुनः 'उपाध्याय आगच्छति' इति। **प्रकरणापेक्षो वा यथा वैद्यादिः**, 'आदि'शब्दाद् दातृत्वादिधर्म- २५ ग्रहः, **तत्कथायां प्रस्तुतायां**, वैद्यादिकथायामित्यर्थः, **तद्दर्शिनां**—वैद्यादिदर्शिनां प्रमातॄणां **तत्र**—वैद्यादौ **अनेकधर्मसम्भवेऽपि** दातृत्वादिधर्मापेक्षया **वैद्याद्यवगममिति**। तद् यथा—'वैद्य आगच्छति', 'दाताऽऽगच्छति' इति। **न चैकस्य** वस्तुनोऽ**नेकत्वविरोधेन तत्र**—वस्तुनि **अनेकधर्मत्वासम्भवः**। कुत इत्याह—**एकत्वानभ्युपगमात्** तस्य एकानेकं तदभ्युपगम्यत इत्याह—**एकानेके** ३०

१ 'तत्तथाविधा०' इति ग—पाठः। २ 'य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्मः स एव तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतादिलक्षणः' इत्यधिकः क—पाठः।

( मूलम् )

एकानेके च विरोधासिद्धेः, इतरेतरानुवेधात्, जात्यन्तरात्मकत्वोपपत्तेः, तथासंवेदनादित्युक्तप्रायम् ॥

५ न च सर्वथा सदृशानुभवनिमित्ताः कुणपादिविकल्पा इति अतत्कारणातत्कार्यव्यावृत्तानां सदृशत्वाभ्युपगमात्, तदनुभवानां च अतत्कार्यव्यावृत्त्यसिद्धेः, भिन्नजातीयविकल्पनिबन्धनत्वात्

---

( स्वो० व्या० )

च जात्यन्तरात्मके वस्तुनि **विरोधासिद्धेः** अनेकत्वस्य । असिद्धिश्च **इतरेतरानु-** १० **वेधात्**, एकत्वानेकत्वयोरिति । अधिकृतानुवेधश्च[1] **जात्यन्तरात्मकत्वोपपत्तेः**। एतच्च **तथासंवेदनात्**—जात्यन्तरात्मकतया एकत्वानेकत्वसंवेदनादि**त्युक्तप्रायं**—प्रायेणोक्तम् ॥

**न चे**त्यादि । न च **सर्वथा सदृशानुभवनिमित्ताः** स्वलक्षणानुभवमधिकृत्य **कुणपादिविकल्पा इति** । कुत इत्याह—**अतत्कारणातत्कार्येभ्यो** १५ **व्यावृत्ता** इति विग्रहस्तेषां **सदृशत्वाभ्युपगमात्** अनुभवानां घटानुभवानामिव **तदनुभवानां च**—कुणपादिविकल्पानुभवानां च **अतत्कार्यव्यावृत्त्यसिद्धेः** । असिद्धिश्च **भिन्नजातीयविकल्पनिबन्धनत्वात्** तदनुभवानां

---

( विवरणम् )

(१३) **सदृशानुभवनिमित्ता** इति । एकाकारा एकस्वलक्षणानुभवाः[2] परिव्राट्- २० कामुक-शुनां [3]प्रमदातनवोऽभूवन् परं विकल्पा नाना प्रकारा जायन्त इति परेषामभिप्रायः ॥

(१४-१५) **अतत्कारणातत्कार्येभ्यो व्यावृत्ता** इति । द्विविधं हि बौद्धमते सदृशत्वनिबन्धनम्—[4]अतत्कारणव्यावृत्तिरतत्कार्यव्यावृत्तिश्च । यथा सर्व एव घटानुभवा अतत्कारणव्यावृत्ताः स घटः कारणं येषां ते तत्कारणघटानुभावाः, २५ न तत्कारणा अतत्कारणाः—पटाद्यनुभवास्तेभ्यो व्यावृत्तत्वाद् घटानुभवानां ते तथा त एवा[5]तत्कार्यव्यावृत्ताः । तद् घटविकल्पलक्षणं कार्यं येषां घटानुभवानां ते तत्कार्याः, न तत्कार्याः अतत्कार्याः—पटाद्यनुभवास्तेभ्यो व्यावृत्तत्वाद् घटानुभावानाम् । एतेषु तु कामुकाद्यनुभवेषु अतत्कारणव्यावृत्तिरस्ति सर्वेषामेवैकालम्बनत्वात्, न त्वतत्कार्यव्यावृत्तिर्भिन्नविकल्पलक्षणकार्यजनकत्वात् तेषामिति ॥

---

१ 'अधिकृतोपपत्तिश्च' इति क-पाठः । २ 'लक्षणासु परि०' इति क-पाठः । ३ 'प्रमदातः नावभूवन्' इति च-पाठः । ४ 'अतत्कारणप्रवृत्ति०' इति च-पाठः । ५ 'तत्कार्यवृत्ताः' इति च-पाठः ।

(मूलम्)

कुणप-कामिन्यादिविकल्पानां भिन्नजातीयत्वाभ्युपगमात् तदनभ्युपगमेऽतिप्रसङ्गः, रूप-रसादिविकल्पानामप्यभिन्नजातीयत्वापत्तेः, तथा च तदनुभवानां सदृशतेति रूपरसादिभेदाभावः। भिन्नेन्द्रिया- ५ नुभवनिबन्धनत्वात् तद्विकल्पानामयमदोष इति चेत्, एवमपि सितेतरादिभेदाभावप्रसङ्गः, तद्विकल्पानां भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्धेः, सर्वेषामेव तेषां चाक्षुषत्वादिति ॥

न च भिन्नविकल्पोपादानवासनासहकारिभावतस्तदनुभवस्या-

(स्वो० व्या०) १०

कथमेतदेवमित्याह—[1]कुणप-कामिन्यादिविकल्पानां भिन्नजातीयत्वाभ्युपगमात्। तदनभ्युपगमे—कुणपादिविकल्पानां भिन्नजातीयत्वानभ्युपगमेऽतिप्रसङ्गः। कथमित्याह—रूपरसादिविकल्पानामप्यभिन्नजातीयत्वापत्तेः। ततः किमित्याह—तथा चेत्यादि। तथा च तदनुभवानां—रूपरसाद्यनुभवानां सदृशतेति कृत्वा। किमित्याह—रूपरसादिभेदाभावः, रूपमात्रं रसादिमात्रं १५ वा जगत् स्यादित्यर्थः। भिन्नेन्द्रियानुभवनिबन्धनत्वात्—चक्षूरसनादीन्द्रियानुभवनिबन्धनत्वात् तद्विकल्पानां—रूपरसादिविकल्पानाम् अयं—रूपरसादिभेदाभावलक्षणो दोषोऽदोष इति चेत्, भिन्नेन्द्रियानुभवजत्वेन भिन्नजातीया एव रूपरसादिविकल्पाः, तन्निबन्धनाश्चानुभवाः, तद्धेतवो रूपादयश्चेति न रूपरसादिभेदाभाव इत्यर्थः। एतदाशङ्क्याह—एवमपीत्यादि। एवमपि—भिन्नेन्द्रियानुभवनि- २० बन्धनत्वेन तद्विकल्पाना[2]मुक्तदोषादोषत्वेऽपि सितेतरादिभेदाभावप्रसङ्गः—शुक्लकृष्णादिभेदाभावप्रसङ्गः। कुत इत्याह—तद्विकल्पानां—सितेतरादिविकल्पानां भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्धेः। असिद्धिश्च सर्वेषामेव तेषां—तद्विकल्पानां चाक्षुषत्वादिति ॥

इहैव प्रस्ताव इति लेशतो 'योगाचार'मतमधिकृत्याह—न चेत्यादि। न च २५ भिन्नविकल्पोपादानवासनासहकारिभावतः कारणात् तदनुभवस्य-

(विवरणम्)

(२५-२६) न च भिन्नविकल्पोपादानवासनासहकारिभावतः कारणात् तदनुभवस्येति। अयमत्राभिप्रायः—योऽयं बाह्यग्राह्याकारविकलो निर्विकल्पो बोधः सितादिरूपः, स भिन्नविकल्पोपादानभूतानां नानाप्रकारवासनानां सहकारित्वं सम- ३० वलम्ब्य प्रभूतविकल्पहेतुर्भवतीति ॥

१ 'कुणपानामित्यादिविकल्पानां' इति ङ-पाठः। २ 'मुक्तदोषत्वेऽपि' इति क-ङ-पाठः।

(मूलम्)

**यमदोषः, सर्वथैकस्वभावत्वे तस्यानेकसहकारित्वानुपपत्तेः तदन्यतमसहकार्यैकस्वभावत्वेनान्यत्र तद्भावविरोधादित्युक्तप्रायमेव। ५ततः कथञ्चिद् भिन्नधर्मविषया एव कुणपाद्यवगमा इति। तथाहि-भाविजीववियोगयोग्यतालक्षण एव स्त्रीशरीरधर्मः कुणपावगमस्य निमित्तम्, तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतालक्षणस्तु**

(स्वो० व्या०)

सिताद्यनुभवस्य **अयं**–तद्विकल्पानां भिन्नेन्द्रियानुभवनिबन्धनत्वासिद्ध्या सिते-१० तरादिभेदाभावप्रसङ्गलक्षणो दोषोऽ**दोषः**। कुत इत्याह–**सर्वथैकस्वभावत्वे** सति **तस्य**–तदनुभवस्य, किमित्याह–**अनेकसहकारित्वानुपपत्तेः** अनेकेषां–भिन्नविकल्पोपादानवासनादीनां सहकारित्वानुपपत्तेः। अनुपपत्तिश्च **तदन्यतमसहकार्यैकस्वभावत्वेन**–सितादिविकल्पोपादानान्यतमवासनासहकार्यैकस्वभावत्वेन हेतुना **अन्यत्र**–वासनान्तरे **तद्भावविरोधात्**–सहकारिभावविरोधात्, सिता-१५ द्यनुभवस्य ह्यनेकसहकारित्वे सति आन्तरसितादिभावेनाधिकृतदोषो न दोष इति भवति, न चैतदेवम्, **इत्युक्तप्रायमेव**। **तत** इत्यादि। ततः–तस्मात् **कथञ्चिद् भिन्नधर्मविषया एव कुणपादिविकल्पा इति** स्थितमेतत्। एतदेव विशेषणाह **तथाही**त्यादिना। तथाहीति पूर्ववत्। भावी चासौ जीववियोगश्चेति विग्रहः, तस्य योग्यता **भाविजीववियोगयोग्यता** सैव **लक्षणं** यस्य स २० तथा, स एवम्भूतः **स्त्रीशरीरधर्मः कुणपावगमस्य निमित्तम्**। तथा तथाविधाः–अतत्त्वप्रवर्तकाः, तथाविधाश्च ते इच्छाकामादयश्चेति समासः 'आदि'शब्दात्

(विवरणम्)

**(१४-१५) सिताद्यनुभवस्य ह्यनेकसहकारित्वे सति आन्तरसितादिभावेनाधिकृतदोषो न दोष इति भवतीति**। अत्रैवमक्षरयोजना–अधिकृतदोषो न दोष २५ इति न भवति। कस्मिन् सतीत्याह–अनेकसहकारित्वे। कस्येत्याह–सिताद्यनुभवस्य–निर्विकल्पसितादिबोधलक्षणस्य। केनह्यनेकसहकारित्वमित्याह–आन्तरसितादिभावेनेति। अयमत्र परमार्थः–आन्तरसितादिवासनाविशेषाणामनेकेषां सहकारित्वे सति अधिकृतानुभवस्याधिकृतदोष एकस्मादनेकसहकारित्वकार्यजननलक्षणोऽदोषो भवति। न चैतद् युज्यते, आन्तराणां सितादीनामनेकेषामभावात्, ज्ञानमात्रस्यैकरूपस्याभ्यु-३० पगमात्, अनुभवस्य चैकरूपस्यानेकवासनासहकारित्वस्याभावात्, अन्यथैकत्वायोगादिति ॥

१ 'गमनिमित्तं' इति ग–पाठः। २ 'गमनिमित्तं' इति क–पाठः।

( मूलम् )

**कामिन्यवगमस्य, क्षुद्रजन्तुपरिभोगक्षुदपनोदयोग्यतालक्षण एव तु भक्ष्यावगमस्येति। न च य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्मः स एव तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतादि- ५ लक्षणः, फलभेदात्, तथाविध[1]वियोग[2]रमणयोगादीनां [3]तथोपलब्धेः, लोकानुभवसिद्धत्वात्, अन्यथा भेदव्यवस्थाऽयोगादिति। एवं जनकत्वा-ऽध्यापकत्व-वैद्यत्व-दातृत्वादीनामपि कथञ्चिद् भेदः अवसेयः, फलभेदान्यथानुपपत्तेः, तस्य चाध्यक्षसिद्धत्वात्, जनकत्वस्यैवाध्यापकत्वे तस्यापि तत्त्वात् पित्रादेरपि पुत्रत्वादिप्रसङ्गः, १०**

---

( स्वो० व्या० )

मदन-कामग्रहः, तेऽस्य विद्यन्त इति **तथाविधेच्छाकामादिमान्**, एवम्भूतश्चासौ **जीवश्चेति**, तेन **संयोगयोग्यता** संयोगः—सम्भोगस्तस्य योग्यता, सैव **लक्षणं** यस्य स तथोक्तः। '**तु**'शब्दः 'पुनः'शब्दार्थः। एवंलक्षणः पुनः स्त्रीशरीरधर्मः **कामिन्यवगमस्य** निमित्तमिति। तथा **क्षुद्रजन्तोः**—श्व-शृगालादेः १५ [4]**परिभोगेन**—भक्षणेन **क्षुदपनोदः**—बुभुक्षापनयनं तस्य **योग्यता**, सैव **लक्षणं** यस्य स तथा। एवम्भूतः पुनः स्त्रीशरीरधर्मः, **भक्ष्यावगमस्येति** भक्ष्यावगमनिमित्तम्। **न चे**त्यादि। **न च य एव भाविजीववियोगयोग्यतालक्षणः स्त्रीशरीरधर्मः स एव तथाविधेच्छाकामादिमज्जीवसंयोगयोग्यतादिलक्षणः** स्त्रीशरीरधर्म इति वर्तते। 'आदि'शब्दात् क्षुद्रजन्तुपरिभोगक्षुद- २० पनोदयोग्यतालक्षणधर्मग्रहः। कुतो न चेत्याह—**फलभेदात्**। फलभेदश्च **तथाविधवियोगश्च रमणयोगादयश्चेति** समासः तेषां **तथोपलब्धेः**—भेदेनोपलब्धेः। तत्र तथाविधवियोगः—भाविजीववियोगः, रमणयोगः—संयोगः, 'आदि'शब्दात् क्षुद्रजन्तुपरिभोगक्षुदपनोदपरिग्रहः। एते च भेदेनोपलभ्यन्ते। कथमित्याह—**लोकानुभवसिद्धत्वात्**। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा भेदव्यवस्थाऽ- २५ योगादिति। एवं जनकत्वा-ऽध्यापकत्व-वैद्यत्व-दातृत्वादीनामपि** धर्माणां **कथञ्चिद् भेदोऽवसेयः**। कथमित्याह—**फलभेदान्यथानुपपत्तेः**। **तस्य च**—फलभेदस्य न्या -ऽध्याप्यादेः **अध्यक्षसिद्धत्वात्**। विपक्षे बाधामाह—**जनकत्वस्यैव अध्यापकत्वे**ऽभ्युपगम्यमाने **तस्यापि**—अध्यापकत्वस्यापि

---

१ 'वियोगे रमणयोगा०' इति क-पाठः। २ 'रमणीयोगा०' इति ग-पाठः। ३ 'तथाविधोपलब्धेः' इति क-पाठः। ४ 'परिभोगः' इति क-पाठः।

( मूलम् )

**पुत्रस्यापि क्वचिदध्यापकत्वसिद्धेरिति ॥**

**इतश्चैतदेवं दानहिंसादिविरतिचेतनायाः स्वसंवेद्यत्वेऽप्यभ्युदया-**
५ **दिसाधनशक्त्यवगमानुपपत्तेः। न च तच्छक्तेरपि अविकल्पकेनाव-**
**गमः, तथानिश्चयाभावात्। अवगमेऽपि फलस्यानन्तर्याभावात्**
**अतत्फलसाधर्म्याद् [1]विपर्ययस्[2]तस्याविनिश्चय इति चेत्, न, अवि-**
**चारितरमणीयत्वात्, अतत्फलसाधन्या तत्त्वतः साधर्म्यासिद्धेः,**
**तस्याः पारम्पर्येणापि अतत्साधकत्वात्, इतरस्यास्तु तथासाधक-**

१० ( स्वो० व्या० )

**तत्त्वात्**–जनकत्वात्। किमित्याह–**पित्रादेरपि**, 'आदि'शब्दात् पितामहग्रहः, **पुत्रत्वादिप्रसङ्गः** 'आदि'शब्दात् पौत्रत्वग्रहः। कुतः प्रसङ्ग इत्याह–**पुत्रस्यापि** 'अपि'शब्दात् पौत्रस्यापि **क्वचिदध्यापकत्वसिद्धेरिति** "अध्यापयत पुत्रकाः!" इत्यादि श्रुतिप्रामाण्यादिति ॥

१५ अभ्युच्चयमाह–**इतश्चैतदेवं** 'न ह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगमः' इत्येतदित्थम्। उपपत्तिमाह–**दान-हिंसादिविरतिचेतनाया** इति। दानं च हिंसादिविरतिश्च दानहिंसादिविरती, तत्प्रधाना चेतना दानहिंसादिविरतिचेतना, तस्यास्तथाविधधर्मरूपाया इत्यर्थः। **स्वसंवेद्यत्वेऽपि** सति अभ्युदयादिसाधनं चासौ शक्तिश्चेति विग्रहः, स्वर्गादिरभ्युदयः, 'आदि'शब्दान्निःश्रेयसग्रहः, २० [3]तस्याः, अवगमानुपपत्तिः–परिच्छेदानुपपत्तिः, **अभ्युदयादिसाधनशक्त्यवगमानुपपत्तिस्ततः। न चेत्यादि। न च तच्छक्तेरपि**–अभ्युदयादिसाधनशक्तेरपि **अविकल्पकेनावगमः**। [4]कुत इत्याह–**तथा**–अभ्युदयादिसाधनशक्तित्वेन **निश्चयाभावात्**। पराभिप्रायमाह–**अवगमेऽपि** तच्छक्तेरविकल्पकेन **फलस्य**–अभ्युदयादेर**आनन्तर्याभावात्**–अनन्तरभावाभावात्, अतत्फलया शक्त्या साधर्म्य- २५ **मतत्फलसाधर्म्यं** तस्मात्, [5]**विपर्ययस्तस्य**–प्रमातुर**विनिश्चय इति चेत्** तथाऽभ्युदयादिसाधनशक्तित्वेन। एतदाशङ्क्याह–**न, अविचारितरमणीयत्वात्**। कथमेतदेवमित्याह–**अतत्फलसाधन्या** शक्त्या **तत्त्वतः साधर्म्यासिद्धेः**। असिद्धिश्च **तस्याः**–अतत्फलसाधन्याः शक्तेः **पारम्पर्येणापि**; किमित्याह–**अतत्साधकत्वात्**, न तत्साधकत्वमतत्साधकत्वं तस्मात्, विवक्षितफलासाधकत्वात्

१ 'विपर्ययस्तस्या०' इति घ–पाठः। २ 'स्तस्या निश्चय' इति ग–पाठः। ३ 'तस्यावगमा०' इति क–घ–पाठः। ४ 'कुतोऽत्त इत्याह' इति क–पाठः। ङ–पाठस्तु 'कुतो नेत्याह' इति। ५ 'विपर्ययस्तस्य' इति घ–पाठः। ङ–पाठस्तु 'विपर्ययस्तप्रमातु०' इति।

(मूलम्)

त्वात्, अन्यथा पारम्पर्येणापि ततस्तदसिद्धेः, इत्थम्भूतयोरपि तयोः साधर्म्याभ्युपगमेऽपन्यायः। इति सर्वात्मना तद्ग्रहे तथैव निश्चयापत्तिः, तमन्तरेणापि तत्तथाताऽभ्युपगमेऽतिप्रसङ्गात्॥ ५

स्यादेतत् सर्वात्मना तद्ग्रहेऽपि न तथैव निश्चयो भवति, कारणान्तरापेक्षित्वात्[1], बुद्धिपाटवादेर्निश्चयभेददर्शनात्, तीक्ष्णबुद्धीनां योगिनां रूपदर्शनमात्रेण तदन्यासम्भविक्षणिकत्वादिनिश्चयसिद्धेः, न, वाङ्मात्रत्वात्, तीक्ष्णबुद्धीनामित्यत्र बुद्धेस्तैक्ष्ण्यायोगात्, सर्वथैकस्वभाववस्तुवादिनस्तत्प्रभवत्वेन सर्वबुद्धीनामेव तत्परिच्छेद- १०

(स्वो० व्या०)

इत्यर्थः। इतरस्यास्तु–तत्फलसाधन्याः तथासाधकत्वात्–पारम्पर्येण साधकत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे पारम्पर्येणापि ततः–शक्तेः तदसिद्धेः–पारम्पर्येणापि विवक्षितफलासिद्धेः, इत्थम्भूतयोरपि तयोः–शक्त्योः साधर्म्याभ्युपगमेऽपन्यायः–अतिप्रसङ्गः। इति–एवं सर्वात्मना तद्ग्रहे–अभ्युदयादिसाधनत्वेन दान-हिंसादिविरतिचेतनाग्रहे किमित्याह–तथैव निश्चयापत्तिः–अभ्युदयादिसाधनत्वेनैव निश्चयापत्तिः तमन्तरेणापि–तथा निश्चयं विनाऽपि तत्तथाताऽभ्युपगमे–दान-हिंसादिविरतिचेतनाया अभ्युदयादिसाधनत्वाभ्युपगमेऽतिप्रसङ्गात्। नीलनिश्चयाजनकस्य पीतानुभवस्य नीलानुभवत्वप्राप्तेः अतिप्रसङ्ग इति भावना॥ २०

स्यादेतदित्यादि। स्यादेतत्–अथैवं मन्यसे सर्वात्मना तद्ग्रहेऽपि–अभ्युदयादिसाधनत्वेन दान-हिंसादिविरतिचेतनाग्रहेऽपि सति किमित्याह–न तथैव–अभ्युदयादिसाधनत्वेनैव निश्चयो भवति। कुत इत्याह–कारणान्तरापेक्षित्वात् निश्चयस्य। एतदेवाह–बुद्धिपाटवादेर्निश्चयभेददर्शनात्। एतद्भावनायाह–तीक्ष्णबुद्धीनां योगिनां, सूक्ष्मबुद्धीनामित्यर्थः, रूपदर्शनमात्रेण तद- २५ न्यासम्भविक्षणिकत्वादिनिश्चयसिद्धेः–पृथग्जनासम्भविक्षणिकत्वादिनिश्चयसिद्धेः। 'आदि'शब्दात् परम्पराकारणत्वादिनिश्चयग्रहः। एतदाशङ्क्याह–न, वाङ्मात्रत्वात्। एतदेवाह–तीक्ष्णबुद्धीनामित्यत्र–अधिकारे बुद्धेस्तैक्ष्ण्यायोगात्। अयोगश्च सर्वथैकस्वभाववस्तुवादिनो वादिनः तत्प्रभवत्वेन–एकस्वभाववस्तुप्रभवत्वेन हेतुना सर्वबुद्धीनामेव तत्परिच्छेदकत्वाविशेषात्– ३०

१ 'रापेक्षितत्वात्' इति ग-पाठः।

(मूलम्)

**कत्वाविशेषात्, तदन्यूनाधिकबोधभावेऽपि च तीक्ष्णैका नापरा तथेत्यनिबन्धनो भेदः। तन्न्यूनाधिकत्वे च न सर्वैः सर्वात्मना तद्ग्रह ५इति यत्किञ्चिदेतत् ॥**

**'तत्तद्वासनाऽभ्यासादपि तन्निश्चयभेदः' इत्यप्ययुक्तम्, तदनुभवानामविशिष्टत्वात्, सर्वथा निरंशवस्त्वालम्बनत्वात्। एवं चानेकगुणसम्भवेऽपि क्वचित् पुरुषे यथाऽभ्यासं गुणनिश्चय इति याचितकमण्डनमेतत्, पुरुषस्यैकस्वभावताभ्युपगमदौर्गत्येनानेकगुणसम्भव- १०विभूतिवैकल्यात्। तदेकस्वभावतायां च न भिन्नस्वभावास्तदनुभवाः, इति कथं दातृत्व-वैद्यत्वादिनिश्चयभेदः? तदनुभवनि-**

---

(स्वो० व्या०)

वस्तुपरिच्छेदकत्वाविशेषात्। वस्तु चेह बाह्याभ्यन्तररूपं परिगृह्यते। **तदन्यूनाधिकबोधभावेऽपि च**—वस्त्वन्यूनाधिकबोधभावेऽपि च सर्वबुद्धीनाम्, **तीक्ष्णै- १५का नापरा, तथा**—तीक्ष्णा, **इति अनिबन्धनो भेदो** बुद्धीनाम्। **तन्न्यूनाधिकत्वे च**—वस्तुन्यूनाधिकबोधभावे चाभ्युपगम्यमाने सति **न सर्वैः**—पृथग्जनैः प्रमातृभिः **सर्वात्मना**—कृत्स्नधर्मादितया **तद्ग्रहः**—वस्तुग्रहः, किन्तु योगिभिः, **इति**—एवं **यत्किञ्चिदेतत्**—अनन्तरोदितमिति ॥

**तत्तद्वासनाऽभ्यासात्** तेषां-पुत्रा-ऽध्याप्या-ऽऽतुरा-ऽर्थिनां जनका-ऽध्यापक- २०वैद्य-दातृवासनाभ्यासात् **तन्निश्चयभेदः**—जनकादिनिश्चयभेद **इत्यप्ययुक्तम्**। कुत इत्याह—**तदनुभवानां**—प्रस्तुतपुत्राद्यनुभवानाम् **अविशिष्टत्वात्**—तुल्यत्वादेतच्चैवम्। **सर्वथा निरंशवस्त्वालम्बनत्वात्**—पुरुषस्यैकस्वभावतया निरंशत्वेन। **एवं चे**त्यादि। एवं च **अनेकगुणसम्भवेऽपि क्वचित् पुरुषे** जनकत्वाद्यपेक्षया **यथाऽभ्यासं** यस्य यस्मिन्नभ्यासो यथाऽभ्यासं **गुणनिश्चयः**—जनक- २५त्वादिनिश्चय **इति याचितकमण्डनमेतत्**। कुत इत्याह—**पुरुषस्यैकस्वभावताऽभ्युपगमदौर्गत्येन**—दारिद्र्येण **अनेकगुणसम्भवविभूतिवैकल्यादि**ति प्रकटम्। **तदेकस्वभावतायां च**—पुरुषस्यैकस्वभावतायां च सत्यां **न भिन्नस्वभावास्तदनुभवाः**—पश्चानुपूर्व्याऽर्थ्या-ऽऽतुरा-ऽध्याप्य-सुतानुभवा **इति**—एवं **कथं दातृत्व-वैद्यत्वादिनिश्चयभेदः?**। कथं च न स्यादित्याह—**तदनुभव-**

---

१ 'तन्न्यूनाधिक०' इति ग-पाठः। २ 'गमे दौर्गत्ये०' इति क-पाठः।

( मूलम् )

**बन्धनत्वान्निश्चयानाम्, तद्विभिन्नस्वभावतायां च कथं वस्तुन एकस्वभावतैवेति चिन्त्यम् ॥**

**स्वोपादानभेदादनुभवभेदः, न वस्तुभेदादिति चेत्, न, सर्वथा एकस्वभावत्वे वस्तुनोऽनेकानुभवसहकारित्वानुपपत्तेः, अन्यतरविज्ञानजन्मसहकार्येकस्वभावत्वेनास्य तदपरविज्ञानजन्मसहकार्येकस्वभावत्वविरोधात् । अनेकविज्ञानजन्मसहकार्येकस्वभावमेतदिति चेत्, न, इत्थम्भूतस्यैकत्वायोगात्, सर्वथैकस्मादनेकजन्मव्याहतेः एकान्तैकस्यानेकत्रानुपयोगात्, तदन्यतरवत् तदितरस्यापि निमि-**

---

( स्वो० व्या० )

**निबन्धनत्वात्**–एकस्वभावपुरुषानुभवनिबन्धनत्वात् **निश्चयानां तद्विभिन्नस्वभावतायां च**–प्रक्रान्तपुरुषविभिन्नस्वभावतायां च **कथं वस्तुन एकस्वभावतैवेति चिन्त्यम्** । नैवेत्यर्थः ॥

पराभिप्रायमाह–**स्वोपादानभेदात्** कारणात् **अनुभवभेद** इह प्रक्रमे पुत्राद्यनुभवभेदो जनकादिनिश्चयानुभवनिबन्धनः, **न वस्तुभेदादिति चेत्**, वस्तुनः पुरुषस्यानेकानुभवसहकार्येकस्वभावत्वादिति । एतदाशङ्क्याह–नेत्यादि । न–नैतदेवं **सर्वथैकस्वभावत्वे वस्तुनः**–पुरुषादेः । किमित्याह–**अनेकानुभवसहकारित्वानुपपत्तेः** । अनुपपत्तिश्च–**अन्यतरविज्ञानजन्मसहकार्येकस्वभावत्वेन** हेतुना **अस्य**–वस्तुनः **तदपरविज्ञानजन्मसहकार्येकस्वभावत्वविरोधात्** । **अनेके**त्यादि । अनेकानि च तानि पुत्राद्यपेक्षया **विज्ञाना**नि च तेषां **जन्म** तस्मिन् **सहकार्येकस्वभावो** यस्य तत् तथा, **एतत्**–अधिकृतपुरुषवस्तु । **इति चेत्**, एतदाशङ्क्याह–**न, इत्थम्भूतस्य**, अनेकजन्मसहकारिण इत्यर्थः, **एकत्वायोगात्** । कथमयोग इत्याह–**सर्वथैकस्मात्** सहकारितयाऽपि **अनेकजन्मव्याहतेः** । व्याहतिश्च **एकान्तैकस्य** वस्तुनः स्वभावस्य वा । **अनेकत्रानुपयोगात्** । अनुपयोगश्च **तदन्यतरवत्**–तत्सहकारिस्वभावपुत्रादिविज्ञानवदित्यर्थः । **तदितरस्यापि**–अध्याप्यादिविज्ञानस्यापि **निमित्ताभेदेन**–

---

( विवरणम् )

(२३) **अनेकजन्मसहकारिण** इति । अनेकेषां जन्मनि सहकारीति विग्रहः ॥

---

१ 'सहकारिस्वभाव०' इति ग–पाठः ।

(मूलम्)

**त्ताभेदेन तत्त्वापत्तेः, अन्यथा कार्त्स्न्येनैकत्रोपयोगायोगादिति। न च नास्त्येव तत्राधिकृतशक्तिः, आयत्यां फलभावात्, व्यवहिता-**
५ **नामपि हेतोः फलानामुत्पत्तिदर्शनात्, मूषिकाऽलर्कविषविकारवत्॥**

**आह–मूषिकाविषादौ आयत्यां तत्फलदर्शनाद् युक्तं तच्छक्त्य-**

(स्वो० व्या०)

पुत्रादिज्ञानसहकारित्वेन हेतुना **तत्त्वापत्तेः**–तत्सहकारिस्वभावपुत्रादिविज्ञानत्वा-पत्तेः। इत्थं चैतदङ्गीकर्तव्यम्, **अन्यथा**–अन्यत्राप्यध्याप्यादिविज्ञानसहकारित्वा-
१० भ्युपगमे **कार्त्स्न्येनैकत्र**–पुत्रादिविज्ञाने **उपयोगायोगादिति** भावनीयमेतत्। **न चे**त्यादि। न च **नास्त्येव तत्र**–दान-हिंसादिविरतिचेतनायां **अधिकृत-शक्तिः**–अभ्युदयादिसाधनशक्तिः। किं तर्हि? अस्त्येव। कुत इत्याह–**आयत्याम्**–आगामिनि काले **फलभावात्**–अभ्युदयादिफलभावात्। एतत्समर्थनायाह–**व्यव-हितानामपि फलानां** क्षणप्रबन्धेन **हेतोः** सकाशाद् **उत्पत्तिदर्शनात्,**
१५ **मूषिकाऽलर्कविषविकारवत्**, मूषिकाऽलर्कविषं ह्यायत्यां विकारं दर्शयति इति लौकिकमेतत्॥

**आह** परः–**मूषिकाविषादौ आयत्यां**–प्रावृडादौ **तत्फलदर्शनात्**–

(विवरणम्)

(९) **पुत्रादिज्ञानसहकारित्वेनेति**। पुत्रादिज्ञानस्य सहकारी पुत्रादिज्ञानसह-
२० कारी अधिकृतपुरुषलक्षणः पदार्थः, स एव सहकारी यस्याध्याप्यादिज्ञानस्य तत् तथा तस्य भावः–तत्त्वं तेन॥

(९–१०) **तत्सहकारिस्वभावपुत्रादिविज्ञानत्वापत्तेरिति**। सः–विवक्षित-पुरुषलक्षणः सहकारी यस्यासौ तत्सहकारी स स्वभावः–स्वरूपं यस्य तत् तथा तच्च तत्पुत्रादिविज्ञानं च तस्य भावः–तत्त्वं तस्यापत्तिः–प्राप्तिस्तस्याः। अयमत्राशयः–
२५ येनैव स्वभावेन जनकः पुत्रज्ञाने सहकारिभावं समासादितवान् तेनैवाध्याप्यविज्ञा-नेऽपि, अतो द्वयोरपि ज्ञानयोरेकत्वापत्तिरनिवारितप्रसरा, एकस्वभावात् सहकारिण उत्पत्तेरिति॥

(१६) **मूषिकाऽलर्कविषविकारवदिति**। अत्र मूषिका प्रतीता। अलर्कस्तु रोगाघ्रातश्वा॥

---

१ 'त्रोपयोगात्, तेन च' इति क-पाठः। २ 'उत्पत्तेरिव' इति ख-च-पाठः।

(मूलम्)

नुमानम्, दान-हिंसादिविरतिचेतनायां तु इष्टस्वर्गादिफलस्यात्यन्तमनुपलम्भादयुक्तमिति। न, अनुपलम्भेऽपि सम्भवात्, इष्टफलभावेऽपि विरोधाभावात्। किमनेन?। साधकमत्र प्रमाणं नास्तीति चेत्, बाधकेऽपि समानः प्रसङ्गः। अत एव संशयोऽस्त्विति चेत्, न, भवत्पक्षे तदयोगात्। कथमयोग इति चेत्, तत्कार्त्स्न्यग्रहणतो[1] याथात्म्यनिश्चयापत्तेः। आवरणदोषादनिश्चय इति चेत्, किं ततस्तस्याः क्षुण्णमिति[2] वाच्यम्। अस्पष्टग्राह्यतेति चेत्, न, योगिनोऽपि तथाग्रहणापत्तेः। न तस्यावरणमिति चेत्, किं तेन? अन्यत एव ग्राह्यभेदसिद्धेः। अयोगिन एव सः, न योगिन इति चेत्, न, तदेकस्वभावत्वविरोधात्। ग्राहकभेदादविरोध इति चेत्, न,

(स्वो० व्या०)

मूषिकाविषादिफलदर्शनाद् युक्तं तच्छक्त्यनुमानं–मूषिकाऽलर्कविषशक्त्यनुमानम्, दान-हिंसादिविरतिचेतनायां तु प्रस्तुतायां इष्टस्वर्गादिफलस्य अत्यन्तमनुपलम्भात्[3] कारणात् अयुक्तमिति। एतदाशङ्क्याह–न, अनुपलम्भेऽपि सति सम्भवात् इष्टफलस्य। सम्भवश्च इष्टफलभावे–स्वर्गादिभावे विरोधाभावात्। किमनेन–विरोधाभावेन?। साधकमत्र–स्वर्गादौ प्रमाणं नास्ति। इति चेत्, एतदाशङ्क्याह–बाधकेऽपि समानः प्रसङ्गः, तदपि नास्त्येवेत्यर्थः। अत एव कारणात् संशयोऽस्तु। इति चेत्, एतदाशङ्क्याह–न, भवत्पक्षे–भवदभ्युपगमे तदयोगात्–संशयायोगात्। कथमयोगः?। इति चेत्, एतदाशङ्क्याह–तत्कार्त्स्न्यग्रहणतः–दान-हिंसादिविरतिचेतनाकार्त्स्न्यग्रहणेन याथात्म्यनिश्चयापत्तेः। आवरणदोषादनिश्चय इति चेत्, एतदाशङ्क्याह–किं ततः–आवरणात् तस्याः–दान-हिंसादिविरतिचेतनायाः क्षुण्णमिति[4] वाच्यम्। अस्पष्टग्राह्यतेति चेत्, न, योगिनोऽपि तथा–अस्पष्टग्राह्यतया ग्रहणापत्तेः। न तस्य–योगिनः आवरणम्। इति चेत्, एतदाशङ्क्याह–किं तेन–आवरणेन? अन्यत एव–अन्यसम्बन्धिन आवरणात् ग्राह्यभेदसिद्धेः ततस्तस्यास्पष्टग्राह्यतोपगमात्। अयोगिन एव सः–ग्राह्यभेदः, न योगिनः। इति चेत्, एतदधिकृत्याह–न, तदेकस्वभावत्वविरोधात्–न

१ 'कार्त्स्न्ये ग्रहण०' इति क–पाठः। २ 'क्षूणमिति' इति घ–पाठः। ३ 'आयत्यामनु०' इति घ–पाठः। ४ 'क्षूणमिति' इति घ–ङ–पाठः।

( मूलम् )

एकस्वभावायाः तद्भेदेऽपि ग्रहणभेदासिद्धेः । न हि नीलसंवेदनमन्यथा स्वनीलत्वमधिगच्छति, अन्यथा च तद् योगीति, अनेकस्व-
५ भावतापत्तेः । अत एकस्वभावस्य वस्तुनः सर्वेषां तुल्यं ग्रहणमग्रहणं चेति सन्न्यायरणस्तम्भः ॥

न च तत्र पारम्पर्येण तत्तत्कार्यसाधनशक्तिनिश्चयः, तथाऽप्रतीतेः, अस्ति च तत्कार्त्स्न्यग्रहीतुर्योगिनः, इतरथा योग्य-ऽयोगिनोस्तत्र विशेषाभावप्रसङ्गात्, तथा च दृष्टेष्टविरोधः । इति न ह्यर्थ-
१० सन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगम इति कृतं प्रसङ्गेन ।

( स्वो० व्या० )

तस्याः—दान-हिंसादिविरतिचेतनाया एकस्वभावत्वविरोधात् । ग्राहकभेदात् कारणात् अविरोधः । इति चेत्, एतदाशङ्क्याह—न, एकस्वभावायाः—दान-हिंसादिविरतिचेतनायाः तद्भेदेऽपि—ग्राहकभेदेऽपि ग्रहणभेदासिद्धेः । एतदेव
१५ निदर्शनान्तरेण भावयन्नाह—न हीत्यादि । न हि नीलसंवेदनमन्यथा स्वनीलत्वमधिगच्छति अनीलत्वादित्वेन, अन्यथा च तत्—नीलत्वं योगीति । कुतो न हीत्याह—अनेकस्वभावतापत्तेः[1] । सर्वोपसंहारमाह—अत एकस्वभावस्य वस्तुनः—पुरुषदानादिचेतनादेः सर्वेषां—पुत्रादीनां तुल्यं ग्रहणमग्रहणं चेति सन्न्यायरणस्तम्भः ॥

२० न चेत्यादि । न च तत्र—एकस्वभावे वस्तुनि पारम्पर्येण—प्रबन्धवृत्त्या तत्तत्कार्यसाधनशक्तिनिश्चयः—तत्तत्कार्यमुत्तरोत्तरक्षणरूपम्, तस्य साधनशक्तयः पारम्पर्येण तत्तत्कार्यसाधनशक्तयः[2], तासु निश्चयो नैव । कुत इत्याह तथाऽप्रतीतेः । अस्ति च तत्र पारम्पर्येण तत्तत्कार्यसाधनशक्तिनिश्चयः । कस्येत्याह—तत्कार्त्स्न्यग्रहीतुः तस्य—एकस्वभावत्वाभिमतस्य वस्तुनः पुरुषदान-
२५ हिंसादिविरतिचेतनादेः कार्त्स्न्यं—सम्पूर्णत्वं तस्य ग्रहीता—परिच्छेत्ता तस्य तत्कार्त्स्न्यग्रहीतुर्योगिनः, तथाऽनागतव्याकरणप्रामाण्यात् । इत्थं चैतदङ्गीकर्तव्यमित्याह—इतरथा योग्यऽयोगिनोस्तत्र[3]—वस्तुनि विशेषाभावप्रसङ्गात् 'परिज्ञानं प्रति' इति सामर्थ्यं तथा च दृष्टेष्टविरोधः । इति—एवं न ह्यर्थसन्निधिरित्येवायोगिनां सर्वाकारमेव तदवगमः—वस्त्ववगम इति कृतं प्रसङ्गेनेति महा-

1 'भावापत्तेः' इति क-पाठः । २ 'तत्कार्य०' इति ख-पाठः । ३ स्तत्रैव वस्तुनि इति क-पाठः ।

(मूलम्)

तथा चोक्तम्—

"वस्तुनोऽनेकरूपस्य नेन्द्रियात् सर्वथा गतिः ।
चित्रावरणयोगेन प्रमातुः किन्तु देशतः ॥ १ ॥[१]
एवं च विप्रकृष्टस्य सन्निकृष्टस्य चैकदा ।
उष्ट्रादौ बुद्धिभेदेनानेकरूपत्वसंस्थितिः ॥ २ ॥[२]
अप्रधानीकृतौष्ट्र्यादिविशेषं प्रतिपद्यते ।
विप्रकृष्टः पुमान् सत्त्वं वस्त्रादौ रक्ततादिवत् ॥ ३ ॥[३]
सन्निकृष्टोऽपि चौष्ट्र्यादि तूर्णं सत्त्वोपसर्जनम् ।
रक्तादाविव वस्त्रादि विशिष्टं तीव्रवीर्यतः ॥ ४ ॥[४]
अप्रधानं च यत् प्रोक्तमुष्ट्रत्वाद्यत्र तत् तथा ।
प्रतिपत्तारमाश्रित्य नं[५] तु तत्त्वव्यपेक्षया ॥ ५ ॥[६]
अँन्योन्यव्याप्तिरूपेण[७] द्वयोस्तद्भावसिद्धितः ।

(स्वो० व्या०)

निगमनम् । तथा चोक्तमित्यादिना ज्ञापकमाह—वस्तुनः—दध्यादेरनेकरूपस्य सँद्रव्यादिधर्मापेक्षया[८] नेन्द्रियात्—चक्षुरादेः सर्वथा गतिः—सर्वधर्मात्मत्वेन परिच्छित्तिः । कुत इत्याह—चित्रावरणयोगेन हेतुना प्रमातुः—पुरुषस्य, किन्तु देशतः—देशेनेन्द्रियाद् गतिः । १ । एवं चेत्यादि । एवं च सति विप्रकृष्टस्य—दूरस्थस्य प्रमातुः सन्निकृष्टस्य च—आसन्नस्य च एकदा—एकस्मिन् काले उष्ट्रादौ विषये 'आदि'शब्दाद् दधिपरिग्रहः, बुद्धिभेदेन सदौष्ट्र्यादिरूपेण हेतुना; किमित्याह—अनेकरूपत्वसंस्थितिः सदौष्ट्र्यादिधर्मापेक्षया । २ । एवमनेकरूपे वस्तुनि किमित्याह—

"अप्रधानीकृतौष्ट्र्यादिविशेषं प्रतिपद्यते ।
विप्रकृष्टः पुमान् सत्त्वं वस्त्रादौ रक्ततादिवद् ॥"[९]

इति निगदसिद्धमेव । ३ । सन्निकृष्टोऽपि चौष्ट्र्यादि तूर्णं—शीघ्रं सत्त्वोपसर्जनं रक्तादाविव वस्त्रादि विशिष्टं पटादिवत् तीव्रवीर्यतः प्रतिपद्यत इति । ४ । अप्रधानं च यत् प्रोक्तमुष्ट्रत्वाद्यत्र—अधिकारे तत् तथा प्रतिपत्तारमाश्रित्य उक्तलक्षणम्, न तु तत्त्वव्यपेक्षया । ५ । किमित्यत आह—अन्योन्यव्याप्तिरूपेण हेतुना द्वयोः—सदौष्ट्र्याद्योः तद्भावसिद्धितः—सदुष्ट्र-

१–४ अनुष्टुप् । ५ 'ननु' इति क–पाठः । ६ अनुष्टुप् । ७ 'अन्योन्यं व्याप्ति०' इति क–पाठः । ८ 'सद्द्रव्यत्वादि०' इति घ–पाठः । ९ अनुष्टुप् ।

(मूलम्)

अमुख्यगुणभावेन तत्त्वतस्तूभयात्मकम् ॥ ६ ॥[1]
एकान्तैक्ये तु भावानां कार्याभेदादनिश्चितिः ।
नैकस्मादुत्तरो भावो ज्ञानं चेति सुनीतितः ॥ ७ ॥[2]
हेत्वभेदान्न चाज्ञाते तद्ध्वनिः सम्प्रवर्तते ।
एवमेकस्वभावत्वे उपपन्नौ न धीध्वनी ॥ ८ ॥[3]

इत्यादि कृतं विस्तरेण ॥

इति तृतीयोऽधिकारः ॥ ३ ॥

---

( स्वो० व्या० )

भावसिद्धेः, अन्यथाऽयोगादित्युक्तप्रायम् । ततश्च **अमुख्यगुणभावेन तत्त्वतः तु उभयात्मकं** तत् । ६ । परपक्षे दोषमाह–**एकान्तैक्ये तु**–एकान्तैकस्वभावत्वे पुन**र्भावानां**–दध्यादीनां **कार्याभेदात्** कारणा**दनिश्चितिः** । एतदेवाह–**नैकस्मात्**–एकस्वभावा**दुत्तरो भावो ज्ञानं चेति सुनीतितः** । ७ । सुनीतिमेव आह–**हेत्वभेदात्** तदेकस्वभावत्वेन **न चाज्ञाते** तस्मिन् **तद्ध्वनिः**–दध्यादिध्वनिः **सम्प्रवर्तते,** अतिप्रसङ्गात् 'ज्ञानं च ततोऽन्यभावेन न सङ्गतम्' इति भावितमेव । **एवमेकस्वभावत्वे** वस्तुन **उपपन्नौ न धीध्वनी** द्वयनिमित्ताभावेन । ८ । **इत्यादि** । ततश्च भेदसंहारवादचिन्ताऽभाव एव परमते । **कृतं विस्तरेण** ॥

इत्यनेकान्तजयपताकाटीकायां तृतीयोऽधिकारः ॥

---

( विवरणम् )

(१६) **ज्ञानं च ततोऽन्यभावेन न सङ्गतमिति** । ज्ञानं च दधीत्याद्युल्लेखवन्निर्विकल्पकं ततः–दध्यादेः सकाशान्न सङ्गतम् । केनेत्याह–**अन्यभावेन** अन्यस्य–ज्ञानापेक्षया भिन्नस्याग्रेतनदध्यादिक्षणस्यैव, ततो दध्यादेर्भावेन–उत्पादेन एकस्वभावाद् दधिलक्षणाद् दधिलक्षणे समुत्पन्ने कथं तत्क्षणे समुत्पन्ने कथं तत एव स्वगोचरज्ञानोत्पादः स्यात् ? । न हि येनैव स्वभावेनासौ अग्रेतनक्षणं जनयति तेनैव ज्ञानमित्यादि चर्चनीयमिति ॥

इति श्रीमुनिचन्द्रसूरिविरचितेऽनेकान्तजयपताकोद्द्योतदीपिकाटिप्पणके सामान्यविशेषवादाधिकारः ॥

---

१–३ अनुष्टुप् । ४ 'स्वभावाद् भावादुत्तरो' इति ङ–पाठः । ५ 'इति' इत्यधिको घ–पाठः । ६ 'पताकायां टीकायां' इति क–पाठः । ७ 'समाप्तः' इत्यधिकः क–पाठः । ८ कल्पप्रा ( ? ) ततो' इति ख–पाठः । ९ 'सङ्गते' इति च–पाठः । १० 'स्वगौरवज्ञानो०' इति च–पाठः ।

# चतुर्थो[1]ऽधिकारः



( मूलम् )

तथा[2] यथोक्तम्[3]—'एवमभिलाप्यानभिलाप्यमपि विरोधबाधितत्वादेवानुद्घोष्यम्' इत्यादि, तदप्ययुक्तम्, विरोधासिद्धेः अभिलाप्यानभिलाप्यस्यैव प्रमाणसिद्धत्वात्, तथाव्यवहारोपलब्धेः, अन्यथा व्यवहारोच्छेदप्रसङ्गात्। तथाहि—यदि तदेकान्तेनैवानभिलाप्यमभ्युपगम्यते, कथं तर्हि तथाविधशब्दात् तथाविधार्थप्रतीत्यादि? दृश्यते चानलाद्यानयेत्युक्ते तत्प्रतीतिपुरस्सरा केषाञ्चित् धूमध्वजादौ प्रवृत्तिः तत्समासादनं समासादिते तथानिवेदनमिति कथञ्चिदभिलाप्यसिद्धिः, अन्यथा तदनुपपत्तिः, अतिप्रसङ्गात् ॥

---

( स्वो० व्या० )

साम्प्रतं चतुर्थ आरभ्यते। तत्र चादावेवेदमाह—**तथा यच्चोक्तमित्यादि**। तथा यच्चोक्तं मूलपूर्वपक्षग्रन्थे[4]—**एवमभिलाप्यानभिलाप्यमपि** वस्तु **विरोधबाधितत्वादेवानुद्घोष्यमित्यादि**। तत् किमित्याह—**तदप्ययुक्तम्**। कुत इति आह—**विरोधासिद्धेः**। असिद्धिश्च **अभिलाप्यानभिलाप्यस्यैव** वस्तुनः **प्रमाणसिद्धत्वात्**। प्रमाणसिद्धत्वं च **तथाव्यवहारोपलब्धेः**—अभिलाप्यानभिलाप्यतया अर्थक्रियासिद्धेः। **अन्यथा**—अभिलाप्यानभिलाप्यतां विहाय वस्तुनो **व्यवहारोच्छेदप्रसङ्गात्**। एतत्प्रदर्शनायैवाह—**तथाहीत्यादि**। तथाहीत्युपप्रदर्शने। **यदि तत्**—वस्तु **एकान्तेनैवानभिलाप्य**[5]**मित्यभ्युपगम्यते, कथं तर्हि तथाविधशब्दात्**—सांव्यवहारिकादनलादिरूपात् **तथाविधार्थप्रतीत्यादि** तथाविधः—तद्वाच्योऽनलार्थस्तत्प्रतीत्यादि कथम्?। 'आदि'शब्दात् प्रवृत्ति[6]-तत्-समासादन-निवेदनग्रहः। **दृश्यते**[7] **चानलाद्यानयेत्युक्ते** सति **तत्प्रतीतिपुरस्सरा**—अनलप्रतीत्यनुयायिनी **केषाञ्चित्**—प्रमातॄणां तथाविधक्षयोपशमयुक्तानां **धूमध्वजादौ** अर्थे **प्रवृत्तिस्तद्विषया**। तथा **तत्समासादनं**—धूमध्वजसमासादनं **समासादिते** सति **तथानिवेदनम्**—'अयमसौ यस्त्वयोक्तोऽनलः स आनीतः' इत्यादि। **इति**—एवं **कथञ्चिदभिलाप्यसिद्धिः**। **अन्यथा**—एवमनभ्युपगमे **तदनुपपत्तिः**—तत्प्रतीत्याद्यनुपपत्तिः। कुत इत्याह—**अतिप्रसङ्गात्**

---

१ 'अथ चतुर्थः परिच्छेदः' इति घ-पाठः। २ 'तथा च यथोक्त०' इति क-पाठः। ३-४ २७ 'तमे पृष्ठे। ५ 'लाप्यमभ्युप०' इति ङ-पाठः। ६ 'प्रवृत्तिवत्समा०' इति ङ-पाठः। ७ 'दृश्यते अनला०' इति घ-पाठः।

( मूलम् )

**स्यादेतत् अन्यापोहाभिधायकाः शब्दा इति ततस्तं प्रतिपद्यते, ततश्च दृश्यविकल्प्यावर्थावेकीकृत्य तद्बलात् प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्येति, तस्य ततोऽनवगतेः, प्रतिबन्धाभावात्, तादात्म्य-तदुत्पत्त्यनुपपत्तेः, अनेकदोषप्रसङ्गात्, प्रतिबन्धमन्तरेणाप्यन्यतोऽन्यावगतावपन्यायः। परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु, परस्परविरोधित्वेन सर्वेषां तथाऽभावात्, अतीता-ऽजातयोश्चासत्त्वात्, न च स्यादनृतार्थता**

( स्वो० व्या० )

उदकादिवदनलस्यापि तच्छब्देनानभिलाप्यत्वात्। एतदविशेषतस्तत्रापि प्रतीत्याद्यापत्तेरतिप्रसङ्गः ॥

**स्यादेतदि**त्यादि । स्यादेतत्—अथैवं मन्यसे—**अन्यापोहाभिधायकाः शब्दा इति** कृत्वा **ततः**—शब्दात् **तम्**—अन्यापोहमन्याभावं **प्रतिपद्यते**। **ततश्च दृश्यविकल्प्यावर्थौ**—स्वसामान्यलक्षणरूपौ **एकीकृत्य तद्बलात्**—एकीकरणसामर्थ्यात् **प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्य** प्रवर्तत **इति**। कुत इत्याह—**तस्य**—वस्तुनः **ततः**—शब्दा**दनवगतेः**—अपरिच्छेदात्। अनवगतिश्च **प्रतिबन्धाभावात्** वस्तु-शब्दयोः। प्रतिबन्धाभावश्च **तादात्म्य-तदुत्पत्त्यनुपपत्तेः** वस्तु-शब्दयोरेव। इयं च **अनेकदोषप्रसङ्गात्**। तथाहि—वस्तु-शब्दयोस्तादात्म्ये क्षुरिका-ऽनला-ऽचलादिशब्दोच्चारणे वदनपाटन-दाह-पूरणप्रसङ्गः। तदुत्पत्तौ तु—वस्तुनः शब्दोत्पत्तौ वाँह्लीकस्यापि प्रथमपनसदर्शने तच्छब्दोच्चारणप्रसङ्गः। शब्दाद् वा वस्तूत्पत्तौ विश्वादरिद्रता, शब्दादेव कँटकादिभावादित्यनेकदोषप्रसङ्गः। **प्रतिबन्धमन्तरेणापि** वस्तु-शब्दयो**रन्यतः**—शब्दा**दन्यावगतौ**—वस्त्ववगतौ किमित्याह—**अपन्यायः**, अतिप्रसङ्ग इत्यर्थः। दोषान्तरमाह—**परमार्थैकतानत्वे च**—परमार्थैकनिष्ठत्वे च **शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु**। किंविशिष्टेष्वित्याह—**चित्रतन्त्रान्तरगतेषु** प्रधानेश्वरादिषु। किमित्यत आह—**परस्परविरोधित्वेन** हेतुना **सर्वेषाम्** अर्थानां **तथा**—जगद्धेतुत्वेन **अभावात्**। तथाहि—यदि प्रधानं जगद्धेतुः, न तर्हीश्वर इत्यादि भावनीयम्। तथा **अतीताऽजातयोश्चापि** वस्तुनोः **असत्त्वात्** कारणात् न स्यात् प्रवृत्तिरिति। तँथा **न च**

१ 'प्रतिपद्य प्रवर्तते तस्य' इति घ–पाठः। २ 'तथा च न स्याद०' इति क–ङ–पाठः। ३ 'विकल्पावर्थौ' इति क–पाठः। ४ 'स्वलक्षणसामान्यरूपौ' इति घ–पाठः। ५ 'वार्ष्णीकस्यापि' इति क–पाठः। ङ–पाठस्तु 'वाल्हीकस्यापि' इति। ६ 'प्रकटादिभावा०' इति घ–पाठः। ७ 'तथा च न स्याद०' इति घ–पाठः।

(मूलम्)

**वाचः कस्याश्चिदपि, स्ववाच्यनिष्ठत्वात्, तद्व्यतिरेकेण तदप्रवृत्तेः, सङ्केतवशाच्च शब्दात् प्रतीतिस्तस्य चापोहमन्तरेणान्यत्र कर्तुमशक्यत्वात्, वस्तूनामानन्त्याद् व्यवहारानुपयोगादिति तद्वाच्यतैव इति। एतदप्ययुक्तम्, भावार्थशून्यत्वेन वाङ्मात्रत्वात्, अन्यापोहाभिधायकत्वेऽपि वस्तुनि प्रवृत्त्यनुपपत्तेः, तस्य ततो व्यतिरिक्ताव्यतिरिक्तविकल्पदोषप्रसङ्गात्। व्यतिरिक्तत्वे, स च वस्तु अवस्तु वा, वस्तुत्वे, अपरनामा सामान्यवादस्तथा च तद्द्वारायाता अनिवारितप्रसरा दोषाः। न च तदभिधानेऽपि वस्तुनि प्रवृत्तिः। न हि कश्चिद् दण्डं छिन्द्धि इत्युक्तो दण्डिनं छिनत्त्यन्यत्र शब्दार्थव्यवहारान-**

---

(स्वो॰ व्या॰)

**स्यादन्तार्थता वाचः कस्याश्चिदपि**। कुत इत्याह—**स्ववाच्यनिष्ठत्वाद्** वाचः प्रति[1]बन्धभावेन **तद्व्यतिरेकेण**—स्ववाच्यव्यतिरेकेण **तदप्रवृत्तेः**—[2]वाचोऽप्रवृत्तेरिति। तथा **सङ्केतवशाच्च शब्दात् प्रतीतिः**, लोके तथादर्शनात्। **तस्य** च—सङ्केतस्य **अपोहमन्तरेणान्यत्र**—वस्तुनि **कर्तुमशक्यत्वात्**, अशक्यत्वं च **वस्तूनामानन्त्यात्** प्रतिवस्तु [3]समयाकरणेन **व्यवहारानुपयोगात्** सङ्केतस्य **इति**—एवं **तद्वाच्यतैव**—अपोहवाच्यतैव **इति**। एतदाशङ्क्याह—**एतदप्ययुक्तं** यदनन्तरमुक्तम्। कुत इत्याह—**भावार्थशून्यत्वेन** हेतुना **वाङ्मात्रत्वात्**, तस्य। वाङ्मात्रत्वं **चान्यापोहाभिधायकत्वेऽपि** शब्दस्य, किमित्याह—**वस्तुनि प्रवृत्त्यनुपपत्तेः**। अनुपपत्तिश्च **तस्य**—अपोहस्य **ततः**—वस्तुनः **व्यतिरिक्ताव्यतिरिक्तविकल्पाभ्यां** यो [4]**दोषस्तत्प्रसङ्गात्**। एनमेवाह—**व्यतिरिक्तत्वे** वस्तुनः अपोहस्य। किमित्याह—**सः**—[5]अन्यापोहः **वस्तु अवस्तु वा**। किञ्चातः? उभयथाऽपि दोष इत्याह—**वस्तुत्वे**ऽपोहस्य व्यतिरिक्तस्य **अपरनामा सामान्यवादस्तथा च**—एवं च सति **तद्द्वारायाताः**—सामान्यद्वारायाताः **अनिवारितप्रसरा दोषा** वृत्तिविकल्पादिजनिताः। उपचयमाह **न** चेत्यादिना। **न च तदभिधानेऽपि**-अपोहाभिधानेऽपि शब्देन **वस्तुनि प्रवृत्तिः**, तस्य ततोऽन्यत्वात्। एतदेव [6]निदर्शनेनाह **न** हीत्यादिना। **न हि कश्चित्**—माणवकः **दण्डं छिन्द्धि इत्युक्तो** विशेषेण **दण्डिनं छिनत्ति** तदुपलक्षितम्, **अन्यत्र शब्दार्थ-**

---

१ 'बन्धाभावेन' इति ङ-पाठः। २ 'वाचाऽप्रवृत्ते॰ इति ङ-पाठः। ३ 'सङ्केताकरणेन' इति घ-पाठः। ४ 'दोषस्तस्य प्रसङ्गात्' इति घ-पाठः। ५ 'शून्यापोहः' इति घ-पाठः। ६ निदर्शयन्नाह' इति घ-पाठः।

(मूलम्)

**भिज्ञादिति। अवस्तुत्वे तु तदभिधाने न किञ्चिदुक्तं स्यात्, कथमेवमवस्तुत्वप्रतिपत्तिपुरस्सरा तत्प्रवृत्तिः?। न च तत्प्रतिपत्तावर्थतो ५ वस्तुप्रतिपत्तिः, तुच्छत्वेन तस्यैवाप्रतिपत्तेः, अन्यथाऽवस्तुत्वविरोधात्, तस्य तेनाप्रतिबन्धात्, सामर्थ्यासिद्धेश्च। अव्यतिरिक्तत्वे वस्तुन एवापोहत्वात् तदभिधायकत्वं शब्दानामिति व्यर्थस्तत्प्रतिक्षेपाभिनिवेशः॥**

**आह–न व्यर्थः, बाह्यं स्वलक्षणं पुरोधाय व्यावृत्ति-व्यावृत्ति-१० मतोस्तत्त्वाभिधानात्। न च तच्छब्दार्थः साक्षात्, अपि तु विकल्प-**

---

(स्वो० व्या०)

**व्यवहारानभिज्ञात्**–एकान्तजडादिति। एवमिहोपलक्षणमपोहस्तदभिधाने कथं तदुपलक्षिते वस्तुनि प्रवृत्तिरित्यर्थः॥

द्वितीयं विकल्पमधिकृत्याह–**अवस्तुत्वे** पुनरपोहस्य **तदभिधाने**–अवस्त्वभि-१५ धाने। किमित्याह–**न किञ्चिदुक्तं स्यात्**–भवेत्, **कथमेवमवस्तुप्रतीतिपुरस्सरा तत्प्रवृत्तिस्तस्मिन्**–वस्तुनि प्रवृत्तिः?। **न च तत्प्रतिपत्तौ**–अपोहप्रतिपत्तौ सत्यां शब्देन **अर्थतः**–अर्थापत्त्या तत्प्रतिबन्धान्यथाऽनुपपत्तिलक्षणया **वस्तुप्रतिपत्तिः**–स्वलक्षणप्रतिपत्तिः। कुत इत्याह–**तुच्छत्वेन** हेतुना **तस्यैव**–अपोहस्य **अप्रतिपत्तेः** शब्देन। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्यथा**–एवमन-२० भ्युपगमेऽ**वस्तुत्वविरोधात्** प्रक्रमादपोहस्य, तथा **तस्य**–तुच्छस्यापोहस्य **तेन**–वस्तुना सह **अप्रतिबन्धात्** तादात्म्याद्ययोगेन, तथा **सामर्थ्यासिद्धेश्च** तस्यैव तुच्छस्यापोहस्य। अनेन तद्व्यतिरिक्तविकल्पदोषोऽवसेयः। यदाह–**अव्यतिरिक्तत्व** इत्यादि। अव्यतिरिक्तत्वे 'तुच्छापोहस्य **वस्तुनः** अभ्युपगम्यमाने' इति प्रक्रमः। किमित्याह–वस्तुन **एवापोहत्वात्** कारणात् **तदभिधायकत्वं**–वस्त्वभि-२५ धायकत्वं **शब्दानामिति**–एवं **व्यर्थः**–निष्फलः **तत्प्रतिक्षेपाभिनिवेशः**–शब्दानां वस्त्वभिधायकत्वप्रतिक्षेपाभिनिवेशः॥

**आहे**त्यादि। आह परः–**न व्यर्थो** यथोदितोऽभिनिवेशः। कुत इत्याह–**बाह्यं स्वलक्षणं पुरोधाय**–अग्रतः कृत्वा **व्यावृत्ति-व्यावृत्तिमतोस्तत्त्वाभिधानात्**–एकत्वाभिधानाद् भवता। **न च तच्छब्दार्थः**–बाह्यं स्वलक्षणं **साक्षात्**–

---

१ 'प्रतिषेधाभिनिवेशः' इति क–पाठः। २ 'शब्देन' इति पाठो घ–पुस्तके नास्ति।

(मूलम्)

**परिनिष्ठित आन्तरः, तस्माच्च धर्मिणो व्यावृत्तयस्तत्त्वान्यत्वेनानिर्वचनीया इति न, इत्थमपि ततो वस्तुनि प्रवृत्त्यनुपपत्तेः, तत्प्रतिपत्त्यभावात्, एवमपि प्रवृत्तावतिप्रसङ्गात्, आन्तरार्थ एव** ५ **शब्दस्य चरितार्थत्वादिति। दृश्यविकल्प्यार्थैकीकरणाद् वस्तुनि प्रवृत्तिरिति चेत्, न, तदेकीकरणासिद्धेः, दृश्य-विकल्प्ययोरत्यन्तभिन्नत्वात्, साधर्म्यायोगात्, एकस्योभयानुभवितुरभावात् तदा द्वयदर्शनादर्शनविकल्पानुपपत्तेः। आद्यपक्षे भेदेनैवोभयप्रतिपत्तेः किमेकीकरणेन? चरमपक्षे तु तदप्रतिपत्तेः कथं तेनैवैकीकरणम्?** १०

---

(स्वो० व्या०)

अव्यवधानेन, **अपि तु विकल्पपरिनिष्ठित आन्तरः** शब्दार्थः। **तस्माच्च धर्मिणः**–आन्तराद् विकल्पपरिनिष्ठितात्। किमित्याह–**व्यावृत्तयस्तत्त्वान्यत्वेनानिर्वचनीया इति** कृत्वा न [1]व्यर्थस्तत्प्रतिक्षेपाभिनिवेश इति क्रिया। एतदाशङ्क्याह–**न, इत्थमपि ततः** प्रक्रमाच्छब्दात्। किमित्याह–**वस्तुनि प्रवृत्त्यनुपपत्तेः**। अनुपपत्तिश्च **तत्प्रतिपत्त्यभावात्**–वस्तुप्रतिपत्त्यभावात् ततः १५ शब्दादिति। **एवमपि**–ततः प्रतिपत्त्यभावेऽपि **प्रवृत्तौ** अभ्युपगम्यमानायां किमित्याह–**अतिप्रसङ्गात्** सर्वत्र प्रवृत्त्यापत्त्या। आपत्तिश्च सर्वत्र प्रतिपत्त्यभावेन। प्रतिपत्त्यभावश्च **आन्तरार्थ एव शब्दस्य चरितार्थत्वादिति** भावनीयम्। **दृश्ये**त्यादि। **दृश्यविकल्प्यार्थैकीकरणात्**–स्व-सामान्यलक्षणैकीकरणात् **वस्तुनि**–बाह्ये स्वलक्षणे **प्रवृत्तिः। इति चेत्**, एतदाशङ्क्याह–**ने**त्यादि। न–नैतदेवम्। २० कुत इत्याह–**तयोः**–दृश्यविकल्प्ययोः **एकीकरणासिद्धेः**। असिद्धिश्च **दृश्यविकल्प्ययोः**–स्वसामान्यलक्षणयोः **अत्यन्तभिन्नत्वात्**। अत्यन्तभिन्नत्वे **साधर्म्यायोगात्**, साधर्म्यं चैकीकरणनिमित्तमित्यभिप्रायः। तथा **एकस्ये**त्यादि। एकस्य–कस्यचिदु**भयानुभवितुः**–स्व-सामान्यलक्षणानुभवितुः प्रमातु**रभावात्** परपक्षे। २५ तथा **तदे**त्यादि। तदा–तस्मिन्नेकीकरणकाले **द्वयं**–दृश्य-विकल्प्याख्यं तस्य **दर्शनादर्शने** ते एव **विकल्पौ** एताभ्या**मनुपपत्तिः**–अघटमानता ततस्तदेकीकरणासिद्धिः। एतदुक्तं भवति–दृश्य-विकल्प्यार्थैकीकरणकाले तद्द्वयदर्शनमदर्शनं वा स्यात्। तत्र **आद्यपक्षे**–द्वयदर्शनपक्षे किमित्याह–**भेदेनैव**–असङ्कीर्णत्वेनैव **उभयप्रतिपत्तेः**, [2]प्रक्रमात् दृश्य-विकल्प्यप्रतिपत्तेः, **किमेकीकरणेन** प्रयोजनाभावात्? न ३० किञ्चिदित्यर्थः। **चरमपक्षे तु**–द्वयादर्शनपक्षे तु किमित्याह–**तदप्रतिपत्तेः**–

---

१ 'तथा' इत्यधिकः क-पाठः। २ द्रष्टव्यं ३२०तमं पृष्ठम्।

(मूलम्)

तद्भावेऽपि दृश्यस्य [1]विकल्प्येनैकीकृतत्वाद् विकल्पमात्रतापत्तेः, तदवगमाद् वस्तुन्यप्रवृत्तिरेव । न वै [2]स्वविभिन्नदृश्यस्य विकल्प्येनात्मसात्करणमेकीकरणम्, अपि त्वस्यैवाध्यवसिततद्भावता । तथाहि–विकल्प्यमेव दृश्यमित्यध्यवस्य प्रवर्तत इति । एतदप्यनालोचितमनोहरम्, तस्यैवाध्यवसिततद्भावताऽसिद्धेः, अतदाभेन तद्भावाध्यवसायविरोधात्, अतिप्रसङ्गात्, नीलाकारबोधेन पीताध्यवसायापत्तेः, इत्यसमञ्जसत्वेन व्यवहारोच्छेदप्रसङ्गात् ॥

किञ्च कः खलु विकल्प्यमेव दृश्यमित्यध्यवस्यति ? । विकल्प एवेति चेत्, न, तत्र सामान्यावभासनात्, अन्यथा विकल्पत्वायोगात् ।

(स्वो० व्या०)

साधर्म्यादधिकृतदृश्याप्रतिपत्तेः कारणात् **कथं तेनैव**–दृश्येनैव **एकीकरणम्?** अदर्शनाविशेषे किमित्यनेन एवेति भावः । अभ्युच्चयमाह–**तद्भावे**ऽपीत्यादिना । तद्भावेऽपि–दृश्य-विकल्प्यार्थैकीकरणभावेऽपि । किमित्याह–**दृश्यस्य**–स्वलक्षणस्य **विकल्प्येन**–सामान्यलक्षणेन **एकीकृतत्वात्** कारणात् **विकल्पमात्रतापत्तेः** हेतोः **तदवगमात्**–विकल्प्यावगमात् कारणाद् **वस्तुनि**–स्वलक्षणे **अप्रवृत्तिः एव**, तदनवगमादित्यर्थः । पराकूतमाह **न वै** इत्यादिना । न वै–नैव **स्वविभिन्नदृश्यस्य**, विकल्प्यापेक्षया विकल्प्यात्मनो विभिन्नदृश्यस्येत्यर्थः । **विकल्प्येनात्मसात्करणमेकीकरणमिह** गृह्यते, **अपि त्वस्यैव**–विकल्प्यस्य **अध्यवसिततद्भावता**–विनिश्चितदृश्यभावता । एतद्भावनायैवाह–**तथाही**त्यादि । तथाहीति पूर्ववत् । **विकल्प्यमेव दृश्यमित्यध्यवस्य**–विनिश्चित्य **प्रवर्तत इति** । एतदाशङ्क्याह–**एतदपि**–अनन्तरोदित**मनालोचितमनोहरम्** । कुत इत्याह–**तस्यैव**–विकल्प्यस्य **अध्यवसिततद्भावताऽसिद्धेः** । असिद्धिश्च **अतदाभेन**–अतदाकारेण विकल्प्येन **तद्भावाध्यवसायविरोधात्**–दृश्यभावाध्यवसायविरोधात् । विरोधश्च **अतिप्रसङ्गात्** । अतिप्रसङ्गश्च **नीलाकारबोधेन पीताध्यवसायापत्तेः** अध्यवसिततद्भावतया । **इति**–एवम**समञ्जसत्वेन व्यवहारोच्छेदप्रसङ्गात्** 'एतदप्यनालोचितमनोहरम्' इति ॥

दूषणान्तरमाह **किञ्चे**त्यादिना । किञ्च **कः खलु**–प्रमाता **विकल्प्यमेव दृश्यमित्यध्यवस्यति ?** । **विकल्प एवेति चेत्**, एतदाशङ्क्याह–**न, तत्र**–विकल्पे **सामान्यावभासनात्, अन्यथा**–दृश्याध्यवसाये सति **विकल्प**-

[1] 'विकल्पो नैकी०' इति ग–पाठः । [2] 'दृश्यस्यास्व०' इति ङ–पाठः ।

( मूलम् )

**अन्य इति चेत्, न, आत्मवादापत्तेः, तत्तथाऽध्यवसायनिमित्ताभावाच्च। तथाविधशब्दात् तथाविधविकल्पजन्मैवाध्यवसिततद्भावतेति चेत्, अभ्युपगतं तर्हि शब्दस्यार्थवाचकत्वम्। तथाहि-इदमेवास्य तद्वाचकत्वं यत् तथा तदाकारविकल्पजनकत्वम्। तच्चेदिष्यत एव तथाविधात् ततस्तथाविधविकल्पोत्पत्त्यभ्युपगमेनेति। एवं च तदेव अस्य निर्व्याजमस्तु, किमनेनाकाशकुसुमोद्गमसमानेन दृश्यविकल्प्यार्थैकीकरणव्याजेन?॥** ५

**'ततश्च दृश्यविकल्प्यावर्थावेकीकृत्य तद्बलात् प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्य तस्य ततोऽनवगतेः'[1] इति शब्दगडुमात्रमेव, वस्तुन एव शब्देनावगतेः, प्रतिबन्धभावात्। वाच्य-** १०

( स्वो० व्या० )

**त्वायोगात्। अन्य इति चेत्**-विकल्पादन्यो विकल्प्यमेव दृश्यमित्यध्यवस्यति, एतदाशङ्क्याह-**न, आत्मवादापत्तेः** स एव विकल्पादन्यो बोध आत्मेत्यापद्यते। दूषणान्तरमाह-**तत्तथाऽध्यवसायनिमित्ताभावाच्च** तस्य-विकल्प्यस्य दृश्याध्यवसायनिमित्ताभावाच्च। **तथाविधे**त्यादि। तथाविध**शब्दात्**-विशिष्टविकल्पनिबन्धनात्। **तथाविधविकल्पजन्मैव**-विशिष्टविकल्पोत्पाद एव **अध्यवसिततद्भावता। इति चेत्,** एतदाशङ्क्याह-**अभ्युपगतं तर्हि शब्दस्य अर्थवाचकत्वम्।** एतदेवाभिधातुमाह **तथाही**त्यादिना। तथाहीत्युपप्रदर्शने। **इदमेवास्य**-शब्दस्य **तद्वाचकत्वम्**-अर्थवाचकत्वं **यत् तथा**-तन्निमित्तशब्दारूषितार्थप्रवृत्त्याद्यङ्गत्वेन **तदाकारविकल्पजनकत्वम्**-अर्थाकारविकल्पजनकत्वम्। **तच्चेदि**त्यादि। तच्चेत्-अर्थाकारविकल्पजनकत्वं यद् **इष्यत एव** भवता **तथाविधात्**-विशिष्टात् **ततः**-शब्दात् **तथाविधविकल्पोत्पत्त्यभ्युपगमेन**-तन्निमित्तशब्दारूषितार्थप्रवृत्त्याद्यङ्गभूतविशिष्टविकल्पोत्पत्त्यभ्युपगमेन **इति। एवं च** कृत्वा **तदेव**-अर्थवाचकत्वमेव **अस्य**-शब्दस्योक्तनीत्या **निर्व्याजम्**-अपेतमायास्थानमस्तु-भवतु, **किमनेनाकाशकुसुमोद्गमसमानेन?** निष्फलेनेत्यर्थः। **दृश्य-विकल्प्यार्थैकीकरणव्याजेन**-मायास्थानेन॥ १५ २० २५

**'ततश्च दृश्यविकल्प्यावर्थावेकीकृत्य तद्बलात् प्रवर्तते, न तु शब्दाद् वस्त्वेव प्रतिपद्य तस्य ततोऽनवगतेः' इति शब्दगडुमात्रमेव**-पूर्वपक्षोदितं वचः। कुत इत्येतदेव द्रढयन्नाह-**वस्तुन एव**- ३०

१-२ द्रष्टव्यं ३१८तमं पृष्ठम्।

( मूलम् )

**वाचकलक्षणो हि शब्दार्थयोः प्रतिबन्धः। तथाहि—वाच्यस्वभावा अर्था वाचकस्वभावाश्च शब्दा इति तज्ज्ञप्तिवादः। यद्येवं कथं न ५ सङ्केतमन्तरेणैव ततस्तदवगतिः ?। उच्यते—तथाविधक्षयोपशमाभावात्। न हि रूपप्रकाशनस्वभावोऽपि दीपोऽसति चक्षुषि तत् प्रकाशयति, चक्षुष्कल्पश्च क्षयोपशमः। स च सङ्केत-तपश्चरण-भावनादिजन्यः, तथोपलब्धेः, सङ्केतादिभ्यः समुपजातक्षयोपशमादिभावानां[1] लौकिकयतिमुनीनां शब्दादर्थाच्च सम्यग्वाच्यवाचक-**

१० ( स्वो० व्या० )

बाह्यस्य **शब्देनावगतेः** कारणात् । अवगतिश्च **प्रतिबन्धभावात्**। वस्तु-शब्दयोः प्रतिबन्धमाह—**वाच्यवाचकलक्षणो हि शब्दार्थयोः प्रतिबन्धः**। एतदेव भावयति **तथाहीत्यादिना**। तथाहि **वाच्यस्वभावा अर्थाः**—घटादयो **वाचकस्वभावाश्च शब्दाः**—घटादिशब्दा **इति तज्ज्ञप्तिवादः**[2]—१५ शब्दार्थज्ञप्तिवचनम् । अतत्स्वभावत्वे कथं शब्दादर्थप्रतीतिः कथं वा न घटात् पट इति परिभावनीयम् । आह—**यद्येवं** वाच्यवाचकलक्षणः शब्दार्थयोः प्रतिबन्धः, **कथं न सङ्केतमन्तरेणैव ततः**—शब्दात् **तदवगतिः**—अर्थावगतिः ? । एतदाशङ्क्याह—**उच्यते—तथाविधक्षयोपशमाभावात्** न सङ्केतमन्तरेणैव ततस्तदवगतिः। एतदेव भावयति—**न हि रूपप्रकाशनस्वभावोऽपि प्रदीपोऽसति** २० **चक्षुषि** अन्धस्य **तत्**—रूपं **प्रकाशयति**, तद्दर्शनाभावात्। न च तस्यापि प्रकाशितं तदिति न्याय्यं वचः। दर्शननिमित्तस्वभावस्य प्रकाशनत्वाभ्युपगमादतोऽनेकस्वभाव एव तस्मिंश्चक्षुष्मदादीनां दर्शनादर्शने नान्यथेति परिभावनीयमित्यलं प्रसङ्गेन। प्रकृतं प्रस्तुमः—**चक्षुष्कल्पश्च क्षयोपशमः । स चेत्यादि**। स च—क्षयोपशमः **सङ्केत-तपश्चरणभावनादिजन्यः**। कुत इत्याह—**तथोपलब्धेः**—२५ सङ्केतादिभावेऽर्थावगत्याः कार्यतः क्षयोपशमोपलब्धेः। तथा चाह—**सङ्केतादिभ्यः**, 'आदि'शब्दात् तपश्चरणभावनादिग्रहः, **समुपजातक्षयोपशमादिभावानाम्**, 'आदि'शब्दात् क्षायिकभावग्रहः, **लौकिकयतिमुनीनां** मुनयो वीतरागा एव

( विवरणम् )

अथाभिलाप्यानभिलाप्याधिकारे किञ्चिद् व्याख्यायते। (२१-२२) **अतोऽ-** ३० **नेकस्वभाव एव तस्मिंश्चक्षुष्मदादीनां दर्शनादर्शने** इति। चक्षुष्मतः प्रतीत्य प्रकाशः एकस्वभावः प्रदीपः तदितरांशाप्रकाशरूप इति अनेकस्वभावता प्रदीपस्य ॥

[1] 'भावानां नो लौकिक०' इति ग-पाठः। [2] 'तद्ज्ञातवादः' इति ङ-पाठः।

( मूलम् )

**भावावगमात् । तथाहि–सर्व एव सर्वज्ञाः 'सुमेरु'प्रभृतींस्तच्छब्द-वाच्यानेव प्रतिपद्यन्ते, तैरेव तथाप्ररूपणात् । अन्यैरेवं प्ररूपिता इति तथाप्ररूपणमिति चेत्, तेषामेव तथाप्ररूपणे को हेतुः ? । अन्य-** ५ **प्ररूपणेति चेत्, अत्रापि समानः प्रसङ्गः । समाधिरपि समान एवेति चेत्, तत्सम्बन्धसिद्धिः, सर्वैरेव तथा तज्ज्ञानाभिधानात् । अनादौ संसारे कदाचित् कैश्चिदन्यथा सा कृतेति चेत्, न अत्र**

( स्वो० व्या० )

**शब्दादर्थाच्च** सकाशात् केवलादेव **सम्यक्**–अवैपरीत्येन **वाच्यवाचक-** १० **भावावगमात्** कारणात् तथोपलब्धेरिति [1]सिद्धम् । **तथाहीत्यादि** । तथाहीत्युप-प्रदर्शने । **सर्व एव सर्वज्ञाः**–भगवन्तो बुद्धाः शाक्यमुन्यादयः **'सुमेरु'प्रभृ-तीन्** पदार्थान्, प्रभृतिग्रहणात् 'जम्बूद्वीपा'दिग्रहः, **तच्छब्दवाच्यानेव**–सुमेर्वादि-शब्दवाच्यानेव **प्रतिपद्यन्ते** । कुत इत्याह–**तैरेव**–सुमेर्वादिशब्दैः । **तथा**–विशिष्ट-यैवानुपूर्व्या 'सुमेरु'-'जम्बूद्वीपा'दिलक्षणया **प्ररूपणात्**, **अन्यैः**–सर्वज्ञैः काला- १५ न्तरवर्तिभिः [2]विपश्यादिभि**रेवं**–सुमेर्वादिशब्दवाच्यतया **प्ररूपिता इति** कृत्वा । **तथा**–विशिष्टयैवानुपूर्व्या 'सुमेरु'-'जम्बूद्वीपा'दिलक्षणया **प्ररूपणम्** । **इति चेत्**, एतदाशङ्क्याह–**तेषामेव**–अन्येषां **तथाप्ररूपणे को हेतुः ?** । **अन्यप्ररूपणेति चेत्**, अन्ये कल्पान्तरवर्तिनो गृह्यन्ते । एतदाशङ्क्याह–**अत्रापि**–अन्यप्ररूपणायां **समानः प्रसङ्गः** । तेषामेव तथाप्ररूपणे को हेतुरित्ययम् । **समाधिरपि**–परिहारः २० अपि **समान एवेति चेत्**, अन्यप्ररूपणाहेतुरित्ययम् । एतदाशङ्क्याह–**तत्सम्बन्ध-सिद्धिः** तयोः–सुमेर्वादिपदार्थ-सुमेर्वादिशब्दयोः सम्बन्धसिद्धिः । कुत इत्याह–**सर्वैरेव**–कल्पान्तरवर्तिभिरपि सर्वज्ञै**स्तथा**–सुमेर्वादिशब्दवाच्यत्वादिना प्रकारेण **तज्ज्ञानाभिधानात्**–सुमेर्वादिज्ञानाभिधानात् । **अनादौ संसारे** कारणाभावात् कार्याभावेन **कदाचित् कैश्चित्**–सर्वज्ञैः **अन्यथा सा**–प्ररूपणा बिन्दुकादि- २५

( विवरणम् )

(२४-२५) **कारणाभावात् कार्याभावेने**ति । संसारानादित्वे साध्येऽयं हेतु-स्ततोऽयमर्थः–संसारस्य सादित्वे साध्ये नास्ति किञ्चित् कारणम्, सर्ववादिसम्मत-त्वात् संसारानादितायाः । अतः संसारसादिताकारणस्य कस्याप्यभावात् संसारसादितालक्षणस्य कार्यस्याप्यभावः, तेन कारणाभावात् कार्याभावेन ३० अनादित्वं संसारस्येति ॥

१ 'सिद्धः' इति ङ–पाठः । २ 'विपश्यादि०' इति ङ–पाठः ।

( मूलम् )

**प्रमाणम्, अतीन्द्रियत्वात् । विपर्ययेऽपि समानमेतदिति चेत्, न, इदानीन्तनप्रयोगतोऽसमानत्वसिद्धेः, अन्यथा धूम-धूमध्वजादिषु ५ अपि समानमेतत् । तथा च [1]नैरात्म्यादिभावनाया अपि सदा रागादिप्रहाणनिबन्धनत्वेऽनाश्वास इति यत्किञ्चिदेतत् ॥**

**एवमपि सङ्केततो वाच्यान्तरवाचकत्वं शब्दस्यायुक्तमिति चेत्, न, [2]ततश्चित्रशक्तिमत्त्वेन योगात् । तथा च सर्वे शब्दाः प्रायः**

( स्वो० व्या० )

१० शब्दप्रयोगरूपा **कृता । इति चेत्**, एतदाशङ्क्याह—**न अत्र प्रमाणमन्यथा** कृतेति । कुत इत्याह—**अतीन्द्रियत्वात्** अस्य वस्तुनः । **विपर्ययेऽपि**—न कृतेत्यस्मिन् **समानमेतन्नात्र** प्रमाणमित्यादि यदुक्तम् । **इति चेत्**, एतदाशङ्क्याह—**नेत्यादि** । न—नैतदेव**मिदानीन्तनप्रयोगतः शाक्यमुनेः** सुमेर्वादौ सुमेर्वादिशब्दप्रयोगतः कारणात् **असमानत्वसिद्धेः** अधिकृतविपर्ययेऽतत्स्वभावात् सकृदपि १५ तथा तद्भावविरोध इत्यभिप्रायः । एतदुक्तं भवति—सङ्केतद्वारेणापि सुमेर्वादौ सुमेर्वादिशब्दप्रयोगो नातत्स्वभावत्वे तयोर्भवति । तत्स्वभावत्वे च सिद्ध एव मदीयोऽभ्युपगमस्तदानीमपि तयोस्तत्स्वभावत्वादिति । विपक्षे बाधामाह—**अन्यथेत्यादि** । अन्यथा—एवमनभ्युपगमे **धूम-धूमध्वजादिष्वपि**—हेतुफलस्वभावेषु **समानमेतदनादौ** संसारे व्यभिचारचोदनमिति परिभावनीयम् । एवं लौकिकाविनाभाव-२० नियमानियममभिधाय लोकोत्तरमेनमधिकृत्याह—**तथा चेत्यादि** । तथा च—एवं च सति **नैरात्म्यादिभावनाया अपि सदा रागादिप्रहाणनिबन्धनत्वे** किमित्याह—**अनाश्वासः** सुमेर्वादिशब्दस्येव सुमेर्वादिनिबन्धनत्वे **इति**—एवं **यत्किञ्चित्**—असार**मेतत्**—विपर्ययेऽपि समानमेतदित्यादि ॥

**एवमपीत्यादि** । एवमपि सति **सङ्केततः**—सङ्केतेन **वाच्यान्तरवाचकत्वं** २५ **शब्दस्य**—घटादेः पटादिवाचकत्वमित्यर्थः, **अयुक्तम्**—अन्याय्यम् । **इति चेत्**, एतदाशङ्क्याह—**नेत्यादि** । न—नैतदेवं **ततः**—सङ्केततः **चित्रशक्तिमत्त्वेन,**

( विवरणम् )

(१४-१५) **अतत्स्वभावात् सकृदपि तथा तद्भावविरोध** इति । अतत्स्वभावात्—प्रतिनियतपदार्थवाचकत्वलक्षणस्वभावविकलात् सुमेर्वादिध्वनेः सकाशात् ३० सकृदपि—एकामपि वेलां तथा—प्रतिनियतेन ध्वनिना यस्तस्य—सुमेर्वादेरभिधेयस्य स्वभावः—वाच्यतालक्षणं स्वरूपं तस्य विरोधः । भावितं चैतत् स्वयमेव वृत्तिकृता ॥

१ 'नैतरात्म्यादि०' इति क-पाठश्चिन्त्यः । २ 'ततस्तच्चित्रशक्ति०' इति क-पाठः ।

(मूलम्)

**सर्वार्थवाचकशक्तिमन्तः, सर्वे चार्थाः सर्वशब्दवाच्यशक्तियुक्ता इति विचित्रक्षयोपशमादिसहकारियोगतस्तथा तथा प्रवर्तन्त इति न काचिद् बाधा। एतेन 'न रूपप्रकाशनस्वभावो दीपोऽरूपं प्रकाशयति, तद्वदेव घटादिवाचकस्वभावः शब्दः प्रयोगादपि नाघटं प्रकाशयेत्' इत्यपि प्रत्युक्तम्, विचित्ररूपप्रकाशनस्वभावदीपवदेव चित्रवाच्य-वाचकस्वभावत्वात् शब्दस्य, अशेषाभिधानेऽपि तु सहकारिक्षयो-पशमभेदतोऽर्थितादिभेदेन प्रदीपात् प्रकाश्ये वाच्ये प्रतिपत्तिः। न च दीपप्रकाशिता अपि सर्वे निम्नोन्नतादयः सर्वैरेव प्रतीयन्ते, चक्षुः-सामर्थ्यानुरूपं प्रतीतिभेदोपलब्धेः। इति शब्दार्थयोर्वाच्यवाचक-लक्षणप्रतिबन्धसिद्धिः तादात्म्यादिविचारविषयास्तु दोषा अनभ्युप-गमादेव न नो बाधायै भवन्ति ॥**

(स्वो० व्या०)

शब्दस्येति प्रक्रमः, **योगाद्** वाच्यान्तरवाचकत्वस्य। एतद्भावनायाह—**तथा चे**त्यादि। तथा च **सर्वे शब्दाः**—घटादयः **प्रायः**—बाहुल्येन स्वभावतो वन्ध्य-शब्दान्[1] मुक्त्वा प्रधानादीन् **सर्वार्थवाचकशक्तिमन्तः**, तथाफलदर्शनात्; **सर्वे चार्थाः**—घटादयः **सर्वशब्दवाच्यशक्तियुक्ता** उक्तादेव हेतोरिति—एवं **विचित्रक्षयोपशमादिसहकारियोगतः**, 'आदि'शब्दात् तत्तत्प्रयोजन-देश-कालादिग्रहः। **तथा तथा**—तेन तेन प्रकारेण **प्रवर्तन्त इति**—एवं **न काचिद् बाधा** सङ्केततो वाच्यान्तरवाचकत्वे शब्दस्य। **एतेन**—अनन्तरोदितेन **न रूप-प्रकाशनस्वभावो दीपः अरूपं प्रकाशयति** स्वभावरसादि[2] **तद्वदेव**—एवमेव **घटादिवाचकस्वभावः शब्दः प्रयोगादपि**—सङ्केतेन **नाघटं प्रकाशयेत्**—अभिदध्यादित्याद्यपि **प्रत्युक्तम्**। कथमित्याह—**चित्ररूप-प्रकाशनस्वभावदीपवदेव** सितेतराद्यपेक्षया **चित्रवाच्य-वाचकस्वभाव-त्वात् शब्दस्य, अशेषाभिधानेऽपि** तत्त्वेन पुनः **सहकारिक्षयोप-शमभेदतः अर्थितादिभेदेन** एव, **प्रदीपादि**ति निदर्शनं **प्रकाश्ये**—सितादौ **वाच्ये प्रतिपत्ति**र्घटादौ। चित्रास्तरणे दीपात् समं सितादिप्रतिपत्तिर्नैवं शब्दाद् वाच्येष्वित्येतन्निरासायाह[3]—**न च दीपप्रकाशिता अपि सर्वे निम्नोन्नतादयः सर्वैरेव प्रतीयन्ते** प्रमातृभिः। कुत इत्याह—**चक्षुःसामर्थ्यानुरूपं प्रतीति-भेदोपलब्धेः। इति**-एवं **शब्दार्थयोर्वाच्यवाचकलक्षणप्रतिबन्धसिद्धिः**[4]।

१ 'स्ववाच्ये वन्ध्य०' इति ङ–पाठः। २ 'प्रकाशयति रसादि' इति घ–पाठः। ३ 'वाच्येष्व-तन्निरासा०' इति क–पाठः। ४ 'सम्बन्ध०' इति घ–पाठः।

( मूलम् )

यच्चोक्तं[1]–'परमार्थैकतानत्वे च शब्दानामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु परस्परविरोधित्वेन सर्वेषां तथाऽ-
५ भावात्' इत्येतदप्ययुक्तम्, मृषाभाषावर्गणोपादानशब्दानां निमित्तभेदवैचित्र्येण बहुभेदानामनर्थकत्वाभ्युपगमात्। ते हि तदर्थप्राप्त्यादिप्रसवविकला वन्ध्याबला इव केवलं तथाविधसंवेदनसम्भोगमात्रफला एव, स्वरूपालोचनादिभ्यस्तु प्रमाणादिवेतरस्य[2] अर्थवच्छब्देभ्यस्तद्विशेषावसायः। तथाहि–दृश्यन्त एव केचिद् विमल-
१० मतयः श्रवणमात्रादेवानृतत्वादियाथात्म्यमवधारयन्तो ध्वनेः,

---

( स्वो० व्या० )

तादात्म्यादिविचारविषयास्तु दोषाः–क्षुरिकादिशब्दोच्चारणे वदनपाटनादयः अनभ्युपगमादेव तादात्म्यादेः। किमित्याह–न नो बाधायै भवन्ति॥

यच्चोक्तमित्यादि। यच्चोक्तं[3] पूर्वपक्षग्रन्थे–परमार्थैकतानत्वे च शब्दा-
१५ नामनिमित्ता न स्यात् प्रवृत्तिरर्थेषु चित्रतन्त्रान्तरगतेषु प्रधानादिषु परस्परविरोधित्वेन हेतुना सर्वेषां तथाऽभावात्–केवलप्रधानादित्वेनाभावात् इत्येतदप्ययुक्तं पूर्वपक्षोक्तम्। कुत इत्याह–मृषाभाषावर्गणोपादानशब्दानां–प्रधानादीनां निमित्तभेदवैचित्र्येण–तदारम्भकपुद्गलादिवैचित्र्येण हेतुना बहुभेदानाम्। किमित्याह–अनर्थकत्वाभ्युपगमात् एतदप्ययुक्त-
२० मिति। ते हीत्यादि। ते यस्मात् प्रधानादिशब्दाः तदर्थप्राप्त्यादिप्रसवविकलाः प्रधानाद्यर्थप्राप्त्याद्येव प्रसवस्तद्विकलाः, 'आदि'शब्दादर्थक्रियादिग्रहः, वन्ध्याबला इव निदर्शनम्, केवलं तथाविधसंवेदनमेव–समारोपतो निर्विषयसंवेदनमेव सम्भोगमात्रमिति विग्रहस्तदेव फलं येषां ते तथाविधा इति। न हि वन्ध्यायाः सम्भोगेऽप्यपत्यमुत्पद्यते, न चासौ न सम्भोगः। एवं न तत् संवेदन-
२५ मर्थप्राप्त्यादिमत्, न च न संवेदनमिति भावनीयम्। कथमितरेभ्यस्तद्विशेषावसाय इत्याह–स्वरूपालोचनादिभ्यः पुनः, 'आदि'शब्दात् तद्विषयपूर्वापरविरोधादिग्रहः, प्रमाणादिवेतरस्य[4]–प्रमाणाभासस्य अर्थवच्छब्देभ्यः–जीवादिवाचकेभ्यः सकाशात्। किमित्याह–'तद्विशेषावसायः' तेषां–मृषाभाषावर्गणोपादानानामनर्थकप्रधानादिशब्दानां विशेषावसाय इति। न चैतदलौकिकमित्याह–तथा-
३० हीत्यादि। तथाहीति पूर्ववत्। दृश्यन्त एव केचिद् विमलमतयः–श्रोतारः

---

१ ३१८ तमे पृष्ठे। अत्र मुद्रणदोषादष्टमनवमपङ्क्त्योर्विपर्ययो जातोऽस्ति स संशोधनीयः।
२ 'चेतर०' इति क–पाठः। ३ ३१८ तमे पृष्ठे। ४ 'दि चेतर०' इति क–पाठः।

(मूलम्)

अपोहमात्राभिधायकत्वेऽपि चैषां समान एवायं प्रसङ्गः, तथाविधापोहस्यापि[1] सर्वत्राभावात्, अप्रधानाद्यपोहस्य क्वचिदनुपपत्तेः, सर्वभावानामेव परमार्थतोऽप्रधानादिरूपत्वात्, बुद्धिपरिकल्पित- ५ तदपोहाभ्युपगमे च तदन्यतो विशेषात्, रूपादिविज्ञानाद्यपोह[2]- स्यातथाभूतत्वात्, वस्तुबलप्रवृत्तेः रूपादीनां रसादिभ्यो भेदात् तथाविधतद्बुद्धीनामपि पारम्पर्येण तन्निमित्तत्वाभ्युपगमात्, "वस्तु-

(स्वो० व्या०)

श्रवणमात्रादेव सकाशादनन्ततत्त्वादियाथात्म्यमवधारयन्तो ध्वनेः- १० शब्दस्य। दोषान्तरमाह-अपोहाभिधायकत्वेऽपि चैषां, शब्दानामिति प्रक्रमः। किमित्याह-समान एवायम्-अनन्तरोदितः प्रसङ्गः। कुत इत्याह-तथाविधापोहस्यापि-अपोह्यापोढाश्रयस्य सर्वत्राभावात्। अभावश्च अप्रधानाद्यपोहस्य क्वचिदपि-प्रधानादौ अनुपपत्तेः। कथमित्याह-सर्वभावानामेव तत्त्वतः[3]-परमार्थतोऽप्रधानादिरूपत्वात्। बुद्धिपरिकल्पिततदपोहा- १५ भ्युपगमे च-प्रधानाद्यपोहाङ्गीकरणे च। किमित्याह-तदन्यतः-अपोहाद् विशेषात्। विशेषमेवाह रूपादीत्यादिना। रूपादिविज्ञानाद्यपोहस्य बुद्धिपरिकल्पितस्यापि अरूपविज्ञानं न भवतीति रूपविज्ञानमित्येवम्भूतस्य अतथाभूतत्वात्, प्रधानाद्यपोहरूपेणाभूतत्वादित्यर्थः। कथमित्याह-वस्तुबलप्रवृत्तेः इयं च रूपादीनां वस्तुसतां रसादिभ्यो भेदात् तथाविधतद्बुद्धीनामपि- २० [4]विकल्पिकानां पारम्पर्येण तन्निमित्तत्वाभ्युपगमात्-रूपादिनिमित्तत्वाभ्युप-

(विवरणम्)

(१३) अपोह्यापोढाश्रयस्येति। अपोह्यन्ते-पृथक् क्रियन्तेऽपोह्याः-घटाद्यन्यतरपदार्थापेक्षया पटादयः पदार्थास्तेभ्योऽपोढः-विलक्षणो घटादिः पदार्थः, स आश्रयः परम्परया यस्य घटाद्युल्लेखिनोऽपोहस्य स तथा तस्य। अयमत्राशयः-बौद्धमतेऽपि २५ योऽयं घटाद्यपोहः स परम्परया घटादिपदार्थाश्रयः। यस्तु प्रधानाद्यपोहः स नैवंविधः, प्रधानादीनामभावात्॥

(१७) रूपादिविज्ञानाद्यपोहस्येति। अत्र प्रथमेनादिशब्देन रसादिज्ञानापोहपरिग्रहः, द्वितीयेन तु घटपटादिज्ञेयपदार्थप्रतिबद्धापोहस्येति॥

१ 'स्यापि च सर्वत्रा०' इति क-पाठः। २ 'रूपादिज्ञाना०' इति घ-पाठः। ३ 'परमार्थतः-तत्त्वतः' इति स्यात्, अथवा मूलग्रन्थे 'तत्त्वतः' पाठः स्यात्। ४ 'विकल्पकानां' इति क-पाठः।

(मूलम्)

**भेदो वासनाप्रकृतिश्च तस्या आश्रयः" इत्यादिवचनप्रामाण्यात्, प्रधानादिबुद्धिभेदसिद्धेरिति ॥**

५ **न चासामप्यधिकृतभेद एवाश्रयःअतत्प्रतिभासत्वात् तद्रूपाच्च ततस्तदतत्प्रतिभासत्वानुपपत्तेः अतिप्रसङ्गाद् रूपाद्यन्यतमभेदादेव बुद्धीनां रसादिप्रतिभासत्वापत्तेः तदसत्त्वप्रसङ्गादित्युक्तम्। न च वासनाप्रकृत्युपादानभेदतस्तत एवासामतत्प्रतिभासता, तस्य तत्त्वतो निरंशत्वात्, अनेकसहकारित्वाभावात् यथा-**
१० **कथञ्चिदेकसहकारिस्वभावत्वे तदन्यसहकारिस्वभावत्वविरोधात्,**

(स्वो० व्या०)

गमात्। एनमेवाह–**वस्तुभेदः** स्वलक्षणरूपो **वासनाप्रकृतिश्च** बोधनिबन्धना **तस्याः**–रूपादिसामान्यबुद्धेराश्रय **इत्यादिवचनप्रामाण्यात्**। किमित्याह–**प्रधानादिबुद्धिभेदसिद्धेः** तस्या एव। 'आदि'शब्दादीश्वरादिबुद्धिग्रहः। **इति**
१५ 'अपोहमात्राभिधायकत्वेऽपि चैषां समान एवायं प्रसङ्गः'[1] इति सर्वत्र क्रियायोगः ॥

**न चासामपि**–प्रधानादिबुद्धीनाम**धिकृतभेद एव** रूपादिस्वलक्षणरूप **आश्रयः**। कुत इत्याह–**अतत्प्रतिभासत्वात्**–अरूपादिप्रतिभासत्वात् प्रधानादिबुद्धीनां **तद्रूपाच्च**–रूपादिरूपाच्च **ततः**–अधिकृतभेदात्। किमित्याह–**तदतत्प्रतिभासत्वानुपपत्तेः** तासां–प्रधानादिबुद्धीनामतत्प्रतिभासत्वानुपपत्तेः,
२० अरूपादिप्रतिभासत्वानुपपत्तेरित्यर्थः। अनुपपत्तिश्च **अतिप्रसङ्गात्**। एनमेवाह–**रूपाद्यन्यतमभेदादेव** सकाशाद् **बुद्धीनां रसादिप्रतिभासत्वापत्तेः** प्रधानादिप्रतिभासवत्। ततः किमित्याह–**तदसत्त्वप्रसङ्गात्**–रसाद्यसत्त्वप्रसङ्गात् **इत्युक्तं** प्राक्। **न** चेत्यादि। **न च वासनाप्रकृत्युपादानभेदतः**–प्रधानादिवासनाप्रकृत्युपादानभेदेन **तत एव**–वस्तुभेदाद् रूपादे**रासां**–प्रधानादिबुद्धीना-
२५ **मतत्प्रतिभासता**–अरूपादिप्रतिभासता। कुतो न चेत्यादि(?ह)**तस्य**–वस्तुभेदस्य **तत्त्वतः**–परमार्थतः **निरंशत्वात्**–एकस्वभावत्वात्, **अनेकसहकारित्वाभावात्**। अभावश्च **यथाकथञ्चिदेकसहकारिस्वभावत्वे**–रूपादिबुद्धिसहकारिस्वभावत्वे **तदन्यसहकारिस्वभावत्वविरोधात्**–[2]विधानादिबुद्धिसहकारि-

(विवरणम्)

३० (१२) **वासनाप्रकृतिश्चे**ति। वासनायाः सम्बन्धी स्वभाव इत्यर्थः ॥

(१४) **तस्या एवे**ति। रूपादिसामान्यबुद्धेः ॥

१ द्रष्टव्यं ३२९तमं पृष्ठम्। २ 'प्रधानादि०' इति किं स्यात्?।

(मूलम्)

**स्वभावभेदानुपपत्तेः, तमन्तरेण फलभेदायोगादिति। केवलवासनाप्रकृतिनिबन्धनत्वे तु प्रधानादिबुद्धीनामागत एव मदीयोऽभ्युपगमः, तदन्यापोहबुद्धीनामतथाविधत्वात्, तथाविधापोहस्यापि सर्वत्राभाव एवेति युक्तिसिद्धेः। तद्विषयशब्दानां चोपादानभेदात् अन्यथा विषयभेदाभावात् तत्तत्स्वभावत्वेन तद्वाचकत्वापत्तेरिति सूक्ष्मधिया भावनीयमित्यलं प्रपञ्चेन ॥** ५

(स्वो० व्या०)

स्वभावत्वविरोधात्। विरोधश्च **स्वभावभेदानुपपत्तेः**। न च यदेव रूपादिबुद्धिसहकारिस्वभावत्वं तदेव प्रधानादिबुद्धिसहकारिस्वभावत्वमिति स्वभावभेदः, **तमन्तरेण**—स्वभावभेदं विना **फलभेदायोगात्**—रूपादिप्रधानादिबुद्धिफलभेदायोगात्। 'न च वासनाप्रकृत्युपादानभेदतस्तत एवासामतत्प्रतिभासता'[1] इति सर्वत्र क्रियायोगः। **केवलवासनाप्रकृतिनिबन्धनत्वे** पुनः **प्रधानादिबुद्धीनां** किमित्याह—**आगत एव मदीयोऽभ्युपगमः**। कथमित्याह—**तदन्ये**त्यादि। **तदन्यापोहबुद्धीनाम्**—अरूपाद्यपोहबुद्धीनाम**तथाविधत्वात्** अप्रधानाद्यपोहबुद्धिसदृश्य[2]स्तथाविधा न तथाविधा अतथाविधाः तद्भावस्तस्मात्, अप्रधानाद्यपोहबुद्धिविलक्षणत्वादित्यर्थः। **तथाविधापोहस्यापि**—प्रक्रमादपोह्यापोढाश्रयस्य वस्तुबलप्रवृत्तस्य **सर्वत्र**—प्रधानादौ **अभाव एवेति युक्तिसिद्धेः**। **तद्विषयशब्दानां**[3] **च** प्रधानादिरूपाणां किमित्याह—**उपादानभेदात्, अन्यथा**—उपादानभेदमन्तरेण **विषयभेदाभावात्**—अपोह्यापोढाश्रयेतरापोहविषयभेदाभावात्। एनमेव विषयभेदाभावमाह[4]—**तत्तत्स्वभावत्वेन** तेषां—विवक्षितापोहाभिधायकोपादानस्वभावत्वेन हेतुना **तद्वाचकत्वापत्तेः**—विवक्षितापोहवाचकत्वापत्तेः, आगत एव मदीयोऽभ्युपगम इति सर्वत्र क्रियायोग **इति**। एतत् **सूक्ष्मधिया भावनीयम्**—न ह्यभिन्नाभिधायकोपादानस्वभावानां शब्दानामपोह्यापोढाश्रयेतरापोहवाचकत्वं न्याय्य**मित्यलं** प्रसङ्गेन। नाभिन्नोपादानस्वभावाः पुरुषा अपि कृत्येतरभावे तयोः प्रवर्तन्ते, तत्प्रवृत्तौ च तद्भिन्नोपादानस्वभावतेति भावना ॥ १० १५ २० २५

(विवरणम्)

(२६-२७) **नाभिन्नोपादानस्वभावाः पुरुषा अपि कृत्येतरभावे तयोः प्रवर्तन्ते, तत्प्रवृत्तौ च तद्भिन्नोपादानस्वभावतेति**। न—नैवाभिन्नोपादानस्वभावाः सन्तः ३०

१ द्रष्टव्यं ३३० तमं पृष्ठम्। २ 'सदृशास्तथा' इति क-पाठः। ३ 'तद्विषये शब्दानां' इति घ-ङ-पाठः। ४ 'भेदमाह' इति घ-पाठः।

(मूलम्)

[१]अतीताजातयोश्च सर्वथाऽसत्त्वमसिद्धम्, सतः सर्वथाऽसत्ताऽयोगात्, तदुत्पत्त्याद्यापत्तेः, असतश्च सत्ताविरोधात् अतिप्रसङ्गात्। ५इति तत्तथाभिधाने न कश्चिद् दोषः। न च न स्यादनृतार्थता वाचः कस्याश्चिदपि, मृषाभाषावर्गणोपादानायास्तथात्वाविरोधात्, तस्या

(स्वो० व्या०)

दोषान्तरपरिजिहीर्षयाऽऽह–अतीतेत्यादि। अतीताजातयोश्च, प्रक्रमाद् भावयोः सर्वथा–सर्वैः प्रकारैः असत्त्वमसिद्धम्। कुत इत्याह–सतः सर्वथा १०असत्ताऽयोगात्। अयोगश्च तदुत्पत्त्याद्यापत्तेः–असत उत्पत्त्याद्यापत्तेः, 'उत्पत्तिनाशेतरोन्मज्जनप्रसङ्गात्' इत्युक्तं प्राक्। प्रकृतसमर्थनायैवाह–असतश्च सत्ताविरोधात् प्रतिनियतशक्त्याऽभावेन अतिप्रसङ्गात्। असकृद् भावितमेतत्। इति–एवं तत्तथाऽभिधाने तयोः–अतीताजातयोस्तथा–तेन प्रकारेणाभिधाने न कश्चिद् दोषः। दूषणान्तरमेव परिहरन्नाह–न च न स्यादनृतार्थता वाचः १५कस्याश्चिदपि, किन्तु स्यादेव। कुत इत्याह–मृषाभाषावर्गणोपादानाया अस्याः तथात्वाविरोधात्–अनृतार्थत्वाविरोधात्। तस्या हि–मृषाभाषावर्गणो

(विवरणम्)

पुरुषा अपि कृत्येतरभावे तयोः प्रवर्तन्ते। आसतां तावदपोह्यापोढाश्रयेत[२]रापोहवाचका ध्वनयो भेदेन प्रवर्तन्त इत्यपि शब्दार्थः। किमित्याह—तयोः कृत्येतरयोः पदा-२०र्थयोः प्रवर्तन्ते, केचित् कृत्येषु प्रवर्तन्ते, केचिच्चाकृत्येष्वित्यर्थः। कस्मिन् सतीत्याह–कृत्येतरभावे कृत्येतरयोर्भावः–सत्ता कृत्येतरभावः, केषाञ्चित् कृत्यत्वं केषाञ्चिदकृत्यत्वमित्यर्थः। तस्मिन् सति अथ प्रवर्तन्ते तर्हि तत्प्रवृत्तौ च–कृत्येत[३]रयोर्भेदेन प्रवृत्तौ। पुनः सत्यां किमित्याह–तद्भिन्नोपादानस्वभावता तेषां–पुरुषाणां भिन्नोपादानस्वभावाः स्वरूपः–लाभो येषां पुरुषाणां ते तथा तद्भावस्तत्राभिन्नोपादानजन्यता २५इत्यर्थः। अयमस्य वाक्यस्य परमार्थः–येऽमी त्रिभुवनोदरान्तर्वर्तिनः पुरुषास्तेषां मध्यात् केचिद् भिक्षूपासकप्रभृतयः कृत्येषु–देवपूजनादिषु प्रवर्तन्ते। अन्ये तु धीवरादयो मत्स्यबन्धनादिष्वकृत्येषु। न चैतदेकोपादानतायां तेषां युज्यते युक्त्यभावात्, अतोऽभ्युपगन्तव्य एव तेषामुपादाने भेदः, तथा च तेषामुपादाने भेदः, एवं ध्वनीनामप्यपोह्यापोढाश्रयेतरापोहवाचकानामिति॥

१ दृश्यतां ३१८तमं पृष्ठम्। २ 'तरेऽपोह०' इति च–पाठः। ३ 'रयोर्भेदनप्रवृत्तौ' इति क–पाठः।

(मूलम्)

**ह्यर्थाभावेऽपि भावात्, परपक्षेऽपि तद्विवक्षाभेदोपपत्तेः, अन्यथा तत्सत्यत्वप्रसङ्गात्, वाच्याभेदात्, तद्भेदे च समानतापत्तेरिति ॥**

**यच्चोक्तम्[१]–'सङ्केतवशाच्च शब्दात् प्रतीतिस्तस्य चापोहमन्तरेणा-** ५ **न्यत्र कर्तुमशक्यत्वात्' इत्यादि तदप्यसारम्, अपोहेऽपि सङ्केतस्य कर्तुमशक्यत्वात् । त्रिविधो हि वोऽपोहः–एकस्तावद् व्यावृत्तं स्वलक्षणमेव, अन्योऽपोह्यतेऽस्मिन्निति कृत्वा, यदधिकृत्याह–**

**"स्वभावपरभावाभ्यां यस्माद् व्यावृत्तिभागिनः"**

**इति । अयं च शब्दलिङ्गाश्रयस्य व्यवहारस्याश्रयत्वेन व्यवस्था-** १० **प्यते, न तु शब्दवाच्यतयेति नात्र सङ्केतः, अन्यव्यवच्छेदमात्रं**[२]

(स्वो० व्या०)

पादानाया वाचः **अर्थाभावेऽपि भावात्** । एवं स्वपक्षमधिकृत्य दोषा-भावमभिधाय परपक्षेऽपि तुल्यतामाह–**परपक्षेऽपि**–बौद्धमते **तद्विवक्षाभेदोप-पत्तेः** तस्याः–अनृतवाचः विवक्षाभेदोपपत्तेः । **अन्यथा**–विवक्षाभेदमन्तरेण १५ **तत्सत्यत्वप्रसङ्गात्** अस्याः–अनृतवाचः सत्यत्वप्रसङ्गात् । प्रसङ्गश्च **वाच्या-भेदात्** उपादानहेत्वभेदेन, **तद्भेदे च**–वाच्यभेदे च **समानतापत्तेः** 'मृषा-भाषावर्गणोपादानायास्तथात्वाविरोधात्'[३] इत्यनेन 'न च न स्यादनृतार्थता वाचः कस्याश्चिदपि'[४] इति क्रिया ॥

पूर्वपक्षान्तरपरिहारायाह–**यच्चोक्त**मित्यादि । यच्चोक्तं [५]पूर्वपक्षे–**सङ्केतवशाच्च** २० **शब्दात् प्रतीतिस्तस्य च**–सङ्केतस्य **अपोहमन्तरेणान्यत्र**–वस्तुनि **कर्तु-मशक्यत्वादित्यादि, तदप्यसारम्** । कथमित्याह–**अपोहेऽपि सङ्केतस्य कर्तुमशक्यत्वात्**, तुल्यदोषत्वादित्यर्थः । एतदेवाह **त्रिविधो हि वोऽपोह** इत्यादिना, त्रिविधो युष्माकं यस्मादपोहः । **एकस्तावद् व्यावृत्तं स्वलक्षणमेव** । कथमिह शब्दार्थ इत्याह–**अन्यः**–पदार्थः **अपोह्यते**–निषिध्यते**ऽस्मिन्निति** २५ **कृत्वा यदधिकृत्याह** न्यायवादी–**स्वभावपरभावाभ्यां यस्मात्** कार-णाद् **व्यावृत्तिभागिनो** व्यावृत्तिं भजन्ते तच्छीलाश्च । **अयं च**–एवम्भूतोऽपोहो व्यावृत्तस्वलक्षणरूपः **शब्दलिङ्गाश्रयस्य व्यवहारस्य**–प्रवृत्त्यादेः **आश्रयत्वेन व्यवस्थाप्यते** परम्परामूलतया; **न तु**–न पुनः **शब्दवाच्यतयेति** कृत्वा **नात्र**–[६]अपोहे **सङ्केतः, अन्यव्यवच्छेदमात्रं**–तुच्छं **द्वितीयः** । इहापि ३०

१ ३१९तमे पृष्ठे । २ 'अन्यथा व्यवच्छेद०' इति घ–पाठः । ३–४ द्रष्टव्यं ३३२तमं पृष्ठम् । ५ ३१९तमे पृष्ठे । ६ 'अपोहसङ्केतः' इति घ–ङ–पाठः ।

( मूलम् )

द्वितीयः, अन्यापोहनमन्यापोह इति कृत्वा यः सर्वत्राभेदेन वः पूर्वाचार्यैर्व्यवस्थाप्यते, प्रतिषेधमात्रस्य सर्वत्राविशेषात्, अत्रापि ५ न सङ्केतो निःस्वभावत्वात्। आह च न्यायवादी—

"अर्थानां यच्च सामान्यमन्यव्यावृत्तिलक्षणम् ।
यन्निष्ठास्त इमे शब्दा न रूपं तस्य किञ्चन ॥"[1]

इति । विकल्पबुद्धिप्रतिभासस्तु तृतीयः, अन्योऽपोह्यतेऽनेनेति कृत्वा, अयं च शब्दस्य निबन्धनतयाऽभ्युपगम्यते, यदधिकृत्याह—

१० "विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः"[2]

इति । अयमप्युपप्लवत्वान्नास्त्येवेति कथमत्र सङ्केतः? ॥

बहिरयं नास्ति विकल्पबुद्धिप्रतिभासस्त्वस्त्येव, तत्र[3] सङ्केत इति चेत्, कोऽयं विकल्पबुद्धिप्रतिभासः?। एते वृक्षादय इति तदेका-

( स्वो० व्या० )

१५ शब्दार्थमाह—अन्यापोहनमन्यापोह इति कृत्वा यः सर्वत्राभेदेन वः—युष्माकं पूर्वाचार्यैः—भदन्तदिन्नप्रभृतिभिर्व्यवस्थाप्यते "अयमप्यघटो न भवत्ययमप्यघटो न भवति" इत्यादिना । अत एवाह—प्रतिषेधमात्रस्य सर्वत्राविशेषात्, अत्रापि—अपोहे न सङ्केतो निःस्वभावत्वादस्य । आह च न्यायवादी—धर्मकीर्तिः—अर्थानां—घटादीनां यच्च सामान्यमन्यव्या-
२० वृत्तिलक्षणं यन्निष्ठास्त इमे शब्दाः—घटादयः तस्य रूपं न किञ्चनेति निःस्वभावत्वसिद्धिः । विकल्पबुद्धेः प्रतिभासो विकल्पबुद्धिप्रतिभासः, विकल्पबुद्धिप्रतिभासस्तु स्थूलाकारः तृतीयोऽपोहः । शब्दार्थमिहाह—अन्योऽपोह्यतेऽनेनेति कृत्वा । अयं च[4]—अपोहः शब्दस्य निबन्धनतयाऽभ्युपगम्यते परैः यदधिकृत्याहाचार्यः—विकल्पयोनयः—विकल्पकारणाः शब्दाः, विकल्पाः
२५ शब्दयोनय इति । अयमपि—अपोह उपप्लवत्वात् कारणान्नास्त्येव इति—एवं कथमत्र सङ्केतः? ॥

बहिरयं नास्ति अर्थे विकल्पबुद्धिप्रतिभासस्तु स्वरूपेण अस्त्येव । तत्र सङ्केतः । इति चेत्, एतदाशङ्क्याह—कोऽयं विकल्पबुद्धिप्रतिभासः?। एते वृक्षादय इति—एवं तदेकाकारतैव—विकल्पबुद्ध्येकाकारतैव । इति चेत्,

१ अनुष्टुप् । २ इदं भदन्तदिन्नस्य वचनम् । प्रेक्ष्यतां ३३७तमं पृष्ठम् । ३ 'ततः' इति क-पाठः । ४ 'वाऽपोहः' इति घ-पाठः ।

( मूलम् )

**कारतैवेति चेत्, किमियं तत्स्वसंवित्तेर्भिन्नाऽभिन्नेति वाच्यम्। अनिर्वचनीयेति चेत्, कथं तत्र सङ्केतः?। तद्भेदाभेदाभ्यामनिर्वचनीया, नान्यथेति चेत्, किमिदमन्यथात्वं नाम?। संवृत्त्या भाव इति चेत्, न तर्हि परमार्थेनायमिति न तत्र सङ्केतः। अवस्तुन्येवायमिति चेत्, न, वस्तुप्रतीतेः। भ्रान्ता खल्वियमिति चेत्, न अत्र प्रमाणम्। इतरत्रापि समानमिति चेत्, न, तदनुभवफलसिद्धेः।** ५

---

( स्वो० व्या० )

एतदाशङ्क्याह—**किमियम्**—अधिकृतैकाकारता **तत्स्वसंवित्तेः**—अधिकृतविकल्पबुद्धिस्वसंवित्तेः **भिन्नाऽभिन्नेति वाच्यम्**। भेदे बहिस्तद्भावोऽभेदे स्वलक्षणवाच्यतेति। उभयपरिहारेणाह—**अनिर्वचनीया। इति चेत्**, एतदाशङ्क्याह—**कथं तत्र**—अनिर्वचनीयायां **सङ्केतः?। तद्भेदाभेदाभ्यां** तस्याः—तत्स्वसंवित्तेर्भेदाभेदाभ्याम**निर्वचनीया** तदेकाकारता, **नान्यथा। इति चेत्**, एतदाशङ्क्याह—**किमिदमन्यथात्वं नाम** यदधिकृत्योच्यते नान्यथेति?। **संवृत्त्या**—अपरमार्थेन **भाव इति चेत्**, अन्यथात्वं एतदाशङ्क्याह—**न तर्हि परमार्थेनायं**—भाव इति। **न तत्र**—सांवृते भावे **सङ्केतः**, अवस्तुत्वात् तस्येति भावः। **अवस्तुन्येवायं**—सङ्केतः। **इति चेत्**, एतदाशङ्क्याह—**न, वस्तुप्रतीतेः**, अर्थक्रियाकारिणि अध्यवसायादित्यर्थः। **भ्रान्ता खल्वियमिति चेत्** वस्तुप्रतीतिः, एतदाशङ्क्याह—**नात्र**—भ्रान्ततायां **प्रमाण**मधिकृतप्रतीतेः, **इतरत्रापि**—तदभ्रान्ततायामपि **समानमेतद्** यदुत नात्र प्रमाणम्। **इति चेत्**, एतदाशङ्क्याह—**नेत्यादि**। **न**—नैतदेवं **तदनुभवफलसिद्धेः** तस्याः—अक्रमाच्छन्दनिमित्तवस्तुप्रतीतेरनुभवश्चार्थाध्यवसायलक्षणः, फलं च—तत्प्रवृत्त्यादीति विग्रहः, ताभ्यां सिद्धिस्ततः। दूषणान्तरमाह　१०　१५　२०

---

( विवरणम् )

(११–१२) **भेदे बहिस्तद्भावोऽभेदे स्वलक्षणवाच्यतेति।** यदि ह्येकाकारता विकल्पबुद्धिसंवित्तेः सकाशाद् भिन्नाऽभ्युपगम्यते तदा भेदे सति बहिस्तस्याः—एकाकारताया भावः प्राप्नोति। सामान्यं वस्तुसद् बहिः प्राप्नोतीत्यर्थः। अथाभेदपक्षः कक्षीक्रियते तर्ह्यभेदे सत्येकाकारताया विकल्पबुद्धेः स्वसंविदा सह स्वलक्षणवाच्यता स्यात्, स्वसंविदो वाच्यत्वात् तस्याश्च स्वलक्षणत्वात्॥ २५

---

१ 'बुद्धिस्तु संवित्तेः' इति घ–पाठः। २ इति चेत्, न वस्तु०' इति घ–ङ–पाठः। ३ 'तत्त्ववृत्त्यादि' इति घ–पाठः। ४ 'तस्याश्च लक्षण०' च–पाठः।

( मूलम् )

**इतश्च न विकल्पबुद्धिप्रतिभासे सङ्केतः, स्थितास्थितविकल्पायोगात्। न स्थिते, अक्षणिकत्वप्रसङ्गात्, नास्थिते, कर्तुमशक्यत्वात्।**
५ **तथा गृहीतेतरविकल्पानुपपत्तेः। न गृहीते, सन्तानान्तरवर्तिनोऽस्य ग्रहीतुमशक्यत्वात्। नागृहीते, अतिप्रसङ्गात्। तथा व्यवहारसमर्थासमर्थालोचनायोगाच्च। व्यवहारसमर्थत्वे तस्यार्थक्रियासमर्थत्वेन वस्तुत्वाद् बाह्येऽनिमित्तो द्वेषः। तदसमर्थत्वे तु [1]सङ्केतवैयर्थ्यम्। तद्वाच्यावाच्यस्वभावत्वचिन्तासिद्धेश्च। तच्छब्दवाच्यस्वभावत्वे,**
१० **तस्य शब्दस्यापि तद्वाचकस्वभावत्वमिति वास्तवसम्बन्धसिद्धिः; अन्यथा सङ्केताभावः, अतिप्रसङ्गात्॥**

( स्वो० व्या० )

**इतश्चे**त्यादिना। इतश्च—अस्माच्च कारणात् **न विकल्पबुद्धिप्रतिभासे सङ्केतः**। कुत इत्याह—**स्थितास्थितविकल्पायोगात्**। एनमेवाह—**न स्थिते** विकल्प-
१५ बुद्धिप्रतिभासे सङ्केतः। कुत इत्याह—**अक्षणिकत्वप्रसङ्गात्** उत्पन्नस्य स्थितिरिति कृत्वा। **नास्थिते**। कुत इत्याह—**कर्तुमशक्यत्वात्**। तथाहि—अस्थितो न किञ्चित् कथं तत्र सङ्केतः?। उपपत्त्यन्तरमाह—**तथा गृहीतेतरविकल्पानुपपत्तेः** न विकल्पबुद्धिप्रतिभासे सङ्केत इति। एतदेवाह **न गृहीते** बुद्धिविकल्पप्रतिभासे सङ्केतः। कुत इत्याह—**सन्तानान्तरवर्तिनोऽस्य**—विकल्पबुद्धिप्रतिभासस्य
२० **ग्रहीतुमशक्यत्वात्। नागृहीते**। कुत इत्याह—**अतिप्रसङ्गात्** अगृहीतत्वाविशेषेण यत्र [2]क्वचित् कस्यचिच्छब्दस्य सङ्केतापत्तेः। उपपत्त्यन्तरमाह—**तथा व्यवहारसमर्थासमर्थालोचनायोगाच्च** न विकल्पबुद्धिप्रतिभासे सङ्केतः। आद्यं विकल्पमधिकृत्याह—**व्यवहारसमर्थत्वे तस्य**—विकल्पबुद्धिप्रतिभासस्य **अर्थक्रियासमर्थत्वेन** हेतुना **वस्तुत्वात्** कारणाद् **बाह्ये**—वस्तुनि **अनिमित्तो**
२५ **द्वेषः**, स्वसंविदन्यत्वेन तस्यैव बाह्यत्वादित्यर्थः। **तदसमर्थत्वे तु**—व्यवहारासमर्थत्वे पुनः, प्रक्रमाद् विकल्पबुद्धिप्रतिभासस्य। किमित्याह—**सङ्केतवैयर्थ्यं** व्यवहारार्थमस्य करणादिति। [3]दोषान्तरमाह—**तद्वाच्यावाच्यस्वभावत्वचिन्तासिद्धेश्च** न विकल्पबुद्धिप्रतिभासे सङ्केतः। आद्यं विकल्पमधिकृत्याह—**तच्छब्दवाच्यस्वभावत्वे तस्य**—विकल्पबुद्धिप्रतिभासस्य **शब्दस्यापि तद्वाचकस्व-**
३० **भावत्वमिति** कृत्वा। किमित्याह—**वास्तवसम्बन्धसिद्धिः। अन्यथा**—तच्छब्दवाच्यस्वभावत्वे तस्य किमित्याह—**सङ्केताभावः**। कथमित्याह—**अतिप्रसङ्गात्**। न हि घटः पटावाच्यस्वभावः सन् पटेन सङ्केत्यते इत्यतिप्रसङ्ग इति॥

१ 'वैयर्थ्यं तद्वाच्या०' इति ग-पाठः। २ 'क्वचित् सङ्केता०' इति घ-पाठः। ३ 'दोषान्तरामेवाह' इति क-पाठः।

(मूलम्)

स्यादेतच्छब्दो हि विकल्पजन्मा विकल्पहेतुश्च वर्तते। यथोक्तम्[1]—

"विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः"

इति। ततश्चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते—तथा- ५
भूतस्यैव श्रोतृविकल्पस्य जनक[3] इति एतावताऽंशेन तत्र सङ्केत
इति प्रतिपाद्यते, न पुनः शृङ्गग्राहिकया क्रियते। तथा च 'तैमिरिक-
द्वयद्विचन्द्रप्रतिपादन'न्याय एवेहावितथशब्दार्थव्यवहारज्ञैरनल्प-
धीधनैः प्रतिपादितः। यथोक्तम्—

"रूपान्तरं विकल्पे यदुभयोः प्रतिभासते। १०
सत्यर्थे तत्र सङ्केत एकत्वाध्यवसायतः॥ १ ॥[4]
[5]यादृशाद् यः समुत्पन्नः स भवत्येव कारणम्।
तादृग्विधविकल्पस्य ध्वनिः सङ्केतसंस्थितिः॥ २ ॥"[6]

---

(स्वो० व्या०)

स्यादेतत्—अथैवं मन्यसे शब्दो हि विकल्पजन्मा विकल्पहेतुश्च १५
वर्तते, विकल्पजनक इत्यर्थः। यथोक्तं भदन्तदिन्नेन—विकल्पयोनयः
शब्दा विकल्पाः—शब्दविकल्पाः शब्दयोनय इत्यादि। ततश्चेत्यादि।
ततश्च—एवं च सति असौ शब्दो यथाभूतादेव वक्तृविकल्पात्—
अघटाद्यपोहप्रतिभासिनः सकाशादुत्पद्यते, तथाभूतस्यैव श्रोतृविकल्पस्य
जनको बीजाङ्कुरनीत्या। [7]एतावताऽंशेन तत्र सङ्केत इति प्रतिपाद्यते, २०
न पुनः शृङ्गग्राहिकया क्रियते सङ्केतः। तथा चेत्यादि। तथा च 'तैमि-
रिकद्वयद्विचन्द्रप्रतिपादन'न्याय एवेह—अधिकारे अवितथशब्दार्थ-
व्यवहारज्ञैः—पूर्वाचार्यैरनल्पधीधनैः प्रतिपादितः। यथोक्तं वार्तिकानु-
सारिणा शुभगुप्तेन—रूपान्तरं—स्वलक्षणादन्यत् विकल्पे यत्—सामान्य-
लक्षणाख्यं उभयोः—वक्तृ-श्रोत्रोः प्रतिभासते—स्फुरतीव सत्यर्थे अपोहाश्रये २५
तत्र—रूपान्तरे सङ्केतः एकत्वाध्यवसायतः, अर्थेन रूपान्तरस्यैकत्वा-
ध्यवसायेनेत्यर्थः। १। तथा यादृशादित्यादि। यादृशाद् विकल्पाद् यः
समुत्पन्नः—जातः स भवत्येव कारणं—निमित्तं श्रोतारमधिकृत्य तादृग्-
विधविकल्पस्य ध्वनिः—शब्दः सङ्केतसंस्थितिरियमेव। २। किमेतद् [8]बौद्धं

---

१ 'तथा चोक्तं' इति ग-पाठः। २ 'वक्त्रविकल्पा०' इति क-पाठः। ३ 'जन्म इति' इति क-पाठः। ४ अनुष्टुप्। ५ 'तथा' इत्यधिकः क-पाठः। ६ अनुष्टुप्। ७ 'एत[र]दाशङ्क्याह (एता)वतांऽशेन' इति ङ-पाठः। ८ 'बौद्धः' इति ङ-पाठः।

( मूलम् )

किमेतदिति सङ्केत्य इतरोऽप्येवमित्यदः ।
न कल्पयति यावद्धि तावन्न समयोद्भवः ॥ ३ ॥[1]

५ वक्तुः श्रोतुश्च तुल्याभे बुद्धी तेनैकगोचरे ।
तत्त्वेन बहिरर्थोऽस्ति न कश्चिच्छब्दगोचरः ॥ ४ ॥[2]

स्वबुद्धिप्रतिभासस्य संवित्तावपि जायते ।
बहिरर्थग्रहे मानस्तुल्यतैमिरबुद्धिवत् ॥ ५ ॥"[3]

इति ॥ एतदपि यत्किञ्चित्, अविचारितरमणीयत्वात्, शब्दस्य
१० विकल्पमात्रतो जन्मासिद्धेः, तद्भावेऽपि मूकादिषु तददर्शनात्,
समग्रकारणस्य च कार्याव्यभिचारात्, अन्यथा समग्रत्वानुपपत्तेः,
निमित्तमात्रत्वे चास्य तद्वन्निमित्तान्तरावगमनिमित्तत्वे न विरोध

---

( स्वो० व्या० )

रूपमधिकृत्याह–इति–एवं सङ्केत्यः पुमान् इतरोऽपि सङ्केतक एवमित्यदः–
१५ एवमेतत् । न कल्पयति यावद् यस्मात् तावन्न समयोद्भवः–न सङ्केतजन्म
। ३ । यत एवं वक्तुः श्रोतुश्च द्वयोरपि तुल्याभे–समानाकारे बुद्धी तेन
कारणेन एकगोचरे [4]अपोह्यार्थापेक्षया । तत्त्वेन–परमार्थेन बहिरर्थोऽस्ति न
कश्चिच्छब्दगोचरः । ४ । कथं बाह्ये अभिमान इत्याह–स्वबुद्धिप्रतिभासस्य–
स्वबुद्ध्याकारस्य अपि संवित्तौ जायते, बहिरर्थग्रहे मानस्तुल्यतैमिरबुद्धि-
२० वत् । तैमिरिको हि तैमिरिकस्य चन्द्रद्वयं प्रतिपादयति स स्वबुद्धिप्रतिभासमितरोऽपि
स्वबुद्धिप्रतिभासमेव प्रतिपद्यते [6]बाह्यस्य चन्द्रद्वयस्याभावादिति भावना इति ॥

एवं पूर्वपक्षमधिकृत्याह–एतदपि यत्किञ्चित्–असारम् । कुत इत्याह–
अविचारितरमणीयत्वात् । एतदेवाह–शब्दस्य विकल्पमात्रतः सकाशात्
जन्मासिद्धेः । असिद्धिश्च तद्भावेऽपि–विकल्पमात्रभावेऽपि मूकादिषु–
२५ वक्तृषु, 'आदि'शब्दादवक्तृविकल्पवद्ग्रहः, तददर्शनात्–शब्दाश्रुतेः । नावश्यं
कारणानि कार्यवन्ति भवन्तीत्याशङ्क्याह–समग्रकारणस्य च कार्याव्यभि-
चारात् । इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे समग्र-
त्वानुपपत्तेः, निमित्तमात्रत्वे चास्य–विकल्पस्य तद्वदिति निदर्शनं

---

१–३ अनुष्टुप् । ४ 'अपोह्यार्थोऽपेक्षया' इति क–पाठः । ५ 'तैमिरिकबुद्धि०' इति ख–ङ–पाठः ।
६ 'बाह्यचन्द्र०' इति घ–पाठः ।

(मूलम्)

इत्यस्तु विषयेऽपि सङ्केतः, विषयविकल्पविवक्षाप्रयत्नभाषाद्रव्यादिविशेषेभ्यस्तज्जन्मोपपत्तेः । घटोऽयमानय चैनमित्यादौ तथादर्शनात्, इत्थम्भूतस्यान्यतरवैकल्येऽप्यभावात्, भाविनश्चेत्थम्भूतत्वानुपपत्तेः, तेन व्यभिचारायोगात्, तादृशस्य विकल्पमात्राभिधायित्वेऽप्यदोषात्, प्रमाणाभासवत् तदाकारत्वेऽपि विशिष्टकार्यासाधनत्वात् । इति युक्तियुक्तं सच्छब्दादाविद्धदङ्गनादिप्रतीतं विषयप्रवृत्त्यादि ॥

(स्वो० व्या०)

विकल्पवत्, निमित्तान्तरावगमनिमित्तत्वे न विरोध इति कृत्वा। किमित्याह—अस्तु विषयेऽपि सङ्केतः । कस्मादित्याह—विषयविकल्पविवक्षाप्रयत्नभाषाद्रव्यादिविशेषेभ्यः सकाशात् तज्जन्मोपपत्तेः—शब्दोत्पत्त्युपपत्तेः । उपपत्तिश्चेयमित्याह—घटोऽयमानय चैनमित्यादौ तथादर्शनात्—विषये सङ्केतदर्शनात् प्रतीतिप्रवृत्त्यादेरिति गर्भः । विषयमन्तरेणापि डित्थादिशब्दानां जन्म दृश्यत इत्यारेकापोहायाह—इत्थम्भूतस्य विशिष्टस्य शब्दस्य घटोऽयमित्यादेरन्यतरवैकल्येऽपि—विषयाद्यभावेऽपि अभावात्, भाविनश्च अन्यतरवैकल्ये इत्थम्भूतत्वानुपपत्तेः—विषयादिविशेषजन्मत्वानुपपत्तेः, तेन—अन्यतरवैकल्यभाविना शब्देन व्यभिचारायोगात् । तादृशस्य—अन्यतरवैकल्यभाविनः किमित्याह—विकल्पमात्राभिधायित्वेऽप्यदोषात् । कथमदोष इत्याह—प्रमाणाभासवदिति निदर्शनम् । तदाकारत्वेऽपि—शब्दाकारत्वेऽपि विशिष्टकार्यासाधनत्वात् विकल्पमात्राभिधायिनः शब्दान्तरस्य प्रमाणाभासमपि च प्रमाणाकारमेवेति भावनीयम् । इति—एवं युक्तियुक्तं सच्छब्दाद् विषयादिविशेषजन्मन आविद्धदङ्गनादिप्रतीतं विषयप्रवृत्त्यादि । 'आदि'शब्दात् प्राप्त्यादिग्रहः ॥

(विवरणम्)

(११) निमित्तान्तरावगमनिमित्तत्वे न विरोध इति । तथाहि—घटादेः शब्दस्य निमित्तमात्रभूतवक्तृगतविकल्पावगमनिमित्तत्वे न कश्चिद् विरोधः । एवमेव निमित्तान्तराणां—शब्दकारणानां विषयादीनामवगमस्य—बोधस्य निमित्तत्वे न कश्चिद् विरोधः । एवमेव ध्वनेर्न कश्चिद् विरोधो वर्तते । अतो यथा ध्वनेः सकाशाद् विकल्पावगमो भवत्येवं विषयावगमोऽपीत्यर्थः ॥

१ 'मानयैव चैन०' इति ग-घ-पाठः । २ 'तरवैकल्पेऽपि' इति क-ङ-पाठः । ३ 'वैकल्पे' इति क-ङ-पाठः । ४ 'वैकल्पभाविता' इति क-ङ-पाठः ।

( मूलम् )

**'तैमिरकद्वयद्विचन्द्रप्रतिपादन'न्याये तु निर्विषयविज्ञानविषयत्वात् सर्वशब्दानां तन्मात्राभिधानात् प्रतीत्यन्तराभावाद् बहि-**
५ **रर्थग्रहेऽभिमानानुपपत्तेः तदेकस्वभावत्वाभ्युपगमात् स्वसंवेदनमात्रस्वभावत्वेनास्यान्तर्मुखावभासित्वतो बहिर्मुखावभासित्वविरोधात्। लोके तु तैमिरक[द्वय]ज्ञानस्यानेकस्वभावतया तैमिरिकचन्द्रादिहेतुसामर्थ्यतस्तथात्वाविरोधात् एकचन्द्रस्यापि तद्विषयत्वात् तदभावेऽभावात् तथापि तदहेतुत्वकल्पनेऽतिप्रसङ्गादिति परमत एव**
१० **बहिरर्थग्रहेऽभिमानानुपपत्तिरिति न युक्तियुक्तं विषयप्रवृत्त्यादि ॥**

( स्वो० व्या० )

**'तैमिरिकद्वयद्विचन्द्रप्रतिपादन'न्याये तु** पूर्वपक्षोपन्यस्ते किमित्याह—'न युक्तियुक्तं विषयप्रवृत्त्यादि' इति महासम्बन्धः । कुत इत्याह—**निर्विषयविज्ञानविषयत्वात्** कारणात् **सर्वशब्दानां**—घटोऽयमित्यादीनां **तन्मात्रा-**
१५ **भिधानात्**—निर्विषयविज्ञानमात्राभिधानात् **प्रतीत्यन्तराभावात्** शब्दात् । किमित्याह—**बहिरर्थग्रहेऽभिमानानुपपत्तेः** । एतत्समर्थनायैवाह—**तदेकस्वभावत्वाभ्युपगमात्** तस्य—शब्दाभिधेयस्य निर्विषयविज्ञानस्य एकस्वभावत्वाभ्युपगमात् परेण । यदि नामैवं ततः किमित्याह—**स्वसंवेदनमात्रस्वभावत्वेन अस्य**—निर्विषयविज्ञानस्य **अन्तर्मुखावभासित्वतः** कारणाद् [३]**बहिर्मुखाव-**
२० **भासित्वविरोधात्**। न हि दृष्टेऽनुपपन्नं नाम बहिर्मुखावभासमपि निर्विषयमेव लोके ज्ञानमुपलभ्यत इति कृत्वा । एतदाशङ्कापोहायाह—**लोके त्वित्यादि** । लोके पुनस्तैमिरिकज्ञानस्य, प्रक्रमात् द्विचन्द्रप्रतिभासिनः, **अनेकस्वभावतया** कारणेन **तिमिरैक(?)चन्द्रादिहेतुसामर्थ्यतः** कारणात्, 'आदि'शब्दान्मिथ्याज्ञानावरणक्षयोपशमग्रहः । किमित्याह—**तथात्वाविरोधात्**—बहिर्मुखावभासित्वा-
२५ विरोधात् । कथमित्याह—**एकचन्द्रस्यापि तद्विषयत्वात्**—प्रक्रान्ततैमिरिकज्ञानविषयत्वात् , विषयत्वं च **तदभावेऽभावात्**—एकचन्द्राभावेऽभावात् तैमिरिकद्विचन्द्रज्ञानस्य, **तथापि**—तदभावाभावेऽपि **तदहेतुत्वकल्पने**—एकचन्द्रमसः अहेतुत्वकल्पनेऽधिकृततैमिरिकज्ञानं प्रति **अतिप्रसङ्गात्** अतैमिरिकचन्द्रज्ञानस्यापि तद्विषयत्वायोगात् **इति**—एवं **परमत एव**—एकान्तैकस्वभाववादिमत एव, न[४] तु
३० लोके। किमित्याह- **बहिरर्थग्रहेऽभिमानानुपपत्तिरिति** कृत्वा **न युक्तियुक्तं विषयप्रवृत्त्यादि** । 'आदि'शब्दात् प्राप्त्यादिग्रहः ॥

१ 'हेतुकत्व० इति पाठः क्वचित्' इति क–प्रतौ टिप्पणकम् । २ 'ग्रहाभिमाना०' इति ग–पाठः ।
३ 'बहिर्मुखावभासित्वतः कारणात्' इत्यधिकः क–पाठः । ४ 'ननु लोके इति ङ–पाठः ।

(मूलम्)

न चैकचन्द्रवदर्थोऽपि कथञ्चिदस्य विषय इष्यते, अभ्युपगमे चापद्यते बलात् कथञ्चिच्छब्दविषयोऽर्थ इति यत्किञ्चिदेतत्। न 'चासौ शब्दो यथाभूतादेव वक्तृविकल्पादुत्पद्यते, तथाभूतस्यैव श्रोतृवि- ५ कल्पस्य जनकः' इति[1] एतदप्यालोचिताभिधानम्, तज्जन्यजनकताग्राहिणः परमार्थसतस्तथाविधविज्ञानस्याभावात्, क्षणिकत्वेन उभयोर्ग्रहणासिद्धेः, तदग्रहे च तथानिश्चयायोगः, तत्तत्स्वभावतया क्षणिकेनापि तत्स्वभावावगतेः[2], अन्यथा तदग्रहणप्रसङ्गान्निश्चय इति चेत्, न, तत्स्वभावावगत्यसिद्धेः, इतरेतरग्रहणमन्तरेण १० तदयोगात्, तस्य च क्षणिकवादेऽभावात्, तथापि तदभ्युपगमे

(स्वो० व्या०)

न चेत्यादि। न च एकचन्द्रवदिति निदर्शनं व्यतिरेकेण, अर्थोऽपि कथञ्चित्–केनचित् प्रकारेण अस्य–अधिकृतविकल्पस्य विषय इष्यते परैः, अभ्युपगमे च अर्थस्याधिकृतविकल्पविषयतया किमित्याह–आपद्यते बलात् १५ कथञ्चित्–केनचित् प्रकारेण। किमित्याह–शब्दविषयोऽर्थ इति–एवं यत्किञ्चिदेतत्–असारम्। न चासौ शब्दः प्रस्तुतः यथाभूतादेव–अनन्तरोदिताद् वक्तृविकल्पादुत्पद्यते तथाभूतस्यैव श्रोतृविकल्पस्य जनक इत्येतदपि–पूर्वपक्षवचनमालोचिताभिधानम्। कुतो न चेत्याह–तज्जन्यजनकताग्राहिणः तयोः–शब्द-विकल्पयोर्जन्यजनकताग्राहिणः परमार्थसतः– २० अपरिकल्पितस्य तथाविधविज्ञानस्य–अधिकृतनिश्चयहेतोरभावात्। अभावश्च क्षणिकत्वेन हेतुना उभयोः-शब्दविकल्पयोर्ग्रहणासिद्धेः, साकल्येनेत्यभिप्रायः। तदग्रहे च–साकल्येन शब्दविकल्पाग्रहे च तथा–तेन प्रकारेणासौ शब्दो यथाभूतादेवेत्यादिना निश्चयायोगः। तत्तत्स्वभावतया तयोः–शब्द-विकल्पयोरधिकृतजन्यजनकस्वभावतया कारणेन क्षणिकेनापि विज्ञानेन तत्स्वभावावगतेः– २५ शब्दविकल्पस्वभावावगतेः। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा–तत्तत्स्वभावावगतिमन्तरेण तदग्रहणप्रसङ्गात्–प्रस्तुतशब्दविकल्पाग्रहणप्रसङ्गात् कारणात् निश्चय इति चेत्, तथा निश्चयः। एतदाशङ्क्याह–न, तत्स्वभावावगत्यसिद्धेः–प्रस्तुतशब्दविकल्पस्वभावावगत्यसिद्धेः। असिद्धिश्च इतरेतरग्रहणमन्त-

१ द्रष्टव्यं ३३७तमं पृष्ठम्। २ 'तत्तत्स्वभावा०' इति क-पाठः।

( मूलम् )

दृष्टेष्टविरोधः, धूमादिमात्रग्रहणादेव तस्य वह्न्यादिजन्यस्वभावतया तथैवावगतेः। अविनाभावग्रहणमन्तरेण 'नालिकेर'द्वीपवासिनोऽपि ५ धूमध्वजादिप्रतिपत्त्यापत्तेः। न चेयमेवमिति न तत्स्वभावावगतिरिति न तज्जन्यजनकताग्राहि परमार्थसत्[1] तथाविधज्ञानमस्ति ॥

किञ्च 'तथाभूतस्यैव श्रोतृविकल्पस्य जनकः' इत्येतदप्ययुक्तम्,

( स्वो० व्या० )

रेण संवलितं तदयोगात्–तत्स्वभावावगत्ययोगात्। तस्य च–इतरेतरग्रहणस्य १० क्षणिकवादेऽभावात्। तथापि–एवमितरेतरग्रहणमन्तरेणापि[3] तदभ्युपगमे– तत्स्वभावावगत्यभ्युपगमे। किमित्याह–दृष्टेष्टविरोधः। एनमेवोपदर्शयति धूमादीत्यादिना। धूमादिमात्रग्रहणादेव सकाशात् तस्य–धूमादेर्वह्न्यादि- जन्यस्वभावतया कारणात्[4] तथैव–वह्न्यादिजन्यस्वभावतयैव अवगतेर्हेतोः। किमित्याह–अविनाभावग्रहणमन्तरेण 'नालिकेर'द्वीपवासिनोऽपि प्र- १५ मातुः धूमध्वजादिप्रतिपत्त्यापत्तेः। धूमध्वजः–अग्निः। 'आदि'शब्दादुभयत्र कार्यकारणान्तरपरिग्रहः[5]। न चेत्यादि। न च इयं–धूमध्वजादिप्रतिपत्तिः एवं–धूम- मात्रग्रहणादेव इति–एवं न तत्स्वभावावगतिरिति कृत्वा न तज्जन्यजन- कताग्राहि–न शब्दविकल्पजन्यजनकताग्राहि परमार्थसत्–अविकल्पकमधिकृत- निश्चयनिबन्धनं ज्ञानमस्तीति निगमनम् ॥

२० अभ्युच्चयमाह किञ्चेत्यादिना। किञ्च तथाभूतस्यैव श्रोतृविकल्पस्य जनकः शब्द इत्येतदप्ययुक्तम्। कुत इत्याह–कचिदसम्भवात् तथाभूतस्यैव

( विवरणम् )

(१६-१७) उभयत्र कार्यकारणान्तरपरिग्रह इति। उभयत्र–केवलकारणग्रहणे केवलकार्यग्रहणे च सति कार्यान्तरस्य–धूमव्यतिरिक्तस्याग्निसम्बन्धिनो दाहादेः कार- २५ णान्तरस्य च–अग्निव्यतिरिक्तस्य धूमसम्बन्धिनः काष्ठादेः परिग्रहः। अयमभिप्रायः– केवलं पावकं समालोक्य तदुत्थधूमादिसर्वकार्यावगमः प्रमातुः प्राप्नोति, तज्जनक- स्वभावत्वात् तस्य; तथा धूमादिकं कार्यं दृष्ट्वा तज्जनकानां पावकादीनां सर्वेषामप्यव- गमः प्रसज्यते[6], तज्जन्यत्वात् तस्य ॥

१ 'मार्थसतस्तथा०' इति ग–पाठः। २ द्रष्टव्यं ३३७तमं पृष्ठं ३४१तमं वा। ३ 'एवमेवे- तरेतर०' इति ङ–पाठः। ४ 'कारणेन' इति ङ–पाठः। ५ कार्यकरणा०' इति ङ–पाठः। ६ 'प्रसज्यते तावज्जन्य०' इति ङ–पाठः।

(मूलम्)

**क्वचिदसम्भवात्, गम्भीरशास्त्रश्रवणादौ तथोपलब्धेः, अन्यथा तदनवगमाभावात्, अभ्युपगमे च प्रतीतिविरोधः, क्वचित् सम्भवे अपि तदवगमासम्भवाच्च, परचेतसोऽप्रत्यक्षत्वात् तदाकारोऽतदा-** ५
**कार इति सन्देहात्। स्वात्मनि ततस्तदाकारविकल्पोत्पत्त्या तत्त-ज्जननस्वभावत्वावगतेर्न सन्देह इति चेत्, न, क्वचिदसम्भवादि-त्युक्तम्। न च यादृशाद् यः समुत्पन्नः [1]स तादृशस्यैव हेतुरित्य-सन्देहे निमित्तम्, व्यभिचारभावाद् गोमय-गोलोमादिप्रभवेभ्यः शालूक-दूर्वादिभ्यः पुनस्तदनुत्पत्तेः। तथाविधसामग्र्यभावतो न** १०
**तदुत्पत्तिरिति चेत्, तत्रापि न तदभाव इति न प्रमाणम्। श्रोतृ-तदुपलब्धिरेव प्रमाणमिति चेत्, न, क्वचिदसम्भवादित्युक्तम्।**

(स्वो० व्या०)

श्रोतृविकल्पस्य, असम्भवश्च **गम्भीरशास्त्रश्रवणादौ** गम्भीरशास्त्रमतिगहनम्। 'आदि'शब्दान्निपुणाभिधानग्रहः। **तथोपलब्धेः**—वक्तृविकल्पसदृशश्रोतृविकल्पा- १५
सम्भवोपलब्धेः। इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **तदन-वगमाभावात्** तस्य—श्रोतुरनवगमाभावो वक्तृविकल्पसदृशवि[2]कल्पोत्पादे। **अभ्युपगमे च** अनवगमाभावस्य **प्रतीतिविरोधः,** क्वचिदनवगमप्रतीतेः। दूषणान्तरमाह—**क्वचित् सम्भवेऽपि** वक्तृविकल्पसदृशश्रोतृविकल्पस्य **तदव-गमासम्भवाच्च।** असम्भवश्च **परचेतसः अप्रत्यक्षत्वात्।** अप्रत्यक्षत्वे २०
च **तदाकारोऽतदाकार इति सन्देहात्। स्वात्मनि ततः**—शब्दात् **तदाकारविकल्पोत्पत्त्या** करणभूतया **तत्तज्जननस्वभावत्वावगतेः** तस्य—शब्दस्याधिकृतविकल्पजननस्वभावत्वावगतेः कारणात् **न सन्देह इति चेत्** तज्जननस्वभावो हि तदेव जनयतीति कृत्वा। एतदाशङ्क्याह—**न, क्वचिदसम्भवात्** इत्युक्तम[3]धः। **न च यादृशाद्** विकल्पाद् **यः समुत्पन्नः** शब्दः **स** २५
**तादृशस्यैव** विकल्पस्य **हेतुरित्यसन्देहे निमित्तं** सामान्येन। कुत इत्याह—**व्यभिचारभावात्।** भावश्च **गोमय-गोलोमादिप्रभवेभ्यः शालूक-दूर्वादिभ्यः पुनस्तदनुत्पत्तेः**—गोमय-गोलोमाद्यनुत्पत्तेः। **तथाविधसामग्र्य-भावतः** कारणात् **न तदुत्पत्तिः**—गोमयगोलोमाद्युत्पत्तिः। **इति चेत्,** एतदाशङ्क्याह—**तत्रापि**—शब्दविकल्पचिन्तायां **न तदभाव इति न**—तथाविध- ३०
सामग्र्यभाव **इति न प्रमाणम्।** श्रोतुस्तदुपलब्धिस्तथाविधविकल्पोत्पादेन **श्रोतृ-**

१ 'स' इति पाठो नास्ति ग-प्रतौ। २ 'कल्पोपादेन अभ्यु०' इति ङ-पाठः। ३ अस्मिन्नेव पृष्ठे।

( मूलम् )

तैलप्रभवदीपाच्च तैलानुत्पत्तेरिति व्यभिचार एव। न च गृहीतस्ते वचनतोऽभिप्राय इति लोकप्रतीतिस्तदसन्देहे निमित्तम्, अभ्युपगम-
५ विचारात्। तेन चोक्तवत् तदसिद्धेरित्यतितुच्छमेतत्। यच्चोक्तम्[1]–
'वस्तूनामानन्त्याद् व्यवहारानुपयोगात्' इति तदपि न दोषकृत्,
तुल्यत्वात्। तथाहि–न विकल्पबुद्धिप्रतिभासोऽन्य एव विकल्पे-
भ्योऽपि तु विकल्पा एव। ते च भूयांसस्तत्त्वतो[2] बोधमात्रविशेषा इति,
सर्वेषु वा देशकालस्वभावविप्रकर्षवत्सु विकल्पेषु वाचकत्वनियोगो[3]
१० ध्वनीनां परिदृष्टेषु वा। न तावत् सर्वेषु, आनन्त्यादनुपलब्धेः। इह
ये नोपलभ्यन्ते न तेषु ध्वनीनां समयविधिः[4], यथा विनष्टानुत्पन्नेषु,
नोपलभ्यन्ते च देशकालविप्रकृष्टा विकल्पा इति न तेषु सङ्केतः;

( स्वो० व्या० )

तदुपलब्धिः असावेव प्रमाणं नात्रापि तदभावः। इति चेत्, एतदाशङ्क्याह–
१५ न, क्वचिदसम्भवादित्युक्तं प्राक्[5]। उपचयान्तरमाह–तैलप्रभवदीपाच्च
तैलानुत्पत्तेः कारणात् इति–एवं व्यभिचार एव। न चेत्यादि। न च
गृहीतस्ते–तव परमाह–वचनतोऽभिप्राय इति–एवं लोकप्रतीतिस्तदस-
न्देहे–तदाकारादिविकल्पासन्देहे निमित्तम्। कुत इत्याह–अभ्युपगमविचा-
रात् तेन च–अभ्युपगमेन उक्तवत्–यथोक्तं तथा तदसिद्धेः–प्रस्तुतासन्देहा-
२० सिद्धेरिति–एवमतितुच्छमेतत्। यच्चोक्तं पूर्वपक्षग्रन्थे[6] एव। यदुक्तं तदाह–
'वस्तूनामानन्त्याद् व्यवहारानुपयोगा'दित्येतत् तदपि न दोषकृत्–न
दोषकरणशीलम्। कुत इत्याह–तुल्यत्वात्। यश्चोभयोर्दोषो न तत्रैकश्चोद्यो[7] भवति।
तुल्यत्वमेवाह–तथाहि–न विकल्पबुद्धिप्रतिभासोऽन्य एव, विकल्पेभ्यः
सकाशादपि तु विकल्पा एव। ते च–विकल्पा भूयांसस्तत्त्वतो बोधमात्र-
२५ विशेषा इति कृत्वा सर्वेषु वा देशकालस्वभावविप्रकर्षवत्सु विकल्पेषु
वाचकत्वनियोगो ध्वनीनां परिदृष्टेषु वा कतिपयेषु?। किञ्चातः ? उभयथाऽपि
दोष इत्याह–न तावत् सर्वेषु–देशादिविप्रकर्षवत्सु विकल्पेषु वाचकत्वनियोगो
ध्वनीनाम्। कुत इत्याह–आनन्त्यात् कारणात् अनुपलब्धेः सर्वविकल्पानाम्।
एतदेव प्रमाणेनाह–इह ये नोपलभ्यन्ते केचन भावा न तेषु ध्वनीनां समय-

१ ३१९तमे पृष्ठे। २ 'भूयांसस्तथात्वतो' इति ग–पाठः। ३ 'वाचकत्वे नियोगो' इति ग–पाठः। ४ 'संयमविधिः' इति ग–पाठः। ५ ३४३तमे पृष्ठे। ६ ३१९तमे पृष्ठे। ७ 'तमेकश्चोद्यो' इति ङ–पाठः।

( मूलम् )

नापि परिदृष्टेषु, तत्रापि दोषात्। तथाहि–परिदृष्टविकल्पसङ्केतविधौ सङ्केतकाले य एव नोपलब्धो विकल्पस्तत्रैव ततः शब्दात् प्रवृत्तिर्न भवेत्। न ह्यन्यत्र कृतसमयाद् ध्वनेरन्यत्र प्रवर्तनं ५ युक्तम्, यथा केसरादिमतिभावे गोशब्दात्, ततश्च निष्प्रयोजन एव सङ्केतः, तत्समयोपलब्धस्यासंसारमपि पुनरनुपलम्भाच्च ॥

स्यादेतत् न हि स्वसंविद्रूपेषु बोधमात्रविशेषेषु सङ्केतः, अपि तु बुद्धिपरिकल्पिते रूपे तच्चावस्त्विति यथोक्तदोषानुपपत्तिः। एतदपि यत्किञ्चित्, बुद्धिपरिकल्पितस्य रूपस्यावस्तुत्वेनासत्त्वात् १० निश्चयाभावतः सङ्केतासिद्धेरिति। आह–बुद्धिपरिकल्पितं रूपं परिकल्पितयैव बुद्ध्या निश्चीयत इति निश्चयाभावादित्यसिद्धम्, न,

( स्वो० व्या० )

विधिः सामान्येन। यथा विनष्टानुत्पन्नेष्विति निदर्शनम्। नोपलभ्यन्ते च देशकालविप्रकृष्टा विकल्पा इति पक्षधर्मोपसंहारः। अतो न तेषु सङ्केत इति १५ द्वितीयं विकल्पमधिकृत्याह–नापि परिदृष्टेषु–विकल्पेषु। 'वाचकत्वनियोगो ध्वनीनाम्'[1] इति वर्तते। कुत इत्याह–तत्रापि–परिदृष्टविकल्पेषु दोषाद् वाचकत्वनियोगे ध्वनेः। एनमेवाह तथाहीत्यादिना। तथाहि–परिदृष्टविकल्पसङ्केतविधौ इष्यमाणे सङ्केतकाले य एव नोपलब्धो विकल्पस्तत्रैव–विकल्पे ततः शब्दात्–सङ्केतितात् प्रवृत्तिर्न भवेत्। एतदेव भावयन्नाह–न ह्यन्यत्र कृत- २० समयाद् ध्वनेः–शब्दादन्यत्र प्रवर्तनं युक्तं, यथा केसरादिमतिभावे–सिंहादौ गोशब्दात्, ततश्च–एवं च सति निष्प्रयोजन एव सङ्केतः। उपचयमाह–तत्समयोपलब्धस्य–सङ्केतसमयोपलब्धस्य आसंसारमपि–यावदपि संसारः तावदपि पुनरनुपलम्भाच्च इति ॥

स्यादेतत् न हि स्वसंविद्रूपेषु बोधमात्रविशेषेषु सङ्केतः, अपि तु २५ बुद्धिपरिकल्पिते रूपे सङ्केतः तच्च–बुद्धिपरिकल्पितं रूपमवस्त्विति कृत्वा यथोक्तदोषानुपपत्तिः। एतदाशङ्क्याह–एतदपि यत्किञ्चित्–असारम्। कुत इत्याह–बुद्धिपरिकल्पितस्य रूपस्यावस्तुत्वेन हेतुना असत्त्वात् कारणात् निश्चयाभावतः–निश्चयाभावेन सङ्केतासिद्धेरिति। आह–बुद्धिपरिकल्पितं रूपं परिकल्पितयैव बुद्ध्या निश्चीयत इति कृत्वा ३० निश्चयाभावादित्यसिद्धं यदुक्तं प्राक्। एतदाशङ्क्याह–न–नैतदेवम्। कुत

१ प्रेक्ष्यतां ३४४तमं पृष्ठम्।

(मूलम्)

सम्यग्निश्चयानभिधानात्, खकुसुमरूपं वन्ध्यासुतबुद्ध्या निश्चीयत इति तत्त्वतोऽभिधानाविशेषात्, अन्यथा बलात् तद्भावापत्त्या ५अनयोः परिकल्पितत्वाभाव इति परिचिन्त्यतामेतत्। निश्चय उपलम्भः संविदित्यनर्थान्तरम्। न च संविदोऽप्यवस्तुत्वमनभ्युपगमात् शून्यतापत्तेः स्वसंविदितरूपा च बुद्धिः बुद्धिस्वभावं च तत्, न चाधिकं तत्र किञ्चिदिति कथमवस्तुत्वं नाम?। एवं च पूर्वोक्तदोषानतिवृत्तिरेव। आह–यद् रूपं तद् बुद्धौ प्रतिभासते, तथाभूतं १० नास्तीत्यवस्तुत्वम्। तथाहि–तदव्यतिरिक्तमपि व्यतिरिक्तमिवासाधारणमपि साधारणमिव[1] अनर्थक्रियाकार्यपि तत्कारीवावभासते, तथा तन्नास्तीत्यवस्तुत्वं प्रतिभासतया[2] त्वस्त्येव। उक्तं

(स्वो० व्या०)

इत्याह–सम्यग्निश्चयानभिधानात्। अनभिधानं च खकुसुमरूपं १५ वन्ध्यासुतबुद्ध्या निश्चीयत इति–एवं तत्त्वतोऽभिधानाविशेषात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–अन्यथा–एवमनभ्युपगमे बलात् तद्भावापत्त्या–बुद्धिपरिकल्पितरूपस्य भावापत्त्या अनयोः–बुद्धिपरिकल्पितरूपशब्दयोः परिकल्पितत्वाभाव इति परिचिन्त्यतामेतत्, वास्तवसम्बन्धसिद्धिरित्यर्थः। एतत्समर्थनायैवाह–निश्चय उपलम्भः संविदित्यनर्थान्तरम्। न च २० संविदोऽप्यवस्तुत्वमनभ्युपगमात्। अनभ्युपगमश्च शून्यतापत्तेः सर्वाभावेन। यदि नामैवं ततः किमित्याह–स्वसंविदितरूपा च बुद्धिः सामान्येन बुद्धिस्वभावं च तत्–बुद्धिपरिकल्पितं रूपं न चाधिकं तत्र–बुद्धौ किञ्चिदिति–एवं कथमवस्तुत्वं नाम? बुद्धिपरिकल्पितस्य रूपस्य नावस्तुत्वम्। एवं च पूर्वोक्तदोषानतिवृत्तिरेव 'न ह्यन्यत्र कृतसमयाद् ध्वनेः'[3] इत्यादिदोषानतिवृत्ति- २५ रेव। आह–यद् रूपं तत्, सामान्यमिति प्रक्रमः, बुद्धौ–अधिकृतविकल्पबुद्धौ प्रतिभासते तथाभूतं नास्तीति कृत्वा अवस्तुत्वं तस्य। एतदेव भावयति तथाहीत्यादिना। तथाहीति पूर्ववत्। तदव्यतिरिक्तमपि, बुद्धेरिति प्रक्रमः, व्यतिरिक्तमिव–अर्थान्तरमिव असाधारणमपि बुद्धिव्यतिरेकेण[4] साधारणमिवानर्थक्रियाकार्यपि अस्वलक्षणरूपतया तत्कारीवावभासते[5], तथा–तेन ३० प्रकारेण तत्–रूपं नास्तीत्यवस्तुत्वं तथा प्रतिभासतया तु यथोक्तलक्षणया

१ 'मिवमेवानर्थ०' इति क–पाठः। २ 'तयाऽस्त्येव' इति ग–पाठः। ३ दृश्यतां ३४५तमं पृष्ठम्। ४ 'बुद्ध्यव्यति०' इति ङ–पाठः। ५ 'तत्कारी चाव०' इति क–पाठः।

(मूलम्)

च न्यायवादिना—

"पररूपं स्वरूपेण यया संव्रियते धिया ।
एकार्थप्रतिभासिन्या भावानाश्रित्य भेदिनः ॥ १ ॥[१]     ५
तया संवृत्तनानात्वाः संवृत्त्या भेदिनः स्वयम् ।
अभेदिन इवाभान्ति भावा रूपेण केनचित् ॥ २ ॥[२]
तस्या अभिप्रायवशात् सामान्यं सत् प्रकीर्तितम् ।
तदसत् परमार्थेन यथा सङ्कलिपतं तया ॥ ३ ॥"[३]

इति । तदप्ययुक्तम्, तत्त्वतो विहितोत्तरत्वात् तदुक्तिमात्रभेदात् । १०
तथाहि–'यद् रूपं तद् बुद्धौ प्रतिभासते, तथाभूतं नास्तीत्यवस्तुत्व'मुक्तम्, तत् क्व नास्ति? किं तद् बुद्धावेव आहोस्विद् बहिः? यदि तद् बुद्धावेव, तत्र प्रतिभासते तत्रैव नास्तीति व्याहतमेतत् । यदि

(स्वो० व्या०)

अस्त्येव । उक्तं च न्यायवादिना–धर्मकीर्तिना–पररूपं–व्यावृत्तस्वलक्षणं १५ स्वरूपेण प्रतिभासेन यया संव्रियते–प्रच्छाद्यते धिया–बुद्ध्या एकार्थप्रतिभासिन्या एकाकारया भावानाश्रित्य भेदिनः स्वलक्षणान्यधिकृत्योत्पन्नया तया–धिया संवृत्तनानात्वाः किंविशिष्टया संवृत्त्या संव्रियतेऽनया स्वलक्षणमिति कृत्वा भेदिनः स्वयमसाधारणात्मानः अभेदिन इव-संसृष्टा इव आभान्ति भावा रूपेण केनचित्–विजातीयव्यावृत्त्युपलक्षितेन घटत्वादिना तस्याः– २० बुद्धेरभिप्रायवशात्–एकाकाराध्यारोपवशात् सामान्यं सदिति प्रकीर्तितं बुद्ध्यारोपित एकाकारः सामान्यमुक्तम् । तदसत् परमार्थेन–वस्तुस्थित्या यथा सङ्कलिपतम्–आरोपितं तया–अधिकृतबुद्ध्या । इति–एवं पूर्वपक्षमाशङ्क्याह–एतदपि–अनन्तरोदितमपि अयुक्तम् । कथमित्याह–तत्त्वतः–परमार्थेन विहितोत्तरत्वात् । तदन्यदित्याशङ्क्याह–तदुक्तिमात्रभेदात् तस्मादुक्तादुक्तिमात्रेण २५ भेदादस्य । एतदुपदर्शनायैवाह–तथाहीत्यादि । तथाहि यद् रूपं तद् बुद्धौ प्रतिभासते, तथाभूतं नास्तीत्यवस्तुत्वमुक्तम् । तच्चावस्त्वित्यनेन तत् क्व नास्ति रूपम्? किं तद् बुद्धावेव नास्ति आहोस्विद् बहिर्नास्तीति? । किञ्चातः? उभयथाऽपि दोष इत्याह–यदि तद् बुद्धावेव नास्ति तत्र–बुद्धौ प्रतिभासते

१–३ अनुष्टुप् । ४ ३४६तमे पृष्ठे । ५ 'तत्र नास्ति' इति क–पाठः । ६ 'तद्बुद्धौ' इति ग–पाठः ।

( मूलम् )

नास्ति कथं प्रतिभासते? प्रतिभासते चेत् कथं नास्तीति?। अथ बहिः, यद् बुद्धौ प्रतिभासते तत् कथं बहिर्भवति, तद्धर्मत्वात्?। न
५ चैतावताऽवस्तुत्वम्, स्वलक्षणबुद्ध्याकारस्यापि अवस्तुत्वप्रसङ्गात् तस्यापि बहिरसत्त्वात्। स बाह्यबलोपजात इति चेत्, इतरत्रापि समानमेतत्। न तथाविधं बाह्यमस्तीति चेत्, अतथाविधभावे किं प्रमाणम्?। तदाकारज्ञानोत्पत्तिरिति चेत्, इयं तथाविधेऽपि सदृशी। नेयं ततः, क्वचित् तदभावेऽपि भावादिति चेत्, निर्विकल्प-
१० बुद्धावपि तुल्यमेतत्। न सा साध्वी, तदाभासत्वादिति चेत्, इत-

( स्वो० व्या० )

तत्रैव नास्तीति व्याहतमेतत्। एतदेव भावयति–यदि नास्ति कथं प्रतिभासते? प्रतिभासते चेत् कथं नास्तीति?। द्वितीयं विकल्पमधिकृत्याह–अथ बहिर्नास्ति यद् बुद्धौ प्रतिभासते तत् कथं बहिर्भवति तद्-
१५ धर्मत्वात्–अधिकृततद्बुद्धिधर्मत्वात्?। न चैतावता कारणेन बहिर्नास्तीत्यवस्तुत्वमस्येति। कुत इत्याह–स्वलक्षणबुद्ध्याकारस्यापि। किमित्याह–अवस्तुत्वप्रसङ्गात्। प्रसङ्गश्च तस्यापि–स्वलक्षणबुद्ध्याकारस्य बहिरसत्त्वाद् बुद्धिधर्मत्वेन। सः–स्वलक्षणबुद्ध्याकारः बाह्यबलोपजात इति चेत्, ततश्च तत्त्वतः तस्यापि बहिरसत्त्वादित्यसिद्धम्। एतदाशङ्क्याह–इतरत्रापि–अस्वलक्षणाकारे
२० समानमेतद् यदुत स बाह्यबलोपजात इति। न तथाविधं–साधारणादिधर्मकं बाह्यमस्तीति चेत्, स्वलक्षणानामसाधारणत्वादित्येतदाशङ्क्याह–अतथाविधभावे–असाधारणस्वलक्षणभावे किं प्रमाणम्?। तदाकारज्ञानोत्पत्तिः–अतथाविधस्वलक्षणाकारज्ञानोत्पत्तिरिति चेत् प्रमाणम्, एतदाशङ्क्याह–इयं–तदाकारज्ञानोत्पत्तिः तथाविधेऽपि–साधारणादिधर्मके अस्वलक्षणेऽपीत्यर्थः, सदृशी–साधा-
२५ रणा, साधारणाद्याकारस्याप्यनुभवादित्यर्थः। नेयं–तथाविधसाधारणाद्याकारज्ञानोत्पत्तिः ततः–तथाविधात् साधारणादिरूपाद् बाह्यवस्तुनः। कुत इत्याह–क्वचित्–अन्यत्र तदभावेऽपि–तथाविधसाधारणादिधर्मकबाह्याभावेऽपि भावात्–तथाविधसाधारणाद्याकारज्ञानोत्पत्तेः घटाद्यभावेऽपि तथाविधविज्ञानभावात्। एतदाशङ्क्याह–निर्विकल्पकबुद्धावपि, अतथाविधासाधारणस्वलक्षणबुद्धावपीत्यर्थः। तुल्यमेतत्–
३० अनन्तरोदितं यदुत 'नेयं ततः' इत्यादि। उत्पद्यते च द्विचन्द्राद्यभावे निर्विकल्पकबुद्धिः। न सा–तदभावभाविनी निर्विकल्पकबुद्धिः साध्वी, तदाभासत्वात्–साध्व्या-

१ 'साधारणादिकर्मकं' इति क–पाठः।

( मूलम् )

**रत्रापि समानः समाधिः। सा साध्वी न सम्भवत्येवेति चेत्, साधारणोऽभिशापः। स्वलक्षणदर्शनानुग्रहादसाधारण इति चेत्, न, तद्दर्शनानुग्रहस्यापि भावात्। [१]तदभावादेव तदभाव इति चेत्, ५ न, तस्यासिद्धत्वात्, तदाकारादिसंवेदनात् तन्निश्चयानुपपत्तेः। न साधारणाकारेणैव संवेदनेन साधारणार्थाभावनिश्चयः, अति-प्रसङ्गात्, स्वलक्षणाकारेणाप्यनेन तदभावनिश्चयापत्तेः। एवमन्या-कारेणापि योजना कार्येति। एवं च '[२]तदव्यतिरिक्तमिव' [३]इत्याद्यना-लोचिताभिधानमिति दर्शितमेव तथापि लेशतो विशेषेण दर्श्यते।** १०

( स्वो० व्या० )

भासत्वात्। **इति चेत्**, एतदाशङ्क्याह–**इतरत्रापि**–अधिकृतविकल्पबुद्धौ **समानः समाधिः**–तुल्यः परिहारः। तथाविधबाह्याभावभाविनी साऽपि तदाभासैवेति भावः। **सा**–तथाविधबुद्धिः साधारणादिधर्मिका स्वलक्षणविषया **साध्वी** अविषयत्वेन **न सम्भवत्येव। इति चेत्**, एतदाशङ्क्याह–**साधारणो[४]ऽभिशापः** अतथा- १५ विधबुद्धिरप्यसाधारणादिधर्मस्वलक्षणविषयत्वसम्मता साध्वी न सम्भवत्येवेति[५] वक्तुं शक्यत्वात् साधारणोऽभिशाप इति । **स्वलक्षणदर्शनानुग्रहात्** कारणात् **असाधारणः। इति चेत्**, एतदाशङ्क्याह–**न**–नैतदेवम्, **तद्दर्शनानुग्रह-स्यापि**–अस्वलक्षणदर्शनानुग्रहस्यापि **भावात् तदभावादेव**–बाह्यास्वलक्षणा-भावादेव **तदभाव** इति [६]च–तद्दर्शनानुग्रहाभावः। **इति चेत्**, एतदाशङ्क्याह– २० **न, तस्य**–तदभावस्य **असिद्धत्वात्**। असिद्धत्वं च **तदाकारादिसंवेदनात्**– अस्वलक्षणाकारादिसंवेदनात्। 'आदि'शब्दात् तदन्याकारादिग्रहः। **तन्निश्चयानु-पपत्तेः**–बाह्यास्वलक्षणाभावनिश्चयानुपपत्तेः। एतत्प्रकटनायैवाह–**न साधारणा-कारेणैव**, अस्वलक्षणाकारेणेत्यर्थः, **संवेदनेन**–विज्ञानेन **साधारणार्थाभाव-निश्चयः**–अस्वलक्षणार्थाभावनिश्चयः। कुतो नेत्याह–**अतिप्रसङ्गात्**। एनमेवाह– २५ **स्वलक्षणाकारेणाप्यनेन**–संवेदनेन **तदभावनिश्चयापत्तेः**–स्वलक्षणाभाव-निश्चयापत्तेः, **एवमन्याकारेणापि** अस्वलक्षणचिन्तायां स्वलक्षणाकारेण अस्वलक्षण-चिन्तायां चास्वलक्षणाकारेण **योजना कार्या**। किमुक्तं भवति? न स्वलक्षणाकारेण संवेदनेनास्वलक्षणार्थाभावनिश्चयः, अतिप्रसङ्गादिति तद्भावना कृतैव। **एवं च** सति **तदव्यतिरिक्तमपि** व्यतिरिक्तमिवेत्यादि पौर्वपक्षं वचः[७] **अनालोचिताभिधान-** ३० **मिति दर्शितमेव तथापि लेशतः**–सङ्क्षेपतो **विशेषेण** प्रतिवचनं **दर्श्यते**॥

---

१ 'तद्भावा०' इति ग–पाठः। २ 'तदव्यतिरिक्तमपि व्यतिरिक्तमिवेत्यादि' इति प्रतिभाति। ३ समीक्ष्यतां ३४६तमं पृष्ठम्। ४ 'ऽतिशयः इति ङ–पाठः। ५ 'अपि' इत्यधिको ङ–पाठः। ६ 'चेद् दर्शना०' इति ङ–पाठः। ७ 'अवलोक्यतां ३४६तमं पृष्ठम्।

(मूलम्)

तत्र यदुक्तम्—"परेरूपम्" इत्याद्यत्र पररूपं व्यावृत्तं स्वलक्षणमसाधारणं तत् कथं स्वरूपेण स्वप्रतिभासेन संव्रियते प्रच्छाद्यते धिया ५ एकार्थप्रतिभासिन्या एकाकारया भावानाश्रित्य भेदिनः स्वलक्षणान्यधिकृत्योत्पन्नया? तथोत्पन्नायास्तत्प्रतिभासित्वेन तत्प्रकाशनात्। संवरणासिद्धेः पारम्पर्योत्पत्तेः अस्या अतदाकारतेति चेत्, न, न्यायानुपपत्तेः पारम्पर्येणापि कृष्णादिभ्यः सितादिबुद्ध्यसिद्धेः, तदन्यतरमात्रसत्तापत्त्या तदितराभावप्रसङ्गात्। न चाप्येषैकार्थ- १० प्रतिभासिन्येव, तथाऽननुभवात्, तत्समानतया प्रतीतेः, तदननुविद्धैकार्थाप्रतिभासनादिति। एवं च संवरणानुपपत्तेः तया धिया

(स्वो० व्या०)

तत्र यदुक्तं पूर्वपक्षे[4]—"पररूपम्" इत्यादि अत्रापि पररूपं व्यावृत्तं स्वलक्षणमसाधारणं वर्तते, तत् कथं स्वरूपेण स्वप्रतिभासेन संव्रियते १५ प्रच्छाद्यते धिया एकार्थप्रतिभासिन्या एकाकारया भावानाश्रित्य भेदिनः स्वलक्षणान्यधिकृत्योत्पन्नया? । अयमत्र पिण्डार्थः—परं रूपं कथं स्वरूपेण धिया प्रच्छाद्यते कथं च नेत्याह—तथोत्पन्नायाः पारम्पर्येण पररूपेभ्यः तत्प्रतिभासित्वेन—पररूपाकारत्वेन स्वलक्षणाकारत्वेन तत्प्रकाशनात्—पररूपप्रकाशनाद्धेतोः । किमित्याह—संवरणासिद्धेः पारम्पर्योत्पत्तेः कारणात् २० अस्याः—अधिकृतबुद्धेः अतदाकारतेति चेत् अपररूपाकारता, न स्वलक्षणाकारता इत्यर्थः । एतदाशङ्क्याह—न, न्यायानुपपत्तेः । एनमेवाह[5]—पारम्पर्येणापि कृष्णादिभ्यः सकाशात् सितादिबुद्ध्यसिद्धेः । असिद्धिश्च तदन्यतरमात्रसत्तापत्त्या—कृष्णाद्यन्यतरमात्रसत्तापत्त्या हेतुभूतया तदितराभावप्रसङ्गात्—कृष्णादीतरसिताद्यभावप्रसङ्गात् । न चाप्येषा—अधिकृता धीः एकार्थ- २५ प्रतिभासिन्येव । कुत इत्याह—तथा—एकार्थप्रतिभासित्वेन अननुभवात् कारणात् । अननुभवश्च तत्समानतया प्रतीतेः—भेदिभावसमानतया प्रतीतेः । इत्थं चैतदङ्गीकर्तव्यमित्याह—तदननुविद्धैकार्थाप्रतिभासनात्—भेदिभावाननुविद्धैकार्थाप्रतिभासनात् इति । एवं च संवरणानुपपत्तेः कारणात् किमित्याह—तया धिया संवृत्तनानात्वाः—स्थगितनानात्वाः किंविशिष्टया संवृत्त्या

---

१ ३४७तमे पृष्ठे । २ सन्तुल्यतां यदुक्तं व्याख्यायां ३४७तमे पृष्ठे । ३ 'तथा धिया' इति क—पाठः । ४ ३४७तमे पृष्ठे । ५ 'एतामेवाह' इति ङ—पाठः ।

(मूलम्)

**संवृत्तनानात्वाः**–स्थगितनानात्वाः [1]**किंविशिष्टया संवृत्त्या संव्रियते अनया स्वलक्षणमिति कृत्वा भेदिनः स्वयमसाधारणात्मनाऽभेदिन इव संसृष्टा इवाभान्ति भावा रूपेण केनचिद् विजातीयव्यावृत्त्युपलक्षितेन घटत्वादिना' इति न्यायतो वचनमात्रमेवेति। तथा** [2]**तस्या बुद्धेः अभिप्रायवशादेकाकाराध्यारोपवशात् सामान्यं सदिति प्रकीर्तितं बुद्ध्यारोपित एवाकारः सामान्यमुक्तं तदसत् परमार्थेन वस्तुस्थित्या यथा सङ्कल्पितं** [3]**समारोपितं तयेति। एतच्च वचनमात्रम्, परमार्थतस्तदसत्त्वासिद्धेः, बुद्ध्यारूढस्य वेद्यमानत्वात्, तत्प्रतिक्षेपेऽतिप्रसङ्गात् तन्निर्विषयत्वासिद्धेः, प्रमाणाभावात्, सर्वथाऽसतः प्रतिभासनायोगात्, वियत्केशादिबुद्धेरपि सदालम्बनत्वात् तथाविधतिमिररेण्वादिभावत उत्पत्तेः अन्धतमसेऽभावादिति वक्ष्यामः।** ५ १०

(स्वो० व्या०)

**संव्रियतेऽनया स्वलक्षणमिति कृत्वा भेदिनः स्वयमसाधारणात्मना अभेदिन** [4]**इव संसृष्टा इवाभान्ति भावा रूपेण केनचिद् विजातीयव्यावृत्त्युपलक्षितेन घटत्वादिनेति**–एतन्न्यायतो **वचनमात्रमेव। तथा** 'एतच्च वचनमात्रम्' इति योगः। किमित्याह–**तस्या बुद्धेरभिप्रायवशात् एकाकाराध्यारोपवशात् सामान्यं सदिति प्रकीर्तितं बुद्ध्यारोपित एवाकारः सामान्यमुक्तं तदसत् परमार्थेन वस्तुस्थित्या यथा सङ्कल्पितमारोपितं तयेति। एतच्च वचनमात्रम्।** कुत इत्याह–**परमार्थतः**–तत्त्वेन **तदसत्त्वासिद्धेः**–सामान्यासत्त्वासिद्धेः। असिद्धिश्च **बुद्ध्यारूढस्य वेद्यमानत्वात् तत्प्रतिक्षेपे**–बुद्ध्यारूढसामान्यप्रतिक्षेपे **अतिप्रसङ्गात्**–बुद्ध्यारूढस्वलक्षणाकारस्यापि प्रतिक्षेपापत्तेः। स विषयोऽयं स तु निर्विषय इत्याशङ्कापोहायाह–**तन्निर्विषयत्वासिद्धेः।** असिद्धिश्च **प्रमाणाभावात्** निर्विषयः [5]अयमिति नात्र प्रत्यक्षं नानुमानमिति परिभावनीयम्। **सर्वथाऽसतः**–पदार्थस्य **प्रतिभासनायोगात्** [6]वियत्केशादिबुद्ध्या व्यभिचार इति विभ्रमापोहायाह–**वियत्केशादिबुद्धेरपि,** 'आदि'शब्दाद् द्विचन्द्रादिबुद्धिग्रहः, **सदालम्बनत्वात्।** सदालम्बनत्वं च **तथाविधतिमिररेण्वादिभावत उत्पत्तेः** कारणात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–**अन्धतमसेऽभावात्** वियत्केशादिबुद्धेः १५ २० २५ ३०

१ इत आरभ्य 'घटत्वादिना' पर्यन्तकः पाठो व्याख्यायां ३४७तमे पृष्ठे दृश्यते। २ अतः परं 'तया' ऽवसानकः पाठो व्याख्यायां ३४७तमे पृष्ठे विद्यते। ३ 'आरोपितं' इति प्रतिभाति। ४ 'इवासंसृष्टा' इति ङ-पाठः। ५ 'मानमिति भाव०' इति ङ-पाठः। ६ 'विपक्षे केशादि०' इति क-पाठः।

( मूलम् )

एवमपि तुल्य एवानन्त्यदोष इति चेत्, न, समानपरिणामवद्भावेषु अन्यतरवाचकत्वनियोगेऽपि ध्वनेरदोषात्, भूयोऽपि ततस्तादृशि ५ प्रवृत्त्यविरोधात् एवम्भूता एतच्छब्दवाच्या इति नियोगसमये नियोगादिति। एवं व्यवहारानुपयोगादिति यत्किञ्चिदेतत्, इत्थमेव व्यवहारोपपत्तेः, अन्यथोक्तवदयोगात्। आह–वस्तुविषयत्वे शब्दानां सामानाधिकरण्यादिव्यवहाराभावः, विकल्पानुपपत्तेः। तथाहि–नीलोत्पलशब्दयोः एकं वा वस्तुवाच्यं स्यात्, अनेकं वा। १० आद्यपक्षे एकेनैव शब्देन निरंशस्य वस्तुनः सर्वात्मनाऽभिधानात्, द्वितीयस्य शब्दस्याप्रवृत्तिरभिधेयाभावात्, प्रवृत्तौ वा पर्यायतेति नानाफलत्वम्॥

---

( स्वो० व्या० )

इति वक्ष्यामः ऊर्द्ध्वम्। एवमपि तुल्य एवानन्त्यदोष इति चेत्। १५ यश्चोभयोर्दोषो न[1] तत्रैकश्चोद्यो भवतीत्यभिप्रायः। एतदाशङ्क्याह–न, समानपरिणामवद्भावेषु–घटादिषु अन्यतरस्मिन् भावे वाचकत्वनियोगेऽपि ध्वनेः। किमित्याह–अदोषात्। कथमदोष इत्याह–भूयोऽपि ततः–घटादिशब्दात् तादृशि–समानपरिणामवति भावे प्रवृत्त्यविरोधात्। अविरोधश्च एवम्भूता भावा एतच्छब्दवाच्याः–घटादिशब्दवाच्या इति–एवं नियोगसमये–सङ्केत- २० समये नियोगादिति। एवं व्यवहारानुपयोगादिति यत्किञ्चिदेतत्–पूर्वपक्षवचनम्। कुत इत्याह–इत्थमेव–तादृशि नियोगे व्यवहारोपपत्तेः, प्रक्रमात् शब्दार्थव्यवहारोपपत्तेः, अन्यथोक्तवद्योगाद् व्यवहारस्य। आह परः–वस्तुविषयत्वे शब्दानामभ्युपगम्यमाने। किमित्याह–सामानाधिकरण्यादिव्यवहाराभावः। 'आदि'शब्दाद् विशेषणविशेष्यभावपरिग्रहः। कथमभाव इत्याह– २५ विकल्पानुपपत्तेः। एनामेव दर्शयन्नाह–तथाहीत्यादि। तथाहीत्युपप्रदर्शने। नीलोत्पलशब्दयोरेकं वा वस्तुवाच्यं स्यादनेकं वा। किञ्चातः? उभयथाऽपि दोषः। आद्यपक्षे एकं वस्तु वाच्यमित्यस्मिन् एकेनैव शब्देन–नीलादिना निरंशस्य वस्तुनः सर्वात्मनाऽभिधानात् कारणाद् द्वितीयस्य शब्दस्य–उत्पलादेः अप्रवृत्तिरभिधेयाभावात्, प्रवृत्तौ वा तत्रैवाभिधेये ३० पर्यायताऽनयोः इति–एवं नानाफलत्वम्॥

---

१ 'न तत्रैकश्चोद्यो' इति ङ–पाठः।

( मूलम् )

**द्वितीयपक्षे त्वेकाधारताभावः घटपटादिशब्दवत्, नानाविषयत्वात्। अथ मतं नीलशब्दो नीलगुणविशिष्टं द्रव्यमाह, उत्पलशब्दोऽप्युत्पलत्वजातिविशिष्टं तदेव द्रव्यम्, अतो विशेषणयो- ५ र्भेदात् नानाफलः शब्दो विशेष्याभेदादेकाधार इति, एतदप्यसत्, युक्त्ययोगात्। तथाहि–नीलगुणेन विशिष्टं द्रव्यं नीलशब्देनाभिधीयमानं सर्वात्मनाऽभिधीयते, अनंशत्वात्, कोऽपरो द्रव्यस्योत्पलत्वादिजातिविशिष्ट आत्माऽनभिहितोऽस्ति य उत्पलशब्देनाभिधीयेत इति तथैव पर्यायता स्यात्। अथ विशेषणभेदाद् विशे- १० ष्यस्य द्रव्यस्य भेदस्तथाप्येकाधारता न स्यादिति वैयधिकरण्यमेव। एवं विशेषणविशेष्यभावानुपपत्तिरपि वाच्या, अन्यापोहपक्षे त्वयमदोषः, एकस्यैव धर्मिणो व्यवच्छेदद्वयोपगृहीतस्य विकल्पबुद्धौ[1] प्रतिभासनात्। एतदुक्तं भवति–नीलशब्दप्रयोगाद् बुद्धि-**

( स्वो० व्या० ) १५

**द्वितीयपक्षे** पुनः–अनेकं वस्तुवाच्यमित्यस्मिन्नेका**धारताभावः घटपटादिशब्दवन्नानाविषयत्वा**[2]दनयोरिति । **अथ मतं नीलशब्दो नीलगुणविशिष्टं द्रव्यमाह, उत्पलशब्दोऽप्युत्पलत्वजातिविशिष्टं तदेव द्रव्यमाह, अतो विशेषणयोः**–गुण-जात्यो**र्भेदात्** कारणात् **नानाफलः शब्दो विशेष्याभेदात्**–द्रव्याभेदा**देकाधार इति** न कश्चिद् दोषः । एतदाशङ्क्याह– २० **एतदपि असत्**–अशोभनम् । कुत इत्याह–**युक्त्ययोगात्**। एनमेवाह **तथाही**त्यादिना । तथाहीति पूर्ववन्नी**लगुणेन विशिष्टं द्रव्यं नीलशब्देनाभिधी**[3]**यमानं सर्वात्मनाऽभिधीयते, अनंशत्वाद्** द्रव्यस्य, ततः **कोऽपरो द्रव्यस्योत्पलत्वजातिविशिष्ट आत्माऽनभिहितः**–अनुक्तो**ऽस्ति य उत्पलशब्देनाभिधीयेत इति**–एवं **तथैव पर्यायता स्यात्। अथ विशेषण-** २५ **भेदात्**–गुणजातिभेदाद् **विशेष्यस्य द्रव्यस्य भेदः, तथापि** एवमपि **एकाधारता न स्याद्** द्रव्यभेदभावात् **इति**–एवं **वैयधिकरण्यमेव। एवं विशेषणविशेष्यभावानुपपत्तिरपि वाच्या।** विशेषस्त्वनयोरन्यत्र प्रदर्शित एव। न चान्यापोहप[4]क्षेऽप्ययं दोषः [। कुत] इत्याह–**अन्यापोहपक्षे त्वयमदोषः।** कुत इत्याह–**एकस्यैव धर्मिणो व्यवच्छेदद्वयोपगृहीतस्य**–अपोहद्वयोपगृहीतस्य ३० **विकल्पबुद्धौ प्रतिभासनात्** । एतदेव स्पष्टयन्नाह–**एतदुक्तं भवति**–

१ 'बुद्धेः' इति क–पाठः । २ 'त्वादिति' इति ङ–पाठः । ३ 'धीयते' इति क–पाठः । ४ 'पक्षे त्वयमदोषः कुत इत्याह एकस्यैव' इति ङ–पाठः ।

( मूलम् )

प्रतिभासी धर्मी अनीलव्यावृत्तरूप एव प्रतिभासते, अनुत्पलव्यवच्छेदस्तु न नीलशब्देनोपात्तो न प्रतिक्षिप्तः, उत्पलशब्दप्रयोगादपि ५ अनुत्पलव्यावृत्तरूप एव प्रतिभाति, अनीलव्यवच्छेदस्तूत्पलशब्देन नोपात्तो न त्यक्तः, नीलमुत्पलमिति शब्दद्वयप्रयोगे तूभय-[1]समारोपव्यावृत्तैकधर्मिप्रतिभासिनी विकल्पबुद्धिरुत्पद्यते, ततो नानाफलः शब्द एकाधारो भवतीति भवेद् बुद्ध्यनु[2]रोधेन सामानाधिकरण्यमिति । [3]ननु बुद्धिप्रतिभाससन्दर्शितो धर्मी वस्तुत एकोऽनेक-१० धर्मा, विकल्पनिर्मितस्य धर्मधर्मिभावस्यालीकत्वात्, यतश्च भेदान्तराप्रतिक्षेपेणोत्पलशब्दो वर्तते, ततोऽप्रतिक्षिप्तभेदान्तरापेक्षित्वाद् बुद्धेर्भवति विशेषणविशेष्यभावः, उत्पलं किं नीलमिति, एतदप्यसत्, विकल्पबुद्धिप्रतिभासस्यालम्बनाभावेन परमार्थतोऽ-

( स्वो० व्या० )

१५ नीलशब्दप्रयोगाद् बुद्धिप्रतिभासी धर्मी अनीलव्यावृत्तरूप एव प्रतिभासते । अनुत्पलव्यवच्छेदस्तु नीलशब्देन नोपात्तो न प्रतिक्षिप्तः, तथाप्रतीतेः । एवमुत्पलशब्दप्रयोगादप्यनुत्पलव्यावृत्तरूप एव प्रतिभाति धर्मी विकल्पबुद्धौ, अनीलव्यवच्छेदस्तूत्पलशब्देन नोपात्तो न त्यक्तः, तथाप्रतीतेः, नीलमुत्पलमिति—एवं शब्दद्वयप्रयोगे पुनरुभय-२० समारोपव्यावृत्तैकधर्मिप्रतिभासिनी विकल्पबुद्धिरुत्पद्यते । ततः एवं नानाफलः शब्दो नीलादिरूप एकाधारो भवतीति कृत्वा भवेद् बुद्ध्यनुरोधेन उक्तप्रतिभासयोगात् सामानाधिकरण्यमिति । न चेहाप्यपरविकल्पसम्भवो दोष इत्याह—ननु बुद्धिप्रतिभाससन्दर्शितो [4]धर्मी वस्तुतः—परमार्थेन एकोऽनेकधर्मा । कुत इत्याह—विकल्पनिर्मितस्य धर्मधर्मिभावस्य २५ अलीकत्वात् । यतश्चेत्यादि । यतश्च भेदान्तराप्रतिक्षेपेण—अनील-[5]व्यवच्छेदाप्रतिक्षेपेण उत्पलशब्दो वर्तते, ततोऽप्रतिक्षिप्तभेदान्तरापेक्षित्वात् कारणाद् बुद्धेर्भवति विशेषणविशेष्यभावः । कथमित्याह—उत्पलं किं नीलमिति व्यवच्छेद्यं विशेष्यं व्यवच्छेदकं विशेषणमिति कृत्वा । एवं पूर्वपक्षमाशङ्क्याह—एतदप्यसत्—अशोभनम् । कुत इत्याह—विकल्प-३० बुद्धिप्रतिभासस्यालम्बनाभावेन हेतुना परमार्थतोऽसत्त्वात्, अनै-

१ 'योगे उभय०' इति ग-पाठः । २ 'नुरोधित्वेन सामाना०' इति ग-पाठः । ३ 'न तु' इति क-पाठः । ४ 'धर्म्मा' इति ङ-पाठः । ५ 'व्यवच्छेदानुप्रति०' इति ङ-पाठः ।

( मूलम् )

**सत्त्वात् । यद्यनेकधर्मकमेकमालम्बनं भवति, ततस्तदनुसारेण नियमवती तथाविधा बुद्धिरुपजायते, तथा च नानाफलः[1] शब्द एकाधार प्रवर्तत इति भवति ॥** ५

**सामानाधिकरण्यं न च तदस्तीति कथं तद्भावः ?। न खलु मुख्यस्त्रीपुरुषद्वन्द्वसम्भव्यपत्यं वन्ध्यासुतदुहितृयुगलकाद् भवतीति कदाचिदनभिनिविष्टः प्रेक्षावानभिधत्ते तद्भावे च बुद्धाविव तत्राप्यविरोध एवास्य । बुद्धिः परिकल्पिता अर्थस्त्वपरिकल्पित इति चेत्, किमत्र क्षुण्णम्[2] ? स तथाविधो नास्तीति चेत्, बुद्धिः किमस्ति ?** १० **परिकल्पिताऽस्तीति चेत्, न तर्हि पारमार्थिकी । कः किमाहेति [3]चेत् कथं तथाभूतायां सामानाधिकरण्यादि ? । तदपि तथा-**

( स्वो० व्या० )

कान्ताभावालम्बनः प्रतिभास इति भावनीयम् । अत एवाह–**यद्यनेकधर्मकमेकमालम्बनं भवति, ततस्तदनुसारेण**–अधिकृतालम्बनानुसारेण **नियमवती** १५ **तथाविधा**–अनीलव्यावृत्त्यादिरूपा **बुद्धिरुपजायते । तथा च**–एवं च सति **नानाफलः शब्द एकाधार प्रवर्तत इति**–एवं **भवति ॥**

**सामानाधिकरण्यं न च तदस्ति** अनेकधर्मकमेकमि**ति**–एवं च **कथं तद्भावः**–सामानाधिकरण्यभावः ? । **न खलु**–नैव **मुख्यस्त्रीपुरुषद्वन्द्वात् सम्भवितुं** शीलमस्येति विग्रहः । [4]**अपत्यादि**–दिक्करिकादि **वन्ध्यासुतदुहितृ**- २० **युगलकाद् भवतीति**–एवं **कदाचिदनभिनिविष्टः** सन् **प्रेक्षावान्**–बुद्धिमान् **अभिधत्ते** अभिनिवेशस्त्वचिन्त्यः **तद्भावे च बुद्धौ**–सामानाधिकरण्यभावे च **बुद्धौ इव** इति निदर्शनम् । **तत्रापि**–अर्थे **अविरोध एवास्य**–सामानाधिकरण्यस्य । नाविरोध इत्याह–**बुद्धिः परिकल्पिता** वर्तते, **अर्थस्त्वपरिकल्पितः । इति चेत्,** एतदाशङ्क्याह–**किमत्र क्षुण्णम्[5] ?** २५ सुतरां तत्र भवतु । **स तथाविधः**–अपरिकल्पितो **नास्ति । इति चेत्,** एतदाशङ्क्याह–**बुद्धिः किमस्ति** तथाविधेति ? । **परिकल्पिताऽस्तीति चेत्** बुद्धिः । एतदाशङ्क्याह–**न तर्हि पारमार्थिकी**ति । **कः किमाहेति चेत्** नास्त्येव पारमार्थिकी । एतदाशङ्क्याह–**कथं तथाभूतायां**–अपारमार्थिक्यां तत्त्वतोऽसत्यां **सामानाधिकरण्यादि ? । तदपि**–सामानाधिकरण्यादि **तथा**- ३०

१ 'शब्द एवैकाधारो' इति क-पाठः । २ 'क्षूणं' इति ङ-पाठः । ३ 'चेत् नास्त्येव पारमार्थिकी एतदाशङ्क्याह–कथं तथाभूतायां अपारमार्थिक्यां तत्त्वतोऽसत्यां' इति क-पाठः । ४ 'अपत्यं करकादि(?)' इति क-पाठः । ५ 'क्षूणम्' इति क-पाठः ।

( मूलम् )

भूतमेवेति चेत्, बालक्रीडनकप्रायः शास्त्रारम्भः। तत्त्वत इत्थमेवेति चेत्, नोचितमबालस्य बालचेष्टितम्। फलासेरुचितमिति चेत्,
५ किमसद्व्यवहारात् फलम्?। तत्त्वप्रतिपत्तिरिति चेत्, साऽसद्व्यवहारादिति चित्रम्। एतद्याथात्म्यप्रतिपत्तिरेवेयमिति चेत्, कथं विकल्पात्मिकायास्तत्त्वम्?। कथं च न स्यादिति [1]चेत्, असदाकारानुवेधात्। स्वसंवित् तत्र तत्त्वमिति चेत्, न सा न विपक्षेऽपीति यत्किञ्चिदेतत्। साऽन्यादृशी चेत्, किंकृतमन्या-
१० दृशत्वम्? । प्रतिभासभेदकृतमिति चेत्, कथमसन् भेदको नाम?। तत्प्रतिभासतया सन्नेव इति चेत्, तच्चित्रतापत्तिः। न

( स्वो० व्या० )

भूतमेव—अपारमार्थिकमेव । इति चेत्, एतदाशङ्क्याह—बालक्रीडनकप्रायः शास्त्रारम्भः। तत्त्वत इत्थमेवेति चेत् बालक्रीडनकप्राय एव
१५ शास्त्रारम्भः । एतदाशङ्क्याह—नोचितमबालस्य बालचेष्टितम्, अबालश्च भवानिति। फलासेः कारणा[2]दुचितमिति अबालस्यापि बालचेष्टितमिति। एतदाशङ्क्याह—किमसद्व्यवहारात् फलं खरविषाणक[3]ल्पत्वात् तस्य?। तत्त्वप्रतिपत्तिरिति चेत् असद्व्यवहारात् फलम्। एतदाशङ्क्याह—सा—तत्त्वप्रतिपत्तिः असद्व्यवहारादिति चित्रम्—अद्भुतम्। कथमसंस्तत्त्वप्रतिपत्तिहेतुः?। एतद्-
२० याथात्म्यप्रतिपत्तिरेव—असन्नयं व्यवहार इति प्रतिपत्तिरेव। इयं—तत्त्वप्रतिपत्तिः। इति चेत्, एतदाशङ्क्याह—कथं विकल्पात्मिकायाः—प्रतिपत्तेः तत्त्वं—याथात्म्यम्?। कथं न स्यादिति चेत् तत्त्वम्। एतदाशङ्क्याह—असदाकारानुवेधात् न स्यात्। स्वसंवित् तत्र—प्रतिपत्तावसत्त्वाकारेणानुवेधेऽपि तत्त्वम्। इति चेत्, एतदाशङ्क्याह—न सा—स्वसंवित् न विपक्षेऽपि—वस्तु सत् सामाना-
२५ धिकरण्यादिबुद्धावपि इति—एवं यत्किञ्चिदेतत्। सा—विपक्षसम्बन्धिनी स्वसंविद् अन्यादृशी। इति चेत्, एतदाशङ्क्याह—किंकृतमन्यादृशत्वं तस्याः?। प्रतिभासभेदकृतम्—आकारभेदकृतम्। इति चेत्, एतदाशङ्क्याह—कथमसन् प्रतिभासो भेदको नाम?। तत्प्रतिभासतया—बुद्धिप्रतिभासतया सन्नेव इति चेत् प्रतिभासः। एतदाशङ्क्याह—तच्चित्रतापत्तिः, तस्याः—बुद्धेश्चित्रता-

[1] 'चेत् कथमसतभेद(?)असदा०' इति क-पाठः। [2] 'दुचितमेवेति' इति क-पाठः।
[3] 'कल्पत्वादस्य' इति ङ-पाठः।

(मूलम्)

**तत्त्वत इति चेत्, सन्नित्यपार्थक उपन्यासः। तच्चित्रतायामपि को दोष इति चेत्, न कश्चिदपि, न बाह्यस्यापि तद्भावाविरोध इत्येवं च अलमनेन तत्प्रतिक्षेपासदभिनिवेशेन बाह्य एवेदमस्तु तथालोक- ५ प्रतीतेः। तथा चाहुर्वृद्धाः–"भिन्ननिमित्तप्रयुक्तस्य शब्दस्यैकस्मिन् अर्थे वृत्तिः सामानाधिकरण्यम्।" न चैतदर्थशबलतामन्तरेण एकस्मिन् अनेकनिमित्ताभावात् एकत्वविरोधात् तत्स्वभावभेदमन्तरेण तत्कल्पनाऽसिद्धेः अतिप्रसङ्गात् तथा तच्चित्रैकस्वभावताऽभ्युपगमे [1]चाविप्रतिपत्तिरावयोः, तदेकानेकस्वभावत्वमन्तरेण तच्चित्रैकस्वभा- १० वताऽयोगात्। न चैकानेकस्वभावत्वे भावानां विरोधः, तथा-**

(स्वो० व्या०)

पत्तिः, **न तत्त्वतः** तच्चित्रता। **इति चेत्**, एतदाशङ्क्याह–**सन्नित्यपार्थक उपन्यासः**। तत्प्रतिभासतया सन्नेवेत्ययम्। **तच्चित्रतायामपि**–बुद्धिचित्रतायामपि **को दोषः?। इति चेत्**, एतदाशङ्क्याह–**न कश्चिदपि** तु (?न) **बाह्यस्यापि**– १५ नीलोत्पलादेः **तद्भावाविरोधः**–चित्रभावाविरोध **इत्येवं च** कृत्वा **अलमनेन तत्प्रतिक्षेपासदभिनिवेशेन**–बाह्यप्रतिक्षेपासदभिनिवेशेन। **बाह्य एवेदमस्तु** सामानाधिकरण्यादि। कुत इत्याह–**तथालोकप्रतीतेः। तथा चाहुः वृद्धाः**–शब्दार्थव्यवहारविदः **पाणिनीयाः**–**भिन्ननिमित्तप्रयुक्तस्य शब्दस्य** इति [2]जातावेकवचनम्, अन्यथा शब्दयोरिति द्रष्टव्यम्। **एकस्मिन्नर्थे वृत्तिः** २० **सामानाधिकरण्यमि**ति निदर्शनमभिहितमेव नीलोत्पलमिति। **न चैतत्**– सामानाधिकरण्य**मर्थशबलतामन्तरेण एकस्मिन्**–अशबलेऽर्थेऽ**नेकनिमित्ताभावात्**। अभावश्च **एकत्वविरोधात् तत्स्वभावभेदमन्तरेण**–अर्थस्वभावभेदमन्तरेण **तत्कल्पनाऽसिद्धेः**–अनेकनिमित्तकल्पनाऽसिद्धेः। असिद्धिश्च–**अतिप्रसङ्गात्** निमित्तान्तरकल्पनेन। **तथा तच्चित्रैकस्वभावताऽभ्युपगमे च** तस्य– २५ अर्थस्य चित्रैकस्वभावताऽभ्युपगमे च सति। किमित्याह–**अविप्रतिपत्तिरावयोः**। कुत इत्याह–**तदेकानेकस्वभावत्वमन्तरेण** तस्य–अर्थस्यैकानेकस्वभावत्वमन्तरेण **तच्चित्रैकस्वभावताऽयोगात्** तस्य–अर्थस्य चित्रैकस्वभावताऽयोगात्। **न चैकानेकस्वभावत्वे भावानां विरोधः**। कुत इत्याह–**तथाप्रतीतेः**–एकानेक-

१ 'वा विप्रति०' इति ग–पाठः। २ "उभयथा ह्याचार्येण सूत्राणि पठितानि। आकृतिं पदार्थं मत्वा 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (पा. सू. १-२-५८) इत्युच्यते; द्रव्यं पदार्थं मत्वा 'सरूपाणमेकशेष एकविभक्तौ' (पा. सू. १-२-६४) इत्येकशेष आरभ्यते। पातं. क. पृ० ५३" इति क–प्रतौ टिप्पणकम्।

( मूलम् )

**प्रतीतेः, सन्नीलमुत्पलमित्यादिसंवेदनात्। न च यदेव सत्त्वं तदेव नीलत्वादि, तद्गतावपि क्वचित् तदनवगतेः विप्रकृष्टादिभिस्तथा-**
५ **दर्शनात्। न चैकस्वभावादेव तत एष बुद्धिभेदः, अतिप्रसङ्गात् कासाञ्चिदहेतुकत्वापत्तेः। न च निरालम्बना एवैता इति, तद्भाव-भावित्वोपपत्तेः, अन्यथा तदयोगात्। न चाविकल्पिकैका साध्वी, एतास्त्वसाध्व्य इति, विहितोत्तरत्वात्, तत एव तत्प्रसूतेः अनन्तर-क्षणसुखादिसंवेदनादिजनकत्वाद्[1] वा। न च तद् येनैव स्वभावेन**
१० **अनन्तरक्षणं जनयति तेनैव सुखादि, तदभेदापत्तेः सर्वथा हेत्व-भेदात्। न चैका जनकत्वतः सामग्रीजनकत्वेन तद्भेदत एव तद्भेदः,**

---

( स्वो० व्या० )

स्वभावतया प्रतीतेः। प्रतीतिश्च **सन्नीलमुत्पलमित्यादिसंवेदनात्। न च यदेव सत्त्वं तदेव नीलत्वादि**। कुत इत्याह–**तद्गतावपि**–सत्त्वगतावपि
१५ **क्वचित्**–न सर्वत्र। किमित्याह–**तदनवगतेः**–नीलत्वाद्यनवगतेः। एतदेवाह–**विप्रकृष्टादिभिः,** प्रमातृभिरिति गम्यते। **तथादर्शनात्**–सत्त्वगतावपि नील-त्वाद्यनवगतिदर्शनात्। 'आदि'शब्दान्मन्दलोचनपरिग्रहः। **न चैकस्वभावा-देव ततः**–नीलोत्पलादेरेष **बुद्धिभेदः** सत्त्वनीलत्वादिलक्षणः। कुत इत्याह–**अतिप्रसङ्गात्**–बुद्ध्यन्तरस्यापि तत एव भावप्रसङ्गात्। तथा **कासाञ्चिद-**
२० **हेतुकत्वापत्तेः** बुद्धीनाम् **न च निरालम्बना एवैताः**–सत्त्वादिबुद्धय **इति**। कुत इत्याह–**तद्भावभावित्वोपपत्तेः**–अधिकृतार्थभावभावित्वोपपत्तेः; **अन्यथा** तदभावे **तदयोगात्**–सत्त्वादिबुद्ध्ययोगात्। **न चाविकल्पिकैका साध्वी** वर्तते, **एतास्तु**–सत्त्वादिबुद्धयः **असाध्व्य इति**। कुत इत्याह–**विहितोत्तर-त्वात्** अधः, तथा **तत एव**–अधिकृतवस्तुनो यद्वा विकल्पिकातो बुद्धेः **तत्-**
२५ **प्रसूतेः**। हेत्वन्तरमाह–**अनन्तरक्षणसुखादिसंवेदनादिजनकत्वाच्च** एका-नेकस्वभावत्वे भावानामविरोध इति। अनन्तरक्षणश्च सुखादिसंवेदनादि च एतज्जनक-त्वाद् वस्तुनः। **न च तद् येनैव स्वभावेन**–हेतुना **अनन्तरक्षणं जनयति** वस्तु **तेनैव सुखादि**। कुत इत्याह–**तदभेदापत्तेः**–अनन्तरक्षणसुखाद्य-भेदापत्तेः। आपत्तिश्च **सर्वथा हेत्वभेदात्। न चैका जनकत्वतः** कार-
३० णात् **सामग्रीजनकत्वेन** हेतुना **तद्भेदत एव**–सामग्रीभेदत एव **तद्भेदः**–

---

१ 'जनकत्वात्। न च' इति ग–पाठः।

( मूलम् )

**सामग्र्ययोगात्, समग्रेभ्यस्तद्भेदाभेदविकल्पासिद्धेः। न च तत्सिद्धावपि तद्भेदः समालोच्यमानो घटते, एकसमग्राणामन्याजनकत्वात् तत्रैव सामर्थ्याभ्युपगमात्। न च तेषामेवोपादानसहकारिभावतः ५ तद्भेदः, अभिधानमात्रत्वात्, उक्तवद् युक्त्यनुपपत्तेः। न च सर्वेषां सर्वजननस्वभावत्वतोऽनपराधः, तदेकस्वभावत्वविरोधात्, अविरोधेऽपि तत्तुल्यतापत्तेरिति तदेकानेकस्वभावत्वसिद्धिः। एवं च लोके तथादर्शनात् बहिर्मुखावभासिसंवेदनोपपत्तेः बाधाऽसम्भवात् तथाचित्रस्वभावतातिरेकेणोक्तवद् बुद्धावपि तदयोगाद् १०**

( स्वो० व्या० )

अनन्तरक्षणसुखादिभेदः। कुतो नेत्याह—**सामग्र्ययोगात्।** अयोगश्च **समग्रेभ्यः** सकाशादालोकादिभ्यः **तद्भेदाभेदविकल्पासिद्धेः**, तस्याः—सामग्र्याः भेदाभेदविकल्पाभ्यामसिद्धेः। प्रकटमेतत्। **न च तत्सिद्धावपि**—सामग्रीसिद्धावपि **तद्भेदः**—सामग्रीभेदः **समालोच्यमानो घटते**। कथं न घटत इत्याह— १५ **एकसमग्राणाम्**—अनन्तरक्षणसमग्राणा**मन्याजनकत्वात्**, सुखाद्यजनकत्वादित्यर्थः। अजनकत्वं च **तत्रैव**—एकस्मिन् **सामर्थ्याभ्युपगमात्** परैः। **न च तेषामेव**—समग्राणा**मुपादानसहकारिभावतः** कारणात् **तद्भेदः**—सामग्रीभेदः। कुत इत्याह—**अभिधानमात्रत्वा**दस्य **उक्तवद् युक्त्यनुपपत्तेः** स्वभावभेदापत्त्या। **न च सर्वेषां**—समग्राणां **सर्वजननस्वभावत्वतः** कारणात् **अनपराधः**—अदोषः अनन्तरोदितः। कुत इत्याह—**तदेकस्वभावत्वविरोधात्**—समग्राणामेकस्वभावत्वविरोधात् **अविरोधेऽपि**, तदेकस्वभावत्वेऽपीत्यर्थः, **तत्तुल्यतापत्तेः** प्रक्रमात् तेषां—कार्याणां तुल्यतापत्तेः, एकतैव एकैकस्य तावद्भ्य एकस्वभावेभ्यस्तथोपपत्तेरिति[1] भावनीय**मिति**—एवं **तदेकानेकस्वभावत्वसिद्धिः** तेषां—भावानामेकानेकस्वभावत्वसिद्धिः। **एवं चे**त्यादि। एवं च कृत्वा बाह्य एवार्थ २५ इति सामर्थ्यात्, कथञ्चिन्न तु सर्वथा, एकान्तैकस्यैकानेकाकारतायोगात् सामानाधिकरण्यसिद्धिरिति योगः। कुत इत्याह—**लोके तथादर्शनाद्**—बाह्ये नीलोत्पलादौ सामानाधिकरण्यदर्शनात्। दर्शनं च **बहिर्मुखावभासिसंवेदनोपपत्तेः**। तथाहि—नीलमुत्पलमिति बहिर्मुखावभासं संवेदनम्। न चास्य बाधेत्याह— **बाधाऽसम्भवात् तथाचित्रस्वभावताऽतिरेकेण**—एकानेकरूपचित्रस्वभाव- ३०

१ 'भेदतः' इति ङ-पाठः। २ 'स्तथोत्पत्तेरिति' इति ङ-पाठः।

( मूलम् )

बाह्य एव कथञ्चित् सामानाधिकरण्यसिद्धिः[1]। तत्रापि तथाविध-
शब्दस्य कथञ्चिद् भिन्ननिमित्तत्वोपपत्तावप्येकार्थवृत्तित्वस्याप्यवि-
५ रोधात्, तदेकानेकस्वभावत्वेन, उभयस्यापि निरुपचरितत्वादिति।
तथाहि-नीलत्वोत्पलत्वे विशेषपरिणामरूपे[2] न सत्त्वादिसमान-
परिणामाननुविद्धे, क्वचित् तथाऽननुभवात्, तदननुविद्धयोरसत्त्वा-
पत्तेः। न च सत्त्वादिमात्रतत्त्वे एव अन्यथाऽपि वेदनात्, तदन्यत्र
तदननुविद्धस्यापि तस्य भावात्। सत्त्वादिमात्रमेव तद् विशिष्ट-
१० मिति चेत्, न, सत्त्वादिमात्रतत्त्वे[3] तद्भाव एव कथञ्चित् तदति-

---

( स्वो० व्या० )

ताऽतिरेकेण उक्तवत्-यथोक्तं तथा बुद्धावपि विकल्पिकायां तदयोगात्-
सामानाधिकरण्यायोगात् कारणात् बाह्य एव कथञ्चित् सामानाधिकरण्य-
सिद्धिः। तत्रापीत्यादि। तत्रापि-बाह्ये तथाविधशब्दस्य-भिन्ननिमित्त-
१५ प्रयुक्तस्य नीलादेः कथञ्चित्-केनचित् प्रकारेण तद्धर्मभेदवाच्यत्वेन भिन्न-
निमित्तत्वोपपत्तावपि सत्यां एकार्थवृत्तित्वस्याप्यविरोधात् कथ-
ञ्चिदेव। कथमेतदेवमित्याह-तदेकानेकस्वभावत्वेन तस्य-नीलोत्पलादेर्वस्तुनः
एकानेकस्वभावत्वेन हेतुना इतरेतरव्याप्त्या तथा तदाधाराधेयस्वभावत्वेन उभय-
स्यापि, प्रक्रमाद् भिन्ननिमित्तैकार्थतावृत्तित्वोभयस्य निरुपचरितत्वादिति।
२० एतदेव भावयति तथाहीत्यादिना। तथाहीति पूर्ववत्। नीलत्वोत्पलत्वे
किंविशिष्टे इत्याह-विशेषपरिणामरूपे एते। किमित्याह-न सत्त्वादिसमान-
परिणामाननुविद्धे। कुत इत्याह-क्वचित् तथा-सत्त्वाद्यननुवेधेन। किमि-
त्याह-अननुभवान्नीलत्वोत्पलत्वयोः,तथा तदननुविद्धयोः-सत्त्वाद्यननुविद्धयोः
असत्त्वापत्तेः, स्वतोऽतद्रूपत्वादिति[4] भावना। न च सत्त्वादिमात्रतत्त्वे एव
२५ नीलत्वोत्पलत्वे[5]। कुत इत्याह-अन्यथाऽपि-तदनुविद्धनीलत्वादिनाऽपि वेदनादेः
तयोस्तथा तदन्यत्र-घटादौ तदननुविद्धस्यापि-नीलत्वोत्पलत्वाननुविद्धस्यापि
तस्य-सत्त्वादेर्भावात्। सत्त्वादिमात्रमेव तत्-नीलोत्पलं विशिष्टम्। इति
चेत्, एतदाशङ्क्याह-न, सत्त्वादिमात्रतत्त्वे तद्भाव एव-सत्त्वादिमात्रभाव एव

---

१ 'सिद्धेः' इति ग-पाठः। २ 'रूपो न' इति क-पाठः। ३ 'मात्रे तत्त्वे' इति क-पाठः।
४ 'सतोऽद्रूप' इति ङ-पाठः। ५ 'नीलोत्पलत्वे' इति ङ-पाठः।

(मूलम्)

रिक्तविशेषणाभावे[1] तद्वैशिष्ट्यासिद्धेः। न हि स्वच्छोदकबिन्दोः सर्वथा समानयोर्व्यक्तिभेदेऽपि तथाजातिभेदो नाम, न चोदकमात्रतत्त्ववादिनस्तदतिरिक्तदेशाद्यननुवेधे तत्तत्त्वाविशेषादितरोऽपि ५ न्याय्यः। अनादृत्य तु[2] सूक्ष्मेक्षिकामेतदुक्तमिति न सत्त्वादिमात्रमेव तत्, विशिष्टं पुनर्विशेषणभाव इति तदेकानेकस्वभावत्वसिद्धिः। तत्तथाऽभिधाने च तथा वस्तुशब्दस्वाभाव्यादनेकान्तनीत्या वस्तुतथात्वानुसारि सुस्थितं सामानाधिकरण्यम्। [3]नीलत्वोत्पल(त्व)विशेषपरिणामयोः कथञ्चित् सत्त्वादिसमानपरिणामाभेदात्, तस्य १०

---

(स्वो० व्या०)

कथञ्चित्–केनचित् प्रकारेण तदतिरिक्तविशेषणाभावे–सत्त्वादिमात्रातिरिक्तनीलत्वादिविशेषणाभावे तद्वैशिष्ट्यासिद्धेः–नीलोत्पलसत्त्वादिमात्रस्य वैशिष्ट्यासिद्धेः। एतद्भावनायैवाह–न हि स्वच्छोदकबिन्दोः सर्वथा समानयोः आकारादिना व्यक्तिभेदेऽपि सति तथा–उदकानुदकत्वेन जातिभेदो नाम, १५ न चोदकमात्रतत्त्ववादिनः–एकान्तवादिनः तदतिरिक्तदेशाद्यननुवेधे–उदकमात्रतत्त्वातिरिक्त[4]देशाद्यननुवेधे सति तत्तत्त्वाविशेषात्–उदकमात्रतत्त्वाविशेषात् इतरोऽपि–व्यक्तिभेदोऽपि न्याय्यः। अनादृत्य तु सूक्ष्मेक्षिकामेतदुक्तमिति–एवं न सत्त्वादिमात्रमेव तत्–नीलोत्पलम्, विशिष्टं पुनः सत्त्वादि विशेषणभावे[5], नीलोत्पलत्वभाव इत्यर्थः। इति–एवं तस्य, प्रक्रमात् २० नीलोत्पलादेः, एकानेकस्वभावत्वसिद्धिः इति निगमनम्। तत्तथाभिऽधाने च तस्य–नीलोत्पलादेरेकानेकस्वभावस्य तथाऽभिधाने च–तत्त्वाभिधाने च सति 'सुस्थितं सामानाधिकरण्यम्' इति योगः। कथमित्याह–तथा वस्तुशब्दस्वाभाव्याद् वाच्यवाचकत्वेन अनेकान्तनीत्या सत्त्वादिनीलत्वादिभेदाभेदतो वस्तुतथात्वानुसारि–तद्याथात्म्यभणनेन सुस्थितं सामानाधिकरण्यम्। २५ एतदेव विशेषेणोपदर्शयन्नाह–नीलत्वोत्पलत्वविशेषपरिणामयोः। किमित्याह–कथञ्चित्–केनचित् प्रकारेणान्योन्यानुवेधरूपाधाराधेयलक्षणेन सत्त्वादिसमानपरिणामाभेदात् तस्य च–अधिकृतसमानपरिणामाभेदस्य यथोक्त-

---

१ 'भावोव तद्वैशिष्ट्या' इति क–पाठश्चिन्त्यः। २ 'नु' इति क–पाठः। ३ 'नीलोत्पलत्वविशेषः' इति ग–पाठः। ४ 'मात्रत्वातिरिक्त०' इति ङ–पाठः। ५ 'भावनीलो०' इति ङ–पाठः।

(मूलम्)

च तथाऽभिधानात् इति। न चेह 'नीलोत्पलशब्दयोरेकं वा वस्तुवाच्यं स्यादनेकं वा'[1] इति विकल्पोक्तदोषसम्भवः, केवलोभयपक्षविविक्तस्य ५ जात्यन्तरात्मकस्यैकानेकस्य वाच्यत्वात्, तत्र च केवलोभयपक्षगतदोषानुपपत्तेः अतदात्मकत्वात्, तथापि तत्तदापादनेऽतिप्रसङ्गः, येन केनचिद् दुष्टेन विश्वस्य दुष्टतापत्तेरिति यत्किञ्चिदेतत्। 'नीलशब्दो नीलगुणविशिष्टं द्रव्यमाह' इत्यादि तु यदुक्तं[2] तदनभ्युपगमादेव न नः क्षतिमावहति। न खलु जैनैर्वैशेषिकैरिव द्रव्य-गुण-जातयो १० भिन्ना एवेष्यन्ते। किं तर्हि? कथञ्चित्। न च निरंशमेव द्रव्यम्, अपि त्वेकानेकस्वभावम्। तत्र चोक्तवद् दोषाभावः। तथाहि—नीलविशेषपरिणामात् कथञ्चिदभिन्नसत्त्वादिसमानपरिणामाभि-

(स्वो० व्या०)

परिकरस्य तथाऽभिधानात्—याथात्म्येनाभिधानादिति। न चेह—अनन्तरोदिते १५ तत्त्वे नीलोत्पलशब्दयोरेकं वा वस्तुवाच्यं स्यादनेकं वा इति विकल्पोक्तदोषसम्भवः। कुत इत्याह—केवलौ—इतरेतरनिरपेक्षौ, केवलौ च तौ उभयपक्षौ च, एकं वा वस्तुवाच्यं स्यादनेकं वेत्युभयपक्षौ आभ्यां विविक्तस्य जात्यन्तरात्मकस्यैकानेकस्य वाच्यत्वात्, तत्र च—जात्यन्तरे केवलोभयपक्षगतदोषानुपपत्तेः,[3] 'यत्किञ्चिदेतत्' इति योगः। अनुपपत्तिश्च अतदात्मक- २० त्वात्—केवलोभयपक्षानात्मकत्वात् जात्यन्तरस्य, तथापि—एवमप्यतदात्मकत्वेऽपि जात्यन्तरस्य तत्तदापादने तस्य—जात्यन्तरस्य तदापादने—केवलोभयपक्षदोषापादने। किमित्याह—अतिप्रसङ्गः। कथमित्याह—येन केनचिद् दुष्टेन विश्वस्य—जगतो दुष्टतापत्तेरिति—एवं यत्किञ्चिदेतत्—अनन्तरोदितम्। तथा नीलशब्दो नीलगुणविशिष्टं द्रव्यमाहेत्यादि तु यदुक्तं पूर्वपक्षे[4] तदनभ्युपगमादेव २५ कारणात् न नः—नास्माकं क्षतिमावहति—पीडां प्रापयति। एतदेवाह—न खलु जैनैर्वैशेषिकैरिव द्रव्य-गुण-जातयो भिन्ना एवेष्यन्ते। किं तर्हि? कथञ्चिद् भिन्ना इति। न च निरंशमेव द्रव्यं जैनैर्वैशेषिकैरिवेष्यते; अपि त्वेकानेकस्वभावम्। तत्र च—एवम्भूते द्रव्ये उक्तवत्—यथोक्तं तथोक्तदोषाभावः। तथाहि—नीलविशेषपरिणामात् सकाशात् [5]कथञ्चिदभिन्नश्चासौ सत्त्वादि-

१ दृश्यतां ३५२तमं पृष्ठम्। २ ३५३तमे पृष्ठे। ३ 'पक्षोक्तदोषा०' इति ङ-पाठः। ४ ३५३तमे पृष्ठे। ५ 'कथञ्चिद् भिन्न०' इति ङ-पाठः।

( मूलम् )

धानेऽपि नीलशब्देन तस्यैव कथञ्चिदुत्पलत्वादिविशेषपरिणामा-
भेदित्वस्य तेनैवानभिधानात्, तत्तत्स्वभावत्वात्, तदभिधानाय
उत्पलशब्दस्यापि कथञ्चित् तत्रैव प्रवृत्तिः, अन्यथा तदनभि- ५
धानात् । न चैवमनयोः पर्यायता, कथञ्चित् प्रवृत्तिनिमित्त-
भेदात्, तद्भावेऽपि तदभ्युपगमेऽतिप्रसङ्गात्[1] । तथोपाधिभेदाद्
विशेष्यभेदेऽपि च न वैयधिकरण्यमेव, सर्वथा भेदानभ्युपगमात्,
तत्तत्समानपरिणामत्वात्, तत्स्वभावतया तथाप्रतीतेः, अन्यथा

( स्वो० व्या० ) १०

समानपरिणामश्च तस्य अभिधानेऽपि सति नीलशब्देन । किमित्याह-
तस्यैव सत्त्वादिसमानपरिणामस्य कथञ्चिदुत्पलत्वादिविशेषपरिणामा-
भेदित्वस्य तेनैव-नीलशब्देन अनभिधानात् कारणात् । अनभिधानं च
तत्तत्स्वभावत्वात् तयोः-कथञ्चिदुत्पलत्वादिविशेषपरिणामाभेदित्वनीलशब्दयोः
तत्स्वभावत्वात्-अनभिधेयानभिधानस्वभावत्वात् तदभिधानाय-अधिकृताभेदि- १५
त्वाभिधानाय । किमित्याह-उत्पलशब्दस्यापि कथञ्चित्-केनचित् प्रकारेण
तत्रैव-अधिकृतसत्त्वादिसमानपरिणामे प्रवृत्तिः, अन्यथा-एवमनभ्युपगमे तद-
नभिधानात्-अधिकृतादिभेदित्वा(?)नभिधानात्[2] । न चैवमनयोः, प्रक्रमान्नीलो-
त्पलशब्दयोः पर्यायता । कुत इत्याह-कथञ्चित् प्रवृत्तिनिमित्तभेदात् तद्-
भावेऽपि-कथञ्चित् प्रवृत्तिनिमित्तभेदभावेऽपि तदभ्युपगमे-पर्यायताऽभ्युपगमे २०
अतिप्रसङ्गात्-घटपटादिशब्दानामपि पर्यायतापत्तेः । तथोपाधिभेदात् नीलो-
त्पलविशेषणभेदेन विशेष्यभेदेऽपि च-सत्त्वादिसमानपरिणामभेदेऽपि च किमि-
त्याह-न वैयधिकरण्यमेव नीलोत्पलाख्यजातिगुणयोः । कुत इत्याह-सर्वथा
भेदानभ्युपगमात् सत्त्वादिसमानपरिणामस्य । अनभ्युपगमश्च तत्तत्समान-
परिणामत्वात् तस्य-सत्त्वादिसमानपरिणामस्य तत्समानपरिणामत्वात्-नीलो-[3] २५
त्पलत्वसमानपरिणामत्वात् तत्स्वभावतया-नीलोत्पलत्वसमानपरिणामस्वभाव-
तया तथाप्रतीतेः, नीलमुत्पलमिति द्रव्यप्रतीतेः । इत्थं चैतदङ्गीकर्तव्यमित्याह-

( विवरणम् )

(१८) अधिकृततत्त्वा(?)नभिधानादिति । अधिकृतं यत् तत्त्वं-नीलत्वस्यो-
त्पलत्वेन सह अभेदित्वं तस्यानभिधानात् ॥ ३०

१ 'प्रसङ्गः' । 'तथो०' इति क-पाठः । २ 'कृताभेदित्वा०' इति ङ-पाठः । ३ 'नीलोत्पलयो-
रेकाधारत्वसमान०' इति ङ-पाठः ।

( मूलम् )

वस्त्वभावप्रसङ्गादिति कथञ्चित् तदेकाधारत्वमनवद्यम् ॥ यच्चोक्तम्[1]—'अन्यापोहपक्षे त्वयमदोषः, एकस्यैव धर्मिणो व्यवच्छेदद्वयोप-
५ गृहीतस्य विकल्पबुद्धौ प्रतिभासनात्' इत्यादि तदपि यत्किञ्चित्, 'विकल्पबुद्धिप्रतिभासस्यालम्बनाभावेन परमार्थतोऽसत्त्वात्' इत्यादिना विहितोत्तरत्वात्[2]। तथाहि—अदस्तत्रैदम्पर्यम्। यदि तथैकानेकस्वभावाभावत एव चित्रा बुद्धिरिष्यते, ततस्तत्रापि 'नीलशब्द-प्रयोगाद् बुद्धिप्रतिभासी धर्मो अनीलव्यावृत्तरूप एव प्रतिभासते,'[3]
१० इत्याद्युच्यमानं सविषयत्वेन घटते, तद्भावे च तद्बुद्धिवदर्थतथा-भावेऽप्यदोष एव, तच्चित्रताभावे त्वनुत्तरविज्ञान इव निबन्धनाभावेन तत्कल्पनाऽभाव एवेति। एवं बाह्य एव विशेषणविशेष्य-भावोपपत्तिरपि भावनीया। तथाहि—उत्पलं किं नीलमिति?। अत्राह—

( स्वो० व्या० )

१५ अन्यथा—एवमनभ्युपगमे वस्त्वभावप्रसङ्गादिति भावितमसकृदिति—एवं कथञ्चित् तदेकाधारत्वं—नीलोत्पलत्वयोरेकाधारत्वमनवद्यं—निर्दोषमुक्तवद् यथोदितद्रव्यसिद्धेरन्यथा तदयोगादिति ॥

यच्चोक्तं पूर्वपक्षे[6]—'अन्यापोहपक्षे त्वयमदोषः, एकस्यैव धर्मिणो व्यवच्छेदद्वयोपगृहीतस्य विकल्पबुद्धौ प्रतिभासनात्' इत्यादि, तदपि
२० यत्किञ्चित्—असारम्। कथमित्याह—'विकल्पबुद्धिप्रतिभासस्यालम्बनाभावेन परमार्थतोऽसत्त्वात्' इत्यादिना विहितोत्तरत्वादिति। इहैव निष्यन्दमाह तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। अदः—एतत् तत्र—उक्ते ऐदम्पर्यम्। यदि तथा—प्रतिभासरूपेण एकानेकस्वभावाभावत एव—परमार्थत एव चित्रा बुद्धिरिष्यते, ततः तत्रापि—बुद्धौ नीलशब्दप्रयोगाद् बुद्धि-
२५ प्रतिभासी धर्मो अनीलव्यावृत्तरूप एव प्रतिभासत इत्युच्यमानं सविषयत्वेन घटते, तद्भावे च—चित्रबुद्धिभावे च तद्बुद्धिवदिति निदर्शनं अर्थतथाभावेऽपि—अर्थचित्रतायामपि सत्याम्। किमित्याह—अदोष एव। तच्चित्रताभावे तु—बुद्धिचित्रताभावे पुनरनुत्तरविज्ञान इव तथागते निबन्धनाभावेन हेतुना तत्कल्पनाऽभाव एव—सामानाधिकरण्यकल्पनाऽभाव एव
३० इति। एवं बाह्य एव वस्तुनि विशेषणविशेष्यभावोपपत्तिरपि योजनीया,

१ ३५३तमे पृष्ठे। २ प्रेक्ष्यतां ३५४तमं पृष्ठं ३५५तमं च। ३ समीक्ष्यतां ३५३तमं पृष्ठं ३५४तमं च। ४ 'तद्वदर्थ' इति ग-पाठः। ५ 'भणितमस०' इति ङ-पाठः। ६ ३५३तमे पृष्ठे। ७ 'तत्राक्ते' (?) इति ङ-पाठः। ८ 'प्रयोगाद् बुद्धिरिष्यते ततः तत्रापि बुद्धौ नीलशब्दप्रयोगाद् बुद्धि०' इति क-पाठः। ९ 'इत्यपि—एवमप्यभ्यु(?)मानं' इति ङ-पाठः।

( मूलम् )

**उत्पलत्वस्य विशेषपरिणामत्वान्नीलत्वस्यापि तत्त्वादेव कथं विशेषणविशेष्यभाव इति ?। उच्यते–उत्पलत्वस्य कथञ्चित् सत्त्वादिसमानपरिणामापृथग्भावात् तत्सामर्थ्यतः कथञ्चिद् विशेष्यत्वोपपत्तेः तथा शब्दस्वभावत्वाच्च अकल्पितशब्दार्थनीत्या कथञ्चित् तदभिधानादित्यलं प्रसङ्गेन ॥** ५

**एवमेकान्ताभिलाप्यमनुपपन्नमेव, तद्भावे शब्दार्थयोस्तादात्म्यापत्तेः। आह–न ह्यभ्युपगमा एव बाधायै भवन्ति, शब्दार्थयोर्हि तादात्म्यमिष्यत एव, तत एव तत्प्रतीतेः, वृक्षत्वशिंशपात्ववत्, वृक्षत्वप्रतिपत्तिनान्तरीयका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यम्। एवं शब्दप्रतिपत्तिनान्तरीयकैव अर्थप्रतिपत्तिरित्यनयोरपीदं** १०

( स्वो० व्या० )

चित्रनिबन्धनत्वादस्य। **तथाहि–उत्पलं किं नीलमिति ?। अत्राह** परः–**उत्पलत्वस्य विशेषपरिणामत्वान्नीलत्वस्यापि तत्त्वादेव**–विशेषपरिणामत्वादेव **कथं विशेषणविशेष्यभाव इति ?।** एतदाशङ्क्याह–**उच्यते। उत्पलत्वस्य कथञ्चित्**–केनचित् प्रकारेण **सत्त्वादिसमानपरिणामापृथग्भावात्** कारणात् **तत्सामर्थ्यतः**–सत्त्वादिसमानपरिणामसामर्थ्यतः **कथञ्चिद् विशेष्यत्वोपपत्तेः। तथा शब्दस्वभावत्वाच्च** कारणात्। किमित्याह–**अकल्पितशब्दार्थनीत्या**–शब्दयुक्तिनीत्या **कथञ्चित् तदभिधानात्**–सत्त्वादिसमानपरिणामाभिधानाद् विशेषणविशेष्यभाव इत्यलं **प्रसङ्गेन**, दिक्प्रदर्शनमात्रफलत्वात् प्रारम्भस्य ॥ १५ २०

एवं तावदेकान्तानभिलाप्यं वस्तु न घटते इत्यभिधीय एकान्ताभिलाप्यतामस्य निराकुर्वन्नाह–**एवं**–यथाऽनभिलाप्यं सामान्येन तथा **एकान्ताभिलाप्यमप्यनुपपन्नमेव**। कुत इत्याह–**तद्भावे**–एकान्ताभिलाप्यभावे। किमित्याह–**शब्दार्थयोस्तादात्म्यापत्तेः। आह** परः–**न ह्यभ्युपगमा एव बाधायै भवन्ति।** एतदेव स्पष्टयति–**शब्दार्थयोः** यस्मात् **तादात्म्यमिष्यत एव।** कुत इत्याह–**तत एव**–शब्दात् सकाशात् **तत्प्रतीतेः**–अर्थप्रतीतेः। निदर्शनमाह–**वृक्षत्वशिंशपात्ववत्।** एतद्भावनायैवाह[3]–**वृक्षत्वप्रतिपत्तिनान्तरीयका शिंशपात्वप्रतिपत्तिरिति** कृत्वा **अनयोः**–वृक्षत्व-शिंशपात्वयोः। किमित्याह–**तादात्म्यम्। एवं शब्दप्रतिपत्तिनान्तरीयकैव** विकल्प- २५ ३०

१ 'तादात्म्यमिष्यते एव तत्प्रतीतेः वृक्षत्वमेव' इति क–पाठः। २ 'धानात् सर्वाभिधानात् सर्वादिसमानपरि०' इति ङ–पाठः। ३ 'एतद्भावनायाह' इति क–पाठः।

( मूलम् )

न्याय्यम्, शब्दानुविद्धश्चाखिलोऽर्थावबोध इत्यनुभवः प्राणभृताम्, तदभावे बोधानुपपत्तेरिति । आह च शब्दार्थतत्त्ववित्–

५ "वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥[2]
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन जायते ॥"[3]

इत्यादि । न चालोचनाज्ञानमपि शब्दाननुविद्धम्, तथाऽननुभवेऽपि १० सुप्तादिबोधवत् तत्सूक्ष्मभावोपपत्तेः, ऊर्ध्वं तत्स्थूरभावात् । न

( स्वो० व्या० )

ज्ञानेन अर्थप्रतिपत्तिरित्यनयोरपि–शब्दार्थयोरिदं–तादात्म्यं न्याय्यम् । एतत्स्पष्टनायैवाह–शब्दानुविद्धश्चाखिलोऽर्थावबोध इति–एवमनुभवः प्राणभृतां सर्वेषामेव, तदभावे–शब्दाभावे बोधानुपपत्तेरिति । आह १५ च शब्दार्थतत्त्ववित्–भर्तृहरिः–वाग्रूपता चेदुत्क्रामेत्–यायात् अवबोधस्य । किंविशिष्टा? शाश्वती–नित्या । किं स्यादित्याह–न प्रकाशः प्रकाशेत, न ज्ञानं तिष्ठेदित्यर्थः । न चालोचनाज्ञानमप्यनयाऽननुविद्धमित्याह–सा हि प्रत्यवमर्शिनी । न चासत्या एव प्रत्यवमर्शास्तथा न सोऽस्ति प्रत्ययः–अवबोधो लोके यः शब्दानुगमादृते–शब्दानुगमं विना अनुविद्धमिव ज्ञानं २० सर्वं शब्देन जायत इति प्रतिपत्तिगोचरतां नीयते । तत्त्ववस्तु तच्छब्दात्मकमेव इत्यादि अन्यदपि गृह्यते । इहैवाशङ्कान्तरापोहायाह–न चालोचनाज्ञानमपि–निर्विकल्पकत्वाभिमतं शब्दाननुविद्धम्, किन्त्वनुविद्धमेव । तथाऽननुभवेऽपि–स्पष्टतयाऽननुभवेऽपि सति सुप्तादिबोधवदिति निदर्शनम्, नायमपि स्पष्टतया अनुभूयत इति सिद्धमेतत् । तत्सूक्ष्मभावोपपत्तेः–२५ शब्दसूक्ष्मभावोपपत्तेरुपपत्तिश्च ऊर्ध्वं तत्स्थूरभावात् तस्य–शब्दस्य स्थूरभावात् तस्मात् सुप्तादिबोधवदिति निदर्शनेऽपि तत्स्थूरभावः सिद्ध एव । न चासौ–

( विवरणम् )

(२३) सुप्तादिबोधवदिति । सुप्तस्य सतो यो बोधोऽनात्मरूपः । 'आदि'शब्दादुन्मत्तादिबोधग्रहः । ततः सुप्तादिबोधे यो बोधो बोधप्रतिबद्ध एव व्यापारस्तद्वत् । ३० यथाहि सुप्तादिज्ञानेषु सूक्ष्मो बोधः, एवमालोचनज्ञानेऽपि सूक्ष्मः शब्द इति ॥

१ 'श्चाखिलार्थो' इति क–पाठः । २–३ अनुष्टुप् । ४ 'चालोचनज्ञान०' इति ङ–पाठः । ५ 'नयते' इति ङ–पाठः । ६ 'इहैव शङ्का०' इति ङ–पाठः । ७ 'भावादिति तस्य' इति ङ–पाठः । ८ 'सुप्तादिबोधाबोधवदिति' इति ङ–पाठः ।

(मूलम्)

चासावहेतुकः, सदा तद्भावादिप्रसङ्गादिति । न चैवमालोकाद्यनु-
विद्धोऽवबोध इति तदङ्गत्वे[1]ऽपि नार्थतादात्म्यमस्य । न च न
तदभावेऽपि स्पर्शनेनार्थग्रहः, तथाप्रतीतेः । न चैवं शब्दाननु- ५
[2]विद्धेन बोधेन तद्ग्रहः तत एव हेतोरिति शब्दार्थयोस्तादात्म्य-
सिद्धिः, नीलादेरिव तज्ज्ञाने [3]शब्दप्रतिभासनात् । कथं तर्हि
क्षुरिकाऽनलाऽचलादिशब्दोच्चारणे न वदनपाटन-दाह-पूरणादय इति?।
उच्यते–तद्बोधभावे पाटनादिबोधाभाववत् तदवस्थाभेदहेतुत्वात्
पाटनादीनाम्, बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाव- १०

(स्वो० व्या०)

[4]उभयत्र तत्स्थूरभावोऽहेतुकः । कुत इत्याह–सदा तद्भावादिप्रसङ्गात् तयोः
शब्द-बोधयोः स्थूरयोर्भावादिप्रसङ्गादिति । इहैवाक्षेपान्तरपरिहारायाह–न चैव-
मित्यादि । न चैवं–यथा शब्देन तथा आलोकादिभिरपि । 'आदि'शब्दा-
दिन्द्रियादिग्रहः । अनुविद्धः–व्याप्तोऽवबोध इति कृत्वा तदङ्गत्वेऽपि–बोधा- १५
ङ्गत्वेऽप्यालोकादेर्नार्थतादात्म्यमस्य आलोकादेरेव, शब्दस्य [5]त्वर्थतादात्म्यं तद्-
बोधानुवेधादिति भावः । इहैवोपचयमाह–न चेत्यादि । न च न तदभावेऽपि–
आलोकाद्यभावेऽपि [6]स्पर्शनेन्द्रियेण अर्थग्रहः, किन्तु तद्ग्रह एव । कुत इत्याह–
तथाप्रतीतेः–आलोकाद्यभावेऽपि स्पर्शनेनार्थग्रहप्रतीतेः । न चैवं–यथा लोका-
ननुविद्धेन तथा शब्दाननुविद्धेन केवलेन बोधेन तद्ग्रहः–अर्थग्रहः । कुत २०
इत्याह–तत एव हेतोः, तथाप्रतीतेरित्यर्थः । इति–एवं शब्दार्थयोस्तादात्म्य-
सिद्धिः । भावनासर्वस्वमाह–नीलादेरिव (तज्)ज्ञाने शब्दप्रतिभासनात्,
[7]तदात्मकत्वादित्यर्थः । कथं तर्हि शब्दार्थयोः तादात्म्ये क्षुरिका-ऽनला-ऽचलादि-
शब्दोच्चारणे, 'आदि'शब्दादुदकादिग्रहः, न वदन-पाटन-दाह-पूरणादय
इति ? । 'आदि'शब्दात् क्लेदनादिग्रहः । एतदाशङ्क्य पूर्वपक्षवाद्येवाह–उच्यते– २५
तद्बोधभावे–क्षुरिकादिबोधभावे पाटनादि[8]बोधाभाववदिति निदर्शनम् । तद-
वस्थाभेदहेतुत्वात् पाटनादीनां न पाटनादय इति विज्ञानवादिमते परिहारः ।
बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाववदिति निदर्शनम्,

---

१ 'ऽपि आलोकादि(?) नार्थतादात्म्य०' इति क–पाठः । २ 'विद्धेने बोधिन तद्ग्रहः' इति चिन्तनीयः क–पाठः । ३ 'शब्दस्य प्रति०' इति क–पाठः । ४ 'उभयत्र स्थूर०' इति ङ–पाठः । ५ 'त्वर्थे तादा०' इति ङ–पाठः । ६ 'स्पर्शनेन इन्द्रियार्थ०' इति क–पाठः । ७ 'तदात्मकत्वमित्यर्थः' इति ङ–पाठः । ८ 'बोधाभावादिति' इति क–पाठः ।

( मूलम् )

**वत् तदवस्थाभेदहेतुत्वमेव पाटनादीनां तद्भावे न कश्चिदक्षत-वदनः स्यादिति यथोक्तदोषाभावः ॥**

५ **एवं शब्दब्रह्मपरिवर्तमात्रं[1] जगत्। कथं तर्हि परं[2] ब्रह्म शब्दा-विषयो यदाह–"अतः परं वाचो निवर्तन्ते" इत्यादि ?। उच्यते–वाच्यवाचकभावप्रपञ्चाभावतः, न शब्दरूपाभावेन। न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः स्वसत्तां जहाति, अतो वाच्य-**

( स्वो० व्या० )

१० यत्नतः–यत्नेन क्षुरिकादेर्मुखावेशः आवेशः–प्रवेशस्तस्मिंस्तदभावः–पाटनाद्यभाव इति विग्रहः तद्वत् **तदवस्थाभेदहेतुत्वमेव**–क्षुरिकाद्यवस्थाभेदहेतुत्वमेव **पाटना-दीनां** न क्षुरिकादिमात्रहेतुत्वं **तद्भावे**–तत्सत्तामात्रनिबन्धनत्वे[3] पाटनादेः **न कश्चिदक्षतवदनः स्यादिति** भावनीयम्, **इति**–एवं **यथोक्तदोषाभावः** शब्दार्थयोस्तादात्म्येऽपि तद्विशेषनिबन्धनत्वात् पाटनादेरिति गर्भः ॥

१५ **एवं शब्दब्रह्मपरिवर्तमात्रं जगदिति** तत्त्वम् । **कथं तर्हि परं ब्रह्म शब्दाविषयो** गीयते, **यदाह** भाष्यकारः–"**अतः परं वाचो निव-र्तन्ते" इत्यादि ?** । प्रणवादूर्ध्वं वाग्निवृत्तिरुक्ता, न ब्रह्मनिवृत्तिः । एतदाशङ्क्याह–**उच्यते–वाच्यवाचकभावप्रपञ्चाभावतो** वाचो निवर्तन्ते, **न शब्द-रूपाभावेन** । एतद्भावनायैवाह–**न खल्वित्यादि** । **न खलु शब्द इन्द्रिया-**

२० **द्यभावे शब्द इत्यगृह्यमाणः** सन् **स्वसत्तां जहाति** । किं तर्हि ? शब्द

( विवरणम् )

(१०) **यत्नतः–यत्नेनेति** । अयमत्राशयः–यदा कश्चित् कुशलः पुमान् मन्त्रादिना स्तम्भितसामर्थ्यां क्षुरिकां विधाय मुखे प्रावेशयति, एवमेव मुखपार्श्वप्रदेशात् स्पृशन् प्रक्षिपति, तदा तस्य न भवत्येव वदनविदारणमिति ॥

२५ (१३) **न कश्चिदक्षतवदनः स्यादिति** । यदि हि सत्तामात्रेणैव क्षुरिका वदन-च्छेदनकर्त्री स्यात् तदाऽव्यापारिताऽपि सती सकलप्राणिमुखपाटनपट्वी भवेदिति ॥

(१७) **प्रणवादूर्ध्वं वाग्निवृत्तिरुक्तेति** । यदा हि योगी परमं ब्रह्म ध्यातुमारभते, तदा क्रमेण तद्ध्यानमापूरयन् तद्गोचरं मन्त्रादिशब्दं संहरन् तावत् संहरति यावत् ॐकारमात्रध्यानावस्थो जातः । ततोऽपि दृढतरप्रयत्नात् सर्ववायुनिरोध ॐकार-

३० मपि निरुणद्धि । एवं च यदि शब्दब्रह्मपरिवर्तमात्रं जगत् तदा सर्वशब्दनिरोधे ब्रह्मणोऽपि निरोधः स्यादिति ॥

१ 'परिविवर्तमात्रं' इति क–पाठः । २ 'परब्रह्म०' इति क–पाठः । ३ 'बन्धनत्वेन पाटनादेः' इति क–पाठः ।

(मूलम्)

वाचकभावातीतमिदमेव परं ब्रह्मेति न कश्चिद् दोषः। अत्रोच्यते-[1]'यत्किञ्चिदेतत्, अविचारितरमणीयत्वात्। तत्र यत् तावदुक्तम्[2]-'न ह्यभ्युपगमा एव बाधायै भवन्ति' तदसत्, असदभ्युपगमस्य बाधा- ५ योपलब्धेः चौराद्यभ्युपगमस्य विद्वन्मध्ये बाधाफलत्वात्, न हि दृष्टेऽ-नुपपन्नं[3] नाम। स्यादेतदसद्विषयोऽसाविति[4] युक्तं बाधाफलत्वमस्य; न चैवं शब्दार्थयोस्तादात्म्याभ्युपगम उक्तनीतेस्तन्न बाधाफलत्व-मस्य, न, शब्दार्थयोर्हि तादात्म्यमिष्यत एव इत्यस्यैवायोगात्, शब्दार्थानुपपत्तेः। तथाहि-शब्दार्थयोस्तादात्म्यमिति कोऽर्थः?। यदि १० तदात्मनोर्भावस्तादात्म्यम्, एवं तर्हि तौ द्वावपीष्टावेवापृथग्भावा-

(स्वो० व्या०)

एवासौ तत्त्वतो यदि नाम न गृह्यते अतो वाच्यवाचकभावातीतमिदमेव-शब्दब्रह्म परं ब्रह्मेति-एवं न कश्चिद् दोष इति पूर्वपक्षः। एतदाशङ्क्याह मूल-सिद्धान्तवादी-अत्रोच्यते-यत्किञ्चित्-असारमेतत्-अनन्तरोदितम्। कुत १५ इत्याह-अविचारितरमणीयत्वात्। एतदेवोपदर्शयन्नाह-तत्र यत् ताव-दुक्तमित्यादि। किमुक्तमित्याह-'न ह्यभ्युपगमा एव बाधायै भवन्ति'। तदसत्[5]-अशोभनम्। कुत इत्याह-असदभ्युपगमस्य लोके बाधायोप-लब्धेः। एतदेव भावयति-चौराद्यभ्युपगमस्य विद्वन्मध्ये-पण्डितसाधुमध्ये बाधाफलत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह-न हि दृष्टेऽनुपपन्नं नाम। २० दृश्यते च विद्वन्मध्ये चौराद्यभ्युपगमो बाधाफलः[6]। स्यादेतदसद्विषयोऽसौ-चौरा-द्यभ्युपगम इति युक्तं बाधाफलत्वमस्य। न चैवं शब्दार्थयोस्तादात्म्या-भ्युपगमः असद्विषयः, उक्तनीतेर्हेतोः, तत्-तस्मात् न बाधाफलत्वमस्य। एतदाशङ्क्याह-न-न। किं तर्हि? अस्त्येव बाधाफलत्वम्। कुत इत्याह-शब्दार्थ-योर्हि तादात्म्यमिष्यते एव[7] इत्यस्यैव-उक्तनीतिवाक्यस्य अयोगात्। २५ अयोगश्च शब्दार्थानुपपत्तेः। एनामेवाह-तथाहि-शब्दार्थयोस्तादात्म्य-मिति कोऽर्थः अस्य शब्दस्येति?। यदि तदात्मनोः-शब्दार्थात्मनोर्भावः-सत्ता तादात्म्यम्, एवं तर्हि तौ द्वावपि-शब्दार्थौ इष्टावेव-अभ्युपगतावेव

१ 'यत्किञ्चिदेतदिति विचारित०' इति क-पाठश्चिन्त्यः। २ ३६५तमे पृष्ठे। ३ 'पन्ने नाम' इति क-पाठः। ४ 'षयो वासाविति' इति ग-पाठः। ५ 'एतदसत्' इति ङ-पाठः। ६ 'फलम्' इति ङ-पाठः। ७ 'एवेत्यसौ चोवोक्त०' इति क-पाठः।

(मूलम्)

भिधानात् नानयोरैक्यमेवेति नैवं 'शब्दब्रह्मपरिवर्तमात्रं जगत्'[1] इति ऐदम्पर्यविरोधः, विजातीयपरिवर्तायोगात् इन्द्रियगम्येषु तथा-
५ ऽदर्शनात् । न हि मृदम्भोरूपेण[2] विपरिवर्तते, तद् वा तद्रूपेण, सकललोकसिद्धमेतत्, अस्यान्यथात्वाभ्युपगमे प्रतीतिबाधा द्रव्यवर्गणाविजातीयपरावर्तस्यापि[3] देशादिभेदनिबन्धनत्वात् निरवयवं च शब्दब्रह्म, सावयवत्वे चास्यापरनामा धर्मास्तिकायाद्यभ्युपगम एव

( स्वो० व्या० )

१० अपृथग्भावाभिधानात् कारणात् नानयोरैक्यमिति कृत्वा नैवं शब्दब्रह्मपरिवर्तमात्रं जगदिति । ततः किमित्याह—ऐदम्पर्यविरोधः । कुत इत्याह—विजातीयपरिवर्तायोगात्; शब्दादर्थपरिवर्तो विजातीय इत्ययोगः । अयोगश्च इन्द्रियगम्येषु मृदादिषु तथाऽदर्शनात् । तदेवाह—न हि मृदम्भोरूपेण विपरिवर्तते, तद् वा—अम्भो मृद्रूपेण । सकललोकसिद्धमेतत्-नात्र
१५ विगानं अस्य—अनन्तरोदितस्य अन्यथात्वाभ्युपगमे सति प्रतीतिबाधा । तथाप्रतीतेरिति[4] । द्रव्यवर्गणेत्यादि । द्रव्यवर्गणासु विजातीयपरावर्तः—औदारिकादेर्वैक्रियादिरूप इति विग्रहः तस्यापि देशादिभेदनिबन्धनत्वात् न तत्रैकस्यैव भेदकमन्तरेण परिवर्तभेदः निरवयवं च शब्दब्रह्म, तथाऽभ्युपगमात् सावयवत्वे चास्य—ब्रह्मणः किमित्याह—अपरनामा—सञ्ज्ञान्तरविशिष्टो
२० धर्मास्तिकायाद्यभ्युपगम एव भेद्यभेदकभावोपपत्त्या विजातीयपरावर्तोपपत्तेः,

( विवरणम् )

(२०) धर्मास्तिकायाद्यभ्युपगम एवेति । यदि हि सावयवं ब्रह्माभ्युपगम्यते ब्रह्मवादिभिस्तदाऽसदभ्युपेतमेव पञ्चास्तिकाय[ज]मयं[5] जगदङ्गीकृतं भवतीत्यर्थः ॥

(२०) भेद्यभेदकभावोपपत्त्या विजातीयपरावर्तोपपत्तेरिति । तद् यथा—
२५ औदारिकादिवर्गणाप्रतिबद्धाः पुद्गला भेदकाश्च जीवधर्मास्तिकायादयः तेषां भावस्तथा तस्योपपत्तिः—घटना तया हेतुभूतया विजातीयपरावर्तस्य—औदारिकादिवर्गणानां वैक्रियादिवर्गणात्वेन परिणतिलक्षणस्योपपत्तेः—घटनात् । अयमत्र भावः—यदा हि सावयवं ब्रह्माभ्युपगम्यते ब्रह्मवादिभिस्तदा केचित् तदवयवा भेद्याः केचिच्च भेदका इति घटत एव विजातीयपरावर्तः; परमेवं सति जैनाभ्युपगम एव समाश्रितो
३० भवति, धर्मास्तिकायाद्यवयवयुक्तत्वात् तन्मते त्रिलोकस्येति ॥

१ दृश्यतां ३६८तमं पृष्ठम् । २ 'मदाभारूपेण विपरि०' इति क–पाठश्चिन्त्यः । ३ 'परिवर्तस्यापि' इति क–पाठः । ४ 'तथैव प्रतीते०' इति ङ–पाठः । ५ 'कायं जगद०' इति क–पाठः ।

( मूलम् )

**इति न काचिन्नो बाधा ॥**

**अथ तदात्मनो भावस्तादात्म्यमित्यत्र वक्तव्यम्—कस्यायमात्मा यदात्मनो भाव इत्यभिधीयते ? । यदि शब्दस्य, तद्व्यतिरेकेण** ५ **अर्थाभावात्, सर्वस्य शब्दमात्रत्वात्, शब्दार्थयोस्तादात्म्यमिति न न्यायसङ्गतम्। न हि देवदत्त-वन्ध्यासुतयोस्तादात्म्यमित्यभिदधति विद्वांसः । न च तदुपलब्धौ तद्भेदेन तत्प्रतीतिः, चिन्ता वा तद्भेदादिगोचरा, अस्ति च शब्दोपलब्धौ तद्भेदेनैतदुभयमर्थे। न चैतत् तद्भेदगोचरमेव, तद्भेदस्यातत्प्रतिभाससंवेदनेनावेदनात्। न हि चन्दन-** १० **शकलं कुङ्कुममिति वेद्यते, वेद्यते च शब्दाद् भिन्नप्रतिभासितया रूपादिघटादिः। बधिरोऽपि वाहीकः पश्यति पनसमिति सुप्रतीतम्।**

---

( स्वो० व्या० )

**इति**—एवं **न काचिन्नो बाधा,** अस्मदभ्युपगमस्याप्येवंरूपत्वात् । एवमेकं पक्ष-मधिकृत्य दूषणमुक्तम् ॥ १५

इदानीं पक्षान्तरमधिकृत्याह—**अथ तदात्मनो भावस्तादात्म्यमिति** एक-वचनं समाश्रीयते । **अत्र वक्तव्यम्—कस्य**—शब्दादे**रयमात्मा यदात्मनो भाव इत्यभिधीयते** तादात्म्यमिति ? । **यदि शब्दस्य** आत्मेत्येतदधिकृत्याह—**तद्व्यतिरेकेण**—शब्दात्मव्यतिरेकेण **अर्थाभावात्**—रूपादिघटाद्यभावात् । अभावश्च **सर्वस्य शब्दमात्रत्वात्, शब्दार्थयोस्तादात्म्यमिति**—एवं **न** २० **न्यायसङ्गतम**र्थाभावेन । अमुमेवार्थं निदर्शनेनाह—**न हि देवदत्त-वन्ध्या-सुतयोः** सदसतोः **तादात्म्यमित्यभिदधति विद्वांसः। न च तदुप-लब्धौ**—देवदत्तोपलब्धौ **तद्भेदेन**—देवदत्तभेदेन **तत्प्रतीतिः**—वन्ध्यासुत-प्रतीतिः, **चिन्ता वा तद्भेदादिगोचरा**—देवदत्तवन्ध्यासुतभेदादिगोचरा । **अस्ति च शब्दोपलब्धौ** सत्यां **तद्भेदेन**—शब्दभेदेन **एतदुभयमर्थे** यदुत २५ तद्भेदेन प्रतीतिः चिन्ता वा तद्भेदादिगोचरा । **न चैतत्**—उभयं **तद्भेदगोचर-मेव**—शब्दभेदगोचरमेव । कुत इत्याह—**तद्भेदस्य**—शब्दभेदस्य **अतत्प्रति-भाससंवेदनेन**—अतदाकारविज्ञानेन **अवेदनात्**—अननुभवात् । एतदेव भाव-यति—**न हि चन्दनशकलं कुङ्कुममिति वेद्यते** तद्भेदित्वात्, **वेद्यते च शब्दाद् भिन्नप्रतिभासितया** कुङ्कुमकल्पो **रूपादिघटादि**रित्यर्थः । एतदेव ३० स्पष्टयति—**बधिरोऽपि वाहीकः पश्यति पनसमिति सुप्रतीतम्।** किञ्च

---

१ 'भासिसंवेदने०' इति ग-पाठः । २ 'मर्थि यदुत' इति ङ-पाठः ।

( मूलम् )

शब्दानुगतबोधसिद्धावपि न बोधाभिन्नदेशोऽर्थ इति कुतः शब्दार्थयोः तादात्म्यम्?। यच्चोक्तम्[1]—'तत एव तत्प्रतीतेर्वृक्षत्वशिंशपात्व-
५ वत्' इत्यादि तदप्ययुक्तम्, अत्रापि धर्मभेदनिबन्धनत्वादस्य। वृक्षत्व-शिंशपात्वे हि विशिष्टौ वस्तुधर्मौ कथञ्चिद् भेदाभेदवृत्ती; नान्यथाऽनयोस्तादात्म्यम्। तथाहि—यदि वृक्षत्वमेव शिंशपात्वमिति धवाद्यभावप्रसङ्गः, तत्र वृक्षत्वस्य[2] विद्यमानत्वात् तस्य च शिंशपात्वादिति। अथ विशिष्टं वृक्षत्वमेतत्, किमस्य विशेषण-
१० मिति चिन्त्यम्। ननु शिंशपात्वमेव, कथञ्चिदन्यत्, तर्हि तत् ततः,

( स्वो॰ व्या॰ )

शब्दानुगतबोधसिद्धावपि सत्यां किमित्याह—न बोधाभिन्नदेशोऽर्थः[3] अर्था(?)वाच्य इति—अस्माद्धेतोः कुतः शब्दार्थयोस्तादात्म्यम्? नैवेत्यर्थः। यच्चोक्तम्[4]—'तत एव तत्प्रतीतेः वृक्षत्वशिंशपात्ववत्' इत्यादि पूर्वपक्षे
१५ तदप्ययुक्तम्। कुत इत्याह—अत्रापि—निदर्शने धर्मभेदनिबन्धनत्वादस्य—तादात्म्यस्य। एतदेवाह—वृक्षत्व-शिंशपात्वे हि—यस्माद् विशिष्टौ वस्तुधर्मौ वर्तेते कथञ्चिद् भेदाभेदवृत्ती इतरेतरव्याप्त्या, नान्यथाऽनयोः—वृक्षत्व-शिंशपात्वयोः तादात्म्यम्, अनेकदोषप्रसङ्गात्। एतदेवाह तथाहीत्यादिना। तथाहीति पूर्ववत्। यदि वृक्षत्वमेव शिंशपात्वमिति—एवं तादात्म्य-
२० मिष्यते, ततः किमित्याह—धवाद्यभावप्रसङ्गः। कथमित्याह—तत्र—धवादौ वृक्षत्वस्य विद्यमानत्वात् तस्य च—वृक्षत्वस्य शिंशपात्वादिति। अथ विशिष्टं वृक्षत्वमेतत्—शिंशपात्वमित्येतदाशङ्क्याह—किमस्य—वृक्षत्वस्य विशेषणमिति चिन्त्यम्। ननु शिंशपात्वमेव विशेषणम्। एतदाशङ्क्याह—कथञ्चित्—केनचित् प्रकारेण तद्विषयत्वोपयोगिना अन्यत् तर्हि तत्—शिंशपात्वं

२५ ( विवरणम् )

(२४) तद्विषयत्वोपयोगिनेति। सः—विशिष्टः खट्वाकरणादिविषयः—प्रवृत्तिगोचरो यस्य स तथा तस्य भावस्तद्विषयत्वम्, तद्विषयत्वेनोपयुज्यत[5] इत्येवंशीलाः तद्विषयतोपयोगी प्रकारस्तेन। अन्यादृशो हि वृक्षत्वसामान्यस्योपयोगः छायाकारणानि[6], अन्यादृशश्च शिंशपात्वादेः खट्वाकरणादिरिति[7]॥

१ ३६५तमे पृष्ठे। २ 'त्वविद्य॰' इति क-पाठः। ३ 'देशाऽर्थवाच्य' इति ङ-पाठः। ४ ३६५तमे पृष्ठे। ५ 'तद्विषयत्वं' इत्यधिकः ख-पाठः। ६ 'छायाकरणादि अन्या॰' इति क-पाठः। ७ 'खट्वाकारणादि॰' इति ख-पाठः।

(मूलम्)

अन्यथा पूर्वोक्तदोषानतिवृत्तिः। अवृक्षत्वव्यावृत्तिमात्रनिबन्धनमेतदशिंशपाव्यावृत्त्या विशेष्यत इति चेत्, अस्त्वेतदेवमप्यस्मदभ्युपगमसिद्धिरेव, अशिंशपाव्यावृत्तिरहितस्यापि वृक्षत्वस्य ५ धवादिषु भावात्, शब्दान्तरवाच्ययोर्विशिष्टयोर्धर्मयोरेव तादात्म्यमित्यस्मदभ्युपगमसिद्धिः, परिकल्पितत्वं च व्यावृत्तीनां प्राग् निरस्तमेवेति न पुनः प्रतन्यते। एवं च 'वृक्षत्वप्रतिपत्तिनान्तरीयका शिंशपात्वप्रतिपत्तिरित्यनयोस्तादात्म्यम्'[1] इत्येतत् सुन्दरमेव, कथञ्चित् तदुपपत्तेः, अन्यथाऽयोगादित्युक्तप्रायम्। एवं शब्दप्रति- १०

(स्वो० व्या०)

ततः—वृक्षत्वात्। इत्थं चैतदङ्गीकर्तव्यमित्याह—अन्यथा—एवमनभ्युपगमे पूर्वोक्तदोषानतिवृत्तिः, धवाद्यभावप्रसङ्ग इत्यर्थः। अवृक्षत्वव्यावृत्तिमात्रनिबन्धनमेतत्—वृक्षत्वं अशिंशपाव्यावृत्त्या—धवादिव्यावृत्त्या विशेष्यत इति चेत्। अवृक्षव्यावृत्तमप्येवमेतदवृक्षव्यावृत्तिमात्रं न भवतीत्यादि दूषणमना- १५ दृत्यैतदाह—अस्त्वेतदित्यादि। अस्तु—भवत्वेतत्, किन्तु एवमप्यस्मदभ्युपगमसिद्धिरेव। कथमित्याह—अशिंशपाव्यावृत्तिरहितस्यापि वृक्षत्वस्य। किमित्याह—धवादिषु भावात्, एवं शब्दान्तरवाच्ययोर्विशिष्टयोर्धर्मयोरेव—वृक्षत्व-शिंशपात्वयोः तादात्म्यमित्यस्मदभ्युपगमसिद्धिः। परिकल्पितत्वं च व्यावृत्तीनां प्राग् निरस्तमेव अनेकश इति न पुनः २० प्रतन्यते। इहैव धवादौ शिंशपात्वरहितवृक्षत्वभावश्च परिकल्पनात् शत्रुरिति भावनीयम्। एवं च वृक्षत्वप्रतिपत्तिनान्तरीयका[2] शिंशपात्वप्रतिपत्तिरित्यनयोः—वृक्षत्व-शिंशपात्वयोः तादात्म्यमित्येतत् सुन्दरमेव। कुत इत्याह—कथञ्चित् तदुपपत्तेः—तादात्म्योपपत्तेः अन्यथाऽयोगादित्युक्तप्रायं—प्रायेणोक्तं '[3]नान्योऽन्यव्याप्तिः' इत्यादिना। दार्ष्टान्तिकमधिकृत्याह—एवं शब्दप्रति- २५

(विवरणम्)

(१५–१६) अवृक्षव्यावृत्तमप्येवमेतदवृक्षव्यावृत्तिमात्रं न भवतीत्यादि दूषणमनादृत्येति। यदि हि वृक्षत्वं [4]अवृक्षव्यावृत्तिमात्रमेवाभ्युपगम्यते तर्हि वन्ध्यासुतप्रख्यं व्यावृत्तिमात्रं तुच्छमेव तत् प्राप्नोति, न तु विशिष्टं वस्त्विति दूषणमनङ्गीकृत्येत्यर्थः॥ ३०

१ 'प्रेक्ष्यतां ३६५तमं पृष्ठम्। २ 'नान्तरीयिका' इति क-पाठः। ३ 'नान्यान्य०' इति ङ-पाठः। ४ 'अवृक्षत्वं अवृक्षव्यावृत्ति०' इति च-पाठः।

( मूलम् )

**पत्तिनान्तरीयकैवार्थप्रतिपत्तिरित्यनयोरपीदं न्याय्यमिति त्वसुन्दरम्, अर्थस्य बोधभिन्नदेशतोपपत्तेः, तथाऽनुभवसिद्धत्वात्**
५ **तदुपलब्धावपि तदर्थप्रवृत्तिसिद्धेः। भ्रान्तिमात्रमेतन्न तत्त्वत इति चेत् किमत्र प्रमाणम्?। तयोरेव तादात्म्यमिति चेत्, तदिदमसिद्धमसिद्धेन साध्यते। यत्किञ्चिदेतत्। देशभेदेन तद्भेद एव प्रतीयत इति चेत्, न, तस्यापि तद्भेदत्वेन भेदकत्वायोगात्। न ह्यविशिष्टमम्भस्तदन्यस्य भेदकं भवति, न च कथञ्चिद् भिन्नं विशेषणमन्त-**
१० **रेण, विशिष्टता स्वरूपवैशिष्ट्यस्यापि अन्यतो देशभेदादिना विना योगादिति सूक्ष्मबुद्धिविषय एव। एवं च 'शब्दानुविद्धश्चाखिलोऽ-**

( स्वो० व्या० )

**पत्तिनान्तरीयकैवार्थप्रतिपत्तिरित्यनयोः**–शब्दार्थयोरिदं–तादात्म्यं **न्याय्यमिति तु**–एतत् पुनर**सुन्दरम्**। कुत इत्याह–**अर्थस्य**–घटादे**र्बोधभिन्न-**
१५ **देशतोपपत्तेः, तथाऽनुभवसिद्धत्वात्**–बोधाद् भिन्नदेशतयाऽर्थस्यानुभवसिद्धत्वात्, [1]विभिन्नार्थग्रहणस्वभावसंवेदनवेदनादित्यर्थः। इहैवोपचयमाह–**तदुपलब्धावपि**–अर्थोपलब्धावपि सत्यां **तदर्थ**–अर्थार्थं **प्रवृत्तिसिद्धे**र्नैषार्थतद्बोधाभेदे च बोधे च [2]शब्द इति भावनीयम्। **भ्रान्तिमात्रमेत**दर्थस्य बोधभिन्नदेशतादि, **न तत्त्वतः। इति चेत्,** एतदाशङ्क्याह–**किमत्र**–भ्रान्तिमात्रमेतदित्येतस्मिन्
२० **प्रमाणम्?। तयोरेव**–शब्दार्थयोः **तादात्म्यं** बोधशब्दभावेन। **इति चेत्,** एतदाशङ्क्याह–**तदिदमसिद्धं** बोधार्थयोस्तादात्म्य**मसिद्धेन** शब्दार्थतादात्म्येन **साध्यत** इति कृत्वा **यत्किञ्चिदेतत्**–असारम्। **देशभेदेन तद्भेद एव,** प्रक्रमाच्छब्दात्मकार्थभेद एव **प्रतीयते। इति चेत्,** एतदाशङ्क्याह–**न, तस्यापि**–देशभेदस्यापि **तद्भेदत्वेन**–शब्दात्मकार्थभेदत्वेन **भेदकत्वायोगात्।** एतदेव
२५ दृष्टान्तेन भावयति। **न ह्यविशिष्टमम्भः** क्षारादिना **तदन्यस्य**–अम्भसो **भेदकं भवति,** उभयोस्तन्मात्रत्वात्, **न च कथञ्चित्**–केनचित् प्रकारेण तद्विशेषणोपयोगित्वलक्षणेन **भिन्नं विशेषणं**–देशादिक**मन्तरेण**–विना। **विशिष्टता**ऽम्भसो भेदकस्य स्वरूपमेव विशिष्टमिति पक्षव्युच्छेदायाह–**स्वरूपवैशिष्ट्यस्यापि, अन्यतः,** अन्यस्याम्भस इति प्रक्रमः। **देशभेदादिना**–भेदकेन
३० **विना योगादिति सूक्ष्मबुद्धिविषय एव** विचारस्तदभावे द्वयोरप्यम्भसोरेकत्वापत्तेः। **एवं च** सति **शब्दानुविद्धश्चाखिलो**ऽर्थावबोध **इत्यनुभवः**

---

[1] 'विच्छिन्नार्थ०' इति ङ–पाठः। [2] 'शब्दा इति' ङ–पाठः।

( मूलम् )

र्थावबोध इत्यनुभवः सर्वप्राणभृतां तदभावे बोधानुपपत्तेः'[1] इति। देवदत्तकान्तेतररूपचिन्तायामना[2]भोगवतो भोजनमात्रकथनमेतत्, सत्यप्यस्मिन्निष्टार्थासिद्धेः। तथाहि–यदि नाम बोधः शब्दानुविद्धः ५ ततः शब्दार्थयोस्तादात्म्यमिति काऽत्रोपपत्तिः?। अन्यच्च बोध-शब्दयोरपि तादात्म्यं वा स्यात् न वा। किञ्चातः?। तादात्म्ये शब्दस्यापि बोधमात्रतापत्तिरिति तन्मात्रवादसिद्धिः। बोधस्य वाऽचेतनत्वं शब्दात्मत्वेन, तथा चानुभवविरोधः, चेतनाचेतनत्वे च शब्दात्मनो नामकरणं जगद्वैचित्र्यस्य। एतेन यदुक्तम्[3]–'[4]आह च १० शब्दार्थवित्–वाग्रूपता चेदुत्क्रामेत्' इत्यादिकारिकाद्वयं तदपि प्रत्युक्तम्, तुल्ययोगक्षेमत्वादिति। आह च वादिमुख्यः–

"बोधात्मता चेच्छब्दस्य न स्यादन्यत्र तच्छ्रुतिः।
यद् बोद्धारं परित्यज्य न बोधोऽन्यत्र गच्छति॥"[5]

( स्वो० व्या० )　　१५

सर्वप्राणभृतां तदभावे बोधानुपपत्तेरिति, एतदिति योगः। एतत् किमित्याह–देवदत्तकान्तेतररूपचिन्तायां सत्यां अनाभोगवतो भोजनमात्रकथनं वर्तते, अनुपयोगीत्यर्थः। तथा चाह–सत्यप्यस्मिन्निष्टार्थासिद्धेः। इष्टं हि शब्दार्थयोस्तादात्म्यं तन्न शब्दानुविद्धबोधमात्रनिमित्तम्। एतदेवाह तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। यदि नाम बोधः शब्दानुविद्धस्ततः शब्दार्थ- २० योस्तादात्म्यमिति काऽत्रोपपत्तिः? न काचिदित्यर्थः। इहैवाभ्युच्चयमाह अन्यच्चेत्यादिना। अन्यच्च बोध-शब्दयोरपि तादात्म्यं वा स्यान्न वा। किञ्चात इत्याह–तादात्म्ये शब्दस्यापि बोधमात्रतापत्तिरिति कृत्वा तन्मात्रवादसिद्धिः–बोधमात्रवादसिद्धिः। बोधस्य वाऽचेतनत्वं शब्दात्मत्वेन हेतुना तथा चानुभवविरोधः पक्षद्वयेऽपि। चेतनाचेतनत्वे २५ च अभ्युपगम्यमाने कस्येत्याह–शब्दात्मनः–शब्दतत्त्वस्य किमित्याह–नामकरणम्। कस्य जगद्वैचित्र्यस्य यदुत शब्द इति। एतेन यदुक्तं पूर्वपक्षे–'आह च शब्दार्थवित्–वाग्रूपता चेदुत्क्रामेत्' इत्यादिकारिकाद्वयं प्राक्[6] तदपि प्रत्युक्तम्। कुत इत्याह–तुल्ययोगक्षेमत्वादनन्तरोदितेन इति। आह च वादिमुख्यः–समन्तभद्रः–बोधात्मता चेत्–यदि शब्दस्य ततः किमि- ३०

१ समीक्ष्यतां ३६६तमं पृष्ठम्। २ 'भोगवद्भोजन०' इति क–पाठः। ३ ३६६तमे पृष्ठे। ४ 'अत्र तु शब्दार्थतत्त्ववित्' इति ङ–पाठः। ५ अनुष्टुप्। ६ 'सिद्धेः' इति ङ–पाठः। ७ ३६६तमे पृष्ठे।

( मूलम् )

न च स्यात् प्रत्ययो लोके यः श्रोत्रा न प्रतीयते ।
शब्दाभेदेन सत्येवं सर्वः स्यात् परचित्तवित् ॥"[1]

५ इत्यादि । यच्चोक्तम्[2]—'न[3] चालोचनज्ञानमपि न शब्दाननुविद्धं तथाऽननुभवेऽपि सुप्तादिबोधवत् तत्सूक्ष्मभावोपपत्तेः, ऊर्द्धं तत्स्थूरभावात्' इत्यादि तदपि न नो बाधायै, तत्तदनुवेधेऽप्युक्तवत् शब्दार्थयोस्तादात्म्यायोगात् । न च सुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्ततद्भाव ऊर्द्धं स्थूरो भवति, एकान्तैकस्य तदन्यप्रति-
१० बन्धकाभावेऽवस्थाभेदानुपपत्तेः प्रतिबन्धकभावे च तत्कृतश्चैतन्य-

( स्वो० व्या० )

त्याह—न स्यादन्यत्र बोद्धुस्तच्छ्रुतिः । उपपत्तिमाह—यद् बोद्धारं परित्यज्य—विहाय न बोधोऽन्यत्र गच्छति, तथाऽननुभवात् । न च स्यात् प्रत्ययो लोके कश्चित् । किंविशिष्ट इत्याह—यः श्रोत्रा—प्राणिना न प्रतीयते । केन हेतु-
१५ नेत्याह—शब्दाभेदेन शब्द एव प्रत्यय इति कृत्वा । सत्येवम्—एवं सति सर्वः स्यात् श्रोता परचित्तवित् शब्दस्यैव चित्रत्वादित्यादि । यच्चोक्तं पूर्वपक्षे[4]—'न चालोचनाज्ञानमपि न शब्दाननुविद्धं तथाऽननुभवेऽपि सुप्तादिबोधवत् तत्सूक्ष्मभावोपपत्तेः ऊर्द्धं तत्स्थूरभावात्' इत्यादि, तदपि किमित्याह—न नः—नास्माकं बाधायै । कुत इत्याह—तत्तदनुवेधेऽपि तेन—शब्देन
२० तदनुवेधेऽपि—बोधानुवेधेऽपि उक्तवत्—यथोक्तं तथा शब्दार्थयोः तादात्म्यायोगात्, अन्यच्चेत्यादिना निदर्शितमेतत् । दूषणान्तरमधिकृत्याह—न चेत्यादि । न च सुप्तादिबोधः सूक्ष्मः सन्नन्यूनातिरिक्ततद्भावः—तावन्मात्र एव ऊर्द्धं स्थूरो भवति । कुत इत्याह—एकान्तैकस्य बोधरूपतया तदन्यप्रतिबन्धकाभावे कर्मणोऽभाव इत्यर्थः, किमित्याह—अवस्थाभेदानुपपत्तेः प्रतिबन्धक-

२५ ( विवरणम् )

(२४) कर्मणोऽभाव[5] इत्यर्थ इति । अयमभिप्रायः—एकान्तैकस्वभावो बोधोऽभ्युपगम्यते, कर्म च तस्य प्रतिबन्धकारि नास्ति, अत एव कथं तस्य भवतां मते सूक्ष्माद्या अवस्था घटामटन्ति ? ॥

१ अनुष्टुप् । २ ३६६तमे पृष्ठे । ३ 'तथा लोचन०' इति क-पाठः । ४ ३६६तमे पृष्ठे । ५ 'कर्मणो भाव' इति क-पाठः ।

( मूलम् )

**क्रियानिषेधस्तदभावे च तत्क्रियेति न सूक्ष्मस्य स्थूरभावः, उपचयकर्तृदलाभावादिति। एवं च सति "न चासावहेतुकः, सदा तद्भावादि-**

( स्वो० व्या० )

**भावे च सति** तत्कृतः–प्रतिबन्धककृतः **चैतन्यक्रियानिषेधस्तदभावे च**–प्रतिबन्धकाभावे च **तत्क्रिया**–चैतन्यक्रिया **इति**–एवं **न सूक्ष्मस्य स्थूरभावः**। कुत इत्याह–**उपचयकर्तृदलाभावादिति**। सूक्ष्माणूनां कः स्थूरभावः ? तद्विभिन्नादृष्टादिसापेक्ष इत्यदुष्ट एव। **एवं च सति 'न चासावहेतुकः,**

( विवरणम् )

( ६ ) **चैतन्यक्रियानिषेध** इति। चैतन्यव्यापारप्रतिषेधः। अयमर्थः–कर्म चेत् चैतन्यप्रतिस्खलनकारि समभ्युपेयते, तर्हि तच्चैतन्यव्यापारमेव निरुणद्धि, न तु चैतन्यम्। यदा च प्रतिबन्धकमपसरति, तदा चैतन्यक्रिया प्रवर्तते, न तु सर्वथा सूक्ष्मं सच्चैतन्यं स्थूरीभवतीति ॥

( ८ ) **उपचयकर्तृदलाभावादिति**। आत्मस्वतत्त्वभूतस्य हि [२]चैतन्यस्य नास्ति किञ्चिद् दलमुपचयकर्तृ येन तत्प्रवेशात् सूक्ष्मं सत् स्थूरं भवेदिति ॥

(८-९) **सूक्ष्माणूनां कः स्थूरभावः ? तद्विभिन्नादृष्टादिसापेक्ष इत्यदुष्ट एवेति**। ब्रह्मवादी प्राह–यद्युपचयकर्तृदलसद्भावे एतत् स्थूरत्वमुपजायत इत्यङ्गीक्रियते तर्हि [३]सूक्ष्माणूनां–प्रथमतः सूक्ष्माणूनामणूनामौदारिकवर्गणान्तर्गतानां कः–किंलक्षणः स्थूरभावः–औदारिकादिशरीरतया परिणामः आत्मव्य[४]तिरिक्तोपचयकर्तृदलाभावेन ? न कश्चिदित्यर्थः। अत्र वृत्तिकृदुत्तरमाह–**तद्विभिन्ने**त्यादि। तेभ्यः–अणुभ्यो विभिन्ना येऽदृष्टादयः–अदृष्ट-पुरुषकार-कालप्रभृतयः पदार्थास्तेषां सापेक्षः, तत्कृत इत्यर्थः। इति–अस्माद्धेतोरदुष्ट एव सूक्ष्माणूनां स्थूरभावः। इदमुक्तं भवति–स्याद्वादिनो मते सूक्ष्मावस्थायामप्यणवः शक्तिरूपतया स्थूलाः; न हि तस्य मते सर्वथाऽप्यसदुत्पद्यते। एवं च परमाणूनां स्थूलत्वमप्यात्मधर्म इति सिद्धं भवति। ततश्च परमाणुव्यतिरिक्तादृष्टादिकारणकलापसापेक्षं सद् यदि स्थूलत्वमाविर्भवति तदा किं दूषणम् ?। ब्रह्मवादिनस्तु एकस्वरूप एव बोधोऽदृष्टादयश्च न सम्भवन्त्येव, अतः कथं सूक्ष्मत्व-स्थूरत्वादयो विचित्रा [५]बोधावस्था युज्यन्त इति ? ॥

१ प्रेक्ष्यतां ३६६तमं पृष्ठं ३६७तमं च। २ 'चेतनस्य' इति क–पाठः। ३ 'सूक्ष्माणूनां कः स्थूरभावः तद्विभिन्नादृष्टादिसापेक्ष इत्यसूक्ष्माणूनामौदारिकादिवर्गणान्तर्गतानां०' इति क–पाठः। ४ 'व्यतिरिक्तापचय०' इति क–पाठः। ५ 'बोध्यस्याव०' इति च–पाठः।

(मूलम्)

प्रसङ्गात्' इत्यप्यनालोचिताभिधानम्, उपादानहेतोस्तद्वृद्धिकर्तुः असत्त्वात् तदितरस्य च तद्भेदत्वेन प्रकृतानुपयोगात् ॥

५ किञ्चालोचनाज्ञानगतः सूक्ष्मः शब्दः किं बोधात्मक उत तदतिरिक्तशब्दात्मकः ? । यदि बोधात्मकः, कथमुच्यते–'न चालोचनाज्ञानमपि न शब्दाननुविद्धम्', तज्ज्ञानमात्रत्वेन शब्दार्थानुपपत्तेः, आत्मनाऽऽत्माऽनुवेधाभिधानस्येत्थमयुक्तत्वात् ॥

(स्वो० व्या०)

१० सदा तद्भावादिप्रसङ्गात्' इत्यपि 'पूर्वपक्षवचनमनालोचिताभिधानम् । कुत इत्याह–उपादानहेतोर्बोधस्य तद्वृद्धिकर्तुः–बोधवृद्धिकर्तुरसत्त्वात् तदितरस्य च–अनुपादानहेतोः प्रतिबन्धकस्य कर्मणः तद्भेदत्वेन–उपादानभिन्नतया । किमित्याह–प्रकृतानुपयोगात्–स्थूरत्वानुपयोगादिति ॥

किञ्चेत्यादिनाऽभ्युच्चयमाह–किञ्च आलोचनाज्ञानगतः कोऽसौ सूक्ष्मः १५ शब्दो यः सिषाधयिषितः स किं बोधात्मक उत तदतिरिक्तशब्दात्मकः– बोधातिरिक्तशब्दात्मक इत्यर्थः ? । किञ्चातः ? । उभयथाऽपि दोष इत्याह–यदि बोधात्मकोऽसौ ततः किमित्याह–ततः कथमुच्यते–न चालोचनाज्ञानमपि न शब्दाननुविद्धम् ? कथमभणनमस्येत्याह–तज्ज्ञानमात्रत्वेन प्रक्रमात् तस्य–शब्दस्य बोधात्मकतया ज्ञानमात्रत्वेन हेतुना शब्दार्थानुपपत्तेः । अनुपपत्तिश्च २० आत्मनाऽऽत्मानुवेधाभिधानस्येत्थं–भिन्नवाचकापेक्षया अयुक्तत्वात् सदप्येतन्न चालोचनाज्ञानमपि न बोधानुविद्धमित्येव युक्तम् । न चैवं भणने फलमस्ति, विवादाभावादित्यभिप्रायः ॥

(विवरणम्)

(२१) सदप्येतन्न चालोचनाज्ञानमपि न बोधानुविद्धमित्येव युक्तमिति । २५ सदपि–विद्यमानमपि एतन्न चालोचनाज्ञानमपि न शब्दानुविद्धमित्यभिधानं न चालोचनाज्ञानमपि (न) बोधानुविद्धमित्यनेनैवोल्लेखेन युक्तं भणितुमिति । अयमत्र परमार्थः–यद्यालोचनाज्ञानगतः सूक्ष्मशब्दोऽबोधात्मक एव, तदा न युक्तमेवैतद्-

१ द्रष्टव्यं ३६६ तमं पृष्ठं ३७६तमं च । २ 'मपि शब्दानुविद्धं' इति ग–पाठः । ३ 'त्मानुबोधाभिधान०' इति क–पाठः । ४ ३६६–३६७तमपृष्ठगतम् । ५ 'शब्दानुविद्धम्' इति क–पाठः । ६ तदप्येतन्न' इति ङ–पाठः । ७ 'सूक्ष्मः शब्दो०' इति क–पाठः । ८ 'तदा न' इति पाठो नास्ति च–प्रतौ ।

( मूलम् )

**अथ तदतिरिक्तशब्दात्मकः, कथं तेन तदनुवेधः, अर्थेनास्य तादात्म्याभ्युपगमात्, तत्सूक्ष्मभावे[1] तत्सूक्ष्मभावोपपत्तेः । अलौकिकं चैतद् यदुत सूक्ष्माबलाद्यनुविद्धमालोचनाज्ञानमिति ।**5 **एवं च [2]"न चैवमालोकाद्यनुविद्धोऽवबोध इति तदङ्गत्वेऽपि नार्थतादात्म्यमस्य, न च न तदभावेऽपि स्पर्शनेन अर्थग्रहः, तथाप्रतीतेः, न चैवं शब्दाननुविद्धेन बोधेन तद्ग्रहस्तत एव हेतोरिति शब्दार्थयोस्तादात्म्यसिद्धिः, नीलादेरिव ज्ञाने शब्दप्रतिभासनात्' इत्याद्यप्युपन्यासमात्रफलमेव, अभीष्टफलविकलत्वात् । अत्र हि**10 **बोधार्थयोस्तादात्म्यप्रतिषेधो बोधमात्रेण चार्थाग्रहः, चाक्षुषस्य**

( स्वो० व्या० )

द्वितीयं विकल्पमधिकृत्याह–**अथ तदतिरिक्तशब्दात्मक** आलोचनाज्ञानगतः सूक्ष्मशब्दः[3] । किमित्याह–**कथं तेन**–शब्देन **तदनुवेधः**–आलोचनाज्ञानानुवेधः ? । कथं च न स्यादित्याह–**अर्थेन** सह **अस्य**–शब्दस्य **तादात्म्याभ्युप-**15 **गमात्** कारणात् **तत्सूक्ष्मभावे**–शब्दसूक्ष्मभावे सति । किमित्याह–**तत्सूक्ष्मभावोपपत्तेः**–अर्थसूक्ष्मभावोपपत्तेः । एवमपि को दोष इत्याह–**अलौकिकं चैतद् यदुत सूक्ष्माबलाद्यनुविद्धमालोचनाज्ञानमिति । एवं चे**त्यादि । एवं च सति **न चैवमालोकाद्यनुविद्धोऽवबोध इति तदङ्गत्वेऽपि नार्थतादात्म्यमस्ये**त्यादि पूर्वपक्षवचनं यावत् **नीलादेरिव ज्ञाने शब्दप्रति-**20 **भासनादि**त्याद्यपि किमित्याह–**उपन्यासमात्रफलमेव** । कुत इत्याह–**अभीष्टफलविकलत्वात्** । एतदेवोपदर्शयति **अत्र** हीत्यादिना । अत्र यस्माद् **बोधार्थयोस्तादात्म्यप्रतिषेधः** । तथा **बोधमात्रेण चार्थाग्रहः** । तथा

( विवरणम् )

भिधातुं यदुत न चालोचनाज्ञानमपि न शब्दानुविद्धमिति, बोधव्यतिरिक्तशब्दरूपस्य 25 कस्यचिदप्यभावेन शब्द इत्यभिधानप्रवृत्तेरभावात् । अथ कदाचिदसदभिनिवेशग्रहगृहीतैः सद्भिरित्थमप्यभिधीयते, तर्ह्येवं युक्तं यदुत न चालोचनाज्ञानमपि न बोधानुविद्धमिति । न चैवं भणने किञ्चित् फलमुपलभामहे, ज्ञानस्य बोधरूपतया अभ्युपगमादिति ॥

१ 'सूक्ष्मशब्दसूक्ष्मभावेऽर्थसूक्ष्मभावा०' इति क–पाठोऽनादरणीयः । २ दृश्यतां ३६७तमं पृष्ठम् । ३ 'सूक्ष्मः शब्दः' इति ङ–पाठः ।

( मूलम् )

चार्थस्य स्पर्शनेन ग्रह इत्यैदम्पर्यम् । एतच्च सर्वमपि सूक्ष्मेक्षिकया निरूप्यमाणं न भवदिष्टैदम्पर्याविरोधि । तथाहि–यदि शब्दा-
५ र्थयोस्तादात्म्यं तदाऽऽलोकस्याप्यर्थत्वेन[1] शब्दात्मकत्वात् 'न चैवमालोकाद्यनुविद्धोऽवबोधः'[2] इत्यनिरूपिताभिधानं शब्दस्यैव तत्त्वादिति असदेतद् यदुत नार्थतादात्म्यमस्य, शब्दतादात्म्यादेव तत्सिद्धेः इति भावनीयम्[3] । न च बोधमात्रेणार्थाग्रहः, तन्मात्रस्यावग्रहेण ग्रहणादिति निर्लोठितम् । न च चाक्षुषार्थस्य स्पर्शनेन ग्रहः, इन्द्रि-
१० यार्थप्रतिनियमानुपपत्तेः अन्धाद्यभावप्रसङ्गादिति । तथा नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्यनेनार्थस्य बोधाद् भेद उक्तस्ततस्तदात्मकः शब्दः कथं बोधाभिन्नो भवेदित्यलमसद्वादनिरूपणाभरेण ॥

---

( स्वो० व्या० )

चाक्षुषस्य चार्थस्य स्पर्शनेन ग्रह इत्यैदम्पर्यं वर्तते । एतच्च सर्वमपि
१५ सूक्ष्मेक्षिकया निरूप्यमाणं सत् किमित्याह–न भवदिष्टैदम्पर्याविरोधि, किन्तु विरोध्येव । यथा चैतदेवं तथा निदर्श्यते तथाहीत्यादिना । तथाहीति पूर्ववत् । यदि शब्दार्थयोस्तादात्म्यं तदाऽऽलोकस्याप्यर्थत्वेन हेतुना शब्दात्मकत्वात् कारणात् न चैवमालोकाद्यनुविद्धोऽवबोध इत्यनिरूपिताभिधानम् । कुत इत्याह–शब्दस्यैव तत्त्वात्–अर्थत्वात् इति–एवमसदे-
२० तत्–पूर्वोक्तं यदुत नार्थतादात्म्यमस्य–आलोकस्य । कथमसदित्याह–शब्दतादात्म्यादेव–कारणात् आलोकस्य तत्सिद्धेः–अर्थतादात्म्यसिद्धेरिति भावनीयम् । एतदुक्तं भवति–आलोकस्यार्थत्वाच्छब्देन तादात्म्यं तस्य चार्थेनेति आलोकस्याप्यर्थतादात्म्यापत्तिः । न चेत्यादि । न च बोधमात्रेणार्थाग्रहः, किन्तु ग्रह एव तन्मात्रस्य–अर्थमात्रस्य अवग्रहेण–बोधमात्रेण ग्रहणादिति
२५ निर्लोठितमेतत् । न चेत्यादि । न च चाक्षुषार्थस्य–रूपादेः स्पर्शनेन्द्रियेण ग्रहः । कुत इत्याह–इन्द्रियार्थप्रतिनियमानुपपत्तेः अन्यार्थस्यान्येन ग्रहणात् । एतदेवाह–अन्धाद्यभावप्रसङ्गादिति । इहैवोपपत्त्यन्तरमाह–तथा नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्यनेन वचसा अर्थस्य बोधाद् भेद उक्तः । यदि नामैवं ततः किमित्याह–ततस्तदात्मकः–अर्थात्मकः शब्दः

---

१ 'स्वार्थत्वेन' इति क–पाठः । २ 'विद्धोऽर्थावबोध' इति ग–पाठः । ३ 'इति भावनीयम्' इति पाठो न विद्यते ग-प्रतौ ।

( मूलम् )

यच्चोक्तम्[1]–'कथं तर्हि क्षुरिकाऽनलाऽचलादिशब्दोच्चारणे न[2] वदन-पाटन-दाह-पूरणादयः' इत्याशङ्क्य 'तद्बोधभावे पाटनादिबोधाभाववत् तदवस्थाभेदहेतुत्वात् पाटनादीनाम्' इत्यादि, तदप्ययुक्तम्, जैनमतापरिज्ञानात् । न खलु बौद्धविशेषयोगाचारमतमिव विज्ञानमात्रं तत्त्वमिति जैनं मतम्, अपि तु बाह्यार्थाभ्युपगमरूपमपि, ततश्चानभ्युपगतदोषाख्यानमात्रमेतदिति । आह–ननु 'बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाववत् तदवस्थाभेद-

( स्वो० व्या० )

कथं बोधाभिन्नो भवेत्? [3]नैव भवति, एकस्यैकतो भेदाभेदायोगादित्यलमसद्वादनिरूपणाभरेण ॥

यच्चोक्तं पूर्वपक्षे[4]–कथं तर्हि क्षुरिकेत्याद्याशङ्क्य तद्बोधभावे पाटनादिबोधाभाववत् तदवस्थाभेदहेतुत्वात् पाटनादीनामित्यादि पूर्वपक्ष एव । तत् किमित्याह–तदप्ययुक्तम् । कुत इत्याह–जैनमतापरिज्ञानात् । एतदेवाह न खल्वित्यादिना । नैव बौद्धविशेषयोगाचारमतमित्यत्र[5] सौत्रान्तिक-माध्यमिकबौद्धव्यवच्छेदेन विज्ञानवादिमतं गृह्यते तदिव विज्ञानमात्रं तत्त्वमिति जैनं मतम्, अपि तु बाह्यार्थाभ्युपगमरूपमपि जैनं मतम् । ततश्च–एवं च सति अनभ्युपगतदोषाख्यानमात्रमेतत्–परोदितं परिहारवचनमिति । आह–ननु तत्र परिहारवचने 'बाह्यार्थपक्षेऽपि यत्नतः क्षुरिकादिमुखावेशतदभाववत् तदवस्थाभेद-

( विवरणम् )

(११) एकस्यैकतो भेदाभेदायोगादिति । एकस्य शब्दस्य एकतो बोधात् सकाशात् भेदाभेदयोरयोगात् । इदमत्रैदम्पर्यम्–नीलादेरिव ज्ञाने शब्दप्रतिभासनादित्यनेन वचसा अर्थात्मकः शब्द इति प्रतिज्ञातं[6] भवति । ततश्च यथाऽर्थो ज्ञानाद् भिन्नः एवं शब्दोऽपि अर्थादभिन्नत्वादर्थस्वरूपवत्; तथा यतः शब्देन संश्लिष्टमूर्तिज्ञानमभ्युपगम्यते ततो ज्ञानादभेदः प्राप्नोति ध्वनेः । इति कथमेकमेव ज्ञानमाश्रित्यैकस्यैव ध्वनेर्भेदाभेदौ स्यातामिति ? ॥

१ ३६७तमे पृष्ठे । २ इतः परं वदनपाटनादेरारभ्य 'किमुक्तं भवति येनोच्चरितेन'(पृ.३८५)पर्यन्तः पाठो न विद्यते क-प्रतौ । एतत्स्थाने 'जते (?) अत्र पृष्ठिकानुमानं लक्षमस्ति तेन' इत्युल्लेखो वर्तते । ३ 'नैवं भवत्येक०' इति ङ-पाठः । ४ ३६७तमे पृष्ठे । ५ 'मतमिव सौत्रा०' इति ङ-पाठः । ६ 'ज्ञातं भवति' इति क-पाठः ।

( मूलम् )

हेतुत्वमेव पाटनादीनामिति यथोक्तदोषाभावः' इत्युक्तम्[1]। सत्यमुक्तमयुक्तं तूक्तम्, मत्पक्षे तदवस्थाभेदस्योपपत्तेः तद्व्यतिरिक्तभेदक-
५ भावात्। तथाहि–पुरुषप्रयत्नादयस्तद्भेदकाः। शब्दब्रह्ममात्रतत्त्ववादिनः पुनरस्य तद्व्यतिरिक्तभेदकाभावेन वैचित्र्यानुपपत्तेः, निरवयवैकस्वभावत्वाभ्युपगमात्, तत्तत्स्वभावत्वकल्पनाऽसिद्धेः, तत्स्वभावस्य तद्ब्रह्ममात्रत्वात्, तस्य च तथाविचित्रत्वात्, विचित्रत्वे च जगद्वैश्वरूपस्यैव तन्नामकरणात्। न च तद्व्यतिरिक्तभेदकभाव
१० इति तदवस्थाभेदानुपपत्तेः, यत्किञ्चिदेतत्, 'एवं शब्दब्रह्मपरिवर्तमात्रं जगत्'[2] इति प्रलापमात्रम्। यच्चोक्तम्[3]–'कथं तर्हि परं

( स्वो० व्या० )

हेतुत्वमेव पाटनादीनामिति यथोक्तदोषाभावः' इत्युक्तं प्राक्[4]। सत्यमुक्तमयुक्तं तूक्तम्। कुत एतदित्याह–मत्पक्षे इति मत्पक्ष एव
१५ तदवस्थाभेदस्य–क्षुरिकाद्यवस्थाभेदस्य उपपत्तेः। उपपत्तिश्च तद्व्यतिरिक्तभेदकभावात्–क्षुरिकादिव्यतिरिक्तभेदकभावात्। एतदेवाह तथाहीत्यादिना। तथाहि पुरुषप्रयत्नादयः, 'आदि'शब्दाददृष्टग्रहः तद्भेदकाः–क्षुरिकादिभेदकाः इत्येवं न्याय्यः क्षुरिकादीनामवस्थाभेदः शब्दब्रह्ममात्रतत्त्ववादिनः पुनरस्य–ब्रह्मणः [5]भेदकाभावेन हेतुना यत्किञ्चिदेतदिति सम्बन्धः। कथमिति
२० आह–वैचित्र्यानुपपत्तेः कारणाद् द्वयमपि चैतन्निरवयवैकस्वभावत्वाभ्युपगमात् शब्दब्रह्मणः तत्तत्स्वभावत्वकल्पनाऽसिद्धेः तस्य–शब्दब्रह्मणः तत्स्वभावत्वकल्पनाऽसिद्धेः–वैचित्र्यस्वभावत्वकल्पनाऽसिद्धेः। असिद्धिश्च तत्स्वभावस्य–शब्दब्रह्मस्वभावस्य तद्ब्रह्ममात्रत्वात्–शब्दब्रह्ममात्रत्वात् तस्य च–शब्दब्रह्मणः तथा–पुरुषप्रयत्नादिभावेन विचित्रत्वात्। विचित्रत्वे च सति
२५ किमित्याह–जगद्वैश्वरूपस्यैव–धर्मास्तिकायादिरूपस्य तन्नामकरणात्–शब्दब्रह्मनामकरणात्। किमित्याह–न तद्व्यतिरिक्तभेदकभाव इति–न शब्दब्रह्मव्यतिरिक्तभेदकभाव इति कृत्वा तदवस्थाभेदानुपपत्तेः, प्रक्रमात् क्षुरिकाद्यवस्थाभेदानुपपत्तेः। किमित्याह–यत्किञ्चिदेतत्–परिहारवचनमनन्तरोदितमिति। एवं च सति शब्दब्रह्मपरिवर्तमात्रं जगदिति प्रलापमात्रं पूर्वपक्षवच-
३० नम्[6]। यच्चोक्तम्[7]–'कथं तर्हि परं ब्रह्म शब्दाविषयो यदाह–अतः परं

१ ३६७तमे पृष्ठे ३६८तमे च। २ प्रेक्ष्यतां ३६८तमं पृष्ठम्। ३ ३६८तमे पृष्ठे। ४ ३६७तमे पृष्ठे ३६८तमे च। ५ 'तद्व्यतिरिक्तभेदका०' इति वर्तितव्यमिति भाति। ६ दृश्यतां ३६८तमं पृष्ठम्। ७ ३६८तमे पृष्ठे।

( मूलम् )

ब्रह्म शब्दाविषयो यदाह–अतः परं वाचो निवर्तन्ते' इत्याशङ्क्य 'वाच्यवाचकभावप्रपञ्चाभावतो न शब्दरूपाभावेन'[1] इत्यादि, तदप्ययुक्तमेव, वाच्यवाचकभावप्रपञ्चरहितस्य शब्दरूपस्यानुपपत्तेः, ५ स्ववचनविरोधात्। तथाहि–वाच्यवाचकभावप्रपञ्चरहितं च शब्दरूपं चेति व्याहतमेतत्। न हि सद्रूपरहितं सत्त्वं नाम। अन्यच्च "अतः परं वाचो निवर्तन्ते" इतीयमपि वागेव। इयं चेत् तत्र प्रवर्तते, कथं वाच्यवाचकभावप्रपञ्चाभावः ?। न चेत् प्रवर्तते इति, कथमपरवाचां निवृत्तिः ?। एवं च 'न खलु शब्द इन्द्रियाद्यभावे शब्द इत्य- १० गृह्यमाणः स्वसत्तां जहाति, अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्म' [2]इत्यपि व्युदस्तम्। ततश्च किमुच्यते–'न कश्चिद् दोषः'[3] इति? ननु दोष एव केवलः। तथाहि–यद्यपि शब्द इन्द्रियाद्यभावे शब्द इति न गृह्यते तथापि नासौ स्वसत्तां जहाति, तद्योग्यतोप-

( स्वो० व्या० ) १५

वाचो निवर्तन्ते' इति [4]आशङ्क्य 'वाच्यवाचकभावप्रपञ्चाभावतो न शब्दरूपाभावेन' इत्यादि तदप्ययुक्तमेव। कुत इत्याह–वाच्यवाचकभावप्रपञ्चरहितस्य शब्दरूपस्यानुपपत्तेः। अनुपपत्तिश्च स्ववचनविरोधात्। एतमेवाह तथाहीत्यादिना। तथाहीत्युपप्रदर्शने। वाच्यवाचकभावप्रपञ्चरहितं च शब्दरूपं चेति व्याहतमेतत्। न हि सद्रूपरहितं सत्त्वं २० नामेति निदर्शनम्। अन्यच्च "अतः परं वाचो निवर्तन्ते" इतीयमपि–एवम्भूता वागेव। यदि नामैवं ततः किमित्याह–इयं चेत् वाक् तत्र–ब्रह्मणि प्रवर्तते, कथं वाच्यवाचकभावप्रपञ्चाभावः ?। तत्र न चेत् प्रवर्तत इति इयं वागित्येतदाशङ्क्याह–कथमपरवाचां निवृत्तिः ? तत्र ब्रह्मणि प्रतिषेधाभावादिति भावः। एवं च 'न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः २५ स्वसत्तां जहाति, अतो वाच्यवाचकभावातीतमिदमेव परं ब्रह्म' इत्यपि पूर्वपक्षोदितं[5] व्युदस्तम्। ततश्च किमुच्यते–न कश्चिद् दोष इति पूर्वपक्ष एव। ननु दोष एव केवलः, उक्तनीतेः। उपचयमाह–तथाहीत्यादि। तथाहीति पूर्ववत्। यद्यपि शब्द इन्द्रियाद्यभावे सति शब्द इति–एवं न गृह्यते तथापि नासौ–शब्दः स्वसत्तां जहाति। कुत इत्याह–तद्योग्यतोपपत्तेः, ३०

१ प्रेक्ष्यतां ३६८तमं पृष्ठम्। २ समीक्ष्यतां ३६८तमं पृष्ठं ३६९तमं च। ३ दृश्यतां ३६९तमं पृष्ठम्। ४ 'आशङ्क्याह वाच्य०' इति ङ–पाठः। ५ ३६८तमे पृष्ठे ३६९तमे च प्रोक्तम्।

( मूलम् )

पत्तेः, तद्रहितस्य च स्वसत्तायोगात् । तथाहि—य इन्द्रियेण न गृह्यते तद्ग्रहणयोग्यताविकलश्च कथमसौ शब्दो नामेति चिन्त्यम् ॥

५ किञ्चेत्थङ्कल्पनानिबन्ध(न)भूता तत्र शक्तिः स्याद् वा न वा। यद्यस्त्येवं तर्हि इत्थङ्कल्पनागतशब्दवाच्याऽसाविति कथं वाच्यवाचकभावातीतार्थसाधनायोदाह्रियते ? । अथ नास्ति, कथं तच्छून्ये एव इत्थङ्कल्पनाशब्दः प्रवर्तते? । प्रवृत्तौ वा कथं शब्दार्थयोस्तादात्म्यं विनाऽर्थेनास्य प्रवृत्तिरित्यलं प्रसङ्गेन ॥

१० किञ्च कः पुनरयं शब्दो यस्यार्थेन तादात्म्यमिष्यते? किमत्रोच्यते

---

( स्वो० व्या० )

अक्रमादिन्द्रियग्रहणयोग्यतोपपत्तेः, तद्रहितस्य च—इन्द्रियग्रहणयोग्यतारहितस्य च स्वसत्तायोगात् । एतद्भावनायैवाह—तथाहीत्यादि । तथाहीति पूर्ववत् । यः—शब्द इन्द्रियेण न गृह्यते स्वग्राहकेण तद्ग्रहणयोग्यताविकलश्च—

१५ इन्द्रियग्रहणयोग्यताविकलश्च वर्तते कथमसौ शब्दो नामेति चिन्त्यम्, नैव शब्द इत्यर्थः ॥

दूषणान्तरमाह किञ्चेत्यादिना । किञ्च इत्थङ्कल्पनानिबन्धनभूता—न खलु शब्द इन्द्रियाद्यभावे शब्द इत्यगृह्यमाणः स्वसत्तां जहातीत्यादिकल्पनानिबन्धनभूता । तत्र—उदाहरणशब्दे शक्तिः सामर्थ्यलक्षणा स्याद् वा न वेति

२० विकल्पौ । किञ्चातः? । उभयथाऽपि दोष इत्याह—यद्यस्ति शक्तिरेवं तर्हीत्थङ्कल्पनागतशब्दवाच्याऽसौ—शक्तिरिति कृत्वा कथं वाच्यवाचकभावातीतार्थसाधनाय [1]परब्रह्मापेक्षया उदाह्रियते—उदाहरणत्वेनोपन्यस्यते? । अधिकृतशब्द इति प्रक्रमः । अथ नास्त्यधिकृता शक्तिः कथं तच्छून्ये एवेत्थङ्कल्पना,[2] निबन्धनशक्तिशून्य एव उदाहरणशब्द इति प्रक्रमः, इत्थम् एवं यथोक्तं [3]तथाकल्पना

२५ शब्दः प्रवर्तते ? प्रवृत्तौ वा सत्यां कल्पनाशब्दस्य [4]कथं तत्र शब्दार्थयोस्तादात्म्यम्? नैव कथमित्याह—विनाऽर्थेन—उदाहरणशब्दे शक्त्यभावेन अस्य कल्पनाशब्दस्य प्रवृत्तेरित्यलं प्रसङ्गेन इति [5]विरामोद्भासनमेतत् ॥

दूषणान्तरमभिधातुमाह—किञ्चेत्यादि । किञ्च कः पुनरयं शब्दो भवतोऽभिप्रेतः यस्यार्थेन सह तादात्म्य[6]मिष्यते? । अत्राह—किमत्रोच्यते—

---

१ 'परमब्रह्म०' इति ङ-पाठः । २ 'तमाकल्पना०' इति क-पाठः । ३ इयं पङ्क्तिश्चिन्त्या । ४ 'तत्र कथं इति ङ-पाठः । ५ 'विरागोद्भासनम्' इति क-पाठः । ६ 'मुच्यते' इति ङ-पाठः ।

(मूलम्)

**यतः सास्नादिमदर्थप्रतिपत्तिरिति। आह च भाष्यकारः-"येनोच्चरितेन सास्ना-लाङ्गूल-ककुद-खुर-विषाणिनां सम्प्रत्ययो भवति स शब्दः, वर्णेभ्यस्तत्सम्प्रत्ययानुपपत्तेः"। एकाकारो ह्ययं नानेकेभ्यो ५ वर्णेभ्यो भवितुमर्हति, अनेकेभ्योऽनेकप्रत्ययभावात्। अयं च स्फोटरूप एक एवेति युक्तोऽस्माद् यथोदितसम्प्रत्ययः। आह-**

(स्वो० व्या०)

प्रसिद्ध एष यतः सकाशात् **सास्नादिमदर्थप्रतिपत्तिः**-गवादिप्रतिपत्तिरिति। **आह च भाष्यकारः**-पतञ्जलिः-**येनोच्चरितेन सास्ना-लाङ्गूल-ककुद-** १० **खुर-विषाणिनां**-गवादीनां पदार्थानां सम्बन्धी **सम्प्रत्ययो भवति**-अविपरीतबोधो भवति **स शब्दः**। कुत एतदित्याह-**वर्णेभ्य** इत्यादि। वर्णेभ्यः-गकारौकारविसर्जनीयादिभ्यः **तत्सम्प्रत्ययानुपपत्तेः**-गौरित्यादिशब्दसम्प्रत्ययानुपपत्तेः। अनुपपत्तिमेवाह-**एकाकारो ह्ययं**-गौरित्यादिशब्दसम्प्रत्ययः। यदि नामैवं ततः किमित्याह-**नानेकेभ्यो वर्णेभ्यः**-गकारादिभ्यो **भवितु-** १५ **मर्हति**। कुत[2] इत्याह-**अनेकेभ्य** आलम्बनेभ्यः। किमित्याह-**अनेकप्रत्यय-भावात्**। अनेकप्रत्ययग्राह्यमेवानेकत्वम्। यदि पुनरेकप्रत्ययग्राह्यमपि स्यादेवं तर्ह्येकत्वमप्यनेकप्रत्ययग्राह्यमिति व्यवस्थाऽनुपपत्तिः। तदेवं यतोऽयमेकाकारः सम्प्रत्ययः स शब्द इत्यनन्तरोदितैदम्पर्यम्। एवमेकरूप[3]ः शब्द इति स्थिते सत्याह-**अयं चेत्यादि**। अयं च-शब्दः **स्फोटरूपः**-अर्थविकाशरूप **एक एवेति** कृत्वा २० **युक्तोऽस्मात्**-स्फोटरूपशब्दात् प्रत्यक्षादेव "अर्थापत्तिगम्यात्" इति च केचित्,

(विवरणम्)

(२०) **अर्थविकाशरूप एक एवेति कृत्वेति**। अयमत्राभिप्रायः-स्फुटति-[4]व्यक्तो भवत्यस्मादर्थ इति स्फोटः-अर्थविकाश एव। अयं च त्रिष्वपि कालेष्वविचलितरूप एक एव। यथाहि-**देवदत्त**शरीरे प्रस्वेदबिन्दवो निमज्जन्ति उन्मज्जन्ति च; **देवदत्त-** २५ शरीरं त्वेकाकारं सर्वास्ववस्थासु। एवं स्फोटेऽपि सर्वदा एकरू[5]पे गकारौकारादयो वर्णाः प्रस्वेदकल्पा एव, स तु तेभ्यो विलक्षणाकारोऽन्य एवेति। अयं च स्फोटः केषाञ्चिन्मते [6]श्रोतृप्रत्यक्षगम्यः, अन्येषां तु मतेऽर्थापत्त्यवसेयः। तथाहि-अस्ति कश्चित् स्फोटाख्यः पदार्थः, अर्थप्रकाशान्यथानुपपत्तेरिति॥

१ 'च्चारितेन सता सास्ना०' इति ङ-पाठः। २ 'कुत इत्याह' इति पाठो नास्ति क-प्रतौ। ३ 'रूपशब्द' इति क-पाठः। ४ 'व्यक्तीभवति' इति क-पाठः। ५ 'रूपेण गकारौ०' इति क-पाठः। ६ 'श्रोत्रप्रत्यक्ष०' इति क-पाठः।

(मूलम्)

कुतोऽयमुत्पद्यते ? । नन्वयं नित्यः सर्वगतो नोत्पद्यत एव । आह–किमित्यतो न सदा सर्वत्र सम्प्रत्ययः ? हन्ताभिव्यञ्जकाभावेन । ५ अभिव्यञ्जकाश्चास्य ध्वनयः, तेऽपि पुरुषप्रयत्नसापेक्षा इति न सदा सम्प्रत्ययः । आह–स किमेकध्वनिव्यङ्ग्योऽनेकध्वनिव्यङ्ग्योऽपि ?[1] । किञ्चातः ? । अनेकध्वनिव्यङ्ग्यत्वे सदेशता-ऽनभिव्यक्त्यादि ।

(स्वो० व्या०)

यथोदितसम्प्रत्ययः–सास्ना-लाङ्गूल-ककुद-खुर-विषाण्यर्थसम्प्रत्यय इति । आह १० परः–कुतोऽयमुत्पद्यते स्फोटः ? । अत्रोत्तरम्–नन्वयं नित्यः सर्वगतो नोत्पद्यत एव । आह–किमित्यतः–नित्यात् सर्वगतात् न सदा–सर्वकालं सर्वत्र–देशे सम्प्रत्ययः सामर्थ्यादेतदालम्बन एव ? । एतदाशङ्क्याह–हन्ताभिव्यञ्जकाभावेन अभिव्यक्तोऽयं सम्प्रत्ययहेतुः । अभिव्यञ्जकाश्चास्य–स्फोटस्य ध्वनयः–वायवीया विकाराः । ते च पुरुषप्रयत्नसापेक्षा ध्वनय १५ इति कृत्वा न सदा सम्प्रत्ययः–एतदालम्बनः । 'सदा'ग्रहणं सर्वत्रोपलक्षणम् । आह–सः–स्फोटः किमनेकध्वनिव्यङ्ग्य उतैकध्वनिव्यङ्ग्यः–उतैकध्वनिव्यङ्ग्योऽपि । किञ्चातः ? । उभयथाऽपि दोष इत्याह–अनेकध्वनिव्यङ्ग्यत्वेऽभ्युपगम्यमाने । किमित्याह–सदेशता-ऽनभिव्यक्त्यादि सदेशता एकैकेन ध्वनिना एकैकदेशाभिव्यक्तेः अनभिव्यक्तिश्च एकेनानभिव्यक्तौ तस्यानभिव्यञ्जकत्वात् २० तद्वदन्येषामपि ध्वनित्वादनभिव्यञ्जकत्वमिति कृत्वा । 'आदि'शब्दात् अनेकाभिव्यक्तिपरिग्रहः । तदेकैकस्याभिव्यञ्जकत्वात् तथा च धर्मिभेद इति यत्किञ्चिदेतत् ॥

(विवरणम्)

(२०-२१) अनेकाभिव्यक्तिपरिग्रह इति । अनेकेभ्यो ध्वनिभ्योऽभिव्यक्तिस्तस्याः परिग्रहः । ध्वनयश्च वायुविशेषा अत्र गृह्यन्ते । ततो यदा बहुध्वनिव्यङ्ग्यस्वभा- २५ वोऽभ्युपगम्यते स्फोटस्तदा एकेन ध्वनिना परिपूर्ण एव स्फोटोऽन्यथाऽभिव्यज्यतेऽन्येन चान्यस्वभावः । एवं बहवः स्फोटा एकस्मिन्नेव स्फोटे प्राप्ताः । अत्रैव हेतुमाह–(२१) तदेकैकस्याभिव्यञ्जकत्वादिति । तेषां–ध्वनीनां मध्यादेकैकस्य ध्वनेरभिव्यञ्जकत्वात् सर्वेषां ध्वनीनां स्फोटाभिव्यञ्जकत्वात् ॥

(२१) तथा च धर्मिभेद इतीति । तथा च–अनेकध्वनिव्यङ्ग्यत्वे पुनः स्फोटस्य ३० धर्मिभेदः स्फोटबहुत्वापत्तिलक्षणः । अनेकत्वं हि ध्वनीनां भिन्नस्वभावत्वे सति

1 अयं पाठश्चिन्त्यः, ३९३तमे पृष्ठेऽन्यथादर्शनात् ।

(मूलम्)

**एकध्वनिव्यङ्ग्यत्वे तु शेषवैयर्थ्यम्, एकाभिव्यक्तादेव, ततस्तत्सम्प्रत्ययसिद्धेः। यत्किञ्चिदेतत्, निरवयवत्वेन सदेशताऽयोगात्। एकध्वनिव्यङ्ग्यत्वेऽपि च सकृच्छ्रुतानुवाकवदनेकव्यक्तिग्रहणोपपत्तेः। ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्सम्प्रत्यय इति।** ५

(स्वो० व्या०)

द्वितीयं विकल्पमधिकृत्याह–**एकध्वनिव्यङ्ग्यत्वे तु** स्फोटस्याभ्युपगम्यमाने **शेषवैयर्थ्यम्**। कुत इत्याह–**एकाभिव्यक्तादेव**, प्रक्रमादेको ध्वनिरेव गृह्यते। **तत** इति स्फोटात् **तत्सम्प्रत्ययसिद्धेः**–सास्ना-लाङ्गूल-ककुद-खुर-विषाणिप्रत्यय- १० सिद्धेः। एवं पूर्वपक्षमाशङ्क्य पूर्वपक्षे बाधे चाह–**यत्किञ्चिदेतत्**–अनन्तरोदितम्, असारमित्यर्थः। कुत इत्याह–**निरवयवत्वेन** स्फोटस्य **सदेशताऽयोगात्**। **एकध्वनिव्यङ्ग्यत्वेऽपि च** द्वितीयपक्षापेक्षया **सकृच्छ्रुतानुवाकवदि**ति निदर्शनम्। किमित्याह–**अनेकव्यक्तिग्रहणोपपत्तेः**, अनेकेभ्यो व्यक्तिध्वनिभ्य इति प्रक्रमः। अनेकव्यक्तिस्तस्या ग्रहणमिति विग्रहस्तदुपपत्तेः। उक्तं च **भर्तृ**- १५ **हरिणा**–"यथाऽनुवाकः श्लोको वा" इति सर्वत्र स्फोटासम्प्रत्यये निमित्तमाह–**ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति** कृत्वा **न सर्वत्र**–देशे **तत्सम्प्रत्ययः**,[1]

(विवरणम्)

युज्यते, अन्यथैकत्वमेव स्यात्। ततो भिन्नस्वभावैर्ध्वनिभिः प्रत्येकमभिव्यज्यमानः स्फोटोऽपि भिन्नस्वभावः स्यात्।[2] तथा चैकस्मिन्नेव स्फोटे बहवः स्फोटा इति स्फुटं २० धर्मिभेदः॥

(१३-१४) **सकृत् श्रुतानुवाकवदिति निदर्शनमिति**। अनुवाकः–वैदिकं वाक्यं ततो यथा "पुरुष एवेदं ग्निं" इत्यादि वेदवाक्यमेकेन ध्वनिना अभिव्यक्तमपि कालान्तरे पुनरन्येन ध्वनिनाऽभिव्यज्यते। एवं स्फोटोऽपि एकदा एकेन ध्वनिनाऽभिव्यक्तोऽपि कालान्तरे यद्यन्यैर्ध्वनिभिरभिव्यज्यते तदा किं दूषणं स्यात्? अतः परमार्थतो मूल- २५ ध्वनिनैवाभिव्यज्यते स्फोट इति सिद्धं भवति।[3] इतरे तु ध्वनयोऽभिव्यक्तस्यैवाभिव्यञ्जका इति॥

(१६) **यथाऽनुवाकः श्लोको वेति**। अनुवाको व्याख्यात एव। श्लोकस्तु

"श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥" ३०

इत्यादिः। श्लोकोऽप्येकदा एकध्वनिनाऽभिव्यक्तः कालान्तरेऽन्यैरभिव्यज्यत एवेत्यर्थः॥

१ 'ध्वनिः संस्कृतं' इति ङ-पाठः। २ 'स्यात् तथा च अनेकध्वनिव्यङ्ग्यत्वे पुनः स्फो(?)मानः स्फोटा (?) पि भिन्नस्वभावः स्यात् तथा चैक०' इति ख-च-पाठः। ३ 'भवि' इति क-पाठः।

(मूलम्)

अत्रोच्यते—सर्वमिदमयुक्तम्, अनालोचिताभिधानात् । तत्र यत् तावदुक्तम्[1]—'यतः सास्नादिमदर्थप्रतिपत्तिरित्याह च भाष्यकारः—
५ येनोच्चरितेन' इत्यादि, अत्र किमिदमुच्चारणं नाम ? । नन्वभिव्यक्ति-रिति । किमुक्तं भवति येनोच्चरितेन ? येनाभिव्यक्तेनेति । हन्तालौ-किकः शब्दार्थः ! का चेयमभिव्यक्तिर्नाम ?[2] इन्द्रियग्राह्यस्वभावता । किं नेयमस्य स्वतत्त्वम् ? न न, किन्त्वावृतेति । किमस्यावरणम् ? श्रोत्रविद्या । कुतस्तदपगमः ? वक्तृध्वनेः । किमत्र मानम् ? स्फोटोप-
१० लब्धिः । किं न सदेयम् ? भूयोऽविद्यातः । कुतोऽसौ ? द्रागेव तम इव दीपाभावे ध्वन्यभावतः । किं स्फोटस्याविद्याभावाभावयोरस्ति

(स्वो० व्या०)

तत्संस्कारकस्य नियतत्वादिति अभिप्रायः । एतेन भिन्नदेशश्रोतृणामिन्द्रियसंस्कारा-भाव उक्तो वेदितव्य इति पूर्वपक्षः । अत्रोत्तरमाह अत्रोच्यत इत्यादिना । सर्व-
१५ मिदम्—अनन्तरोदितमयुक्तम् । कुत इत्याह—अनालोचिताभिधानात् । एतदेव दर्शयति तत्र यत् तावदुक्तमित्यादिना । किमुक्तमित्याह—यतः सास्नादिमदर्थप्रतिपत्तिरित्याह च भाष्यकारः—पतञ्जलिः येनोच्चरिते-नेत्यादि । अत्र—भाष्यकारवाक्ये किमिदमुच्चारणं नाम ? ।[3] नन्वभिव्यक्ति-रिति परः । स एवाह—किमुक्तं भवति येनोच्चरितेनेति ? अस्यार्थमाह—येना-
२० भिव्यक्तेनेति । एतदाशङ्क्याह—हन्तालौकिकः शब्दार्थो यदुतोच्चरणमभि-व्यक्तिरिति । तथा का चेयमभिव्यक्तिर्नाम ? इन्द्रियग्राह्यस्वभावता, प्रक्र-मात् स्फोटस्य । एतदाशङ्क्याह—किं नेयम्—इन्द्रियग्राह्यस्वभावता अस्य—स्फोटस्य स्वतत्त्वं—रूपम् ? । न—नेति । किं तर्हि स्वतत्त्वं किन्त्वावृता इन्द्रियग्राह्यस्वभाव-ताऽस्य इति । एतदाशङ्क्याह—किमस्य—स्वतत्त्वस्य सत आवरणम् ? श्रोत्रविद्येति,
२५ श्रोतुरज्ञानमित्यर्थः । एतदाशङ्क्याह—कुतः—कस्माद्धेतोस्तदपगमः—आवरणाख्या-विद्यापगमः ? वक्तृध्वनेरिति, वक्तुः सम्बन्धिनः शब्दादित्यर्थः । एतदाशङ्क्याह—किमत्र मानं यदुत वक्तृध्वनेस्तदपगम इति ? स्फोटोपलब्धिस्तथैकरूपप्रतिभा-समाना । एतदाशङ्क्याह—किं न सदेयं स्फोटोपलब्धिः ? भूयोऽविद्यातः कारणात् न सदेयम् । एतदाशङ्क्याह—कुतोऽसौ—अविद्या ? द्रागेव तम इव दीपाभावे
३० सति ध्वन्यभावतो द्रागेवासौ । एतदाशङ्क्याह—किं स्फोटस्याविद्याभावा-

१ ३८५तमे पृष्ठे । २ 'व्यक्तिः, इन्द्रियः' इति ग—पाठः । ३ 'न त्वभि०' इति ङ—पाठः ।

( मूलम् )

**कश्चित् स्वभावभेदः किं वा न ?। यद्यस्त्यनित्यता, स्वभावान्तरोप-मर्देन[1] स्वभावान्तरापत्तेः। इष्यते एवेयमीदृशीति चेत्, नित्य-प्रतिज्ञाव्याघातः, परिणामवादापत्तेः। अथ नास्ति, सदा ग्रहणादि- ५ प्रसङ्गः, तद्ग्राह्यताद्येकस्वभावत्वान्यथाऽनुपपत्तेः। अविद्याभावे ग्राह्य-तैकस्वभाव एवायमित्यप्यसत्, सदा तदभावेन तद्ग्रहणप्रसङ्गादिति अतिसूक्ष्ममतिविषयमेतत् ॥**

**किञ्च येनोच्चरितेनेत्यत्र वर्णात्मकेन शब्देनोच्चरितेन यथाक्षयोप-शममसौ सम्प्रत्ययो भवति, तथाऽनुभूतेः[2], गकारादिदलगोशब्द- १०**

---

( स्वो० व्या० )

**भावयोः**—अविद्याया भावेऽभावे च **अस्ति कश्चित्**—स्वल्पोऽपि **स्वभावभेदः किं वा न ?**। किञ्चातः ?। उभयथाऽपि दोष इत्याह—**यद्यस्त्यनित्यता** स्फोटस्य। कुत इत्याह—**स्वभावान्तरोपमर्देन स्वभावान्तरापत्तेः। इष्यते एवेयम्**—अनित्यता **ईदृशी**—परिणामरूपा। **इति चेत्**, एतदाशङ्क्याह—**नित्यप्रतिज्ञा- १५ व्याघातः**, स्फोटस्येति प्रक्रमः। कुत इत्याह—**परिणामवादापत्तेः। अथ नास्ति** स्वभावभेदः अविद्याभावाभावयोः। एतदाशङ्क्याह—**सदा ग्रहणादिप्रसङ्गः** ग्रहणमग्रहणं वा स्फोटस्य। कुत इत्याह—**तद्ग्राह्यताद्येकस्वभावत्वान्यथाऽनुप-पत्तेः**। तस्य—स्फोटस्य ग्राह्यतादिः, 'आदि'शब्दादग्राह्यतादिग्रहः, एकः स्वभावो यस्य स तथा तद्भावस्तद्ग्राह्यताद्येकस्वभावत्वं तस्यान्यथाऽनुपपत्तिस्तत इति हेतोः। २० तथाहि—यद्यसावविद्या भावाभावयोर्ग्राह्यतैकस्वभावः सदा ग्रहणम्, अथाग्राह्यतै-कस्वभावः सदैवाग्रहणमिति भावनीयम्। **अविद्याभावे ग्राह्यतैकस्वभाव एवायं**—स्फोट **इत्यप्यसत्**—अशोभनम्। कुत इत्याह—**सदा तदभावेन**—अविद्याभावेन तत्तत्स्वभावताक्षिप्तेन **तद्ग्रहणप्रसङ्गात्**—स्फोटग्रहणप्रसङ्गादिति **अतिसूक्ष्ममतिविषयमेतत्**। तथाहि—नाविद्याभावे ग्राह्यतैकस्वभावताऽस्य २५ सदा विद्याभावे ग्रहणे वा सत्युपपद्यत इति भावनीयम् ॥

अभ्युच्चयमाह **किञ्च येने**त्यादिना। किञ्च येन **उच्चरितेनेत्यत्र**—व्यतिकरे **वर्णात्मकेन शब्देनोच्चरितेन** सता **यथाक्षयोपशमं**, यस्य यथा क्षयोपशम इति **असौ सम्प्रत्ययो भवति** अनन्तरोदितः। कुत एतदित्याह—**तथाऽनुभूतेः**।

---

1 'मर्देनेन' इति क-पाठः। 2 'भूतेः गकारा०' इति क-पाठः।

(मूलम्)

संवेदनात् तद्व्यतिरिक्तस्य चापरस्याक्रमवत एकस्यासंवेदनात्। तथाहि–गौरित्यत्र गकारौकारविसर्जनीयवर्णप्रतिभास्येव तत्सम्प्रत्ययः,
५ कथमयमुच्चरितध्वंसिभ्य एतेभ्यः तथा इतरेतरप्रतिबद्धस्वभावतया आत्मनि बोधकरणेन ?। न च क्रमभाविनां[1] तथाबोधकरणविरोधः, तस्यापि क्रमेणैव तथाभवनात्, अर्द्धोच्चरितविरामेऽभावात्। ध्वनेश्चैकत्वाभ्युपगमेनार्द्धोच्चरितत्वासम्भवः, तदनेकत्वेऽपि स्फोटैकत्वतः, अर्द्धाभिव्यक्त्ययोग इति भावनीयमेतत्। एवं च '[2]वर्णेभ्यस्तत्सम्प्रत्य-
१० यानुपपत्तेः' इत्ययुक्तम्, उक्तवदुपपत्तियोगात्। नैकाकार एवायम्। किं तर्हि ? एकानेकाकारः, गकारादिवर्णात्मकगोशब्दवेदनात् तथा

(स्वो० व्या०)

एनामेवाह–गकारादिदलगोशब्दसंवेदनात् मृद्दलघटवत् तद्व्यतिरिक्तस्य च–गकारादिवर्णव्यतिरिक्तस्य च अपरस्य–स्फोटादेः अक्रमवत एकस्य।
१५ किमित्याह–असंवेदनात् कारणात्। एतदेव भावयति तथाहीत्यादिना। तथाहीति पूर्ववत्। गौरित्यत्र–शब्दे गकारौकारविसर्जनीयवर्णप्रतिभास्येव तत्सम्प्रत्ययः–शब्दसम्प्रत्ययः। आह–कथमयम्–एकरूप उच्चरितध्वंसिभ्य एतेभ्यो वर्णेभ्यः ?। एतदाशङ्क्याह–तथेत्यादि। तथा–पौर्वापर्यभावेन इतरेतरप्रतिबद्धस्वभावतया कारणेन। आत्मनि–जीवे बोधकरणेन हेतुना
२० अयमुच्चरितध्वंसिभ्य एतेभ्य इति। न चेत्यादि। न च क्रमभाविनां–गकारादीनां तथा–क्रमेणैव बोधकरणविरोधः। कुत इत्याह–तस्यापि–बोधस्य क्रमेणैव तथा–इतरेतरबोधप्रतिबन्धेन भवनात्। इत्थं चैतदङ्गीकर्तव्यमित्याह–अर्द्धोच्चरितविरामे सति अभावादधिकृतबोधस्य। ध्वनेश्चैकत्वाभ्युपगमेन परदर्शने किमित्याह–अर्द्धोच्चरितत्वासम्भवः, तदनेकत्वेऽपि–ध्वन्यनेक-
२५ त्वेऽपि स्फोटैकत्वतः कारणात्। किमित्याह–अर्द्धाभिव्यक्त्ययोग इति भावनीयमेतत्। दृश्यते चार्द्धाभिव्यक्तिकार्यमित्यभिप्रायः। एवं च कृत्वा वर्णेभ्यस्तत्सम्प्रत्ययानुपपत्तेरित्ययुक्तं पूर्वपक्षवचनम्[3]। कुत इत्याह–उक्तवत्–यथोक्तम्। तथा किमित्याह–उपपत्तियोगात् वर्णेभ्यस्तत्सम्प्रत्ययस्य। एतत्समर्थनायैवाह–नैकाकार एवायम्–अधिकृतप्रत्ययः। किं तर्हि ? एका-
३० नेकाकारः। कुत[4] एतदेवमित्याह–गकारादिवर्णात्मकगोशब्दवेदनात्

१ 'भावितानां' इति क–पाठः। २ दृश्यतां ३८५तमं पृष्ठम्। ३ प्रेक्ष्यतां ३८५तमं पृष्ठम्।
४ 'कुत इत्या(?)देवमित्याह' इति ङ–पाठः।

(मूलम्)

दीर्घकालेनैव तत्तद्वर्णजबोधान्वयाविरोधादित्यतः किमुच्यते नानेकेभ्यो भवितुमर्हति, तथाऽनेकात्मकस्यान्यथा भवनायोगात् ॥

एवं च "अनेकेभ्योऽनेकप्रत्ययभावात्" इत्यपि वचनमात्रम्, तेषां ५ तथाप्रतिबद्धस्वभावतयैकान्ततोऽनेकत्वासिद्धेः । तदितराक्षेपकस्वभाववन्तो ह्यमी एकानेकरूपास्तथैव च प्रतिभासन्त इति न कश्चिद् दोषः । यच्चोक्तम्[2]–'अयं च स्फोटरूप एक एवेति युक्तोऽस्माद् यथोदितसम्प्रत्ययः' इत्येतदप्यचारु, एकस्यासंवेदनादित्युक्तप्रायम् । यच्चोक्तम्[3]–'आह–कुतोऽयमुत्पद्यते' इत्येतदाशङ्क्य 'नन्वयं नित्यः सर्व- १० गतो नोत्पद्यत एव' इति, एतदप्ययुक्तम्, नित्यसर्वगतत्वेऽस्य प्रमाणाभावात्, नित्यस्य सर्वथैकस्वभावत्वेन प्रमाणपरिच्छेद्यस्वभावत्वे

(स्वो० व्या०)

तथा–क्रमेणेतरेतरप्रतिबन्धतया[4] दीर्घकालेनैव । कथमित्याह–तत्तद्वर्णजबोधान्वयाविरोधात्–गकारादिवर्णजबोधान्वयाविरोधात् इत्यतः किमुच्यते नाने- १५ केभ्यो वर्णेभ्यो भवितुमर्हति अधिकृतप्रत्ययः[5] ? । नन्वर्हत्येवेति भावनीयम्, तथाऽनेकात्मकस्य वर्णदलतया अन्यथा–निरंशैकभवनेन भवनायोगात् । न ह्येकस्मादनेको भवितुमर्हति इत्येकपरमाणोरिव घटप्रत्यय इति ॥

एवं चानेकेभ्योऽनेकप्रत्ययभावादित्यपि वचनमात्रं पूर्वपक्षवचनम् । कुत इत्याह–तेषां–वर्णानां तथा–क्रमभावित्वेन[6] प्रतिबद्धस्वभावतया कारणेन २० एकान्ततः–एकान्तेन अनेकत्वासिद्धेः । तथाहि–तदितराक्षेपकस्वभाववन्तो ह्यमी–गकारादयस्तद् यथा गकार औकाराक्षेपकस्वभाव इत्यादि । अत एकानेकरूपा अमी तथैव च प्रतिभासन्ते एकानेकरूपतयेति न कश्चिद् दोषः । यच्चोक्तं पूर्वपक्षग्रन्थे[7]–'अयं च स्फोटरूप एक एवेति युक्तः अस्माद् यथोदितसम्प्रत्ययः' इत्येदप्यचारु । कुत इत्याह–एकस्यासं- २५ वेदनादित्युक्तप्रायं–प्रायेणोक्तम् । यच्चोक्तं[8] पूर्वपक्ष एव आह–कुतोऽयमुत्पद्यत इति, एतदाशङ्क्याह–नन्वयं नित्यः सर्वगतो नोत्पद्यत एवेत्येतदप्ययुक्तम् । कुत इत्याह–नित्यसर्वगतत्वेऽस्य–स्फोटस्य प्रमाणाभावात् । अभावश्च नित्यस्य स्फोटस्य सर्वथैकस्वभावत्वेन हेतुना प्रमाणपरिच्छेद्य-

१ समीक्ष्यतां ३८५तमं पृष्ठम् । २ ३८५तमे पृष्ठे । ३ ३८५तमे पृष्ठे ३८६तमे च । ४ 'बन्धतो दीर्घ०' इति ङ–पाठः । ५ 'कृत्यप्रत्ययः' इति ङ–पाठः । ६ 'भावत्वेऽपि प्रति०' इति ङ–पाठः । ७ ३८५तमे पृष्ठे । ८ ३८६तमे पृष्ठे ।

(मूलम्)

सर्वदा सर्वपरिच्छेदापत्तेः, अन्यथा नित्यत्वायोगात्, कदाचित् केनचिद् ग्रहणे तद्ग्राह्यस्वभावत्ववत् तदन्यग्राह्यस्वभावत्वा-
५ भावाद् भावे वा कदाचित् केनचिद् ग्रहणवत् तदन्यग्रहणापत्तेः, अभावे चान्यदा तदभावात् तत्तथाभवनेन परिणामवादापत्ति-रेवेति। एतेन यदप्याह[३]–'किमित्यतो न सदा सर्वत्र तत्सम्प्रत्ययः' इत्याशङ्क्योक्तम्[४]–'हन्ताभिव्यञ्जकाभावेन अभिव्यञ्जकाश्चास्य ध्वनयस्ते च पुरुषप्रयत्नसापेक्षा इति न सदा तत्सम्प्रत्ययः' इत्येतद-
१० प्ययुक्तम्, अभिव्यक्तेरेवोक्तवदसिद्धेः। ध्वनयश्च वर्णात्मका एव, तद्व्यतिरेकेण तत्स्वरूपासिद्धेः। कलकले तन्मात्रग्रहणात् तत्-

(स्वो० व्या०)

स्वभावत्वे सति सर्वदा सर्वपरिच्छेदापत्तेः तथा तदेकस्वभावत्वादिति हृदयम्; अन्यथा नित्यत्वायोगात्। अयोगश्च कदाचित्–काले केनचित्–
१५ प्रमात्रा ग्रहणे सति तद्ग्राह्यस्वभावत्ववदिति निदर्शनम्। तदन्यग्राह्य-स्वभावत्वाभावात्–अन्यदा अन्येन ग्राह्यस्वभावत्वाभावाद् भावे वा अधिकृत-ग्राह्यस्वभावस्य किमित्याह–कदाचित् केनचिद् ग्रहणवदिति निदर्शनम्। तदन्यग्रहणापत्तेः–अन्यदाऽन्यग्रहणापत्तेः अभावे च अन्यदाऽन्येन ग्रहणस्य। किमित्याह–अन्यदा तदभावात्–अन्यदाऽन्येन ग्राह्यस्वभावाभावात् तस्यैव तदा
२० केनचिद् ग्राह्यस्वभावस्य सतः तथाभवनेन–अन्यदाऽन्यग्राह्यस्वभावभवनेन। किमित्याह–परिणामवादापत्तिरेवेत्यत्र चोक्तो दोषो नित्यप्रतिज्ञाव्याघातादिः[५]। एतेन यदप्याह[६]–'किमित्यतो न सदा सर्वत्र तत्सम्प्रत्यय इति आशङ्क्योक्तम्[७]–'हन्ताभिव्यञ्जकाभावेन' इत्यादि, तदप्ययुक्तम्। कुत इत्याह–अभिव्यक्तेरेवोक्तवत्–यथोक्तं तथाऽसिद्धेः। तथा ध्वनयश्च
२५ भवत्परिकल्पिता वर्णात्मका एव। कुत इत्याह–तद्व्यतिरेकेण–वर्णव्यतिरेकेण तत्स्वरूपासिद्धेः–ध्वनिस्वरूपासिद्धेः, वर्णाश्रयं तद्ग्रहणमिति प्रतीतेः। आह–कलकले तन्मात्रग्रहणात् कारणात् तत्सिद्धिः–ध्वनिसिद्धिः। वर्णास्तु

(विवरणम्)

(२७) कलकले तन्मात्रग्रहणादिति। कलकले हि ध्वनिमात्रमेव प्रतीयते,
३० न तु वर्णा इति परस्याशयः। ननु स्फोटस्तावन्नित्य एकरूपो भिन्नो ध्वनिभ्यः[८]।

१ 'सदा सर्व०' इति ग-पाठः। २ ३८६तमे पृष्ठे। ३ 'सर्वदा सर्वत्र' इति ग-पाठः। ४ ३८६तमे पृष्ठे। ५ दृश्यतां ३८९तमं पृष्ठम्। ६ ३८६तमे पृष्ठे। ७ ३८६तमे पृष्ठे। ८ 'ध्वनिः सः' इति क-पाठः।

(मूलम्)

**सिद्धिः। वर्णास्तु स्फोटप्रस्वेदसंस्थानीया इति चेत्, न, अविचारितरमणीयत्वात्। कलकलो हि तत्समुदायधर्मः, तद्भावभावित्वात्। तत्समानपरिणाममात्ररूपो ह्ययम्, अत एव श्रोत्रेण गृह्यते, अन्यथाऽशब्दत्वात् कथमस्य श्रोत्रेण ग्रह[1] इति चिन्त्यम्। स्फोटप्रस्वेदसंस्थानीयत्वे च वर्णानां तदनित्यतापत्तिः, तदात्मभूतप्रस्वेदगलनादिति। एतेन [2]"स किमनेकध्वनिव्यङ्ग्य उतैकध्वनिव्यङ्ग्यः' इत्याद्याशङ्क्य यदुक्तं[3] 'यत्किञ्चिदेतन्निरवयवत्वेन सदेशताऽयोगात्' इत्यादि, तदपि वस्तुतः परिहृतमेव, परिहृतेन तुल्ययोग-** १०

(स्वो० व्या०)

**स्फोटप्रस्वेदसंस्थानीया** वर्तन्ते। **इति चेत्,** एतदाशङ्क्याह—**न, अविचारितरमणीयत्वात्।** एतद्भावनायैवाह—**कलकलो हि तत्समुदायधर्मः**—वर्णसमुदायधर्मः। कुत इत्याह—**तद्भावभावित्वात्**—वर्णभावभावित्वात् कलकलस्य **तत्समानपरिणाममात्ररूपो ह्ययं**—कलकलः। **अत एव** १५ कारणात् **श्रोत्रेण गृह्यते।** इत्थं चैतदङ्गीकर्तव्यमित्याह—**अन्यथा**—एवमनभ्युपगमे **अशब्दत्वात्** कारणात् **कथमस्य**—ध्वनेः **श्रोत्रेण ग्रह इति चिन्त्यम्।** तथा **स्फोटप्रस्वेदसंस्थानीयत्वे च वर्णाना**मभ्युपगम्यमाने किमित्याह—**तदनित्यतापत्तिः**—स्फोटानित्यतापत्तिः। कुत इत्याह—**तदात्मभूतप्रस्वेदगलनात्,** स्फोटात्मभूतस्य स्वेदस्य गलनादिति। **एतेन**—अन- २० न्तरोदितेन **'स किमनेकध्वनिव्यङ्ग्य उतैकध्वनिव्यङ्ग्यः' इत्याद्याशङ्क्य यदुक्तं**[5] पूर्वपक्षे—**'यत्किञ्चिदेतन्निरवयवत्वेन सदेशताऽयोगात्' इत्यादि,** [6]**तदपि वस्तुतः**—परमार्थेन **परिहृतमेव।** कुत इत्याह—**परि-**

(विवरणम्)

यदा च वर्णेभ्योऽपि भिन्नो ध्वनिस्तदा वर्णाः किंस्वरूपा इत्याशङ्क्य पर एवाह— २५ (पृ. ३९२, पं. २७; पृ. ३९३, पं. १२) **वर्णास्तु स्फोटप्रस्वेदसंस्थानीया इति।** व्याख्यातं चैतदर्थतः प्राक्॥

(२०) **स्वेदस्य गलनादिति।** यथाहि—देवदत्तशरीराद् गलत्प्रस्वेदबिन्दुषु विकारः कश्चिदवश्यं तस्य स्यात्, विकारभवने च स्फुटैवानित्यतेति॥

१ 'ग्रहणमिति' इति ग–पाठः। २ दृश्यतां ३८६तमं पृष्ठम्। ३ ३८७तमे पृष्ठे। ४ 'स्वेदगलनात्' इति क–पाठः। ५ ३८७तमे पृष्ठे। ६ 'यदुक्तं' इत्यधिको ङ–पाठः।

( मूलम् )

क्षेमत्वात् । नवरं 'ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्सम्प्रत्ययः' इति यदुक्तम्[1], अत्रोच्यते-अथ कोऽयं ध्वनिनेन्द्रिय-
५ संस्कारः ? अविद्यापनयनम् । किं यथावस्थितं स्फोटं न गृह्णाति ? हन्त गृह्णात्येव । कथं न तद्व्यापित्वादिग्रहः ? संस्कारप्रतिनिय-मात्, अपैति निरवयवत्वादि अस्य केन हेतुना? न तस्यान्यथा ग्रह इति कृत्वा, न हि शुक्लः[2] पीत इति गृह्यतेऽभ्रान्तेन, तस्माद् वर्णा-त्मक एव शब्दः; चित्रस्वभावत्वात्, तथा श्रोत्रद्वारेण छद्मस्थेन
१० गृह्यते, [3]योगिना तु कार्त्स्न्येनेति कृतं प्रसङ्गेन ॥

प्रकृतं प्रस्तुमः । एवं व्यवहारान्यथाऽनुपपत्तेः अभिलाप्यानभि-

(स्वो० व्या०)

हृतेन तुल्ययोगक्षेमत्वात् । नवरं 'ध्वनिसंस्कृतं चेन्द्रियं स्फोटं गृह्णातीति न सर्वत्र तत्सम्प्रत्ययः' इति यदुक्तं पूर्वपक्षे[4] एव, अत्र-अवयवे
१५ उच्यते-अथ कोऽयं ध्वनिना इन्द्रियसंस्कारो नाम ? । पर आह-अविद्यापनयनमिन्द्रियसंस्कारः । एतदाशङ्क्याह-किं यथावस्थितं स्फोटं न गृह्णाति संस्कृतं तदिन्द्रियम् ? । पर आह-हन्त गृह्णात्येव । किमत्रोच्यत इत्येतदाशङ्क्याह-कथं न तद्व्यापित्वादिग्रहः, तस्य ध्वनेर्व्यापित्वनित्यत्वग्रह इत्यर्थः। पर आह-संस्कारप्रतिनियमादिन्द्रियस्य न तद्व्यापित्वादिग्रहः। एतदा-
२० शङ्क्याह-अपैति निरवयवत्वादि अस्य-स्फोटस्य। 'आदि'शब्दाद् व्यापित्वादि-ग्रहः। पर आह-केन हेतुना अपैति निरवयवत्वाद्यस्य ?। एतदाशङ्क्याह-न तस्य-निरवयवत्वादिरूपस्य अन्यथा ग्रह इति कृत्वा। किं तर्हि? तथैव ग्रहः। एतदेवोदाहरणेनाह-न हि शुक्लः पीत इति गृह्यतेऽभ्रान्तेन प्रमात्रा, तस्माद् वर्णात्मक एव शब्दः, चित्रस्वभावत्वात् ग्रहणाग्रहणं प्रति तथा-
२५ तेन [5]प्रकारेणाप्रतारकत्वादिना श्रोत्रद्वारेण-न शेषेन्द्रियैः छद्मस्थेन-प्रमात्रा गृह्यत इति योगिना पुनर्निरावरणज्ञानेन कार्त्स्न्येन-भाषावर्गणोपादानकाय-योगग्रहणवाग्योगनिसर्गसत्यादिरूपेण गृह्यत इति कृतं प्रसङ्गेन ॥

प्रकृतं प्रस्तुमः । प्रकृतं चाभिलाप्यानभिलाप्यरूपं वस्तु, अत एवाह-एवं व्यवहारान्यथाऽनुपपत्तेः कारणात् अभिलाप्यानभिलाप्यम्, वस्त्विति

१ ३८७तमे पृष्ठे। २ 'शुक्लं पीतं' इति क-पाठः। ३ 'यः' इत्यधिकः क-पाठः। ४ ३८७तमे पृष्ठे। ५ 'प्रकारेण प्रतारक०' इति ङ-पाठः।

( मूलम् )

**लाप्यमिति स्थितम् । न चात्र विरोधबाधा, भिन्ननिमित्तत्वात् । तथाहि–अभिलाप्यधर्मकलापनिमित्तापेक्षया तदभिलाप्यं अनभिलाप्यधर्मकलापनिमित्तापेक्षया चानभिलाप्यमिति धर्म-धर्मिणोश्च कथ- ५ ञ्चिद् भेद इति प्रतिपादितम् । ततश्च तद् यत एवाभिलाप्यम्, अत एवानभिलाप्यम्, अभिलाप्यधर्मकलापनिमित्तापेक्षयाऽभिलाप्य-**

---

( स्वो० व्या० )

प्रक्रमः, **स्थित**मिति । **न चात्रे**त्यादि । न चात्र–अभिलाप्यानभिलाप्ये वस्तुनि **विरोधबाधा** । कुत इत्याह–**भिन्ननिमित्तत्वात्** कारणात् । एतदेवाह १० **तथाही**त्यादिना । तथाहीति पूर्ववत् । **अभिलाप्यधर्मकलापनिमित्तापेक्षया तत्**–वस्तु **अभिलाप्यं** तथाऽ**नभिलाप्यधर्मकलापनिमित्तापेक्षया चानभिलाप्यमिति** । इह चाभिलाप्यधर्मा अभिधेयपरिणामाः; अतोऽन्ये सम्बन्धिवशात् तथाऽभिधीयन्त इत्यनभिलाप्याः । **धर्म-धर्मिणोश्च कथञ्चिद् भेद इति प्रतिपादितं** प्राक् । **ततश्च तद् यत एवाभिलाप्यं** वस्तु **अत** १५ **एवानभिलाप्यम्** । कथमेतदेवमित्याह–**अभिलाप्यधर्मकलापनिमित्तापेक्षया अभिलाप्यत्वात्** । ततः किमित्याह–**अभिलाप्यधर्माणां च**

---

( विवरणम् )

**(१३-१४) अतोऽन्ये सम्बन्धिवशात् तथाऽभिधीयन्त इत्यनभिलाप्या** इति । अतोऽन्ये–अभिलाप्यधर्मेभ्यो विलक्षणास्तथाविधज्ञानगम्या अपि इक्षुक्षीरादि- २० रसमाधुर्यान्तरवत् अनभिलाप्या धर्माः । कुत इत्याह–सम्बन्धिवशात् तथाऽभिधीयन्त इति । सम्बन्धिनः–कथञ्चिदनभिलाप्यधर्मैः सह तादात्म्यसम्बन्धवतोऽभिलाप्यधर्मान्तरस्य वशात्–पारतन्त्र्यात् तथा गौणवृत्त्याऽभिधीयन्ते–प्रोच्यन्त इति हेतोः । तथा च पठ्यते—

"इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् । २५
तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ॥"

इति । अयमत्र परमार्थः–घटे हि घटत्वादयो धर्मा अभिलाप्याः, मुख्यवृत्त्यैव तेषां स्वशब्दैरभिधीयमानत्वात्; अनभिलाप्यास्तु तत्तत्पदार्थव्यावृत्तिरूपाः, अभिलाप्यधर्मान्तःस्थितानां तेषां प्रतीयमानत्वात्, मुख्यवृत्त्या तद्वाचकस्य ध्वनेरभावात् ॥

---

१ 'लाप्ये धर्म०' इति क–पाठः । २ 'मुख्यावृत्तौ च तेषां' इति क–पाठः ।

(मूलम्)

त्वात्, अभिलाप्यधर्माणां चानभिलाप्यधर्माविनाभूतत्वात्, यत एव चानभिलाप्यम्, अत एवाभिलाप्यम्, अनभिलाप्यधर्मकलाप- ५ निमित्तापेक्षयाऽनभिलाप्यत्वात्, अनभिलाप्यधर्माणां चाभिलाप्यधर्माविनाभूतत्वादिति। एतेन

"अन्यदेवेन्द्रियग्राह्यमन्यच्छब्दस्य गोचरः।
शब्दात् प्रत्येति [1]भिन्नाक्षो न तु प्रत्यक्षमीक्षते ॥[2]
अन्यथा दाहसम्बन्धाद् दाहं दग्धोऽभिमन्यते।
१० अन्यथा दाहशब्देन दाहार्थः सम्प्रतीयते ॥[3]
वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥"[4]

इत्यादि प्रतिक्षिप्तम्, रूपाद्यनेकधर्मणो वस्तुनोऽनभिलाप्यधर्मप्रधानस्येन्द्रियग्राह्यत्वात्, अभिलाप्यधर्मप्रधानस्य च शब्दगोचर-

(स्वो० व्या०)

१५ सदाद्यभिधेयपरिणामानामनभिलाप्यधर्माविनाभूतत्वात्—तथाविधस्वसंवेद्यानाख्येयधर्माविनाभूतत्वाद् यत एव चानभिलाप्यमत एव च अभिलाप्यम्। कथमेतदेवमित्याह—अनभिलाप्यधर्मकलापनिमित्तापेक्षया अनभिलाप्यत्वात्। यदि नामैवं ततः किमित्याह—अनभिलाप्यधर्माणां २० च उदितस्वरूपाणाम्। किमित्याह—अभिलाप्यधर्माविनाभूतत्वादिति। एतेन—अन्तरोदितेन वस्तुनोऽभिलाप्यानभिलाप्यत्वेन अन्यदेवेत्यादि प्रतिक्षिप्तमिति योगः। अन्यदेव—स्वलक्षणमिन्द्रियग्राह्यमन्यत्—सामान्यलक्षणं शब्दस्य गोचरः। कथमेतदेवमित्याह—शब्दात् प्रत्येति भिन्नाक्षः सामान्यलक्षणाध्यवसायेन, न तु प्रत्यक्षमीक्षते वस्तु। तथा अन्यथा दाहसम्ब- २५ न्धात् स्वलक्षणानुभवेन दाहं दग्धोऽभिमन्यते पुमान्; अन्यथा दाहशब्देन—सामान्यलक्षणाध्यवसायेन दाहार्थः सम्प्रतीयते। तथा वक्तृव्यापारविषयो योऽर्थः सामान्यलक्षणाख्यो बुद्धौ प्रकाशते विकल्पबुद्धौ प्रामाण्यं तत्र शब्दस्य बुद्धिप्रकाश्ये नार्थतत्त्वनिबन्धनमित्यादि प्रतिक्षिप्तं—निराकृतम्। कथमिति मनागुन्मीलयति रूपाद्यनेकधर्मणो वस्तुन इत्यादिना। ३० तत्र रूपाद्यनेकधर्मणो वस्तुनः—घटादेः अनभिलाप्यधर्मप्रधानस्येन्द्रियग्राह्य-

१ 'भिन्नाक्षे' इति क-पाठः। २-४ अनुष्टुप्।

( मूलम् )

त्वात्, तथाप्रतीतेः, इन्द्रियव्यापारेऽपि कथञ्चिदभिलाप्यधर्मावगमाद् वाचकप्रयोगदर्शनात् अन्तर्जल्पानुभवसिद्धेः शब्दादपि क्वचित् कथञ्चिदनभिलाप्यधर्मसंवेदनात्, तद्रक्ततादिप्रतीतेः, तुल्य- ५ जातीयमध्ये क्वचित् ततस्तद्विशेषावसायात्। एतच्चागोपालाङ्गनादिप्रतीतम्। या पुनर्भिन्नाक्षकस्य क्वचिच्छब्दादप्रतीतिरेव सा तथाविधतदन्यस्येव क्षयोपशमवैकल्येन। न खल्वनन्धोऽपि तथाविध-

( स्वो० व्या० )

त्वादभिलाप्यधर्मप्रधानस्य च शब्दगोचरत्वात्, प्रतिक्षिप्तमिति क्रिया। १० एतदेवेत्थमिति। कुत इत्याह—तथाप्रतीतेः—अनभिलाप्यधर्मप्रधानादितया प्रतीतेः। एनामेवाह—इन्द्रियव्यापारेऽपि—विद्युत्सम्पातादौ कथञ्चित्—केनचित् प्रकारेण अभिलाप्यधर्मावगमात्। अवगमश्च वाचकप्रयोगदर्शनात्। तद्दर्शनं च अन्तर्जल्पानुभवसिद्धेः तथा शब्दादपि क्वचित् कथञ्चिदनभिलाप्यधर्मसंवेदनात्। संवेदनं च तद्रक्ततादिप्रतीतेः—घटादिवस्तुरक्ततादि- १५ प्रतीतेः। प्रतीतिश्च तुल्यजातीयमध्ये सति क्वचित् ततः—शब्दात् प्रतीतेः तद्विशेषावसायात्—रक्ततादिविशेषावसायात्। एतच्चागोपालाङ्गनादिप्रतीतं वस्तु। या पुनर्भिन्नाक्षस्य[1]—अन्धस्य क्वचित्—अपूर्वे शब्दादप्रतीतिरेवेन्द्रियार्थे सा तथाविधतदन्यस्येव—जडमतेः चक्षुष्मतोऽपि क्षयोपशमवैकल्येन। एतदेव भावयति न खल्वित्यादिना। न खलु अनन्धोऽपि तथा- २०

( विवरणम् )

(१४) अन्तर्जल्पानुभवसिद्धेरिति। अकस्माद् विद्युदुपलम्भोऽपि अन्तर्जल्पः प्रवर्तते विद्युदियमित्युल्लेखेनेत्यर्थः। अत इन्द्रियज्ञानेऽपि कथञ्चिदभिलाप्यधर्मप्रतीतिरिति सिद्धं भवति॥

(१५-१६) घटादिवस्तुरक्ततादिप्रतीतेरिति। घटमानयेत्युक्तेऽतिनिपुणः कश्चित् २५ प्रमाता तेन शब्देनानभिहितानपि घटगतान् प्रतिनियतान् रक्तादिधर्मान् प्रस्तावादिभ्यः प्रतिपद्यत इत्यर्थः। अतो घटशब्दात् मुख्यवृत्त्या घटत्वे प्रतीयमाने गुणभावेनानभिलाप्या रक्तत्वादयोऽपि ज्ञायन्त एवेति सिद्धम्। अनभिलाप्यत्वं चात्र रक्तत्वादीनां घटध्वन्यपेक्षया द्रष्टव्यम्, न तु स्वरूपेण रक्तत्वादिध्वनिभिरभिलाप्यत्वात् तेषाम्। ये च स्वभावेनैवानभिलाप्यास्तत्र घटे तेऽप्यभिलाप्याभिलाप्येषु धर्मेषु ३० प्रतीयमानेषु प्रतीयन्त एवेत्युपलक्षणाक्षिप्तम्॥

---

[1] 'पुनर्भिन्नाक्षस्य' इति ग-पाठः।

